व्यङ्ग्यवृत्तपुञ्जे

'मञ्जुकवितानिकुञ्जे'

चित्रचित्रितं

# साहित्यवैभवम्

यत्

सूरिसेवकेन, तैलङ्गान्ववायसुधासागरसमुत्थश्रील-
श्रीकृष्णाभिधानकविकलानिधिवंशजेन ।

जयपुरराजकीय'महाराजाकालेजी'यहिन्दीसंस्कृता-
ध्यापक–मञ्जुनाथनामकेन, साहित्याचार्य-

भट्टश्रीमन्मथुरानाथशब्दशास्त्रिणा कृतम्

प्रकाशितं च जयपुरात्तेन ॥ १ ॥

संवत् १९८७–सन् १९३०.

मोहमयीस्थे 'निर्णयसागर'यन्त्रे मुद्रितम् ।

एतन्मूल्यम् ६ रु.

॥ श्रीः ॥

# आवश्यकं निवेदनम्

भुवनविश्रुतै संस्कृतभाषाया महाकविभिः साहित्यसंबन्धी वर्णनीयविषयो नांशतोऽपि परित्यक्तः। अतिप्राचीनकालादारभ्य एतावत्कालपर्यन्तं सुपरीक्षितसूक्तीनामेतेषा सर्वेषा तु का कथा, एतेषु हि कविष्वेकैकस्यापि वर्णनव्यापकताया सुबहुपाटवमङ्गीकृतं सहृदयसमाजेन। 'बाणोच्छिष्टमिदं जगत्' इत्याद्याः किंवदन्ती· को वा न जानीयात्? एवं सत्यपि सुप्रसिद्धेभ्य· संस्कृतमहाकविभ्यो बहुतरमुत्तरकालभाविभिर्व्रजभाषाकविभिर्वर्णनीयविषये आत्मनो नवीनता सफलता च समीक्षकसमाजे सम्यग्रूपेण साधिता। राजस्थानेष्वेवंविधा बहवो व्रजभाषाकवयोऽद्यावधि संजाता सन्ति, येषा न केवलं व्रजभाषायामेव, अपि तु भाषान्तरेष्वपि पुष्कलं प्रसिद्धिरासीत्। भूषण-मतिराम-पद्माकर-विहारि-मण्डन-प्रभृतीना सूक्तीराकर्ण्य को वा सहृदय प्रशंसामुखरमुखो न भवेत्?

वर्णनीयविषयस्तावदास्तां दूरे, परं संगीतलयसङ्गी सुमधुरस्वरमुच्चार्यमाणो ह्येतेषा छन्द प्रबन्ध एव तावन्मनोहारी भवति स्म, येन सहृदयः श्रवणमात्रेण मनसि मोदते स्म। एतेषामेकैकपद्यस्योपरि समधिकमभिनन्दनीया ग्रामादिसंपत्ति आदायि रसज्ञै· पूर्वनृपतिभि। एकमेव पद्यं पुनः पुनर्यावतो वारान् श्रुतवांस्तावन्त्येव लक्षाणि मुद्राणां दत्तवान् छत्रपतिः श्रीशिवाजीमहाभागो महाकवये भूषणायेति प्राय प्रसिद्धमेव सहृदयसमाजे। किंबहुना समर्थनेन, कवित्तसवैयादिच्छन्दोमयी सेयं रचनाशैली लोकानामतीव समाकर्षिणी समभवदिति प्रायो निर्विवादम्। एतस्याः शैल्यास्तावान् सुस्थिर· प्रभावो भाषाया उपरि समभवद्यदस्मिन् युगेऽपि सा शैली निर्निरोधं प्रचरति। सामयिकैर्हिन्दी-साहित्यकर्णधारैर्व्रजभाषासिंहासने नवीनहिन्दी (खडीबोली) यद्यप्यभिषिक्ता पर छन्दसां राज्ये न किंचित्परिवर्तनम्। नवीनभाषया सह प्राचीनानि कवित्त-छप्पय-रोलादीनि तान्येव छन्दांसि प्रचरन्त्यद्यापि। समयेन भाषाया· स्वरूप-परिवर्तनमक्रियत, परं छन्दसामाकर्षणप्रभावो नोल्लङ्घयितुमपारि। अस्ति हि छन्दसामाकर्षणमेवंविधमेव। दृश्यताम्-कविमुकुटमणिर्गोस्वामी तुलसीदासो

रामचरितमानसं दोहा–चौपाईछन्दोभिर्निवद्धवानपि पुनः 'कवित्तरामायणम्' 'वरवैरामायणम्' चोपनिवद्धवान् ।

एवं सर्वप्रियत्वे सत्यपि सोऽयं रचनामार्गः संस्कृतकविभिर्नोपाश्रित इति लोकाः संप्रति साकूतमुद्घोपयन्ति । चौपाईप्रभृतिलघुच्छन्दांसि यद्यपि क्वचित्क्वचित् संस्कृतरचनायामप्यवलोकितानि, परं नैपा छन्दसा संस्कृते प्रचार इति स्वीकर्तव्यमेव भवेत् ।

एतस्य कारणान्वेषणविषये साम्प्रतिका साहित्यमहारथिनो नानाविधं मतमुपस्थापयन्ति । अक्षराणां लघुगुरूकरणाद्यपभ्रंशप्रकारशून्यायामस्यां भाषायाममीषां छन्दसा न सौकर्येण रचना संभवतीति काठिन्यवशान्नैषा प्रचारोऽभवदिति केचिदाचक्षते । मन्मते सर्वतन्त्रसमर्थानामेतेपां कृते तदिदमनुमानमनर्हमेव । ततश्च लोकभाषा प्रति सस्कृतपण्डिताना तुच्छताबुद्धिरासीत्, अत एव एतैः किल व्रजभाषाच्छन्दांसि नोपात्तानि, व्रजभापाकविभिस्तूपजाति–भुजङ्गप्रयात-तोटकादिच्छन्दांसि स्वीकृतानि, इति द्वितीयमनुमानं लोकानां हृदयेपु स्थानं विदधाति ।

व्रजभापां प्रति संस्कृतपण्डिताना प्रद्वेषकथा पूर्वमेव प्रसेविताऽभूदिदानीमेतत्कारणं लोकाना सरलतया हृदयंगममासीत् । हिन्दीपण्डित. पद्मसिंह प्रकाशितवानेवंविधमेव संस्कृतज्ञेषु आक्षेपपूर्णमात्ममतम् । अस्तु. सस्कृतकविभिर्भापाछन्दांसि यन्नाश्रितानि तदुचितमेवेति समर्थनं कर्तुं नाहं प्रयस्यामि । साहित्यविषयाणा परस्परमादानप्रदानाभ्या सर्वास्वेव भाषासु साहित्याङ्गाना परिपुष्टिर्भवतीति को वा न जानीयात् ?

सस्कृतकवीना रचनाप्रचारकाले भापाच्छन्दसामेतेषां सृष्टिरेव नाभवत्, लोकप्रियतैव वा नासीदिति तु ग्राम्यमेवोत्तरम् । अन्येषा कवीना कथा तु दूरेऽस्तु, शाहजहासकाशाल्लब्ध'पण्डितराज'पदकस्य जगन्नाथमहाकवेः समयेऽपि किमेपा छन्दसां सृष्टिर्लोकप्रियता वा नासीत् ? यत्किमप्यस्तु–छन्दसां परस्परमादानप्रदानमार्गोयमुभयभापाभिज्ञैः सूरिभिरवश्यं परिष्कर्तव्य एवेति माननीयमेव भवेत् ।

सत्यं त्वेतत्–यत्कस्मिंश्चित् कस्मिंश्चिद् वर्णनीयविपये अन्येषां छन्दसामपे-

क्षया कवित्तादिच्छन्दसां सुबहु साफल्यमवेक्ष्यते। दृश्यते, राजस्थाने कवीनां कवित्वावृत्तिगोष्ठीषु यदा हि 'ऋतुवर्णनं' प्रस्तूयते तदा कविमहाभागो यत्किंचिदेकं कवित्तं प्रारभ्य तस्य चतुर्थचरणम्, उत्तरोत्तरतारस्वरं यावत्समापयति तावत्सर्वापि विभावसामग्री सजीवेवोपतिष्ठते। वर्णनीयस्य तस्य ऋतोर्मूर्तिरिव संमुखमुदेति। श्रोतॄणां हृदयमभूतपूर्वेण भावोदयेनानुप्राणितं भवति। अत एव युगपदेव सर्वेषा मुखात्साधुवादध्वनिराविर्भवति। यथा हि पद्माकरस्येदं सामान्यपद्यम्—

'कूलनमें केलिमें कछारनमें कुञ्जनमें क्यारिन में कलिन कलीन किलकत है
कहैं 'पदमाकर' परागन में पौन हूमें पातन में पिकमें पलासन पगत है।
द्वार में दिसानमे दुनीमें देसदेसनमें देखो दीप दीपन दिपत दिगन्त है
वीथिन में व्रजमें नवेलिनमें वेलिन में वननमें वागनमें वगर्यो वसन्त है॥'

नैवं भाषान्तरच्छन्दसा प्रभावो दृष्ट। महाकवे· कालिदासस्य रघुवंशस्थं वसन्तवर्णनं को वा जीवितहृदयो न प्रशंसेत्? पर यावत्सर्गसमाप्तिर्न भवति तावद्वसन्तस्य सर्वापि सामग्री न मनस्याविर्भवति। एकेन द्वाभ्या वा पद्याभ्यां नेदं साध्यम्। तच्छन्द एव किल विरलावकाशमिति को वा न जानीयात्?

एवमेव वीरवर्णनासु अमृतध्वनि–छप्पय–तोमरादिच्छन्दसा यथा प्रभावो दृष्टो न तथान्येषाम्। अन्योक्तिविषया नीतिनिर्वचनेऽपि यथा 'कुण्डलिया' छन्दः प्रभवति नैवमन्यत्। अत एव गिरिधरस्य दीनदयालोर्वा कुण्डलियापद्यानि हिन्दीसाहित्येऽद्याप्यमन्दीभूतानि। विरहवर्णने 'वरवै'छन्दोऽपि भूयस्तरा हृदयस्पर्शि संपद्यते। महाकवेर्विहारिणो 'दोहा'पद्यानि तु विशिखवल्लक्ष्यं स्पृशन्तीति केन वा न विदितम्। यद्यपि छन्दस्तदिदं कविताया बाह्या सामग्री नाम। प्राधान्येन हि येन केनापि रूपेण समर्थकविसघटिता समुचितशब्दशय्यैव सहृदयमनस्तोषायाऽलम्। परमस्ति कश्चिच्छन्दसोऽपि स प्रभावो येन स एवार्थः काश्चिदभूतपूर्वा विच्छित्ति पुष्णाति। समुचितमाह क्षेमेन्द्र —

'प्रबन्धः सुतरा भाति यथास्थानं निवेशितै·।
निर्दोषैर्गुणसयुक्तै सुवृत्तैर्मौक्तिकैरिव॥'

---

१–"सतसैयाके दोहरा ज्यों नावकके तीर।"

अत एव सेयं छन्द.सामग्री संस्कृतसरस्वतीसंश्रितापि सहृदयाना स्वान्तसन्तोषाय सभवेन्न वेति निकुञ्जेऽस्मिन् समागतै सूरिभि समीक्षणीयं स्यात् ।

भवन्ति केचन तथासौन्दर्यवन्तो जना यत्ते कीदृगमपि वेषं धारयेयुस्तथापि तेषां शोभा न हीयते । प्रत्युत तेषा तेनापि सामञ्जस्यमावहति । आह कालिदास — 'किमिव हि मधुराणा मण्डनं नाकृतीनाम्' । उर्दूभाषायामेष गुणो 'जामाज़ेवी' नाम्ना प्रख्यायते । इदानीं दृश्यताम्—अस्माकं देवभारत्यामयं गुणोऽस्ति न वा, यत् यस्मिन् कस्मिन्नपि छन्दसि निगुम्फिता सेयमात्मसौष्ठवमभिव्यनक्तीति । नैष यस्या कस्यांचन भाषाया गुण सभवेत् । अस्मिन् समये सकलसभ्यसमाजेन सभाजिता सर्वसौकर्यसपन्ना सेयमिङ्गिलशभाषैव गृह्यताम् । अस्या यदि कश्चन समर्थोऽपि कवि शिखरिणीप्रभृतिच्छन्दो निबध्नीयात्तर्हि तत्कि तावन्मधुरन्नुद्भवेत्, येन हि छन्दस उद्देश्यं पूर्येत ?

किञ्च—संस्कृतभाषायाः सर्वतः प्रचारार्थं प्रयतमाना समीक्षकमहाभागा कथयन्ति यत्संस्कृतसरस्वत्या साहित्यगतं महत्त्वमुच्चभावोन्मुखत्वं च सर्वतोऽधिकमस्माभिरभिमन्यते, पर सर्वत प्रचारार्थमावश्यकं लोकाना मनोरञ्जकत्वमस्यामतिन्यूनम् । दुर्लङ्घतमव्याकरणद्वारं कठिनसाधनैरुल्लङ्घ्यापि यावत्किल काव्यनाटकादिमर्मपरिबोधे निर्बाधा शक्तिर्न भवति तावन्नवीननवीनस्य जिज्ञासोर्मनोरञ्जनाभावाद्वैमुख्यमुद्भवति । अत एव धर्मभाषारूपेण, साहित्यभाषारूपेण, उपभाषारूपेण वा यदि सेयं भाषा पण्डितैर्भूमौ प्रचारयितुं काम्यते तर्हि अन्यान्यभाषावदस्यामपि मनोरञ्जकसाहित्यस्य सृष्टि कर्तव्या भवेत् ।

पाठकमहाभागा द्रक्ष्यन्ति यदस्मिन्निकुञ्जे प्रारम्भादन्तपर्यन्तं दोहा—चौपाई—कवित्त—सवैयादीनि नवीननवीनच्छन्दांसि, ऋतुवर्णनस्य नवीना सामग्री, बारहमासीप्रभृतयो नवीनप्रकारा, बहुभाषामिश्रपद्यानि, गज़ल—ठुमरी—प्रभृतयो गीतय, एकमेव पद्यं हिन्दीसंस्कृतभाषागतं भवतीति चित्रम्, खड्गबन्ध—पद्मबन्ध—शिविकाबन्धाद्यतिरिक्तानि मोटरशकटिबन्धप्रभृतीनि चित्रकाव्यानि, विहारिमहाकवे संस्कृतदोहामयी सूक्तिः, उर्दूहिन्दीभाषाभ्या सह संस्कृतसूक्तीनां तुलनात्मकं निबन्धनम्, रेडियो—वायुयान—मोटरप्रभृतीना स्वरूपवर्णनम्, एवमादीनि नानाविधानि मनोरञ्जकसाधनानि सघटय्य संस्कृतसाहित्यसेविनां कृते नवीनसेवाप्रकारोऽवलंबित. ।

किञ्च–आरम्भादद्यावधि संस्कृतपरिगृहीतैस्तैरेव शतशः क्षुण्णैश्छन्दःप्रकारैः समर्थकवीनां सुधास्यन्दिनीरपि सूक्ती समाकलयता सहृदयाना नवीनप्रकारार्थं भवेत्कदाचन मानसमुत्कण्ठितम् । यतो हि स्वभावादेव मनो नवनवानुरागि । अत एव तेषा मुखास्वादपरिवर्तनार्थमयं प्रयत्नः । सुधामधुरैर्व्यञ्जनै सुहितेभ्योऽपि सामान्यमपि लावणिकं वस्त्वभिरुचितं भवति ।

'संस्कृतभाषापरिगृहीतेषु स्रग्धरा–वसन्ततिलकादिच्छन्दस्सु तत्तादृशं माधुर्यमनुभूतवद्भ्यो रसिकेभ्य सेयं नवीनच्छन्दोनिबन्धनसरणिर्न महत्त्वमावहेत् । किञ्च संस्कृतच्छन्दसामियमवहेला शनै शनैर्विलोपाय तेषा संभवेत् ।' एतत्किल विचारसापेक्षम् । एकस्य वस्तुनो माधुर्यानुभवोत्तरं वस्त्वन्तरमाधुर्यानुभवाय स्पृहैव नोदयेदेतद्धि सामान्यतो मानुषनिसर्गत प्रतीपम् । स्रग्धराप्रभृतेरेकतमस्य कस्यचिच्छन्दसो माधुर्येऽनुभूते वसन्ततिलका–शिखरिणीप्रभृतीनामन्येषा संस्कृतच्छन्दसामपि पुनः काऽऽवश्यकता स्यात् ?

पूर्वच्छन्दोविलोपभयमपि न कर्तव्यं भवेत् । नवीनस्य प्रचारे यदि प्राचीनाना विलोप एवाऽभविष्यत्तर्हि संस्कृत एव एतावता छन्दसा सकलनं कथमभविष्यत् ? नवीने परिगृहीते प्राचीनस्य विलोपेन सग्रहस्याऽनवसरात् । व्रजभाषया हि दोहा–कवित्तादिष्वात्मनश्छन्द सु सत्स्वपि शिखरिणी–भुजङ्गप्रयातादीन्युपात्तान्येव, पर नाऽद्यापि कवित्तादीना कृते महाप्रलयोऽभवत् ।

## ग्रन्थस्य स्वरूपम्

साहित्यमार्मिका विद्वासो विलोकयेरन् यदस्मिन् सन्दर्भे, छन्दोनिबन्धे यथा नूतन प्रकारोऽवलम्बितस्तथैव ग्रन्थसघटनायामपि नव्यैव सरणि· । तत्तद्राजाश्रिता व्रजभाषाकवयः साहित्यग्रन्थमपि प्रणयन्त पूर्व राजसभा–नगरीवर्णन–राजस्तुति–तदाशीर्वादादिकमावध्य तदनन्तरं वर्णयितुमुपक्रान्तं साहित्यविषयमारभन्ते स्म । अत्रापि प्राय स एव प्रकारोऽवलोक्यते । अस्य हि सन्दर्भस्य द्वौ भागौ । तत्र जयपुरवैभवाख्य पूर्वखण्डो राजवंशमभिस्तुवन् जयपुरनगरस्य सपूर्णा विभूतिमभिव्यनक्ति । द्वितीयश्चायं 'साहित्यखण्ड·' । अत एव पूर्वसूचितेषु विषयेषु वहुभाषाचित्र–वन्धकाव्य–'चौपाई'चत्वरप्रभृतयो बहवो विषयाः पूर्वखण्डे प्राप्येरन् ।

सहृदयैः, प्रत्युत धन्यवादार्हा साम्प्रतिकलोकरुचिरेव प्रशंसनीयेति किमधिकं विचारशीलेषु।

मान्यमहाभागाः! निकुञ्जेऽस्मिन् प्रवेशपरिचयाय यत्किञ्चिदिदमावश्यकं निवेदितप्रायम्। कथं छन्द सृष्टिरभवत्, किङ्कृतं महत्त्वं व्रजभाषाच्छन्दसाम्, व्रजभाषासस्कृतभाषयो कवितातत्त्वस्य विमर्शनम्, शैलीनां विचार, उर्दूभाषाया इतिहास, तत्कवितानां गुणागुणविमर्शनम्, एतदादयो विषया· पूर्वखण्डस्य भूमिकाभागे विचार्येरन्। अस्मिन् भागे संस्कृत–हिन्दी–उर्दूभाषाणां प्रसिद्धानि प्राय· समग्राण्येव छन्दांसि संकलितानि, परं विस्तारमनावश्यकत्वं च विचार्य न तेषा लक्षणादीनि दीयन्ते। सत्यावश्यकत्वे भूमिकायामेतत्क्रियेत।

इतोऽधिकमावश्यकमन्यत्सर्वं यद्यपि भूमिकायामुपादीयेत, तथापि साम्प्रतमागराविश्वविद्यालयस्य परीक्षाऽध्यक्ष(रजिस्ट्रार)पदम् अधितिष्ठतः एम् ए पदमण्डितस्य पण्डित–श्रीश्यामसुन्दरशर्ममहाभागस्योपकारमप्रकाश्य वक्तव्यमिदमुपसंहरतो ममाऽवश्यमकृतज्ञत्व स्यात्। निर्मायं गुणप्रणयी एष महाभागो यदा हि जयपुरराज्यस्य शिक्षाविभागाध्यक्ष (Diractor of Public Instruction) पदमलङ्करोति स्म, तस्मिन् समये तदुत्साहसाक्षिणि शिक्षासप्ताहे (Educationweek) जयपुरराजकीयसस्कृतकालेजान्तस्तदुत्साहेनैव संप्रतिष्ठिताया पण्डितसभाया प्रथमाधिवेशने सर्वत प्रथमं ममेदमेतादृशमक्षरयोजनमसौ महाभाग श्रोत्राऽतिथीकुर्वन्सुभृशमभिरोचयाचकार।

समये समये समुचितसंमतिप्रदानाऽतिरिक्तमयं स्वयं साहित्यमार्मिकोऽपि निष्पक्षपातपरीक्षानिमित्तं निकुञ्जस्य मुद्रितं भागमिङ्ग्लिशसंस्कृतोभयसाहित्यपारंगतेभ्यो भारतराजतन्त्रसमानितेभ्यो विश्वविदितेभ्य केभ्यश्चित्पण्डितप्रकाण्डेभ्यः प्रहित्य संमती· सजग्राह। तस्यैव महाभागस्याऽनुमत्या सहैव मुद्रिता इमाः समतयः पाठकमहाभागानां दृशोर्गोचरमुपगच्छेयुः।

एवं मत्प्रोत्साहनाय, निकुञ्जस्याऽस्य परितः परिचयाय च सुमहत्प्रयतमानस्य निरुपधिगुणपक्षपातिनोऽस्य महाभागस्य समुपचितमुपकारभारमान्तरिकीभिराशीर्भिरेव केवलं प्रतिप्रकटयितुं प्रभवन्नहं 'जयपुरवैभवे' प्रकाशयिष्यमाणं पद्यात्मना परिणतमिमं सत्यं हृदयोद्गारमद्योपस्थापयामि पाठकानां पुरस्तात्—

## कवित्त (घनाक्षरी)

प्राचीना परिष्कृता नवीना पुनराविष्कृता
विद्यालया येन नगरेऽथ ग्रामसंचये
भाषायामभिज्ञो देवभाषाया रसज्ञो भृशम्
एम्. ए पदमण्डितोऽपि वैदेशिकवाङ्मये।
निःस्वार्थाऽनुरागाद्भूरिसंस्थापरिचालकं यं
गुणिषु विनीतचर्यापालकं विलोकये
शिक्षणविभागभरितोदये मनोऽद्य मुहु-
र्मोदयेयमस्मिन् श्यामसुन्दरमहोदये ॥४॥

जयपुरराजकीय 'महाराजा कॉलेजस्य' पारसीकभाषाध्यापक श्रीमान् मौलिवी-बकामहाभागोऽपि मे बहु माननीयो येन हि उर्दूच्छन्दसा नामनिर्देशे साहाय्यकमक्रियत। एवं समयोचितसंमतिदातारो महामहोपाध्याय-श्रीमद्गिरिधरशर्मचतुर्वेदा आयुर्वेदाचार्यश्रीलक्ष्मीरामस्वामिमहाभागप्रभृतयोऽपि धन्यवादार्हाः।

## 'सूचना'

अस्मिन् खण्डे प्रायो घनाक्षरी-(कवित्त-)-छन्दांस्येव विशेषतो गृहीतानि। अत एव यत्र नाम न सूचितं तत्र तदेव छन्दो बोद्धव्यम्। स्थाने स्थाने च 'क' संकेतेन, कवित्त घनाक्षरी, 'दो' 'सो' इत्येताभ्या च 'दोहा' 'सोरठा' छन्दसी सूचिते स्तः।

सुभृशमवधानेऽपि कानिचिन्मुद्रणस्खलितानि भवेयुरनिवार्याणि। विशेषतस्तु तृतीयादारभ्य दशमपुटकं (फार्म) यावद्विहारिविलासे सन्ति केचित्प्रमादा। एतेषु स्वतः परिज्ञेयान् स्थूलान्परित्यजामि। भ्रामकांश्चैतास्तु शोधनपत्रेण संशोध्य पठेयुर्गुणपरिशीलिनः पाठकमहाभागा इति निवेदनम्।

पद्यकवितायां विशेषतश्चैवंविधे छन्दसि भावपरिबोधविषये भवेत्कदाचन काठिन्यमिति निकुञ्जे मार्गपरिचयार्थमावश्यकी सेयं 'सहचरी' व्याख्यापि सेवायां नियोजितास्ति। अस्तु, इतोऽग्रे न मद्वचसामवकाश.। गुणदोषविवेचका रसिकाः स्वयमेव निकुञ्जेऽस्मिन् प्रविश्य परिचिन्वन्तु तत्त्वमदसीयमिति-

कतिपयपदानां हठादाकर्षकमात्रः-

मञ्जुनाथः।

# FOREWORD

In his "As you like it", Shakespeare makes Touchstone say—"I'll rhyme you so eight years together, dinners and suppers and sleeping—hours excepted".

And it is perhaps no exaggeration to say that amongst the "poets" of the modern days, particularly in the field of Sanskrit poetry, there are more Touchstones than Shakespeares. The "Sakti" or the natural aptitude of the mind, which Mammath calls so essential for the making of a true poet is very rarely found in these days. But it is not to be wondered at. Nature itself ceases to produce a thing which is not in demand The times of Bhoja are gone and we have long ceased to appreciate Sanskrit poetry, to adore Sanskrit poets and to assign them their proper place in society.

It is all the more pleasing therefore when in a period of decadence of Sanskrit poetry, we come across a person who possesses in so uncommon a measure that "S'akti" of the poet and that command of style, language and metre, which at once distinguish him from the ordinary class of "poets" and assign him a position all his own. That is the reason why I have always loved and admired Pandit Mathura Nāth Bhatta, the author of the present book—Manju Kavitā Nikunja and have felt so often that if he is given proper encouragement and facilities for work, he should be able to render very good services indeed to the cause of Sanskrit learning in the field of poetry.

The Manju Kavitā Nikunja, is the first attempt of the author towards publication of his works and is really the second volume—"The Sāhitya Khanda" of a bigger book, the first Volume under the title of "Jayapura Vaibhava" is now under preparation and its publication will depend largely on the reception which will be accorded by Sanskrit scholars to the present Sāhitya Khanda The author has explained in the introduction the general scheme of the whole book and has given some account of himself at the end which will be read with interest The exhaustive list of contents in the beginning will give an idea of the wide range of the subjects covered.

I do not myself feel competent to say any thing about the merits and demerits of the work which has been reviewed by much abler hands than mine, and I am glad to add, has been generally appreciated Mahamahopadhyaya Dr. Ganga Nath Jha M, A., D. Litt—Vice chancellor' Allahabad University, Principal A. B, Dhruva, M. A., pro—vice—chancellor, Benares Hindu University, and Pandit Gopinath Kaviraj. M. A. Principal Government Sanskrit college, Benares were kind enough to review the book at my request, while it was in print, and their opinions will be found in the beginning of this volume. I have to record my very grateful thanks to the three learned scholars for all the trouble which they so kindly and so readily undertook in this behalf.

I have, however, to add a word in explanation of the Hindi and Urdu metres which the author has made use of in this book. More than 8 or 9 years ago there was held a Pandit Sabha in Jaipur, and several Sanskrit scholars then expressed

the opinion. as Sanskrit scholars may hold that opinion now, that it was not possible to have good Sanskrit poetry in Hindi and Urdu metres. Pandit Mathura Nath Bhatta took the other view and maintained that, provided the command of the language was there, a poet could compose just as good Sanskrit verses in Hindi and Urdu metres as in the classical metres. The present work is intended by the author to prove his contention, although he has devoted one chapter entirely to the classical metres as well. It is for Sanskrit scholars to judge as to how far Pandit Mathura Nath Bhatta has been successful in his attempt. But this is of course only one aspect of the book.

University office,
Agra,
*5th March 1930.*

**Shyamsundar Sharma**
**Registrar,**
Agra University.

I have looked over a few verses in Manjukavitā Nikunja and am very pleased to note that even at the present time there are writers who can compose such verses in Sanskrit. The language is mellifluous, and the ideas, though not always original are neatly expressed The adoption of the "Hindi" metres and the consequent abandonment of the older metres is, in my opinion, not an improvement. It is only when framed in the older metres that Sanskrit poetry appears in its natural setting. If the departure has been made with a view to show that Sanskrit poems could be composed in the new metres, a certain section of the work may have been done on those lines As it is, one misses very much the sweat Indravajrā, the elegant Mālini and the ennobling Mandākrāntā and the soul uplifting

Sragdharā. As the work is still incomplete I hope the poet will compose the rest of the work in the Sanskrit metres.

This however does not detract from the value of the Pandit's work, which will still please many a heart and make one realise that Sanskrit is after all not quite a "dead language" yet.

GANGA NATH JHA,
Vice-chancellor,
University of Allahabad.

"मञ्जुकविता-निकुञ्ज"

I appreciate the poem as a fine specimen of the kind of poetry which our Pandits at present are writing The Panditji has a good command over the Sanskrit language, and the work is very well done in the traditional style. May I add that this type of poetry we can now enjoy only as classical poetry? May we not expect that modern Sanskrit poets will see new visions and new forms of beauty such as will appeal to the modern world?

**A. B. Dhruva,**
Principal & Pro-vice-chancellor,
The Benares, Hindu University.

Dated,
*11-11-1929.*

I must heartily congratulate Pandit Mathura Nath Bhatta Sahityacharya on his production of an exquisite collection of sanskrit poems, called "Kavita—Nikunja" (bower of poems,), through which I have had the pleasure of glancing recently. The book impressed me as a genuine work of poetical art. In

these days of decadence of Sanskrit learning it is refreshing to find a poet of such high accomplishment and with such a command of style, language and metre. The wealth of imagery and artistical colouring displayed in the work is really a rare sight among the poets of the present age. The poem is divided into several sections, with verses on different subjects in each. The description of the seasons, the representations of the various moods of the human mind, the delineation with touches of humour at intervals of the darker phases of the modern social life all these have a ring of freshness and spontaneity about them which mark them out as distinctive of true inspiration. The author is at his best in his manipulation of the metres not merely those which are current in the Sanskrit classics but even some new varieties coined by him in imitation of Hindi, Urdu and Persian. This introduction of new metrical standards in Sanskrit poetry may not appeal to the conservative mentality of the orthodox Sanskrit poets steeped in old associations and traditions, but it is certainly a clear sign of life in the poet and should be welcome as such to all lovers of Sanskrit as enriching the rhythmic possibilities of the language.

**Gopinath Kaviraj,**
Principal,
Govt. Sanskrit College, Benares.

*19th Feb 1930.*

श्रीः

## भारतमार्तण्डश्रीमद्‌गट्टूलालाजीमहाभागानां प्रधानशिष्य-पञ्चदशावधानि-श्रीनाथद्वाराराजधानीविद्याविभागाध्यक्ष-शीघ्रकवि-विद्याऽलङ्कार-भट्टश्रीनन्दकिशोरशास्त्रिणां संमतिः

अन्तः सद्रससंभृताऽतिमधुरद्राक्षासदक्षाक्षरः
स्फूर्जत्प्रौढतमार्थगौरवधरः शृङ्गारित स्वैर्गुणैः ।
श्रीमान् काव्यनिकुञ्ज एष स मनोहारी निगुम्फोऽद्भुत-
स्तुल्यो यस्य नवीनरीतिललितो नाऽद्यावधि प्रेक्षितः ॥ १ ॥
इति नन्दकिशोरेण तुष्यता सत्कवित्वतः ।
माननीया सहृदयैः संमतिर्दीयते निजा ॥ २ ॥

---

कविकोकिलराजस्य मञ्जुनाथस्य मञ्जुले ।
सरसे कविताकुञ्जनिकुञ्जे व्यहरं चिरम् ॥ १ ॥
स्वाभाविकस्वभावसुलभा साले साले क्षणे क्षणे ।
समुत्पन्ना कृता गुञ्जा नूनं रञ्जयते मनः ॥ २ ॥
नृत्यत्प्रायपदध्वानेऽवधानं यच्छतो मम ।
विनैवाऽर्थाऽनुसन्धानमुदिता काऽपि निर्वृतिः ॥ ३ ॥
यदत्र किञ्चित्स्वाच्छन्द्यं यच्च शासनलङ्घनम् ।
कोकिलस्य स्वतन्त्रस्य भूषणं तन्न दूषणम् ॥ ४ ॥
हिन्दीवेषविशेषेण सुरगी समलङ्कृता ।
अनभ्यासवशादस्मच्चेतश्चित्रयते क्वचित् ॥ ५ ॥
तथाऽपि नव्यनेपथ्यदर्शनोत्पुलकस्य मे ।
चिरं परिचिता वाणी कर्णौ प्रीणयति क्षणम् ॥ ६ ॥
मञ्जुनाथः कविर्नूनं प्रशस्योऽमृतमञ्जुवाक् ।
चिरं जयतु चेतांसि रञ्जयन् सरसात्मनाम् ॥ ७ ॥

सरस्वतीभवनम् । काशी
१४।१२।२९

इत्याशंसति काशीस्थ खिस्तेवंशाऽङ्कुरो मुदा ।
भारतीभवनाऽध्यक्षः शास्त्री नारायणः सुधीः ॥

## विषयसूची ।


| विषयः | पृष्ठम् |
|---|---|
| **आमुखवीथी—** | |
| मङ्गलम्— | |
| गणेशः | १ |
| सरस्वती | ३ |
| श्रीकृष्णः | ४ |
| प्रातःकालः । | ५ |
| प्राकृतिकशोभाया मङ्गलारम्भः | ६–७ |
| वनम् | ९–१२ |
| **षड्ऋतुवीथी—** | |
| वसन्तः | १३–१६ |
| स्मरस्य युद्धरूपकम् | १७ |
| मृगयारूपकम् | १८ |
| कामस्य मृगयुरूपकम् | १९ |
| वसन्तस्य वणिग्रूपकम् | २० |
| वसन्ते वनवीथी | २१ |
| वनविहारः | २२ |
| वसन्ते नायिकाः— | |
| मानिनी | २४ |
| सिंहावलोकनम् | २५ |
| प्रवत्स्यत्पतिका | २५ |
| गीतगोष्ठी | २६ |
| ग्रीष्मः | २८ |
| ग्रीष्मस्य नरेशरूपकम् | २९ |
| ग्रीष्ममध्याह्नः | ३१ |
| मध्याह्ने भूमिगर्भः | ३१ |
| ग्रीष्मरजनी | ३३ |
| ग्रीष्ममध्याह्ने नायकः | ३४ |
| ग्रीष्मे नायिकाः— | |
| मानिनी | ३५ |
| प्रवत्स्यत्पतिका | ३६ |
| स्वाधीनपतिकायाः पुष्पशृङ्गारः | ३७ |
| राधाकृष्णयोः पुष्पहर्म्योत्सवः | ३७ |
| ग्रीष्मे नायकयोरुपवनविहारः | ३८ |
| ग्रीष्मे जलविहारः | ३९ |
| प्रावृट् | ४०–४२ |
| प्रावृषो राज्ञीरूपकम् | ४३ |
| सेनारूपकम् | ४४ |
| प्रावृषि नायिकाः— | |
| प्रोषितपतिका | ४४–४६ |
| प्रवत्स्यत्पतिका | ४६ |
| विरहिणी | ४७ |
| वर्षासु निकुञ्जविहारः | ४८ |
| जलधरं प्रत्युपालम्भः | ४९ |
| श्रीकृष्णं प्रति दूत्या उक्तिः | ५० |
| जलधरं प्रत्यभिनन्दनम् | ५० |
| शरद् | ५१ |
| शरदो राज्ञीरूपकम् | ५३ |
| शरदि चन्द्रोदयः | ५४–५५ |
| शरदि नायिकाः— | |
| प्रवत्स्यत्पतिका | ५६ |
| वासकसज्जा | ५७ |
| शरदि वनशोभा | ५७ |
| हेमन्तः | ५९–६० |
| हेमन्ते प्रवत्स्यत्पतिका | ६० |
| हेमन्ते विरही | ६१ |
| पौषस्य तीव्रता | ६२ |
| हेमन्ते सुखसज्जा | ६३ |
| हेमन्ते रात्रयः | ६४–६५ |

| विषयः | पृष्ठम् |
|---|---|
| शिशिरः | ६६–६७ |
| शिशिरस्य नरेशरूपकम् | ६७ |
| शीताधिक्यम् | ६९ |
| शिशिरे वियोगी | ७१ |
| शीत प्रत्युपालम्भः | ७२ |
| शीतस्याभिनन्दनम् | ७३ |
| **नवरसवीथी—** | |
| शृङ्गारः | ७४ |
| नायिका — | |
| पूर्वं पूर्वानुरागे मुग्धा | ७५ |
| स्वाधीनपतिका | ७६ |
| वासकसज्जा | ७६ |
| अभिसारिका | ७७ |
| विरहोत्कण्ठिता | ७८ |
| कलहान्तरिता | ७९ |
| खण्डिता | ८०–८१ |
| उत्का | ८१ |
| वृत्तसुरतगोपना गुप्ता | ८२ |
| प्रोषितपतिका | ८३–८६ |
| प्रवसत्पतिका | ८७ |
| प्रवत्स्यत्पतिका | ८८ |
| विश्रब्धसुरता मध्या | ८९ |
| लक्षिता | ९० |
| स्वयंदूतिका | ९१ |
| विप्रलब्धा | ९२ |
| मानिनी | ९३–९४ |
| **दोहाचत्वरः** | |
| स्वयसन्देश | ९५–१०० |
| बिहारिविलासः—मङ्गलम् | १०१–१०३ |
| श्रीकृष्णशोभावर्णनम् | १०६–१०८ |
| मुग्धाया वयःसन्धिः | |
| अङ्कुरितयौवना | ११० |
| नवागतयौवना मुग्धा | ११०–११२ |
| ज्ञातयौवना | ११२ |
| नवोढा | ११३ |
| सलज्जा मध्या | ११४ |
| समानलज्जा कामा | ११४ |
| प्रौढा | ११५ |
| कुलवधूः | ११५ |
| प्रेमगर्विता परकीया | ११६ |
| नदीतटे मेलनम् | ११७ |
| स्वयदूतिका | ११७ |
| नायकयोर्मिथो दर्शनम् | ११८–११९ |
| दयितानुरागिणी | १२० |
| प्रेमगर्विता | १२१ |
| लक्षिता | १२२ |
| खण्डिता | १२२ |
| प्रोषितपतिका | १२२–१२३ |
| विरहे तापः | १२३–१२७ |
| प्रेमगर्विता | १२७ |
| क्रियाविदग्धा | १२८ |
| अतिरसाविष्टा | १२८ |
| मुखवर्णनम् | १२९–१३० |
| नेत्रे | १३०–१३३ |
| भ्रू | १३४ |
| केशा | १३४ |
| भालबिन्दु | १३५ |
| चिबुकम् | १३५ |
| कुचौ | १३६ |
| कटि | १३६ |
| रूपवर्णनम् | १३७–१३९ |

| विषयः | पृष्ठम् |
| --- | --- |
| नवोढाया मधुपानम् | १३९ |
| अवलोकनम् | १४०-१४२ |
| विरहोत्कण्ठिता | १४३ |
| प्रवत्स्यत्पतिका | १४३ |
| अनुरागः | १४४-१४६ |
| दम्पत्योरभिसारः | १४६ |
| सुरतम् | १४७-१४८ |
| नखक्षतम् | १४८ |
| परिहासः | १४८-१४९ |
| अनुरागिणी | १५० |
| अनुरागी भक्तः | १५०-१५१ |
| वसन्तपवनः | १५१ |
| वसन्तवनम् | १५२ |
| प्रावृट्पयोदः | १५२ |
| हेमन्तः | १५३ |
| भ्रमरः | १५३-१५४ |
| गान्धिकः | १५५ |
| गोपः | १५६ |
| कनकः | १५६ |
| महत्त्वम् | १५७ |
| आशीः | १५७ |
| वेणीबन्धनम् | १५८ |
| अलक्तकेन चरणरञ्जनम् | १५८ |
| केलिवातायनम् | १५९ |
| दम्पत्योर्मानकलहः | १६० |
| निश्रब्धशयनम् | १६१-१६२ |
| वर्षेचत्वरः | १६३-१७३ |
| द्वादशमासी | १६३-१६५ |
| विरहिणी | १६६ |
| विरही | १६६ |
| [illegible] | १६७ |
| मानिनी | १७० |
| प्रेमगर्विता | १७२ |
| प्रेमचेष्टा | १७२ |
| शीतान्योक्तिः | १७३ |
| जर्मनयुद्धे भारतेशाशीः | ,, |
| जयपुरपुरन्दरायाशीः | ,, |
| विद्याधरसुन्दरी | १७४ |
| प्रवासिनो दुःखम् | १७४ |
| केलिसदनामुखी | १७५ |
| वीरः | १७७ |
| दयावीरः | १७८ |
| दानवीरः | १७९ |
| धर्मवीरः | १८० |
| विद्यावीरः | १८१ |
| युद्धवीरः | १८२-१८३ |
| युद्धवर्णनम्— | |
| हस्तिनः | १८४-१८८ |
| अश्वाः | १८८-१९३ |
| अश्वकुलाना वर्णनम् | १८९ |
| अश्वजातीना वर्णनम् | १९० |
| घोटकाना शृङ्गारः | १९२ |
| अश्वाना चलनप्रकारः | १९२ |
| उष्ट्राः | १९३ |
| रथाः | १९४ |
| शतघ्नीप्रभृतिरन्या सामग्री | १९५ |
| युद्धे दुन्दुभिध्वनिः | ,, |
| युद्धारम्भे नानाविधवाद्याना ध्व | १९६-९७ |
| युद्धारम्भः | १९७-१९९ |
| शतघ्नीचलनम् | १९९ |
| घोरयुद्धम् | २०३-२०६ |
| योगिन्यादयः | २०५ |

| विषयः | पृष्ठम् |
|---|---|
| विजयपञ्चरंगध्वजः आशीश्च | २०५–२०६ |
| मृगया— | |
| सिंहावलोकनम् | २०७ |
| सिंहस्योच्छलन मृगया च | २०८ |
| करुणः | २०९–२११ |
| राज्ञो मरणम् | २११ |
| अद्भुतः | २१३–२१४ |
| हास्यः— | |
| भक्तवरः | २१६ |
| जैण्टिलमैनः | ,, |
| चौबेमहाशयः | २१७ |
| भयानकः | २१९ |
| रौद्रः | २२०–२२१ |
| म्लेच्छसेनापति प्रत्युक्तिः | २२१ |
| बीभत्सः | २२२–२२३ |
| शान्तः— | |
| पूर्व वैराग्यम् | २२४–२२५ |
| वैराग्यार्थमुत्तेजना | २२६ |
| लोभार्थे धिक्कारः | २२७ |
| शनैः २ भगवति रतिः | २२७–२२८ |
| भावः— | |
| श्रीकृष्णः-श्रीशिवः | २२९ |
| शंकरात्कारुण्यप्रार्थना | २३० |
| श्रीकृष्णात्कारुण्यप्रार्थना | २३१ |
| अन्तसमये भगवतः प्रार्थना | २३२–२३४ |
| शान्तिः | २३५ |
| **नीतिवीथी—** | |
| कुण्डलियाचत्वरः | २३६ |
| माया | २३७ |
| परसेवा | ,, |
| त्रिगुण दैवम् | २३८ |
| मुद्रा | २३८ |
| मुद्रा नानाविधा | २३९ |
| सज्जनमैत्री | २४० |
| दुर्जनमैत्री | २४० |
| सूनृतवाणी | ,, |
| साध्वी पत्नी | २४१ |
| लज्जा | ,, |
| अभिमानः | २४२ |
| सत्कार्यम् | ,, |
| दानी | २४३ |
| कृपणः | ,, |
| परनिन्दा | २४४ |
| पण्डितैः सह दर्पः | ,, |
| कलिमाहात्म्यम् | २४५ |
| कवीनामुत्कर्षः | ,, |
| स्वामी | २४६ |
| राजा | ,, |
| राजकर्मचारिणः | २४७ |
| मन्त्री | २४८ |
| **अन्योक्तिरूपेण नीतिः—** | |
| चातकः | ,, |
| मेघः | २४९ |
| रत्नविक्रेता | २५० |
| सौगन्धिकः | २५१ |
| मालाकारः | २५१–२५३ |
| मधुकरः | २५३ |
| कोकिलः | २५४ |
| मल्लिकावृक्षश्च वानरश्च | ,, |
| तरुणीवृक्षश्च वानरश्च | २५५ |
| युवा सिंहः | २५६ |
| जरत्सिंहः | ,, |

| विषयः | पृष्ठम् |
|---|---|
| चपला ... ... ... | ३४३ |
| मुखचपला ... ... ... | ३४४ |
| जघनचपला ... ... | " |
| पथ्या ... ... ... | ३४५ |
| आदिविपुला ... ... | " |
| अन्त्यविपुला ... ... | ३४६ |
| गीतिः ... ... ... | " |
| उपगीतिः ... ... ... | ३४७ |
| उद्गीतिः ... ... ... | " |
| आर्यागीतिः ... ... | ३४८ |

**हिन्दीभाषाव्यवहृतानि च्छन्दांसि—**

| विषयः | पृष्ठम् |
|---|---|
| सोरठा ... ... ... | ३४९ |
| दोहा ... ... ... | " |
| दोही ... ... ... | " |
| उल्लाल ... ... ... | ३५० |
| उल्लाला ... ... ... | " |
| तोमर ... ... .. | " |
| कज्जल ... ... ... | ३५१ |
| चौबोला ... ... ... | " |
| चोपई ... ... .. | " |
| चोपाई ... ... .. | ३५२ |
| अरिल्ल ... ... ... | " |
| पद्धरि ... ... ... | " |
| प्लवङ्गम ... ... .. | " |
| रोला ... ... .. | ३५३ |
| दिगपाल ... ... ... | " |
| हरिगीतिका ... .. | ३५४ |
| मरहठा ... ... ... | " |
| चवपैया ... ... ... | ३५५ |
| आल्हा ... ... ... | ३५६ |
| त्रिभङ्गी ... ... ... | ३५७ |

| विषयः | पृष्ठम् |
|---|---|
| करखा ... ... ... | ३५७ |
| झूलना ... ... ... | ३५८ |
| वरवै ... ... .. | ३५९ |
| अतिवरवै ... ... .. | " |
| कुण्डलिया ... ... ... | " |
| अमृतध्वनिः ... ... | ३६० |
| छप्पय ... ... ... | ३६१ |
| मोतियदाम ... .. | ३६२ |

**सवैयास्तवकः—**

| विषयः | पृष्ठम् |
|---|---|
| मदिरा ... ... ... | ३६२ |
| सुमुखी ... ... . | ३६३ |
| मत्तगयन्द ... .. .. | ३६४ |
| चकोर ... ... . | ३६५ |
| दुर्मिल .. .. ... | " |
| मुक्तहरा ... ... ... | ३६६ |
| वाम ... ... . | ३६७ |
| अरसात ... ... ... | ३६८ |
| किरीट ... .. . | ३६९ |
| सुन्दरी ... .. . | " |
| अरविन्द ... ... .. | ३७० |
| लवङ्गलता ... . | ३७१ |
| सुख ... .. . | ३७२ |
| दण्डकेपु-नवनीलचक्रम् . | ३७३ |
| अनङ्गशेखर . | " |
| घनाक्षरी . ... | ३७५ |
| रूपकघनाक्षरी .. | ३७६ |
| देवघनाक्षरी ... | ३७७ |

**उर्दूभाषाप्रचलितानि छन्दांसि—**

| विषयः | पृष्ठम् |
|---|---|
| १—बहरे हज़ज मुसद्दस मेहजूफ .. | ३७९ |
| २—बहरे रमल मुसम्मन महजूफ | ३८० |

| विषयः | पृष्ठम् |
| --- | --- |
| ३–बहरे हजज मुसम्मन कुश्तुर ... | ३८० |
| ४–बहरे हजज मुसम्मन अखरब .. | ३८१ |
| ५–बहरे हजज मुसम्मन सालिम .. | ३८२ |
| ६–बहरे हजज मुसम्मन अखरब मकफूफ मकसूर ... | ३८३ |
| ७–बहरे हजज मुसद्दस मकसूर ... | „ |
| ८–बहरे खफीफ मुसद्दस मखबून महजूफ ... ... | ३८४ |
| ९–बहरे मुजारे मुसम्मन अखरब मकफूफ महजूफ ... | „ |
| १०–बहरे रमल मुसद्दस महजूफ ... | ३८५ |
| ११–बहरे मुतकारिब मुसम्मन सालिम ... ... | „ |
| १२–बहरे मुतकारिब मुसम्मन मकबूज असलम मुजाइफ . | ३८६ |
| १३–बहरे कामिल मुसम्मन सालिम | ३८७ |
| १४–बहरे रमल मुसद्दस मकसूर ... | ३८८ |
| १५–बहरे मुजारे मुसम्मन अखरब... | ३८९ |
| १६–बहरे मुतकारिब मुसम्मन महजूफ | ३८९ |
| १७–बहरे हजज मुसद्दस अखरब मकबूज महजूफ ... | ३९० |
| १८–बहरे हजज मुसम्मन मकबूज | ३९१ |
| १९–बहरे तवील, वा बहरे मुतदारिक मखबून मुजाइफ ... | ३९२ |
| **गीतिवीथी—** | |
| भूमिका .. . | ३९३–३९६ |
| **व्रजभाषाचत्वरः** | |
| १–देशमल्लाररागेण ... ... | ३९७ |
| २–मरुप्रसिद्धमाढरागेण .. | ३९८ |
| ३–सिन्धुकाफीरागेण ... . | „ |
| ४–पुनस्तथा ... . .. | ३९९ |
| ५–ठुमरी ... ... ... | ४०० |
| ६–दादरा .. .. .. | „ |
| ७–लावनी [रासलीलाया मदनविजयः] ... | ४०२ |
| ८–नाटकीयठुमरी ... ... | ४०४ |
| ९–गालिगीतिः ... . | „ |
| १०–देशमल्लाररागेण ... ... | ४०५ |
| ११–नाटकीयगीतिः ... .. | ४०६ |
| १२–प्राचीननाटकीयगीतिः ... | „ |
| **उर्दूभाषाचत्वरः** | |
| **'गज़ल'** | |
| १–नन्दनन्दन हे मुकुन्द० ... | ४०८ |
| २–भगवन् दयार्द्रगेषा० ... | ४०९ |
| ३–व्रजराज गोकुलेन्दो० . | ४१० |
| ४–नवीना वेदना० ... ... | ४११ |
| ५–हे चित्त चिन्तयैव० . .. | ४१३ |
| ६–[रुबाई] अये भोः प्रिये ते० | ४१५ |
| ७–मनसो दैववशादद्य० ... | ४१९ |
| ८–अये पद्मेऽङ्घ्रिपद्मे० ... | ४२० |
| ९–नन्दसूनो कि विधूनो० ... | ४२१ |
| १०–भो विभो दयार्द्रगिय० ... | ४२२ |
| ११–कीर्तये कालिन्दि० . | ४२३ |
| १२–भूतेश भवत्पाद० .. | ४२४ |
| १३–भारती मे भवाय० .. ... | ४२५ |
| १४–दया तवेह मामये०... . | ४२६ |
| १५–अयि चित्त चिरेण० . | ४२७ |
| १६–दर्शनीयासि निसर्गेण० .. | ४२८ |

| विषयः | पृष्ठम् |
|---|---|
| १७–न याहि लावण्य० ... | ... ४३० |
| १८–विरहापगातटमुत्तर० | ... ४३१ |
| १९–शोचनीयाद्य सखे० | ... ४३२ |
| २०–अयि चित्त चञ्चल मे० | ... ४३४ |
| २१–चिन्ता निरन्तर सखे० | ... ४३५ |
| २२–अयि मे निरन्तरवेदने० | .. ४३६ |
| २३–सन्तत संतापिताना० | ... ४३७ |
| २४–अये विश्रम्यतामीप० | ... ४३९ |
| २५–न ते जानते नेत्रयो० | ... ४४० |
| २६–सुविलासमये समये० | ... ४४२ |
| २७–कञ्जाक्षि कुर्महे० ... | ... ४४४ |
| २८–न विधेहि ते विमुखं० | ... ४४६ |
| २९–अये लोकये किं० ... | ... ४४७ |
| ३०–रतिविगमोऽद्य० ... | ... ४४८ |
| ३१–अहो मुष्णासि लोकान्० | ... ४४९ |
| ३२–अये पद्मालये० ... | ... ४५१ |
| ३३– ,, [दोहाच्छन्दोभिः] | ... ४५३ |
| ३४–भो विभो मम मानसे० | ... ,, |
| ३५–अयि व्रजराज० ... | ... ४५४ |
| ३६–अयि हे गजेन्द्रदया० [गजेन्द्रमोक्षः] | ... ४५६ |
| ३७–भूयात्प्रभोऽधुना तु० | .. ४५७ |
| ३८–अये कामये नाथ० ... | ... ४५८ |
| ३९–नानुगृह्णासि न किं० | ... ४६० |
| ४०–अये गिरीन्द्रनन्दिनी० | ... ४६१ |
| ४१–अये शंभो भवेत् किं भो० ... | ,, |
| ४२–वन्दामहे महेशपदा० | ... ४६२ |
| ४३–अहो क वाश्रयेय० (भवाटवी) | ४६३ |
| ४४–भ्रमन्त भूरि ससारे० | ... ४६५ |
| ४५–दयालो किमालो० .. | ... ४६६ |
| ४६–हंहो मुकुन्द मामहो | ... ४६७ |



| विषयः | पृष्ठम् |
|---|---|
| ४७–दोष ददासि चेद्विभो० | ... ४६८ |
| ४८–हरे सतरेद्भाग्य० ... | ... ४६९ |
| ४९–उपेक्षयाऽल जहासि० | ... ४७० |
| ५०–अयि नाथ दयादृष्टि० | ... ४७२ |
| ५१–मयभीतमेन० (नवप्रचलितगीतिः) | ४७३ |


स्वदेशगीतयः


| | |
|---|---|
| ५२–अहो श्रीभारताभिख्यो० | ... ४७५ |
| ५३–कश्चिद्विपश्चिदग्रतो० | . ४७८ |
| ५४–हे गणेयगुणावधे ... | .. ४७९ |
| ५५–माननीयमहोदयाः .. | ... ४८१ |


स्वागतगीतयः


| | |
|---|---|
| ५६–स्वागत भवतामुदार० | ... ४८२ |
| ५७–स्वागतं सर्वजगन्०... | ... ४८४ |
| ५८–अये गुणोदार० . | ... ४८५ |


## नवयुगवीथी—


| | |
|---|---|
| १–मङ्गलसोरठाच्छन्दः | ... ४८७ |
| २–अवतरणिकायारछन्दस्त्रयम् | ... ४८८ |
| ३–रेलशकटि. ... | ... ,, |
| ४–वायुयानम् ... | .. ४९० |
| ५–अब्धियानम् .. | ... ,, |
| ६–ट्रामवे .. .. | . ४९१ |
| ७–मोटरम् ... ... | . ४९२ |
| ८–वायुचक्रकलम् ... | ... ,, |
| ९–विद्युत् ... ... | ... ४९३ |
| १०–विद्युत्तन्त्री... .. | .. ,, |
| ११–ग्रामोफोन ... | ... ४९४ |
| १२–रेडियो ... ... | ... ,, |
| १३–यन्त्राणि .. ... | ... ४९५ |
| १४–शल्यचिकित्सा ... | ... ४९६ |
| १५–एक्सकिरणा. ... | .. ४९७ |
| १६–चित्रविद्या ... | ... ,, |

| विषयः | पृष्ठम् |
|---|---|
| १७-फोटोग्राफी ... | ... ४९८ |
| १८-सीनेमा ... ... | ... " |
| १९-मोहमयीस्था टङ्कशाला | ... ४९९ |
| २०-विज्ञानवैभवम् .. | ... ५०० |
| २१-गौराङ्गाणां गौरवम् .. | ... ५०१ |
| २२-गौराङ्गाणां स्वजात्यनुरागः | ... " |
| २३-अङ्गरेजानां नीतिनैपुण्यम् | ... ५०२ |
| २४-भारतार्थं विचारः ... | ... ५०४ |
| २५-युद्धसज्जा . ... | ... " |
| २६-अर्थनीतिः ... | ... ५०५ |
| २७-युद्धनीतिः ... | ... " |
| २८-नवीना शिक्षापरिपाटी | ... ५०६ |
| २९-परीक्षायुगम् .. | .. ५०८ |
| ३०-नवीना नेतारः ... | .. ५०९ |
| ३१-सुधारकः (रिफार्मर) | .. ५१० |
| ३२-बाबूमण्डली ... | ... " |
| ३३-कालमाहात्म्यम् ... | ... ५११ |
| ३४-भारते गोहिंसा ... | .. ५१३ |
| ३५-गोरक्षा ... ... | ... ५१४ |
| ३६-स्त्रीशिक्षा .. ... | .. " |
| ३७-नवशिक्षितनारीसमाजः | ... ५१५ |
| ३८-वृन्दावनस्य हिन्दीसाहित्यसम्मेलनम् ... | ... ५१७ |
| ३९-उपसंहारे सोरठाछन्दः | ... " |
| **उपसंहृतिवीथी—** | |
| १-कविताविज्ञाना वैरल्यम् | ... ५१९ |
| २-ईर्ष्यालुः पण्डितः ... | ... ५२१ |
| ३-निर्वेदः ... ... | ... ५२२ |
| ४-कीर्तितो निर्वेदः ... | ... " |
| ५-तृष्णातो निर्वेदः ... | ... ५२३ |
| ६-उपसंहारः ... | ... ५२४ |

| विषयः | पृष्ठम् |
|---|---|
| **वंशवीथी—** | |
| [प्राचीनचत्वरः] | |
| १-भूमिका ... ... | .. ५२५ |
| २-कुलप्रबन्धः ... | ५२६-५३३ |
| ३-वंशानुक्रमः ... | ५३४-५५४ |
| नवनिर्मितो वंशपरिचयः | |
| ४-दोहाछन्दः ... | .. ५५५ |
| ५-पुरुषोत्तमगोस्वामी ... | ... " |
| ६-लक्ष्मणभट्टः ... | . ५५६ |
| ७-कविकलानिधिः श्रीकृष्णभट्टः ... | ५५७ |
| ८-चरित्रसंग्रहः ... | ... ५६५ |
| ९-तस्य संस्कृतकविताया आदर्शः | ५६९ |
| १०-तस्य प्राकृतकविताया आदर्शः | ५७५ |
| ११-तस्य हिन्दीकविताया आदर्शः | ५७७ |
| १२-सुकविः श्रीद्वारकानाथः (भारती) | ५८२ |
| १३-चरित्रसंग्रहः .. | .. ५८४ |
| १४-तस्य कविताया आदर्शः | ... ५८६ |
| १५-श्रीव्रजपालभट्टः (चुन्नीलालजी) | ५९४ |
| १६-चरित्रसंग्रहः .. | ... ५९५ |
| १७-तस्य कविताया आदर्शः | ... ५९६ |
| १८-कविवरः श्रीजगदीशभट्टः | ... ५९७ |
| १९-चरित्रसंग्रहः .. | ... ५९८ |
| २०-तस्य कविताया आदर्शः | ... ५९९ |
| २१-कविवरः श्रीदेवर्षिमण्डनः | ... ६०४ |
| २२-चरित्रसंग्रहः ... | ... ६०८ |
| २३-तत्कृतग्रन्थविवरणे-भारतचरित्रम् | ६१२ |
| रावलचरित्रम् | ... ६१५ |
| राठोडचरित्रम् | ... ६१७ |
| जयसाहसुजसप्रकाशः | ६१८ |
| मङ्गलप्रकाशः | ... ६१९ |
| बापूचरित्रम् | ... " |

| विषयः | पृष्टम् |
|---|---|
| कृष्णसुजसप्रकाशः | ६२० |
| रामजसचन्द्रिका .. | ,, |
| नवरसरत्नाकरः . | ,, |
| रससमुद्रः ... | ६२१ |
| श्रीकृष्णव्रजविहारः | ६२२ |
| सुलोचनाचरित्रम् | ,, |
| २४-तस्य कविताया आदर्शः ... | ,, |
| ऋतुवर्णनादर्शः ... | ,, |
| शृङ्गारः .. ... | ६२३ |
| देवविषयो रतिभावः ... | ,, |
| राजवर्णनादर्शः ... | ६२४ |
| गजवर्णनादर्शः ... | ६२५ |
| अश्ववर्णनादर्शः ... | ६२६ |
| २५-श्रीमान् भट्टलक्ष्मणः (द्वितीयः) | ६२७ |

| विषयः | पृष्ठम् |
|---|---|
| २६-सुन्दरलालभट्टः ... | ६२९ |
| २७-मथुरानाथः (एतद्ग्रन्थकर्ता) ... | ६३२ |
| लक्ष्मीनाथपितामहाः .. | ६३४ |
| तेषां वंशक्रमः ... | ६३७ |
| बदरीनाथपितृव्याः .. | ६३८ |
| श्रीद्वारकानाथचरणाः ... | ,, |
| ज्येष्ठः श्रीरमानाथशास्त्री ... | ६३९ |
| चि. व्रजनाथशर्मा ... | ६४० |
| ग्रन्थकर्तुर्विद्याऽध्ययन-वृत्तान्तः ... | ६४१-६४३ |
| श्रीनन्दकिशोरशास्त्रिणः ... | ६४४ |
| ग्रन्थकर्तुः सम्पद्वृत्तान्तः ... | ६४५ |
| ग्रन्थकर्तुर्विद्यापरिचयः ... | ६४६ |
| उपसंहारः ... | ६४८ |




# शुद्धिपत्रम्.

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १२ | वनस्य २ चित्रे | हिमादेः | हिमाद्यैः |
| १९ | ४ | भयावहा | भयावहाः |
| २९ | १३ | दृश्यते | दृश्यन्ते |
| ३१ | २ | र्द्दयतः | र्दयतः |
| ४१ | ९ | मामगताः | मागताः |
| ५१ | २ | प्रीणयसे | प्रीण्यसे |
| ७० | ६ | आधास्यात | माधास्यत् |
| ७२ | १४ | पाटन | पाटल |
| ” | १९ | प्राप्ताः | प्रासाः |
| ८४ | २ | बहुलेन | बहुत्वेन |
| ९२ | १२ | इदानीमिति | इदानीं यदि |
| ९४ | ९ | क्रान्तो | क्लान्तो |
| ९५ | १३ | प्रतिवेशिनी | प्रतिवेशिनीं |
| ९८ | ३ | तमेवानुयाहि | तामेवानुमिनुहि |
| ” | २५ | निभूत | निभृत |
| ९९ | ३ | अ(ना)स्तरण | अस्तास्तरण |
| २०० | १ | तवा | त्वामा- |
| २०१ | १५ | जिगमिषति | जिगमिषती |
| २०१ | १६ | तनु | तनुं |
| २०४ | ३ | गतायामिव | गतायामेव |
| ” | ९ | श्रीकृष्णे | श्रीकृष्णो |
| ” | १८ | द्युति’ हृतद्युति | द्युतिः हृतद्युतिः |
| ” | ” | (निष्कालुष्यम्) | (निष्कालुष्यः) |
| ” | २२ | ‘झांसा’ | ‘झांण’ |
| २०५ | ७ | नुप्राप्तोऽपि | नुप्रासोऽपि |
| ” | ९ | हरणा- | हरण- |
| २०७ | ५ | पीतातपे न | पीतातपेन |
| ” | २३ | तस्य | तव |
| ” | २१ | निधेयत्वेन | विधेयत्वेन |
| ” | २४ | मुन्चित्रेपि | मुन्चितोऽपि |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १०८ | ७ | हरितापि | हरिताऽति |
| ११० | २४ | वडी | वडो |
| १११ | ६ | दधीयते | दधीनेन |
| " | " | चक्रवर्तिनाधीनेन | चक्रवर्तिनोऽधीनेन |
| " | १३ | मासादितम् | मापादितम् |
| ११६ | ५ | अमीर्ख्यम् | अमरिष्यम् |
| ११६ | ७ | श्वरणे | श्वरणो |
| ११९ | २ | वलिना | बलेना |
| " | १६ | तप | तव |
| १२१ | १३ | मानालीला | मानलीला |
| " | २४ | कंपित करि | कम्पितकर |
| १२६ | ३ | न्हसतिः, | न्हसति |
| " | १४ | वीर | नीर |
| १२७ | ३ | इति नायकं | दूती नायकं |
| " | २५ | निल | नल |
| १२८ | ८ | ख | स्वं |
| " | ९ | झभङ्गस्थाने | झभङ्गं स्थाने |
| १३१ | २७ | पट कहु मुकट | पट्ट कहु मुकुट- |
| १३५ | २४ | चाड | चाड |
| १४३ | ११ | नमकी | नभकी |
| १४४ | ८ | निर्वोढः | निरूढः |
| १४६ | ८ | गमिष्यसी | गमिष्यती |
| १५० | ८ | चा । स | च । सा |
| १५७ | ५ | दधतो | धत्तो |
| २४० | २ | निर्गुण | निर्गुणो |
| २६३ | ११ | त्वय- | त्वया |
| " | २० | रूपोन्विता | रूपोन्वित- |
| ३५९ | ५ | मा | सम्प्रति मा |
| ५८० | २ | चीरनिके | चोरनिके |
| ५८६ | १४ | समानमे | सभानमें |

शुद्धाद्वैतपुष्टिमार्गप्रवर्तक-श्रीमद्वल्लभाचार्यवंशावतंस-



गोस्वामिकुलकौस्तुभ-श्री ६ गोस्वामिश्रीगोकुल-
नाथजी महाराज ।

॥ श्रीः ॥

श्री६मद्वल्लभाचार्यचरणप्रचारितशुद्धाद्वैतवैष्णव-

संप्रदायाचार्य–गोस्वामिकुलकौस्तुभ–विद्या-

विलासि–मोहमयीस्थश्रीगोकुलनाथम-

हामहिम्नां सेवायां सविनयं

समर्पणम्

श्रीमन्नाचार्यचूडामणे !

धर्माचार्यसिंहासनमामण्डयमाने त्वयि
संमानेन साकं सतां सनतिरनारतम्
विद्या–वंश–वैभव–विवेक–वयो–विश्रुति–मान्
श्रुतिमान् प्रसिद्धो भवान्विज्ञगणेष्वाततम् ।
एवं सर्वसंविधानसाहित्यं समीक्ष्य मनाक्
सविधे 'साहित्यवैभवं' ते स्वयमानतम्
तदिदमपारकृपावैभवमुपास्य भृशं
कान्तिमुपाधत्ता करकमलमुपागतम् ॥ १ ॥

निवेदक.

ग्रन्थकर्ता

# चित्रसूची.


| | पृष्ठम् |
|---|---|
| १-गणपतिः | २ |
| २-वनम् | ९ |
| ३-वनम् | १२ |
| ४-वसन्तः | २३ |
| ५-वसन्ते गीतगोष्ठी | २६ |
| ६-ग्रीष्मे मानिनी | ३५ |
| ७-ग्रीष्मे जलविहारः | ३९ |
| ८-वर्षासु विरहिणी | ४५ |
| ९-वर्षाः (वर्षासु निकुञ्जविहारः) | ४८ |
| १०-वर्षाः (जलधरं प्रत्यभिनन्दनम्) | ५० |
| ११-शरत् (शरदि वनशोभा) | ५८ |
| १२-हेमन्तः | ६५ |
| १३-मुग्धा (पूर्वानुरागः) | ७५ |
| १४-वासकसज्जा | ७७ |
| १५-कलहान्तरिता | ७९ |
| १६-उल्का | ८१ |
| १७-प्रोषितपतिका (विरहिणी) | ८३ |
| १८-विरहिणी | ८६ |
| १९-प्रवत्स्यत्पतिका | ८८ |
| २०-लक्षिता | ९० |
| २१-विप्रलब्धा | ९२ |
| २२-मानिनी | ९३ |
| २३-वेणीबन्धनम् | १५८ |
| २४-केलिवातायनम् | १६० |
| २५-विश्रब्धशयनम् | १६१ |
| २६-मानिनी | १७० |
| २७-विद्याधरसुन्दरी | १७४ |
| २८-केलिसदनाभिमुखी | १७६ |
| २९-वीरः | २०० |
| ३०-मृगया | २०८ |
| ३१-करुणः | २१२ |
| ३२-शान्तः | २३५ |
| ३३-तरुणी | ३१२ |





पुस्तकप्राप्तिस्थानानि—

१ भट्टमथुरानाथशास्त्री भट्टगार्डन, रेजिडेन्सीरोड, जयपुर.

२ भट्टश्रीरमानाथशास्त्री विद्याविभाग, नाथद्वारा.

३ पं. गौरगोपालशर्मा बड़ामन्दिर, अकिञ्चनकुटी, बम्बई २.

# निकुञ्जनिरीक्षणार्थं निमन्त्रणम् ! ! !

कवित्वम् ( घनाक्षरी )

भो भोः साधुसेव्यसुरभारतीरसज्ञाः !
सुनिबद्धव्रजभाषाबन्धविज्ञाः शृणुतागमम्
शैलीवरवल्लरीवितानयुतमेतं कवि-
कल्पनासोपानपथमवतरताऽश्रमम् ।
वाञ्छथ सुखेन यदि काममवगाढुमिदं
सूक्तिसरः संमुखे समस्तहृदयंगमम्
उन्मीलन्नवीनपद्यकञ्जमकरन्दमञ्जु-
कवितानिकुञ्जमधिविशत मनोरमम् ॥ १ ॥

सुन्दररीत्या निबद्धा ये व्रजभाषाया निबन्धास्तद्विज्ञाः सहृदयाः ! ! आगमं मत्सूचनां शृणुत । नानारचनाशैल्य एव वरवल्लर्यो ललितलतास्तासां वितानेन युतम्, कविकल्पनारूपमिमं सोपानपथमश्रमं यथा स्यात्तथा अवतरत। सोपानं यथा प्राप्यस्थानं प्रापयति, एवं कविकल्पनापि क्रमक्रमेण वक्तव्यविषयपर्यन्तं नयतीति द्वयोः साम्यम् । संमुखेऽवस्थितं सूक्तिरूपं सरः सुखेनावगाढुं स्नानकेलये प्रवेष्टुं यदि वाञ्छथ, तर्हि उन्मीलन्ति नवीनपद्यान्येव ( कवित्वदोहाछप्पयप्रभृतिनवीनछन्दोघटितत्वात् ) यानि कञ्जानि तेषां मकरन्देन मञ्जुलमिमं कवितानिकुञ्जं प्रविशत । मञ्जुकवितेत्यनेन मञ्जुनाथकवितेत्यर्थोऽपि प्रतीयते । साधुसेव्येत्यादिविशेषणदानेन न केवलं संस्कृतज्ञा एव अपि तु तद्रसज्ञाः, एवं व्रजभाषासाहित्ये च ये मार्मिकास्तेषामेवात्राधिको मनःप्रसाद इति सूचितम् ।



" मजुकवितानिकुञ्जमधिविशत मनोरमम् ॥ "

Lakshmi Art, Bombay 8

# मञ्जुकवितानिकुञ्जः ।

## आमुखवीथी

तत्र

### मङ्गलम् ।

#### गणेशः

कञ्चत्कलधौतकलकलितकिरीटधरं
चञ्चत्कर्णतालैर्विघ्नविप्लवविलायिनम्
माला-वर-पुस्तक-परशु-धरैरघ करै-
र्जालानीव नीत्वा मिलदेनसां व्यपायिनम् ।
मञ्जुना कृतोपवीतमिह सितकुण्डलिना
मञ्जुनाथ दीनजनकरुणाविधायिनं
लम्बोदरमनिशमनन्तविघ्नदम्भोलिक-
मर्चयामि तं भो बत शम्भोरनुयायिनम् ॥ १ ॥

कञ्चत्कलधौतेन दीप्यमानसुवर्णेन । 'कचि काचि' दीप्तिदेवनयोः । कलं सुन्दरं यथा स्यात्तथा कलितस्य घटितस्य किरीटस्य धरम् । चञ्चत्कर्णतालैः विघ्नविप्लवं विघ्नोपद्रवं विलाययति विलीनं करोति तच्छीलम् । करद्वारा जा-

लानि इव, आवारकत्वान्मर्कटिकाजालानीव नीत्वा, मिलतामागच्छताम्, एनसां पापानां व्यपायिनं व्यपोहकम्। वि-अप-पूर्वकाणिणजन्तादेतेस्ताच्छील्ये णिनिः। गम्यादेशभये तु एनसां व्यपायः (कर्तव्यत्वेन) यस्यास्तीति मत्वर्थीय इनिः। श्वेतसर्पेण कृतयज्ञोपवीतम्। अनिशं निरन्तरम्, अनन्तानां विघ्नानां कृते दम्भोलिकं वज्रसदृशम्। भो इति सम्बोधने ॥ १ ॥

प्रावारकमङ्के हेमसूत्रनद्धमुत्सङ्गे तु
  सिद्धिमधिनीय याति मिलनमहोत्सवम्
संधत्ते मुखाम्बुजमुदस्य करेणैकेन हि
  सुखमपरेण परिरम्भणमहोत्सवम्।
मञ्जुना दृगञ्चलेन दृष्ट्वा मञ्जुनाथ मिथ-
  श्चित्रमयमेति पश्य चुम्बनमहोत्सवं
सुखसदनस्य स्फीतसुन्दरसुमञ्चतले
  करिवदनस्य स्तौमि मदनमहोत्सवम् ॥ २ ॥

यः करिवदनः, अङ्के हेमसूत्रैर्नद्धम् सुवर्णतन्तुसन्ततं (कलावत्तूकार्ययुक्तमित्यर्थः) प्रावारकं जानुदघ्नमङ्गनिचोलम्, उत्सङ्गे तु सिद्धिनाम्नीं प्रियतमामधिनीय। मिलनमहोत्सवं सङ्गमसुखं याति। मेलनेतिप्रयोक्तव्येपि लोके सुबोधत्वाय तथा प्रयुक्तम्। एकेन करेण सिद्धिदेव्या मुखाम्बुजमुदस्य उन्नमय्य, अपरेण करेण सुखं यथा स्यात्तथा परिरम्भणमहोत्सवं संधत्ते अनुभवति। मञ्जुना दृगञ्चलेन नेत्रप्रान्तेन मिथो दृष्ट्वा। अयं चित्रं गजमुखत्वादाश्चर्यकरं चुम्बनमहोत्सवं एति लभते, इति मञ्जुनाथ त्वं पश्य। किञ्च पुरश्चित्रं स्थितमिति चित्रपटमयं चुम्बनमहोत्सवं पश्येत्ययमप्यर्थः। सुखसदनस्य केलिभवनस्य। स्फीते स्वच्छविशदे। मदनमहोत्सवं कामकेलिम्। शृङ्गारमयेनानेन मतङ्गजमुखसंगममङ्गलेन ग्रन्थेस्मिन् शृङ्गारादिरसप्रभृतयः साहित्यविषयाः प्रस्तोतव्या इति सूच्यते ॥ २ ॥



प्रावारकमङ्गे हेमसूत्रनद्धमुत्सङ्गे तु सिद्धिमधिनीव याति मिलनमहोत्सवम्
संधत्ते मुखाम्बुजमुदस्य करेणैकेन हि सुखमपरेण परिरंभणमहोत्सवम् ।
मञ्जुना दगञ्चलेन दृष्ट्वा मंजुनाथ मिथश्चित्रमयमेति पश्य चुम्बनमहोत्सव
सुखसदनस्य स्फीतसुन्दरसुमञ्चतले करिवदनस्य स्तौमि मदनमहोत्सवम ॥

Lakshmi Art, Bombay, 8.

## सरस्वती

दीव्यति यदीयपदपङ्कजपरागवतां
सा काचन कोविदसमाजे प्रतिभा सताम्
पूर्वकविभारतीप्रभावपरिचेया या च
वचसामुपेया श्रुतिमौलिषु चकासताम् ।
मञ्जुनाथ कच्छपीनिनादिगुणनादकरी
मञ्जुलयलहरी किल यस्या याति दासतां
निर्मितिं नवीनामेव दधती कवीनां हृदि
सकलगवीनामद्य देवी प्रतिभासताम् ॥ ३ ॥

यत् ( सरस्वती ) सम्बन्धिपदपङ्कजपरागयुक्तानां, शिरसि धारितपदरजसाम् । सतां सज्जनानां प्रतिभा, कोविदसमाजे काचन अनिर्वचनीया दीव्यति दीप्यते । श्रुतिमौलिषु वेदान्तेषु चकासतां शोभमानानां वचसामुपेया अवगम्या, वेदान्तवेद्येत्यर्थः । कच्छप्या निनादिनो ये गुणाः (तन्त्र्यः,) तन्नादकरी । सरस्वत्या वीणा कच्छपी । मञ्जुः या लयलहरी सा यस्या दासतां याति, वशीभूतेत्यर्थः । लयः स्वरसाम्यम्, लय इति भाषायामपि प्रसिद्धम् । सकलगवीनां सकलवाचाम्, देवी सरस्वती मे प्रतिभासतां हृदि अभिव्यक्तास्तु । नवीनां निर्मितिमित्यनेन नवीनच्छन्दोभिरग्रे रचना प्रस्तुतेति सूचितम् ॥३॥

## सोरठाच्छन्दः

तुलितेन्दीवरदाम, कामदोहदक्षिणतमम् ।
कुण्डलिमण्डितधाम, मामनिशं गोपायतात् ॥ ४ ॥

तुलितं इन्दीवरदाम येन, नीलमित्यर्थः । कामानां दोहे पूरणेऽतिदक्षिणम् । कुण्डलिभिर्मण्डितं धाम तेजः । गोपायतात् रक्षतु ॥ ४ ॥

## —⁂ श्रीकृष्णः ⁂—

क०—मूर्द्धनि मनोज्ञमणिमञ्जुलमुकुटधारी
कुन्तलकलापमनोहारी मुखपद्धतौ
चञ्चलानुकारी कटिदेशे भाति पीतपटो
मोदमुपयाति गोपनारीजनसंहतौ ।
मञ्जुनाथ दारुणदवौघपरिहारी सतां
भक्तजनमानसविहारी साधुसंगतौ
मनसि मुनीनामपि मन्दमन्दचारी चिरात्
सोयं सुखकारी मे मुरारी रमतां मतौ ॥ ५ ॥

मनोज्ञैः सुन्दरैर्मणिभिर्मञ्जुलं मुकुटं धारयति सः । मुखपद्धतौ मुखदेशे कुन्तलसमूहेन मनोहरः । चञ्चलानुकारी विद्युत्सदृशः । सज्जनानां दारुणदुःखसमूहं परिहरति तच्छीलः । साधुसंगतौ सत्सङ्गे, सति भक्तजनानां मानसे विहरति तच्छीलः । चिरात् अतियत्नोत्तरम् । मन्दमन्दचारी शनैः शनैर्हृदये आसन्न इत्यर्थः । स मुरारिर्मे मतौ रमताम् । मुरारिः रमतामत्र रेफलोपदीर्घौ बोध्यौ ॥ ५ ॥





## ✧ प्रातःकालः । ✧

करनिकरेण तिग्मतमसां निहन्ता सोय-
मतुलमनन्तातले तेजः प्रतिदासते
मोदमुपगन्ता मदमधुरमृणालिनीभि-
रखिलदिगन्तरेषु गन्ता प्रतिभासते ।
मञ्जुनाथ निखिलचराचरनियन्ता नित्य-
मयमनुमन्ता सर्वकार्याणां प्रकाशते
सपदि समन्तादभिदीपयन्दिगन्तानिमान्
भानुमाननन्ताङ्गणमयमवगाहते ॥ ६ ॥

सोयं भानुमान् अनन्तातले पृथिवीमण्डले अतुलं तेजः प्रतिदासते ददाति । 'दासृ दाने' । मदमधुराभिर्मृणालिनीभिः कमलिनीभिः सह मोदम् उपगन्ता, आनन्दं प्राप्नुवन् । तृन्नन्तत्वात्कर्ता कटानितिवद् द्वितीया । मदमधुराभिरिति विशेषणान्मृणालिनीषु समासोक्तिविधया नायिकात्वं प्रतीयते । निखिलचराचराणां नियन्ता, नियमकर्ता । अत एव नित्यं सर्वकार्याणामनुमन्ता ज्ञाता, कर्मसाक्षित्वात् । अयं प्रकाशते दीप्यते । इमान् दिगन्तान् समन्तात् अभिदीपयन् प्रकाशयन् । अयं भानुमान्, अनन्ताङ्गणं गगनाङ्गणमवगाहते, प्रविशतीत्यर्थः ॥ ६ ॥

वासवदिगङ्गनानिरङ्कमुखमण्डलाय
कुङ्कुमबहलपङ्कमङ्कयन्नभीयते
तरुणतमिस्रानाथदारुणवियोगकृशां
वारुणदिक्साध्वीं हन्त धूसरयन्नीयते ।

मञ्जुनाथ माञ्जिष्ठासुरञ्जितमुदयमहे-
ष्वम्बरतलाय नवमम्बरं प्रदीयते
धरणितलाय साधु सूचयन् सरणिमहो
सोयं ताम्रतेजोधारि–तरणिरुदीयते ॥ ७ ॥

पूर्वदिगङ्गनाया निश्चिह्नमुखमण्डलाय केसरघनकर्दमम् अङ्कयन्मुद्रय-न्निव, अभीयते अभिगच्छति, अभिपूर्वकादीङ्गतौ, अस्माल्लट् । उदयतः सूर्यस्य लोहितप्रकाशत्वादेवमुत्प्रेक्षा । यद्धि पूर्वदिग्वधूमुखं विरहवशात्पूर्वं निरङ्गरागमासीत्तदयं काश्मीरजेन मण्डयतीति नायकत्वमस्य स्फुटीभवति । तरुणो यस्तमिस्रानाथश्चन्द्रस्तस्य दारुणविरहेण कृशाम् । पश्चिमदिगेव साध्वी सती, तां चन्द्रतिरोधानाद् धूसरयन् मलिनां कुर्वन् एति । किञ्च, तरुणस्य स्वकान्तस्य असामयिकेन तत एव दारुणेन वियोगेन पीडिताम्, अत एव वैराग्यात्साध्वीभूतां वारुणदिशं धूसरयन् धूलियुक्तां सम्पादयन्नित्यप्यर्थः । प्रतिनायकं सूर्यमुदयारूढमालोक्य वैराग्याद्योगिनीभूता पश्चिमा भस्माङ्गरागरूपिता भवतीत्याशयः । उदयमहेषु उदयोत्सवेषु, 'मह उद्धव उत्सवः ।' गगनतलाय मञ्जिष्ठारञ्जितं नवम्, अम्बरं वस्त्रं प्रदीयते । उत्सवदिने यथा रञ्जितं वस्त्रं दीयते तथा उदयहर्षे गगनाय अरुणप्रकाशरूपं नवं वस्त्रं वितीर्यत इत्युत्प्रेक्ष्यते, प्रातर्गगनस्यारुणत्वात् । मार्गाणां प्रातः प्रकाशितत्वात्पृथिवीमण्डलाय मार्गं सूचयन् । अरुणतेजोधारकः तरणिः सूर्यः ॥ ७ ॥

## प्राकृतिकशोभाया मङ्गलारम्भः

मृदुलमनोरमं नदन्तो वृक्षवीथीगता
मोदमावहन्तो भान्ति विहगा विशृङ्खलम्
सरसि सरोजिनीसमीपे मदमेदुरितं
वीणाक्वणमुज्झतीव मञ्जुभृङ्गमण्डलम् ।

प्राभातिकमन्दमारुतेन मन्दकम्पवहा
मञ्जुलमहीरुहाः किरन्ति कुसुमाञ्चलं
याते घनतमसि, समक्षमुपयाते रवौ,
भवति विभाते विपिनेषु नवमङ्गलम् ॥ ८ ॥

मृदुलमनोरमं कोमलमधुरं यथा स्यात्तथा कूजन्तः । विशृङ्खलम्, इतस्तत उड्डीयमाना इति भावः । मदमेदुरितं मदोन्मत्तं भृङ्गमण्डलम् । कमलिनीनां समीपे, वीणाक्वणमिव उज्झति विस्तारयति । प्रातर्यथा वीणाध्वनिभिर्नरेशान् जागरयन्ति, तथा भृङ्गाः कमलिनीं गुञ्जाध्वनिभिः पूरयन्तीति भावः । मन्दं कम्पं वहन्ति तादृशाः । कुसुमाञ्चलं पुष्पसमूहम् । कस्यापि नाटकस्यादौ यथा गायनं वाद्यम्, सूत्रधारादिहस्तेन पुष्पाञ्जलिप्रक्षेपादयश्च मङ्गलसमारम्भा भवन्ति तथा विहगकृतकूजनेन, भ्रमरकृतवीणावाद्येन वृक्षकृतपुष्पवर्षया च विपिनेषु प्राकृतिकशोभाया नवमङ्गलं प्रारभ्यत इति प्रस्तूयमानप्रकृतिशोभावर्णनस्यारम्भः सूच्यते ॥ ८ ॥

सरससुगन्धबन्धुफुल्लनवकञ्जमुखी
सेयं स्वागताय संमुखीना समवेयते
प्राभातिकमन्दमरुल्लहरीविकीर्णः पुष्प-
रेणुरयं मङ्गलचतुष्कमिव चीयते ।
मञ्जुनाथ मिहिरमवेक्ष्य निजनाथमिव
मन्दं स्मयमाना मनःप्रमदमुपेयते
शाटीमिव शिरसि वहन्ती वृक्षवाटीमिमां
वनपरिपाटीवधूर्मधुरमुदीयते ॥ ९ ॥

सरससुगन्धो बन्धुर्यस्य, ईदृशं फुल्लं नवकमलमेव मुखं यस्याः । सेयं वनश्रेणीरूपा वधूः सूर्यस्य स्वागताय संमुखावस्थिता समवेयते प्राप्यते ।

प्राभातिकमन्दपवनस्य लहरीभिर्विकीर्णः कुसुमपरागो मङ्गलनिमित्तक-चतुष्कमिव (चौक, चांदन) चीयते राशीभवति। उत्सवदिने स्त्रीभिः आतर्पण (ऐपन) हरिद्रादिभिरङ्गणे मङ्गलस्वस्तिकादीन्यालेख्यानि लिख्यन्ते तानि, भाषायां "चौक" नाम्ना प्रसिद्धानि। तथैवेहापि वायुलहरीभिरित-स्ततो राशीभूतः पुष्परेणुः शोभत इति भावः। मिहिरं सूर्यमागच्छन्तं नि-जस्य नाथमिव दयितमिवावेक्ष्य, मनसः प्रमोदं प्राप्नोति, (उपपूर्वकः ईङ् गतौ,)। वृक्षवीथीं शिरसि हरितां शाटीमिव धारयन्ती, वनश्रेणीरूपा वधूर्मधुरं यथा स्यात्तथा उदीयते उत्कर्षं प्राप्नोति। प्रोषितं कान्तं गृहागतं वीक्ष्य यथा वधूर्मङ्गलचतुष्कमालिख्य तत्स्वागताय फुल्लमुखारविन्दा स्मय-माना तदभिमुखं नवशाटीं वहन्ती गच्छति तथैव सूर्यमुदीयमानमालोक्य वनश्रेणीवधूः शोभत इति सर्वस्याशयः॥ १॥



वनम्



‘ सवनं सुखानां प्रकृतिदेव्याः प्रमदवन
भवनं विभाति भूरिभूरुहामिदं वनम् ॥ ”

Lakshmi Art, Bombay, 8



## —※ वनम् ※—

अन्योन्यं निपज्य निजशाखाभुजबन्धैरिमे
भूरुहा निवारयन्ति भानोरातपं घनम्
विकचशिरीषमञ्जुगन्धाः पवमाना अमी
मोदमादधाना इव वान्ति वीतबन्धनम् ।
मञ्जुनाथ पश्य ! पुनरेकतो निकुञ्जतले
हंसैर्गुञ्जितासौ सरिद् वहति कलस्वनं
सवनं सुखानां प्रकृतिदेव्याः प्रमदवनं
भवनं विभाति भूरिभूरुहामिदं वनम् ॥ १० ॥

निजानां शाखारूपाणां भुजानां बन्धैर्निबिडासङ्गैः, परस्परं निपज्य मिलित्वा इमे वृक्षाः, आतपं निवारयन्ति । हर्षाधानं कुर्वन्त इव इमे फुल्लशिरीषगन्धिनः पवनाः, वीतबन्धनं निष्प्रतिबन्धं वान्ति । निकुञ्जस्य लतादिपिहितगृहस्य तले । हंसैर्नादिता सरिद् कलस्वनं यथा तथा प्रवहति । सुखानां सवनम् उत्पादकम् । प्रकृतिदेव्याः प्रमदवनं क्रीडोद्यानम् । बहुविधवृक्षाणां भवनं गृहभूतमिदं वनं भाति ॥ १० ॥

विकसदशोकतरुविटपविलग्ना क्वचि-
द्भाति मोदमग्ना नवमालिका नवोन्मदम्
कुहचन गुच्छभरनम्रा माधवीयं भाति
परा इव माधवीयं गायन्ती द्विजोन्नदम् ।

मञ्जुनाथ मालतीमुपेतासौ लवङ्गलता
पश्यतां दधाति मनः प्रमदवशंवदं
प्रमदभरेण स्थिरपक्ष्मीकृतनेत्रयुगा
हरति मनांसि वनलक्ष्मीरियमुन्मदम् ॥ ११ ॥

विटपे शाखायां विलग्ना सक्ता । मोदमग्ना उत्फुल्ला, नवमालिका मालती, नवः उन्मदो हर्षो यस्मिन् कर्मणि यथा तथा भाति । प्रत्यग्रविकसिता मालती शोभत इत्यर्थः । मोदमग्नेत्यादिचेतनोचितैर्विशेषणैः कामुकभुजाश्लिष्टाया नवतरुण्या अपि प्रतीतिर्भवतीति न सहृदयेषु सूचनीयम् । द्विजानां पक्षिणामुन्नदो यस्मिंस्तथा, माधवीयं (माधवस्येदम्) वसन्तसंबन्धि यशो गायन्ती, कुत्रचित् स्तबकनम्रा इयं माधवी भाति । जयपुरेन्द्रस्य माधवस्य सम्बन्धि वा यशो गायन्तीत्यप्याकूतम्, तथा च तदिदं साहित्यसौन्दर्यवर्णनं जयपुरेन्द्रयशःप्रख्यापनफलकमिति ध्वन्यते । आनन्दभरेण स्थिरपक्ष्मीकृतं नेत्रयुगं यया । शोभामालोकयतो जनस्य नेत्रे प्रमोदवशान्निर्निमेषे भवत इत्याशयः । उत् उच्चैर्मदो यस्मिन्यथा तथा मनांसि हरति ॥ ११ ॥

केतककदम्बकरमर्दकुन्दकर्णिकार-
कदलीकुटजकोविदाराः किल भासन्ते
कुरबकक्रमुककरवीरकलकाञ्चनार-
किंशुककरञ्जकृतमाला मञ्जु राजन्ते ।
कर्कन्धूकपित्थकुष्ठकुलककुरण्टकाग्रे
कर्चूरककरहाटककेसराः सुखायन्ते
कञ्जमञ्जुलानने ! कियन्तः कूलकुञ्जे कुटाः
कानने किलामी कृतकौतुकाः प्रकाशन्ते ॥ १२ ॥

सर्वाण्यपि वृक्षनामानि, निघण्टु–कोषादितो वेदनीयानि । सुखायन्ते सुखकारका इवाचरन्ति, सुखकरार्थकात्सुखशब्दात्क्यङ् । कञ्जमञ्जुलानने ! इति स्त्रियाः संवोधनम् । तथा च कस्यचित्सहृदयस्य वनं परिचिन्वती दयितां प्रत्युक्तिः । कानने वनमध्ये, कूलवर्तिनि कुञ्जे । कृतकौतुका अमी कियन्तः कुटा वृक्षाः प्रकाशन्ते । ककाराक्षरसाम्राज्यमत्रालोकनीयम् ॥ १२ ॥

पनसप्रियालपीलुपाटलाप्रियङ्गुपूग-
पाकलपुंनागपुण्ड्रप्रियकाः परीक्ष्यन्ताम्
तिलकतमालतालतिन्तिडीतिनिशतुङ्ग-
तापसतरुतिन्दुकतरुण्यस्तावदीक्ष्यन्ताम् ।
शाल्मलिशिरीषाशोकशेफालिकाशालशमी-
श्लेष्मातकशोभाञ्जनशिंशपाः समीक्ष्यन्तां
निर्भरं विनोद्य रश्मिमालिनो निषक्तकरान्
निविडवनोत्था नव्यशाखिनो निरीक्ष्यन्ताम् ॥१३॥

रश्मिमालिनः सूर्यस्य निषक्तान् आपतितान् करान् किरणान् निर्भरं बाढं विनोद्य यापयित्वा, घनविपिनरूढाः नववृक्षा निरीक्ष्यन्ताम् । अत्र प्रतिपादमेकैकाक्षरस्यानुप्रासो रसनीयः । चतुर्थे तु–विनो० लिनो० वनो० खिनो० इत्याद्यन्त्यानुप्रासोप्यालोकनीय. ॥ १३ ॥

दत्तमनोलोभा मञ्जुमेदुरमहीरुहाणां
स्वाभाविकशोभा कापि पुरतः प्रकाशते
चकितमितस्ततोऽवपश्यन्तो मनोज्ञमृगाः
सन्तोषाच्चरन्ति चारुगहनलतावृते ।

स्वच्छे सुखशीततमकच्छे विनिलीनाः सुखं
निविडनवीनान्यमी यवसान्युपासते
पवनहिमाद्यैः क्लान्तपान्थानामवनमिह
जवनमृगाणां केलिवनमुपभासते ॥ १४ ॥

दत्तो मनसः लोभो यया, ईदृशी घनवृक्षाणां शोभा प्रकाशते। चारु-गहन-लताभिरावृतेऽस्मिन्वने। चकितं यथा स्यात्तथा इतस्ततः पश्यन्तो मृगाः सन्तोषात् चरन्ति भ्राम्यन्ति। सुखकारके अतिशीतले च कच्छे जलप्राय-देशे। सुखं विनिलीना गुप्ता अमी मृगाः, सान्द्राणि नवीनानि च तृणानि, उपभुञ्जते। क्लान्तानां पथिकानाम्, पवनेन हिमेन (शीतलतया) एतदा-द्यैरन्यैश्च साधनैः। अवनं रक्षकम्, अवतेर्ल्युः। जवयुक्तानां मृगाणां केलि-वनमिदं भासते, तथा चातिविस्तीर्णमिति ध्वन्यते ॥ १४ ॥



## वनम्



" पवनाहिमाद्रेः क्रान्तपान्थानामवनामिह
जवनमृगाणां केलिवनमुपभासते ॥ "



# षड्ऋतुवीथी

तत्र

## वसन्तः

ललितलताभिनवनायिकाविलासी वर-
वारिजविकासी वनवीथीविपदन्तोयम्
वञ्जुलविपिनमौनहन्ता पिकचिन्ताहरो
मञ्जुलमलयमन्दमारुतैरनन्तोयम् ।
मञ्जुनाथ महितमीनकेतनमहामन्त्री
मानिनीमनःस्थमानतन्त्रीमिलदन्तोयं
सन्तोषयदिन्दुकरदीपितदिगन्तो विद्ध-
विरहिदुरन्तो बत वर्धते वसन्तोयम् ॥ १ ॥

ललितलतारूपाणामभिनवनायिकानां कृते विलासी कामुकः । वारिजानि विकासयति तच्छीलः, ण्यन्ताद्विकसतेर्णिनिः । शीतजनिता या वनवीथ्या विपदासीत् तस्या अयमन्तोऽस्ति, वसन्ते हि सर्वोपि वनवीथी उल्लसतीति-भावः । वञ्जुलविपिनस्य अशोकवनस्य, मौनहन्ता विकासकरः । 'वकुलो वञ्जुलोऽशोके' इत्यमरः । कोकिलस्य चिन्ताहरः, रसालमञ्जरीविकासक-त्वात् । मलयमारुतैरयं वसन्तः, अनन्तः (नास्ति अन्तो यस्य) अनुलंघ्य इति यावत् । अयं पूजितः कामदेवस्य मन्त्री । मानतन्त्र्याः मिलन् संघटमानः अन्तः (अवसानम्) यत्र तादृशः, मानिनीमानपरिसमापक इत्यर्थः । लोके

सन्तोषयद्भिः, इन्दुकरैर्दीपितो (प्रकाशितः) दिगन्तो येन सः। कामशरविद्धा ये विरहिणस्तेषां कृते दुरन्तः, अयं वसन्तो वर्धते जृम्भते ॥ १ ॥

किंशुकवकुलकलकुरवकसहकार-
मल्लीकर्णिकारतरुतिलकदुरन्तोयम्
उन्मीलन्मृणालनवमाधविकाजालदल-
दमलतमालततिविद्धवियदन्तोयम् ।
मञ्जुनाथकुञ्जगृहगुञ्जद्भृङ्गपुञ्जनव-
निभृतनिकुञ्जपिकपूरितदिगन्तोयम्
उपवन—विपिन—वाट—वल्लीवलय—वीथी—
विटपिवितानेषु हि वर्धते वसन्तोयम् ॥ २ ॥

तिलकादिभिर्वृक्षैरयं दुरन्तः दुस्तरः। विकसन्ति यानि मृणालानि, नवानि यानि माधविकाजालानि, दलन्तः (विकसन्तः) अमला ये तमालाः, एषां ततिभिर्विद्धो (व्याप्तः) वियदन्तो यत्र तादृशः। कुञ्जगृहे गुञ्जन्तो भृङ्गपुञ्जा यत्र तादृशश्च, नवे निभृते (निःसंकुले) निकुञ्जे ये पिकास्तैः पूरितो ध्वनितो दिगन्तो यत्र तादृशश्चेति बहुव्रीह्युत्तरः कर्मधारयः। वाटो मार्गः, प्राकारवलयितस्थानं (बाड़ा) च ॥ २ ॥

सौरभसुषमकलकुसुमकलापवह—
कोमलललितनवलतिकादुरन्तोयम्
फुल्लल्लोलपाटलापरागपरिवाही नव-
किंशुककदम्बपरिणाही लसदन्तोयम् ।
मञ्जुनाथ मञ्जुलरसालपुञ्जपिञ्जरितो
मत्तकलकोकिलसमुन्मिषदुदन्तोयं
वल्लरीषु वीरुद्वनीषु सदुपवनीषु
वञ्जुलवनीषु बत वर्द्धते वसन्तोयम् ॥ ३ ॥

सौरभसुषमो (सुन्दरः) यः कलः कुसुमकलापस्तद्वहाभिर्लतिकाभिर्दुरन्तः (विरहिणां दुस्तरः)। विकसन्तीनां चञ्चलपाटलानां परागवाही। नवकिंशुक-(पलाश) समूहानां परिणाहो विस्तारो यत्र तादृशः। लसन् अन्तः (दिव-सावसानं) यत्र। मञ्जरितैराम्रतरुभिः पिञ्जरितः पिशङ्गीकृतः। मत्तैः कोकिलैः समुन्मिषन् विस्तार्यमाणः उदन्तो वृत्तान्तो यस्य, (कोकिलकाकली-सूचितः)। वीरुद्वनीषु गुल्मिलतास्थलेषु वञ्जुलवनीषु अशोकवनीषु ॥ ३ ॥

कोरकिताः किंशुका विकासमुपयातं किल
कर्णिकार-कुरवककाननं प्रकाशते
स्रुतसहकाररससीकरसुरभिसुखाः
सुमितसमीरभराः सुभगमुपासते।
मञ्जुनाथ मानय मनोभूमहिमानमिमं
मारशरमुग्धतया मुनय उदासते
वापीतट-वाटिका-विहङ्गम-विटपि-वीथी—
वारिज-वनेषु वै वसन्तविभा भासते ॥ ४ ॥

स्रुतो यः सहकाररसः (मकरन्दः) तस्य सीकरैः सुरभयः सुखाश्च। परिमिताः पवनभराः, सुभगं यथा स्यात्तथा उपासते सेवन्ते (प्रीणयन्ति)। कामशरमोहिततया मुनय उदासते तपश्चर्यातस्तटस्था भवन्ति। वापीतटे कमलादिभिः, वाटिकायां रसालादिभिः, कोकिलविहङ्गे पञ्चमेन, एवमन्यत्रापि वसन्तविभा प्रकाशते ॥ ४ ॥

कोमलललितनवपल्लवचयोयं न हि
महितमहार्हपटसंस्तरो विराजते
कुसुमसमूहवहा नो वा तरुराजिरियं
समितिरथैषा साधुसामाजिकसंहतेः।

मञ्जुनाथ नेयं कलकण्ठकुलकाकलिका
विरुदरवोयं मञ्जुमागधसुसन्ततेः
रोचते नवीनवनी नेयमतिमञ्जुतमा
सरससमाजोसौ वसन्तवसुधापतेः ॥ ५ ॥

अयं पल्लवचयः किसलयसमूहो नास्ति किन्तु, महितः प्रशस्तो महामूल्यः पटसंस्तर आस्तरणम् (बिछायत) विराजते। साधुसामाजिकसंहतेः सुभगसभ्यसमूहस्य एषा समितिः सभा। कुसुमितेषु तरुषु उष्णीष—भूषणादिमण्डितसभ्यानां साम्यम्। कलकण्ठः कोकिलः। मागधसमूहस्य विरुदरवः (स्तुतिशब्दः)। इयं नवीनवनी न रोचते किन्तु वसन्तनृपस्य सोयं सरसः समाजः अस्तीति अपह्नुतिः ॥ ५ ॥

सरसवसन्तो नैष सन्तोषितभूमीतलो
मदनचमूपतिरुदेति सैष सोत्सवम्
पुष्परागरूषितमहीरुहघटेयं न हि
धत्ते वीरवेषा चमूरेषा समरोत्सवम्।
गुञ्जन्ति न मञ्जुलमधूकमकरन्दभुजो
मधुकरपुञ्जा मुहुरञ्जितमदोत्सवं
घोषयन्ति घर्घरसुघोरघनघोषममी
मनसिजबाणा विश्वविजयमहोत्सवम् ॥ ६ ॥

सैष इत्यत्र सोचि लोप इति सुलोपः। कुसुमरङ्गरञ्जिता महीरुहघटा (पादपसमूहः)न, किन्तु एषा वीरवेषा स्मरसेनापतेः सेना, समरोत्सवं धत्ते। कुसुमितमौलिषु पङ्क्तिबद्धेषु पादपेषु, रञ्जितशिरस्त्राणधराणां पङ्क्तिबद्धानां भटानां साम्यम्। अञ्जितः प्रकटीकृतो महोत्सवो यस्मिन्कर्मणि तथा, मधुकरसमूहा न गुञ्जन्ति, किन्तु अमी मनसिजबाणाः, घर्घरः सुघोरो घनः (निबिडः) घोषो यस्मिन्कर्मणि तथा (मनसिजकर्तृकं) विश्वविजयमहोत्सवं

घोषयन्ति। विश्वविजयिनो मनसिजस्य निविडविशिखवर्षामनुरुध्य तादृश्येव वीरोचिता निबिडा वर्णसंघटनोत्तरार्द्धे ॥ ६ ॥

## —※ स्मरस्य युद्धरूपकम् ※—

कोकिलमिहाग्रेकृत्य कुञ्जालयलेखहर-
मलिकुलगुञ्जा रणघोषणा निरुह्यते
विजयतिलकमिव तिलकं विनीय भाल-
मतुलतमालनवकवच उदुह्यते।
मञ्जुनाथ धुन्वन्मधुशिञ्जिनीमनङ्गनृपो
विरहिजनाय परिकुप्यन् भूरि मुह्यते
पङ्कजपरागपरिधूलननिरङ्ककरो
धनुरनुविद्धनवकङ्कशरो नह्यते ॥ ७ ॥

कुञ्जालये लेखवाहिनं कोकिलमग्रेकृत्य, अन्यत्रापि राज्ञोर्युद्धे पूर्वं लेखवाहः प्रेष्यते। अग्रेकृत्येति साक्षात्प्रभृतित्वाद्गतित्वम्। निरुह्यते प्राप्यते, निर्वहतेः कर्मणि लट्। युद्धे किल पूर्वं युद्धघोषणा क्रियते, तथाऽत्र भ्रमरकुलगुञ्जा। तिलकं तन्नामकतरुं भालं (ललाटे, 'अनभिहितं कर्म,') विनीय, अनुपमः तमाल एव नवकवच उदुह्यते धार्यते। मुह्यते मोहं प्राप्नुवते (शत्रन्तस्य चतुर्थी) विरहिजनाय भूरि कुप्यन्, अनङ्गरूपो नृपो मधुयुक्तां शिञ्जिनीं प्रत्यञ्चां धुन्वन् सन्, पङ्कजपरागस्य परिधूलनेन धूलिस्थानापन्नीकरणेन निरङ्कः स्वच्छः करो यस्य तादृशः सन्, धनुषा अनुविद्धः (संश्लिष्टः) नवकङ्कपत्रयुक्तः, शरो यस्य, ईदृशश्च सन् नह्यते, युद्धाय सन्नद्धो भवति 'णह बन्धने'। अयं भावः—युध्यमानो राजा यथा प्रत्यञ्चां धुन्वन् स्वेदादिजनितामार्द्रतां करस्यापरिस्खलनाय धूल्यादिनाऽपनयति तथा कामः करगतां शिञ्जिनीजातां मधुनः सरसतां पङ्कजपरागेणापनयति। अन्यद्राज्ञो रूपकं स्पष्टमेव। विरहिजनायेति क्रुधद्रुहेति चतुर्थी। परिधूलनमित्यत्र धूलिशब्दात्तत्करोतीति णिच्, ततो ल्युट् ॥ ७ ॥

उन्मीलत्पलाशपुष्पशोणिमा न वनदेशो
मीलद्विप्रयोगिरक्तरक्तवियदन्तोयम्
भिद्यते न रक्ताशोककुसुमं समिद्धतमं
विद्यते कृतान्तशोणदारुणदृगन्तोयम्।
मञ्जुनाथ कुन्तानिव हिन्तालान्विलोलयते
पश्य विप्रयोगिजनदत्तदृढदन्तोयं
को वाक्कोविदो वा किल कथयति वसन्तोयं?
विरहिजनस्य स्फुटमन्तकदिगन्तोयम्॥ ८॥

वनदेशः, उन्मीलन् (प्रसरन्) किंशुककुसुमानां शोणिमा यस्मिन्नीदृशो नास्ति, किन्तु सोयं वनदेशः मीलतामस्तं गच्छतां वियोगिनां रक्तेन रक्तः (रञ्जितः) वियदन्तो गगनमण्डलो येन तादृशोस्ति। किंशुककुसुमानां रक्तिमा नायं दृश्यते किन्तु म्रियमाणानां विरहिणां रक्तेन रञ्जितः सोयं वनदेश इति भावः। समिद्धतमम् अतिप्रफुल्लम्, रक्ताशोकपुष्पं न भिद्यते (विकसति), किन्तु कृतान्तस्य शोणवर्णः दारुणः दृगन्तो नेत्रप्रान्तो वर्तत इति भावः। वियोगिजने दत्तः दृढः (कवलीकरणाय) दन्तो येन स', अय वसन्तः कुन्तानिव हिन्तालवृक्षान् परिचालयति इति मञ्जुनाथ त्वं पश्य। को वा वाक्चतुरः। विरहिजनस्य कृते स्फुटमयम् अन्तकदिगन्तः कृतान्तप्रान्तसदृश इति भावः॥ ८॥

## →॥ मृगयारूपकम् ॥←

शस्त्रग्राहियवनीरिवैताः संवहन्ते लताः
पार्ष्णिग्राहभूरुहा रमन्ते कुसुमावहाः
कोकिला विपिनरोधकोलाहलमारभन्ते
वीराः संविजृम्भन्ते समीरा मलयावहाः।

मञ्जुनाथ दीव्यति दिगन्ते पश्य पञ्चशरो
विरहिमृगाणां रवाः श्रूयन्ते दयावहाः
पथिक दुरन्ते कुत्र गच्छसि वसन्ते? पुरो
दृश्यन्ते न किं ते काममृगया भयावहा? ॥ ९ ॥

नाटकादिषु राज्ञां मृगयावर्णने शस्त्रग्राहिण्यो यवन्यो भवन्ति। पार्ष्णिग्राहा वीराश्च सह गच्छन्ति। वनग्रहणकोलाहलेन विदूषकः प्रातः प्रतिबुद्धो भवति। तथैवात्र पार्ष्णिग्राहसदृशा भूरुहाः (कर्तृपदम्) रमन्ते, युद्धसंभारेण प्रीता भवन्ति, किञ्च शस्त्रग्राहिणीर्यवनीरिव एताः कुसुमावहा लताः (द्वितीयान्तं कर्मपदम्) संवहन्ते प्रापयन्ति। पुष्परूपशस्त्रधारिणीः एता लतारूपा यवनीः, वृक्षाः कामनरेन्द्रस्य सविधे प्रापयन्ति, लतानां वृक्षाश्रितत्वात्। सौरभेण मलयमावहन्त इव इमे समीररूपा वीराः विजृम्भन्ते। दिगन्ते दिशोऽन्ते दूर इति यावत्, पञ्चशरो दीव्यति क्रीडति। पञ्चशरपदेन संनद्धता सूच्यते। पुरः, अग्रे भयावहा कामकर्तृका मृगया त्वया किं न दृश्यते? ॥ ९ ॥

### —कामस्य मृगयुरूपकम्—

विकसदशोककलकिंशुककुसुमनिभा-
द्वनविनिरोधे वह्निभासमवलम्बते
अब्रह्मण्यमुद्घोपति कोकिलः सरोषमसौ
मधुपवराकः क्रोशहुंकारं विरम्भते।
मञ्जुनाथ चक्रीकृतचारुपुष्पचापधरो
वक्रीकृतपञ्चशरो न किल विलम्बते
कुसुमाकरजालमवकीर्य कालसंनाही
विरहिमृगेषु मारमृगयुर्विजृम्भते ॥ १० ॥

व्याधो यदा मृगाणामाखेटं कुरुते तदा जालमास्तीर्य वनमार्गनिरोधार्थं वह्निं ज्वलयति। एवमत्रापि, विकसन्तो ये अशोकाः (रक्ताशोकाः) कलाः (सुन्दराः) किंशुकाश्च तेषां कुसुमव्याजात्, वनरोधे वह्निभासम् अग्निदीप्तिमाश्रयति। एवं निर्दयतामालोक्य कोकिलः अब्रह्मण्यं अवध्यतामुद्घोषति। क्रोशेन आक्रोशेन हुंकारो यस्मिन्नेवं विरम्भते दुःखशब्दं करोति। 'अभिरभी काचित्पठ्येते'। परं नायं काचित्कः, गवां रम्भारवः सर्वत्रैव सुप्रसिद्धः। क्रोधसंरम्भेण वक्रीकृतः कठोरीकृत इत्यर्थः। कुसुमाकररूपं जालं विस्तार्य, काले स्वसमये संनाहयुक्तः (अन्तकवत् संनाही वा) माररूपो व्याधो विरहिमृगेषु विजृम्भते॥ १०॥

→※ वसन्तस्य वणिग्रूपकम् ※←

कुसुममरन्दभारमाविन्दन्ति पुष्पन्धयाः
　शश्वल्लाभतत्पराः परागकणिकाचणे
मलयसमीरखण्डवाणिज्योपजीवी पश्य
　नीवीं याचतेऽसौ सत्समृद्धलतिकागणे।
मञ्जुनाथ नीत्वाऽवधिवेलातुलामुल्ललितं
　विन्यस्यति बन्धुजीवमेतत्परिमापणे
विरहिजनस्य हन्त जीवनमरणमेव
　सन्ततमुदस्यते वसन्तवणिगापणे॥ ११॥

भाविनं लाभं समीक्ष्य समृद्धस्य वणिज आपणे अन्ये व्यापारिणः शकटादिषु भारं वहन्ति। अत्र तु परागकणिकायुक्ते (चणप्प्रत्ययः) वसन्तवणिगापणे, निरन्तरलाभपराः पुष्पन्धया भ्रमररूपा व्यापारिणः पुष्पमकरन्दभारमाविन्दन्ति प्राप्नुवन्ति। समृद्धेभ्यो व्यापारिभ्यो यथा खण्डवाणिज्योपजीविनो लघुवणिजो मूलधनं याचन्ते, एवं मलयसमीररूपः खण्डवाणिज्योपजीवी अतिसमृद्धे लतिकागणे नीवीं सौरभरूपं मूलधनं याचते, पश्य!

१ (टुटपुंजिहे) हिन्दी।

लतिकाभ्य एव सौगन्ध्यमादाय सर्वत्र प्रसारयतीति भावः । शब्दशक्त्या—नायिकासविधे विनम्रः कामुको नीवीमधोवस्त्रग्रन्थिं याचते (रतिप्रार्थनां कुरुते), अयमपि नीवीपदप्रकाश्यो ध्वनिः प्रतीयत इति सहृदयानां सविधे पुनरुक्तमेव । वसन्तवणिक् प्रवासिनां गृहागमनावधिवेलारूपां तुलां उल्लङ्घितं यथा तथा नीत्वा, एतत्परिमापणे वन्धुजीवं तन्नामकं कुसुमं प्रियतमानां जीवं च विन्यस्यति स्थापयति । अवधितुलया वल्लभजनानां जीवितं तुलितं भवति, यदि अवधिदिवसे समायातास्तर्हि जीवितस्थितिः, अन्यथा तु नैराश्येन मरणमेवेति, अवधितुलाया जीविततोलनस्वारस्यम् । अत एव—वसन्तवणिजः आपणे विरहिजनस्य जीवनं मरणं च निरन्तरमुदस्यते उत्तोल्यते । जीवनयुक्तं मरणं जीवनमरणमिति लोकोक्तिवाही मध्यमपदलोपिसमासः । वणिगापणे यथा विक्रेयवस्तूनि तोल्यन्ते एवं वसन्तवणिगापणे विरहिणां जीवनं मरणं वा तोल्यत इत्याशयः ॥ उद् अस्यते असु क्षेपणे कर्मणि लट् ॥ ११ ॥

### —॥ वसन्ते वनवीथी ॥—

सौरभसरससाधुसारससमृद्धिसुखा
सेव्यते सलीलमलिपुञ्जैः पद्मवीथीयम्
परिमललोभनीयललितलवङ्गलता-
लिङ्गिता चकास्ति किल मञ्जुकुञ्जवीथीयम् ।
मञ्जुनाथ मञ्जुलमहीरुहसुलेखा भाति
मन्ये कुसुमाकरसुपुण्यपण्यवीथीयं
विन्दति विकासमिह कुसुमविलासवहा
वासकवधूरिव वसन्तवनवीथीयम् ॥ १२ ॥

सौरभेण सरसानां साधुसारसानामुत्तमकमलानाम्, समृद्ध्या सुखकारिणी सेयं पद्मवीथी भ्रमरपुञ्जैः सेव्यते । लवङ्गलताभिरालिङ्गिता कुञ्जपङ्क्तिः । महीरुहाणां सुन्दरी लेखा पङ्क्तिः । सेयं पङ्क्तिः कुसुमाकरस्य सुभगा पण्यवीथी विपणिरस्तीत्युत्प्रेक्षा । विपणितो यथा नानाविधवस्तूनि संगृह्यन्ते एवं

पुष्प–मकरन्द–परागादयो वसन्तसंबन्धिनः पदार्था मधुकरैरनुभूयन्त इत्यर्थः। वासकसज्जा वधूरिव कुसुमविलासधारिणी सेयं वनवीथी विकासं विन्दति, वासकसज्जा यथा कुसुमहारादिकं धृत्वा नायकप्रतीक्षया प्रमोदते तथेयमपि विकसतीत्याशयः ॥ १२ ॥

—※ देवघनाक्षरी ※—

वनविटपेषु भूरि शोभते कुसुमघटा
रोचते सरोजखण्डसुषमा सरसि सरसि
भाति सहकारे कलकोकिलकुहूनां रवो
मधुकरयूनां स्वनः सरसां पयसि पयसि।
मञ्जुनाथ रसिकमनस्सु मदलक्ष्मीर्भाति
दृशमुपयाति कामचर्चासौ रहसि रहसि
मन्ये मधुपर्वणि मनोभूर्मदजन्मोन्माद-
मङ्कते विशङ्कं निजमुद्रया मनसि मनसि ॥ १३ ॥

कुसुमघटा पुष्पसमूहः। सरसि सरसि प्रतिसरोवरं सरोजखण्डस्य सुषमा शोभा। कलानां मधुरगभीराणां कोकिलकुहूनां कोकिलशब्दानां ध्वनिः। रहसि रहसि सर्वत्रैकान्ते असौ कामचर्चा दृशमुपयाति (दृश्यते)। मधुपर्वणि वसन्तरूपे पर्वसमये मनोभूः कामः निजमुद्रया (मुहर) मनसि मनसि प्रत्येकजनस्य चित्ते निःशङ्कं यथा तथा मदजन्मानमुन्मादमङ्कते मुद्रयतीत्युत्प्रेक्षा। कामकृतां मनोमुद्रां प्राप्य सर्वेपि मदेन उन्मत्ता इव जाता इत्याशयः। 'अकि लक्षणे' लट् ॥ १३ ॥

—※ वसन्ते वनविहारः ※—

क०—पिहितपरागपूरपिच्छिलप्रसूनपथा
भृङ्गपानभूरिव विभाति तरुवीथीयम्।
शोभामुपनीता नवपल्लवपरीता मही
मन्ये मीनकेतनमहीपपुरवीथीयम्।

वसन्तः



‘ विलस विलासलोलमलसतमाङ्गलते !
सुविलसदम्बुजा । वसंतवनवीथीयम् ॥ ”

Lakshmi Art, Bombay, 8.

मञ्जुनाथ मञ्जुलनिकुञ्जनवलेखा भाति
कामिजनरञ्जनसुसौधवरवीथीयं
विलस विलासलोलमलसतमाङ्गलते !
सुविलसदम्बुजा वसन्तवनवीथीयम् ॥ १४ ॥

पिहितः पुष्पाणामन्तर्गतो यः परागपूरस्तेन पिच्छिलो विजिलः ( खिसलना, हिन्दी ) पुष्पाणां मार्गो यस्यां सा । इयं तरुपङ्क्तिः भृङ्गाणां कृते पानभूर्मधुपानशालेव भाति । नवपल्लवैः परीता आच्छादिता । किसलयाच्छादिता मही कामनरपालस्य पुरवीथीव दृश्यत इत्युत्प्रेक्षा । कामिजनानां रञ्जनाय सुभगानां सौधवराणां ( उत्तमहर्म्याणां ) वीथी । अलसतमा अत्यन्तालसा, अङ्गलता यस्यास्तत्सम्बुद्धौ । अयि वनविहारेणालसीभूते! सुविलसन्ति अम्बुजानि यस्यामीदृशीयं वसन्तवनवीथी अस्ति, अत एव विलासलोलं यथा स्यात्तथा अत्र विलस, स्मरविलासमनुभव । अलसशरीरा त्वं नाग्रे गन्तुं प्रभवसीत्यत्रैव विकसदम्बुजायां वनवीथ्यां सविलासं विहरेति नायकः शिलापट्टे निजोत्सङ्गमधिशयानां नायिकां प्रार्थयते इति चित्रेपि प्रेक्षणीयम् ॥ १४ ॥

किंशुककुसुममिति किं वा भ्रममीरयसे
क्षमसे पुरस्तात्किं न पावकं परीक्षितुम् ?
मञ्जुनाथ किं जल्पसि कल्पनापिनद्धगिरं
कल्पसे मधुप इति धूममप्युपेक्षितुम् ? ।
स्पष्टं पश्य, पुरतो बतारोहति बर्हिशिखा
पुष्पितपलाशतरुं परितोप्यथेक्षितुं
कति किल दग्धा हन्त कति वार्द्धदग्धाः, कति
चाधुनाप्यदग्धा इति विधुरानवेक्षितुम् ॥ १५ ॥

भ्रममीरयसे प्राप्नोषि। किं पुरस्तात्स्थितं पावकं परीक्षितुं न क्षमसे? नेदं किंशुकपुष्पं किं तु वह्निरयमिति भावः। हे मञ्जुनाथ! कल्पनयाऽऽच्छादितां गिरं किं जल्पसि। मधुप इति स्थिरीकृत्य किं धूममप्युपेक्षितुं कल्पसे क्षमसे? नायं मधुपः किन्तु पूर्वं वृक्षशाखायां साधितस्य वह्नेर्धूम इति भावः। स्पष्टं विलोकय! परित ईक्षितुं (विलोकयितुम्) वह्निशिखा बत पुष्पितं पलाशतरुमारोहति। किं प्रेक्षितुं वृक्षारोहणम्? कति वियोगिनो मया दग्धाः, कति च अर्द्धदग्धाः, कति चेदानीमप्यदग्धा इति वियोगिनः प्रेक्षितुमारोहणम्॥ १५॥

## वसन्ते नायिकाः

### मानिनी

विनयवचो मे यदि मानिनि! न मानयसे
मानय वयस्यावचो याऽसौ तेऽनुगामिनी
विन्दति न नाम विधुसुन्दरि किलानुनयं
पदपतनेपि वद का वा कुलकामिनी?।
मञ्जुनाऽथ रञ्जय विहसितेन मञ्जुमुखं
घोरघनघटायामियमेतु सौदामिनी
स्वामिनि ते मानो मयि काममयं भूयो भवेद्
भामिनि! न भूयो भवेदेषा मधुयामिनी॥ १६॥

याऽसौ वयस्या तेऽनुगता, तस्या अनुनयवचनं मानय। हे विधुसुन्दरि! पदपतनेपि चरणप्रणामेपि, का वा कुलकामिनी अनुनयं न विन्दति? इति वद। अपि तु सर्वापि कुलवधूः पदयोः प्रणामे अनुनयं स्वीकुरुत इत्यर्थः। मञ्जुना विहसितेन। घोरायां मेघघटायामियं सौदामिनी एतु। उन्मुक्तैः केशैराच्छादिते मुखे विहसितं विद्युत्स्थानीयमिति भावः। स्वामिनि मयि ते मानः कामं पुनरपि भवेत्। आवयोः पतिपत्नीसम्बन्धस्तथा च मद्विषये

भवत्या मानः पुनरपि संभवेद् । परं हे भामिनि (अयि कोपने! विचारयेति सूच्यते) एषा अद्यतनी चैत्ररात्रिः पुनर्न भवेत् ॥ १६ ॥

सिंहावलोकनम्

यामिनीसुनायकमनोरममरीचिरुचि-
रोचितसकललोकशोकभरशामिनी
शामिनी मनस्विनीसमूहदृढमानरुषां
मादृशां समस्तसुखसम्पदनुगामिनी ।
गामिनी मनोजशरदर्शितनवीनपथे
कामकलनाऽऽकुलनवीनकुलकामिनी
कामि-नीतनिर्भरनिरर्गलसुरतरसा
भीरु पश्य सरसासौ याति मधुयामिनी ॥ १७ ॥

यामिन्याः सुन्दरनायकस्य (चन्द्रस्य) मनोरमाभिर्मरीचिकान्तिभिः रोचितो (द्योतित) यः सकललोकस्तस्य शोकभरशमयित्री । शामिनीति 'शम आलोचने' चौरादिक । धातूनामनेकार्थत्वात् निशामय तदुत्पत्तिमि-तिवच्छमनार्थत्वम् । मानिनीसमूहस्य दृढानां मानकोपानां शमिनी । मादृ-शरसिकानां समस्तसुखसंपदनुगत्रीति नायकस्योक्तिः । मनोजशरैः सूचिते नवीने मार्गे (शृङ्गाररसानुकूले) गामिनी । कामघटनाभिराकुलाः नवीनावस्थाः कुलवध्वो यस्यां सा । कामिभिः नीतः (अनुभूतः) पूर्णः, निष्प्रतिबन्धश्च सुरतानन्दो यस्यां सा । अयि स्वहठभङ्गभीरु! इयं चैत्ररात्रिर्व्यर्थयेति ॥१७॥

प्रवत्स्यत्पतिका

भूरुहा वहन्ते मञ्जुमञ्जरीर्भजन्ते चारु-
वल्लरी रमन्ते मधुपायिनोद्य मानसे
झम्पामारभन्ते मञ्जुपम्पापुलिनान्तेचराः
सुभगसमीराः, संजुषन्ते रसिका रसे ।

काकलीः श्रयन्ते युवकोकिला विलासभृतो
बाणाः संरभन्ते कुसुमेषोरपि नीरसे
प्रणतिरियं ते, वच्मि भूयः कान्त किं ते ?
ननु विरहिदुरन्ते किं वसन्ते गन्तुमीहसे ॥ १८ ॥

भूरुहा मञ्जुमञ्जरीर्वहन्ते, तथा (ते) चारुवल्लरीः (लताः) भजन्ते आश्लेषेणोपगच्छन्ति। मधुपायिनो मधुपा आसवसेविनश्च, मानसे प्रीयन्ते नवमधुनो बाहुल्यात्। मञ्जुपम्पा० दाक्षिणात्याः सुभगसमीरा झम्पामारभन्ते प्रवहन्ति। अन्तेचरा इत्यत्र तत्पुरुषे कृतीत्यलुक्। संजुषन्ते प्रीयन्ते। काकलीः कुहूरवान्। कामस्य बाणा नीरसेपि जने संरभन्ते संरंभेण पतन्ति। वसन्ते किमिति गन्तुं वाञ्छसि ? ॥ १८ ॥

→॥ वसन्ते गीतगोष्ठी ॥←

कुसुमसुगन्धजुषो जाता जलयन्त्रसुखा
वातायनमध्याद्वान्ति वाता निष्कुटान्तरे
संमुखे सरोजदृशो गायन्त्यमूः साभिनयं
सरसवसन्तमिह मधुरतरस्वरे।
पाटलपरागमिलद्रागमदमेदुरितो
नायकोनुरागभरान्नन्दति निजान्तरे
यौवनविलासलसद्बिम्बोष्ठीकदम्बभृता
धन्यानां धिनोति गीतगोष्ठी कुसुमाकरे ॥ १९ ॥

निष्कुटान्तरे अन्तःपुरोपवने, कुसुमसुगन्धयुक्ता जाताः, लब्धकुसुमसौरभा इति भावः। जलयन्त्रसंबन्धेन सुखकारका वाताः, गवाक्षमध्यात्प्रवहन्ति। अमूः एताः (चित्रे निरीक्ष्यमाणाः) सरोजनयनाः, अतिमधुरस्वरे

## वसन्ते गीतगोष्ठी



" यौवनविलासलसद्भिर्गोष्ठीकदम्बभूता
धन्यानां धिनोति गीतगोष्ठी कुसुमाकरे ॥ "

Lakshmi Art, Bombay, 8

सरसं वसन्तरागम्, साभिनयं गायन्ति। मध्येऽवस्थितो नायकः, तत्काल-माघ्रायमाणपाटलपुष्पस्य मकरन्देन मिलन् (उपचीयमानः) यो रागमद-स्तेन सान्द्रस्निग्धः सन्, अनुरागभरान्निजान्तरे नन्दति (प्रीयते)। तथा च—यौवनविलासेन लसन्तीनां बिम्बोष्ठीनां कदम्बेन (समूहेन) भृता (संकुला)। धन्यानां धिनोति, भाग्यशालिनो जनान्प्रीणयति। कर्मणः शेषत्वे षष्ठी। किं वा धन्यानां जनानां कुसुमाकरे (वसन्ते) गीतगोष्ठी, धिनोति लोकान्नन्दयति॥ १९॥






मेदुरमिहिरमहामहसां प्रहेता वर-
वारिजविनेता नवसरसां समेधते
जाड्यजालजेता घनघर्मपरिचेता तिग्म-
तापसमुपेतानिलवेगवानुपैधते ।
मञ्जुनाथ वेपितवियोगिजनचेता मञ्जु-
मानिनीसमेतारब्धवारिकेलिरेजते
सरसशिरीषपरितोषितसचेता नव-
नौविनोदनेतायं निदाघ ऋतुरेधते ॥ २० ॥

मेदुराणां सान्द्राणां सूर्यस्य तिग्मतेजसां प्रहेता प्रेरकः । नवसरोवराणां श्रेष्ठकमलपूरकः । समेधते समिद्धो भवति । जाड्यजालस्य शैत्यपटलस्य जेता । परिचेता परिचायकः । तीक्ष्णतापसमुपेतस्य अनिलस्य वेगोऽस्ति यस्मिन् सः । मञ्जुमानिनीसमेतैः (रसिकैः) आरब्धा वारिकेलिर्जलक्रीडा यस्मिन् । एजते सर्वतः प्रसरतीति भावः, अथवा अन्तर्भावितण्यर्थः । सरसशिरीषपुष्पैः तोषिताः सचेतसो येन । नवस्य शिशिरवसन्तादिष्वपरिचितस्य नौकाविनोदस्य नेता नायकः ॥ २० ॥

तरणिमयूखैस्तापमयते धरणिरियं
दत्ते नो सरणिरिह गन्तुं हन्त सेधते ।
शीतलता सरसि विलीयते सलिलगता
तिग्मताऽथ मारुतेपि सपदि समेधते ।

मञ्जुनाथ निभृतनिकुञ्जनेयमध्यन्दिनो
मञ्जुमदनोदयमनोरतिरुपैधते
रश्मिदामदीपितदिवोमणिरिदानीमल-
मातपनिदानोऽयं निदाघ ऋतुरेधते ॥ २१ ॥

पृथ्वी तरणिमयूखैः सूर्यकिरणैः तापमयते। सरणिः ग्रामादीनां मार्गैः सेधते गच्छते जनाय (शत्रन्तः)। गन्तुं न ददाति गन्तुमवसरं न ददातीति भावः। ('जाने नहीं देता' इति हिन्दीपरिपाटी)। निकुञ्जे नेयं मध्यन्दिनं (मध्याह्नः) यस्मिन्। मञ्जुमदनोदयेनैव मनोरतिर्यस्मिन्, अन्यप्रकारेण मनोविनोदाभावात्। रश्मिदाम्ना किरणजालेन दीपितो दिवोमणिः (सूर्यः) यस्मिन्। अलं यथा स्यात्तथा आतपहेतुभूत. ॥ २१ ॥

### ग्रीष्मस्य नरेशरूपकम्

जोषमृतुराजसन्धिसीमामधिलङ्घ्य बलाद्
रोषरयरोपितप्रचण्डभासनाथोयम्
तिग्मकरतापितसमस्तजनताहृदयो
हन्त निर्दयोचितनिरूढशस्यमाथोयम्।
मञ्जुनाथ सौरभसुरञ्जितशिरीषमनु-
गुञ्जदलिपुञ्जबन्दिगीतगुणगाथोयं
ज्येष्ठजवलम्बनतो भूरिभाविडम्बनतो
भासते विजृम्भणतो ग्रीष्मनरनाथोयम् ॥ २२ ॥

जोषं यथा स्यात्तथा ऋतुराजस्य (वसन्तस्य) सन्धिसीमां मध्यावकाशं बलादुल्लंघ्य, घर्मस्य उपचयेन रोपिता या प्रचण्डदीप्तिस्तया युक्तः। अन्योपि राजा प्रतिपन्थिनो राज्ञः सन्धिसीमानं परस्परसमयावधिम् (सुलहनामा) उल्लंघ्य, रोषरयेण रोपिता या प्रचण्डभा (दीप्तिः) तया युक्तो भवति। तिग्मकरैः असह्यशुल्कैः (राजदेयद्रव्यैः), तीक्ष्णकिरणैश्च। निर्दयोचितो निरूढः

( निर्वाहितः ) शस्यस्य क्षेत्रस्थहरितधान्यस्य माथो येन । ग्रीष्मो घोरतापेन क्षेत्रशस्यानि उन्मथति, राजापि प्रतिपन्थिनोऽभियाने सैन्यसंघर्षेण मार्गस्थशस्यान्युन्मथ्नाति । सौरभेण सुरञ्जितं शिरीषवृक्षमनु ( समीपे ) । गुञ्जन्तो येऽलिपुञ्जाः ( भ्रमरसमूहाः ) त एव बन्दिनः तैर्गीता गुणगाथा यस्य सः । ज्येष्ठमासवेगस्य, पक्षे स्वपक्षीयस्य श्रेष्ठस्य राज्ञो वेगस्य चावलम्बनात् । भूरिभायाः (अतिशयितदीप्त्याः बहुशोभायाश्च) विडम्बनात् । विजृम्भणतः बहुतरवृद्धेः । भासते शोभते । त्रिष्वपि हेतौ पञ्चमी ॥ २२ ॥

प्रचितप्रचण्डतापतापितभुवनभर-
भासुरसुचण्डकरविकलितमम्बरम्
वेदयते वपुषि सुसूक्ष्ममपि खेदभरं
स्वेदजलजालकनिषिक्तमिदमम्बरम् ।
मञ्जुनाथ मज्जननिलीननवकञ्जदृशां
रोचते सुगन्धि सुखशीतलसुशम्बरं
संभवदतुलतापमार्दवविडम्बनदं
सम्प्रति विजृम्भते निदाघदवडम्बरम् ॥ २३ ॥

अम्बरं आकाशम्, प्रचितेन प्रचण्डतापेन तापितो भुवनभरो येन, ईदृशेन भासुरेण ( अतिदीप्तेन ) अतिचण्डकरेण ( सूर्येण ) विकलितं व्याकुलम् अस्ति । स्वेदजलजालकेन ( पटलेन ) निषिक्तमार्द्रम् । अतिसूक्ष्ममपि इदमम्बरं वस्त्रम् । वपुषि खेदभरं वेदयते प्रत्याययति । अतिलघुनापि वस्त्रेण शरीरे दुःखं प्रतीयत इत्याशयः । मज्जने स्नाने निलीनानां ( लग्नानां ) नवीनसरोजदृशां ( स्त्रीणाम् ) । सुखं शीतलं सुन्दरं शम्बरं ( जलम् ) रोचते । रुच्यर्थसंप्रदानस्य शेषत्वे षष्ठी । संभवन् यः अतुलतापस्तेन मार्दवस्य कोमलताया विडम्बनकारकम्, संतापकत्वादतितीव्रमिति यावत् । निदाघाग्नेः डम्बरम् आटोपः । विजृम्भते वर्द्धते । ग्रीष्माडम्बरस्य घनघोरतां प्रथयितुं दीर्घसमासा परुषावृत्तिः ॥ २३ ॥

—ग्रीष्ममध्याह्नः—

दुःसहदहनधरैर्निस्सहमिहार्दयत-
  श्चण्डांशोः प्रचण्डकरैस्तिग्मं तापितेलासौ
वीथी—वेश्म—वाट—गृहतोरण—तलानि भृशं
  तापितानि, चेतसो निकाममवहेलासौ।
मञ्जुनाथ घर्मजलक्लिन्नं वपुरालोठति
  नाधुना प्रयाहि बहिः, पश्य खरखेलासौ
विकलवियोगिदुःखदुर्गाम्बुधिवेला नेयं
  मध्यदिनवेला, किन्तु वध्यदिनवेलासौ॥ २४॥

इह निःसहम् (अत्यन्तम्) अर्दयतः (पीडयतः) चण्डांशोः सूर्यस्य। दुःसहदहनधरैः तीक्ष्णवह्निधारकैः प्रचण्डैः करैः असौ इला पृथिवी तिग्मं तापिता। वाटो मार्गः। गृहस्य तोरणानि उपरिद्वाराणि, तलानि (भूतलानि) अत्यन्तं तापितानि। असौ एषा संतापनक्रिया चेतसो नितान्तमवहेला तिरस्क्रिया। प्रस्वेदजलेन क्लिन्नं आर्द्रं वपुः, आ इतस्ततो लोठति संतापाधिक्यात्परिवर्तते। पश्य। इयं खरा तीक्ष्णा क्रीडा (प्रकृतिदेव्याः)। किं वा खराणां रासभानां इयं खेलावेला। वैशाखनन्दनत्वात्। विकलानां वियोगिनां दुःखरूपस्य दुर्गाम्बुधेर्वेलास्वरूपा (चरमावधिस्वरूपा)। इयं मध्याह्नवेला नास्ति, किन्तु वध्यस्य (वधार्हस्य) दिनवेला। वध्यस्य पुरुषस्य वधदिवसकाल इवायं मध्याह्न इत्याशयः॥ २४॥

—मध्याह्ने भूमिगर्भः—

सुरभिसलिलभरसंततनिषिक्ता भूरि-
  भूमिगर्भभुक्ता मही चन्दनैर्विपूयते
परितोऽप्युशीरनवजवनिका निषिच्यन्ते,
  यत्रनीरधौरधीरमारुतः प्रसूयते।

मञ्जुनाथ वीजयन्ति व्यजनेन मञ्जुदृशो
मञ्जुना विलेपनेन शीतमिवाहूयते
कथमिव मन्येमहि माधवाग्र्यमासः सोयं
माघ एव मासोयं नः स्फुटमनुभूयते ॥ २५ ॥

सुरभिसलिलभरेण निरन्तरमार्द्रीकृता । भूरिभूमिगर्भं (तहखाना) गता । चन्दनैः शोध्यते, आलिप्यत इत्यर्थः । उशीरस्य नवा जवनिकास्तिरस्करिण्यः (खस के पडदे) । यन्त्रनीरस्य (फुंहाराजलस्य) धाराभिर्धीरः पवन उत्पाद्यते । तावता वेगेन जलयन्त्राणि चलन्ति यथा तद्वेगवशात्पवनोपि प्रतीयते । ततश्च तादृशेन शीतपवनेन शीतसौख्याधिक्यं सूच्यते । मञ्जुदृशः सुन्दर्यः । विलेपनेन चन्दनकर्पूरादिजातेन । माधवस्य वैशाखस्य अग्र्यः (ज्येष्ठः) सोयं मासः, इति कथं मन्येमहि, नः अस्माकं माघ एव मासोऽनुभूयते । शीतसामग्रीसंघटनं तथा, यथा ज्येष्ठोपि माघ इव प्रतीयत इत्याशयः । नः इति शेषत्वे षष्ठी ॥ २५ ॥

ज्येष्ठमाससमुद्राङ्कितमध्यदिनवेला, पश्य
भूमिमासमुद्रां परिताप्य तर्षिता सेयम्
अस्मिन्नपि समये सहस्ररश्मिभासमयेऽ-
मुष्मिन् हिमगेहे जलधारा वर्षिता सेयम् ।
मञ्जुनाथ कण्टकियवसमांसलावरणै-
र्ग्रीष्मरोधमेक्ष्योत्प्रेक्षा मञ्जु मर्शिता सेयं
भीष्ममिव भीषणगभीरगुरुभावधरं
ग्रीष्ममिह नव्या शरशय्या दर्शिता सेयम् ॥ २६ ॥

ज्येष्ठमासस्य मुद्रया अङ्किता सेयं मध्याह्नवेला, आ समन्तात् समुद्रो यस्याः (समुद्रपर्यन्ताम्, अखिलामिति यावत्) भूमिं परिताप्य तर्षिता

( तर्षोऽस्यास्तीति ) तृष्णायुक्तास्ति इति पश्य । समस्तां भूमिं परिताप्यापि न संतोष इति ग्रीष्माधिक्यं ध्वन्यते । सहस्ररश्मेः ( सूर्यस्य, अतितापकता सूच्यते ) भासमये दीप्तिमये । अस्मिन्नपि भयङ्करे समये अमुष्मिन् हिमगेहे ( शीतलभवने ) सेयं जलधारा वर्षिता, जलयन्त्रादिभ्य इत्यर्थः । कण्टकयुक्तानां यवसानां ( जवासा ) मांसलैरावरणैः स्थूलाभिर्वृतिभिः ( टट्टी ) ग्रीष्मस्य रोधमेक्ष्य ( आ–ईक्ष्य ) दृष्ट्वा । सेयमुत्प्रेक्षा मंजु यथा स्यात्तथा मर्शिता विचारिता । तामाह—भीष्मपितामहमिव भीषणस्य गभीरस्य गुरुभावस्य धारकम्, ग्रीष्मर्तुं नवीना शरशय्या दर्शिता । महाभारते–मुमूर्षवे भीष्माय यथा शरशय्याऽर्जुनादिभिर्दर्शिता, तथा कण्टकियवासवृतिरूपा शरशय्या ग्रीष्मार्थं कल्पिता । शरशय्यामधिशयानो भीष्मो नेतस्ततो विचेष्टते स्म, तथा यवासटट्टिकाभिर्ग्रीष्मोऽपि न किञ्चिदपि स्पन्दितुं शक्त इति यवासावरणानां शीतत्वातिशयो ध्वन्यते । अण्यन्तावस्थाकर्तुर्ग्रीष्मस्य दृशेश्चेत्यनेन कर्मत्वम् ॥ २६ ॥

### ग्रीष्मरजनी

भृङ्गारकशीतसुखसलिलनिषिक्ता रति-
रङ्गायोपयुक्ता मही तुङ्गालयगामिनी
इन्दुकरसङ्गादतिशीतलतमासौ वाति
सौरभानुषङ्गा मरुल्लहरी सुधामिनी ।
मञ्जुनाथ मज्जनसुशृङ्गारितदेहलता
भाति पुष्पशय्योत्सङ्गसङ्गा वरकामिनी
विहरदनङ्गागमसागरतरङ्गा याति
धृतरतरङ्गासौ निदाघलघुयामिनी ॥ २७ ॥

भृङ्गारकस्य गलन्तिकायाः ( 'झारी' रामझारा इतिख्यातस्य ) शीतेन सुखेन सलिलेन आर्द्रीकृता । तुङ्गालयगामिनी उन्नतभवनसंबन्धिनी मही प्रासादपृष्ठमिति यावत् । रतिरङ्गाय सुरतक्रीडायै उपयुक्ता । सुधामिनी सुन्दरधाम( गृह )संबन्धिनी । सौरभमनुषङ्गः अवष्टम्भो यस्याः सा, सौरभयुक्तेति

भावः। असौ पवनलहरी चन्द्रकिरणसंबन्धात् अतिशीतलतमा प्रवहति। मज्जनोत्तरं सुशृङ्गारिता देहलता यया सा। पुष्पशय्याया य उत्सङ्गः मध्यभागस्तस्मिन् सङ्गो यस्याः सेति व्यधिकरणबहुव्रीहिः। पुष्परचितशय्यास्था सुन्दरकामिनी भाति। विहरन्तः (खेलन्त.) अनङ्गागमरूपसागरस्य तरङ्गा यस्याम्, विजृम्भितकामशासनेति भावः। अत एव धृतः रतरङ्गः सुरतानन्दो यस्यां साऽसौ निदाघस्य लघ्वी यामिनी व्यत्येति। भृङ्गा, रङ्गेत्यादि सर्वत्र, चतुर्थे च तरङ्गा, तरङ्गा इति यमकालङ्कारो लोकनीयः॥ २७॥

### ग्रीष्ममध्याह्ने नायकः

उपरि प्रचण्डकरैस्तपति सहस्रकरो
नीचैरभ्ररोधिसौधपृष्ठतलतापितोसि
वह्निं वहमाना इव वान्ति पवमाना इमे
तदपि विलोकलाभलिप्सया न यापितोसि।
मञ्जुनाऽनुलापसुखसंगमेन मञ्जुनाथ
न चिरपरिस्थितिपरिश्रममवापितोसि
चञ्चल! निधेहि क्षणमञ्चलमलिकतटे
तिग्मातपतापमपवञ्च परितापितोसि॥ २८॥

सहस्रकरः सूर्यः (तापकरत्वाधिक्यं द्योत्यते)। नीचैः, अभ्ररोधिनः अभ्रंलिहस्य सौधपृष्ठस्य भूतलेन तापितोसि। निजहर्म्यपृष्ठमारुह्य, सदनान्तरस्य गवाक्षनिविष्टया नायिकया संलपन्तं नायकं प्रति सहचरस्योक्तिः। वह्निं वहमानाः अग्निं वर्षन्त इव। पवमानाः पवना.। न यापितोसि न गमितोसि। दर्शनलालसया त्वं सौधपृष्ठान्न गतोसीत्याशयः। संलापसुखसंप्राप्त्या चिरकालं अवस्थानस्य यः परिश्रमस्तमपि न प्राप्तोसि। हे चञ्चल! अलिकतटे ललाटाग्रभागे क्षणमञ्चलं वस्त्रप्रान्तं निधेहि। घोरातपस्य तापं अपवञ्च वारय। त्वमतितापितोसि। सुहृद्द्वारा तापसूचनया नायकस्य दर्शन-संलापलीनता ध्वन्यते॥ २८॥

## ग्रीष्मे मानिनी



" त्वरितमुपेहि मानशमनं विधेहि सखे !
निश्चितमवेहि मंक्षु मुह्यति मनस्विनी ॥ "

Lakshmi Art, Bombay, 8



## ग्रीष्मे नायिकाः

### मानिनी

प्रमदवनस्य मञ्जुमर्मरसुवेदिकायां
वाति जलयन्त्रमरुल्लहरी तरस्विनी
तदपि सखीभिरभितोऽसौ तालवृन्तानिलै-
र्वीज्यते निरस्तपटं खिन्नघनोरस्विनी ।
ग्रीष्मविसरेण मन्युसंतापानलेन चाद्य
शीतलशिलातलेपि ताम्यति तपस्विनी
त्वरितमपेहि, मानशमनं विधेहि सखे !
निश्चितमवेहि मंक्षु मुह्यति मनस्विनी ॥ २९ ॥

प्रमदवनस्य अन्तःपुरोपवनस्य । मर्मरपाषाणनिर्मितायां वेदिकायाम् ( चबूतरा) । तरस्विनी वेगवती, जलयन्त्रोत्थिता पवनलहरी वाति । जलयन्त्राणां वेगवशात्पवनोत्पादकत्वेन, स्थानस्य शीतत्वातिशयो ध्वन्यते । खिन्नं स्वेदाकुलं, घनं निबिडं उरो यस्याः सा । दूरीकृतवस्त्रं यथा तथा व्यजनपवनैर्वीज्यते । ग्रीष्मवेगेन, मन्योः कोपस्य संतापानलेन च । तपस्विनी दीना । मानिनी, सा मंक्षु झटिति । मुह्यति मूर्च्छां गच्छतीति निश्चितं जानीहि । सहचरस्योक्तिः ॥ २९ ॥

## —⊰ प्रवत्स्यत्पतिका ⊱—



दीपितदिनेशदूरदीधितिविकासमये
तापोयं समस्तलोकवलयेऽनुलीयते
रभसरयेद्धा वान्ति तापविधयेऽमी मुहु-
र्मारुताः, सुषीमताऽधोनिलये निलीयते ।
मञ्जुनाथ वेपितवियोगिवनिताहृदये
नित्यनिर्दयेस्मिन् दरदुःस्थितिरुदीयते
भूयो विनये किं दवदारुणदुरासमये
ग्रीष्मसमये किं कान्त गन्तुं व्यवसीयते ॥ ३० ॥

दीपितः (ग्रीष्मेणोत्तेजितः) दिनेशस्य सूर्यस्य दूरदीधितीनां प्रसरत्किरणानां यो विकासस्तन्मये । समस्तलोकमण्डले, तापः अनुलीयते व्याप्नोति । रभसरयेद्धाः शीघ्रतावेगेनोत्तेजिता अमी मारुताः तापविधानाय मुहुर्वान्ति । सुषीमता शीतलता । अधोनिलये नीचैस्तनगृहे । वेपितं वियोगिनीनां वनितानां हृदयं येन ईदृशे । अस्मिन् ग्रीष्मे । दरदुःस्थितिः भयेन दुरवस्था, ईषद्दुरवस्था वा । भूयः किं विनये, अधिकं किं प्रार्थनां करोमि ? दवस्य वनवह्नेः, दारुणदुःस्थितियुक्ते । अस्मिन् ग्रीष्मसमये गन्तुं किमिति निश्चीयते ? व्यवपूर्वकात् 'षो' धातोः कर्मणि लट् ॥ ३० ॥

---

## —⊰ स्वाधीनपतिकायाः पुष्पशृङ्गारः ⊱—



अद्य सायंसमयादेव संभारः समेधते
प्रियापुष्पशृङ्गारः प्रियेण पर्यवेक्ष्यते

अलिके कुसुमचन्द्रलेखा कर्णपुष्पमथ
श्रवसोरुरसि चन्द्रहारः सुसमीक्ष्यते ।
करयोः कुसुमकङ्कणौ तौ, कटिदेशे किल
कुसुमकलितमञ्जुरशनाप्यपेक्ष्यते
समधिककुसुमसमवायसमारम्भेऽस्मिन्
कुसुमितयौवनासौ कुसुममिवेक्ष्यते ॥ ३१ ॥

संभारः आयोजनम् । समेधते वर्धते । पर्यवेक्ष्यते संभाल्यते क्रियत इति यावत् । ललाटे कुसुमरचिता चन्द्रलेखा ( बैना इति हिन्दी प्रसिद्धः) । श्रवसोः कर्णयोः कर्णपुष्पं कर्णपूरः जातावेकत्वम् । समधिकस्य कुसुमसमवायस्य समारम्भे अनुष्ठाने बहुतरकुसुमसंघटने इति यावत् । कुसुमितं कुसुमवद्विकसितं यौवनं यस्याः, ईदृशी असौ नायिका कुसुममिव ईक्ष्यते । कुसुमं यथाऽतिकोमलं वक्षःस्थापनोचितं तथेयमपीति मनोभावो ध्वन्यते ॥३१॥

---

## राधाकृष्णयोः पुष्पहर्म्योत्सवः

शोभते चतुर्दिक्षु चारुपुष्पदामसंघटिता
शिल्पिशिल्पशोभिता कुसुमहर्म्यमालासौ
उपरि विभाति पुष्पकलिकावितानयुता
सद्वन्दनमालाशालिपुष्पचन्द्रशालासौ ।
मञ्जुनाथ मध्ये सुविशालाङ्गणवेदिकायां
राजते व्रजेशो वृषभानुनृपबालासौ

तत्र[1] कीर्तिबालातनुकान्तिच्छविविच्छुरिता
चम्पापुष्पमालाऽभूत्सुमञ्जुमल्लिमालासौ ॥ ३२ ॥

चारुभिः पुष्पदामभिः (कुसुमस्रग्भिः) संघटिता। चतुर्दिक् पर्यन्ततः, चतुर्दिक्ष्वित्यर्थः। कुसुमनिर्मिता हर्म्यमाला (फूलबॅंगला; फूलमंडली इति प्रसिद्धा)। उपरि उपरितले, पुष्पकोरकाणां वितानेन ( चंदोवा ) युता, सुन्दर्या वन्दनमालया (बंदनवार) शालिनी शोभमाना, पुष्पनिर्मिता चन्द्रशाला (शिरोगृहम्, चांदनी इति भाषाप्रसिद्धा) विभाति। मध्ये अतिविशालायां अङ्गणस्य वेदिकायां (चौतरा)। तत्र कीर्तिबालायाः श्रीराधायाः तनुकान्तिच्छविभिः (शोभाभिः) विच्छुरिता मिश्रिता, सुमञ्जुला मल्लिमाला, चम्पापुष्पमालाऽभूत्। श्वेतापि मल्लिकामाला काञ्चनवर्णदेहकान्तिभिः पीता चम्पापुष्पाणां मालाऽभवदित्याशयः। तद्गुणः ॥ ३२ ॥

---

### ग्रीष्मे नायकयोरुपवनविहारः

वीथीपथचारिणं निरीक्ष्य चित्तहारिणं तं
जाता कामवीथीपथिकासौ मूढचेतना
समयमविन्दती समागमसुयोग्यमियं
भाग्यमेव निन्दति स्म रुद्धमीनकेतना।
अद्य पुरवाटिकायामायातं समेत्य नु तं
नानाव्यपदेशतोऽभूदुज्झितनिकेतना

---

१ मोहमय्यां सेयं समस्या गोस्वामिकुलकौस्तुभश्रीगोकुलनाथमहोदयानां ज्येष्ठतनूजैः चि. गो. श्रीकृष्णजीवनमहाभागैर्बृहन्मन्दिरे पुष्पमण्डलोत्सवोपलक्ष्ये ग्रन्थकर्त्रे पूरयितुं प्रत्ताऽभवत्।

वसन्तः



"त्वन्मुखसरोजसाधुसुषमामवेक्ष्य मनाक्
सरसि सरोजराजिरेषा ननु कम्पते ॥"

Lakshmi Art, Bombay, 8.

ग्रीष्मघोरमध्याह्ने समागतयोरथ तयोः
शीतसुखसायाह्ने समेति गृहचेतना ॥ ३३ ॥

तं मनोहारिणं नायकं निरीक्ष्य कामपथस्य पथिका काममार्गपरिचितेत्यर्थः। असौ नायिका मूढचेतना जाता। कामोन्मादेन पूर्वापरज्ञानशून्याभवदित्याशयः। समयमविन्दती अलभमाना। रुद्धमीनकेतना अवरुद्धकामप्रसरा। तं नायकं पुरोपवने आयातं समेत्य ज्ञात्वा। नानाव्याजैर्गृहमुज्झित्वा आगताऽभवदित्यर्थः। शीते सुखकारके सायंकाले गृहचेतना गृहगमनबोधः समेति आगच्छति। एतावत्कालं न तयोर्गृहस्य स्मरणमप्यभूत्तथा च द्वयोरपि रसोन्मत्ततया संभोगशृङ्गारपरिपोषो ध्वन्यते ॥ ३३ ॥

---

## ग्रीष्मे जलविहारः

वीक्ष्य भुजमञ्जिमां मृणालिनी निलीना जले
अद्रिमामुदीक्ष्य पत्रं पदयोर्विलम्बते
चेलाञ्चलाद्वीक्ष्य तव मञ्जुलमुरोजयुगं
सुन्दरि! सरोजकोषो मौनमवलम्बते।
सम्प्रति सरोजमञ्जुविपिनविहारैरलं
वीक्षसे न सम्मुखमुरोजयुगसंनते!
त्वन्मुखसरोजसाधुसुषमामवेक्ष्य मनाक्
सरसि सरोजराजिरेषा ननु कम्पते ॥ ३४ ॥

भुजयोर्मञ्जुता वीक्ष्य कमलिनी जले निलीना। पदयोर्मृदुतां वीक्ष्य कमलपलाशं तव चरणयोर्विलम्बते अवनमति। पत्राणां चरणसकाशागमने पदप्रणाम एव हेतुरित्यर्थः। वस्त्राञ्चलमध्यात् तव वक्षोजयुगं वीक्ष्य कमलकोषो

मौनमालम्बते । कमलकुड्मलानां मुद्रणस्य तव कुचयुगसकाशात्पराजय एव हेतुरिति भावः । उरोजयुगेन संनते हे सुन्दरि! कमलैर्मनोहरस्य विपिनस्य विहारैरलम्, जलविहारं मा कार्षीरित्यर्थः । अग्रे किं न वीक्षसे? यद् त्वन्मुखकमलस्य साध्वीं शोभामालोक्य सरसि एषा कमलराजिः कम्पते । मुखसकाशात्पराजितत्वाद्भयेन कम्पत इति भावः । सर्वत्र हेतूत्प्रेक्षा ॥ ३४ ॥

---

## प्रावृट्

धाराधरधीरवारिधारामधिगम्य मुहु-
 र्झञ्झावेगविद्धा गिरिनिर्झरा निरासते
कूलंकषाः सरितोऽद्य पङ्कजिनीजालनुदो
 रसिकानमन्दमुदो नित्यं समुपासते ।
मञ्जुनाथ बकुलकदम्बतरुदोलागता
 नागरनितम्बवतीलेखासौ प्रकाशते
पर्वतघनेषु पुलिनेषु पार्श्वपत्तनेषु
 पौरोपवनेषु पुरः प्रावृट् प्रतिभासते ॥ ३५ ॥

सवृष्टिकवायुवेगेन विद्धा इतस्ततो विकीर्णाः । निरासते निष्पतन्ति । पङ्कजिनीजालं नुदन्ति ताः, नुदतेः क्विप् । कमलिनीपटलप्रवाहिण्यः सरितोऽद्य कूलंकषाः तटभेदिन्यः सन्ति । वर्षासु कमलानि विलीयन्त इति कविसमयः । अमन्दा आनन्दाः रसिकान् सेवन्ते । नागरनितम्बिनीनां पङ्क्तिः । नितम्बवतीपदेन, हिन्दोलनविलासे तासां विभ्रमविशेषेण शोभातिशयो ध्वन्यते । पर्वतघनेषु पर्वतप्रान्तेषु । पत्तनानां पार्श्वभागेषु, राजदन्तादिः । अत्र चतुर्थचरणस्थैः पर्वतघनेषु पुलिनेषु इत्यादिसप्तम्यन्तैर्यथाक्रमं जलधरधाराप्राप्त्या गिरिनिर्झरवर्णनेन पर्वताञ्चलेषु, कूलंकषसरिद्वर्णनेन पुलिनेषु, रसिका-

नामानन्दवर्णनेन नगरोपान्तेषु, स्त्रीणां बकुलकदम्बदोलावर्णनेन पौरोपवनेषु प्रावृषः प्रतिभासो वर्णित इति चमत्कारको यथाक्रमो निबोधनीयः। चतुर्थचरणस्थो वृत्त्यनुप्रासश्चापि ऋतुवर्णनानुगुण इत्यलं सहृदयेषु पुनरुक्त्या ॥३५॥

हर्षितकृषीवलकलितभूमिकर्षाः किल
कामिकुललोपितविमर्षाः सुखसंगताः
नभसि निबद्धमेघसंघर्षाः प्रबुद्धनव-
कामशरामर्षाः साधु सर्वजनताऽऽनताः ।
मञ्जुनाथ मानिनीसमूहमानधर्षाः कृत-
शोभाविप्रकर्षाः कामतर्षाधिकमागताः
वल्गद्वारिवर्षा भुग्नभुवनवितर्षाः कृत-
केकिकुलहर्षाः सखि वर्षाः समुपागताः ॥ ३६ ॥

भूमिकर्षः भूमिकर्षणम् । कामिकुलेन लोपितो विमर्षो विषादो यासु ताः। प्रबुद्धः (उद्दीप्त) नवः कामशराणां अमर्षः क्रोधः (विरहिषु) यासु यथा तथा सर्वजनतया आनताः प्रणताः। मानं धर्षयन्ति ताः, कर्मण्यण्। विप्रकर्षः अतिशयः। कामतर्षः (तृष्णा) अधिको यस्मिन्कर्मणि यथा भवति तथा, आगताः सर्वैः स्वीकृताः। वलात् प्रसरत् वारिवर्षं यासु ताः। भुग्नो यापितो भुवनस्य वितर्षः (तृष्णा) याभिः ॥ ३६ ॥

चञ्चच्चारुचञ्चलाचकासितरुचिररुचि-
सलिलमुचामचारिसञ्चयो विभासते
केकाकलकोलाहलकुतुकिकलापिनोऽमी
कलितकदम्बकूलकाननान्युपासते ।
मञ्जुनाथ मेदुरमहीरुहविमण्डितेयं
मोदमानमेदिनी प्रमोदमिह दासते

पुष्कलपयःपूरपीनतमपुष्करिणी
प्रावृषि सपङ्कपथा पृथिवी प्रकाशते ॥ ३७ ॥

चञ्चन्ती चार्वी या चञ्चला (विद्युत्) तया चकासिता रुचिरा रुचिः (कान्तिः) येषामीदृशानां सलिलमुचां मेघानाम् । न चरति चलति ईदृशः संचयः संवट्ट । मेघानां स्थिरनिबिडः संघट्टो भासत इति भावः । केकारूपे मञ्जुकोलाहले कुतुकिनः अमी कलापिनः (मयूरा.), कलिताः कदम्बवृक्षा येष्वीदृशानि कूलकाननानि उपासते सेवन्ते । मेदुरैः सान्द्रस्निग्धैर्महीरुहैर्मण्डिता, मोदमाना वर्षाभिरुच्छ्वसन्ती इयं मेदिनी प्रमोदं दासते ददाति 'दासृ दाने' । पुष्कलेन पय.पूरेण पीनतमाः (अतिपूर्णाः) पुष्करिण्यस्तडागा यस्यां सा । सपङ्काः पन्थानो यस्यां सा । प्रकाशते शोभते । चतुर्षु चरणेषु यथाक्रमं चकार-ककार-मकार-पकाराणां प्रासः प्रेक्षणीयः ॥ ३७ ॥

धूसरधवलधूम्रधूपायितधाराधरै-
रन्धकारबन्धूकृतमम्बुधरैरम्बरम्
शम्पाशतशोभाशालि विरहिविकम्पावहं
शोभतेऽद्य शैलशिखरेषु शुचि शम्बरम् ।
मञ्जुनाथ मानिनीमनःसु मोदमावहते
मेदुरलहरिरङ्गमञ्जुतममम्बरं
शम्बरशमनशरडम्बरविकासकरं
वियति विजृम्भते गभीरघनाडम्बरम् ॥ ३८ ॥

धूपायितो धूपाकारः, । अम्बुधरैर्जलधारकैर्धूसरादिभिर्धाराधरैर्मेघैः । अम्बरं गगनं अन्धकारस्य वन्धुसदृशं कृतम् । च्विः, मेघैर्गगनमन्धकारितमित्यर्थः । शम्पाशतं विद्युच्छतम् । विरहिणां विकम्पमावहति तत् । शुचि मनोहारि शम्बरं जलम् । मेदुरः सान्द्रस्निग्धो यो लहरिरङ्गः (लहरिया) तेन मञ्जुतमम्, अम्बरं वस्त्रम्, स्त्रीणां चेतःसु मोदं ददाति । वर्षासु 'लहरिया'

वस्त्रस्य स्त्रीणामभिरुचितत्वात्। शम्बरशमनस्य कामस्य, शरडम्बरस्य बाणाटोपस्य, विकासकम्। गभीरं घनं घनाडम्बरम् (मेघसंघट्टः) विजृम्भते प्रसरति ॥ ३८ ॥

---

## प्रावृषो राज्ञीरूपकम्

दशसु दिशासु ततं वारिदवितानमिदं
दुन्दुभिरमन्दघनगर्जितं प्रकाशते
इन्द्रगोपविच्छुरिते ह्यास्तरणे हरितेऽस्मिन्
बकुलकदम्बतरुसामाजिका आसते।
मञ्जुनाथ केकिनो नदन्ति वरवन्दिनोऽमी
शक्रधनुःकेतुं वायुवीराः समुपासते
पञ्चशरसेनापतौ ललिते वसन्ते गते
मञ्चगता सेयं पुरः प्रावृट् प्रतिभासते ॥ ३९ ॥

राज्ञां सभायां वितानाः, दुन्दुभयः, महास्तरणे सभासदानां पङ्क्तिः, संमुखे बन्दिनः, पर्यन्तस्थिता योद्धारः, अग्रे च राजचिह्नाङ्कितो ध्वज एतदादीन्युपकरणानि भवन्ति। तान्येव प्रावृड्राज्ञीसभायां वर्ण्यन्ते। ततं विस्तारितम्। वारिदरूप वितानम् (चँदोवा)। घनगर्जितं दुन्दुभिः। इन्द्रगोपैः प्रावृषेण्यरक्तकीटैर्विच्छुरिते चित्रिते, शस्यमये हरिते आस्तरणे बकुलादयो वृक्षाएव सामाजिकास्तिष्ठन्ति। वायुरूपा वीराः शक्रधनुर्ध्वजम् उपासते। तस्यैव मध्यतः स्थापनेन तं संमानयन्तीत्यर्थः। वसन्ते प्रहिते सति सिंहासनगता सेयं प्रावृट् शोभते। ललिते इति विशेषणेन मध्ये ग्रीष्मस्य गमनेपि तस्य ललितत्वाभावेन निरास इति बोध्यम् ॥ ३९ ॥

---

### सेनारूपकम्

निर्यन्नीलनीरदनिविडनिकुरम्बमिद-
मम्बरे विजृम्भते करीन्द्रघटाबन्धुरम्
चञ्चच्चारुचन्द्रहासवैभवविडम्बिनीयं
चञ्चला चमत्कुरुतेऽचिरचकितोत्तरम् ।
मञ्जुनाथ दुन्दुभिनिनादपरिभावी भृशं
मेघघनघोषो मुहुरंहते सुनिर्भरं
मन्ये मीनकेतनमहीपरणचण्डचमूः
सकलजगज्जयाय सज्जति मदोद्धुरम् ॥ ४० ॥

निर्यत् निर्गच्छत् नीलनीरदानां (मेघानां) निबिडं निकुरम्बं (वृन्दम्)। हस्तीन्द्रसमूहवत् बन्धुरं(नतोन्नतं)सुन्दरं वा विजृम्भते प्रसरति । चन्द्रहासस्य खड्गस्य शोभातिरस्कारिणीयं चञ्चला विद्युत्। अचिरं द्रुतं, चकितोत्तरं (चकितत्वं उत्तरं अग्रे यत्र तथा) च चमत्कुरुते दीप्यते । दुन्दुभिनिनादस्यापि परिभावको विजेता, मेघानां निविडो घोषः, मुहुः अंहते निर्गच्छति 'अहि गतौ' । स्मरमहीपस्य रणचण्डा चमूः (सेना) मदोद्धुरं मदोत्कटं यथा तथा सज्जा भवति । उपमानुप्राणितोत्प्रेक्षा । मेघघनघोष इत्यत्र पुनरुक्तवदाभासालङ्कृतिः ॥ ४० ॥

---

### प्रावृषि नायिकाः

### प्रोषितपतिका

धाराधरधूसरदिगन्तरं दिवसमेक्ष्य
मन्देतरमन्युपूरपीडिता विकम्पते

# वर्षासु विरहिणी



" चिरपरदेशगतदक्षिणदयितपथ
प्रावृषि पयोजमञ्जुनयना निरीक्षते ॥ "

Lakshmı Art, Bombay, 8.

मोदमानबर्हिणसमूहमञ्जुकेकारवे
पुलकितकपोलपाण्डुपाली पुनरेजते ।
मञ्जुनाथ निर्भरमनोभूशरजर्जरिता
न सुखमुपैति हन्त चेतसि विशङ्कते
चिरपरदेशगतदक्षिणदयितपथं
प्रावृषि पयोजमञ्जुनयना निरीक्षते ॥ ४१ ॥

मेघैर्धूसरो दिगन्तरो यस्मिन्नीदृशम् । आ–ईक्ष्य, असन्देन मन्युपूरेण (शोकभरेण) पीडिता । पुलकिता कपोलयोः पाण्डुवर्णा पाली यस्याः एवंविधा सती एजते कम्पते । चिरात्परदेशं (अपरं प्रदेशं, प्रवासम्) गतस्य दक्षिणस्य (अनुकूलस्य) अनेन विरहिविकर्पके वर्षासमये त्ववश्यमागमिष्यतीति सूच्यते । दयितस्य पन्थानं, निरीक्षते, दयितं प्रतीक्षत इत्यर्थः । अतएव भवने शयानापि आगत इति शङ्कया मुहुर्मुहुरुत्थाय वीक्षत इति चित्रेप्यालोक्यम् ॥ ४१ ॥

अवधिदिनानि गमितानि मन्युमीलितानि
दत्ता नो प्रवृत्तिर्बत भूरिदिवसा गताः
तदनु दुरन्तो हन्त यातवान्वसन्तोऽप्यथ
नीतास्तापवन्तो ग्रीष्मवासरा निरायताः ।
मञ्जुनाथ नागतोऽद्य दयितो विदेशगतो
वेधसा समन्ततोऽपि यातना उपाहिताः
वल्गद्वारिवर्षा भुग्नभुवनवितर्षाः कृत-
केकिकुलहर्षाः सखि वर्षाः समुपागताः ॥ ४२ ॥

मन्युना शोकेन मीलितानि आच्छादितानि, निरानन्दानीत्यर्थः । प्रियेण

प्रवृत्तिः न दत्ता, आत्मनो वृत्तान्तो न प्रेषितः । निरायताः नितरामायताः (दीर्घाः)। यातनाः उपाहिताः तीव्रवेदना आपतिताः। चतुर्थं पूर्ववत् ॥४२॥

---

## प्रवसत्पतिका

अम्बुधरडम्बरकरम्बिनि नभसि भृशं
भाति चारुचञ्चला विलासभरभरिता
अतुलजलौघमुपलभ्य वारिवाहकत-
स्तटयुगभेदिनी सुदुस्तराऽद्य सरिता ।
मञ्जुनाथ मदनमहीपमहायोगेऽस्मिन्
किमिति प्रवासिजनचर्या त्वयाऽऽचरिता
इन्द्रगोपमञ्जुला प्रफुल्लनववञ्जुलासौ
हरति मनांसि वनभूमिरतिहरिता ॥ ४३ ॥

डम्बरेण करम्बिनि व्याप्नुवति । सरिता नदी, भागुरेराप्। 'तटयुगभेदिनी सरिता सुदुस्तरा' इत्यनेन उभयकुलमर्यादोल्लङ्घिनी कामुकी संप्रति स्ववेगेन दुर्निवारेत्ययमर्थोऽपि यदि ध्वन्यते तर्हि बोद्धव्यः। मदनमहीन्द्रस्य महायोगे महासमारोहे । त्वया प्रवासिजनोचिता चर्या किमित्याचरिता ? इन्द्रगोपैर्मनोहरा, प्रफुल्लाः नूतना वञ्जुला वानीरवृक्षा यस्यां सा । (फलिनो वेतसवृक्षस्य वर्णनम्, अफलपुष्पमप्येकं वदन्ति)। एवंविधे समये प्रवासो नोचित इति नायिकापक्षतः सख्या उक्तिः ॥ ४३ ॥

निह्नुते दिगन्ताम्बरवारिदवितानमिदं
नन्दति समन्तान्नरलोको निरुपप्लवम्
दोलन्ते कदम्बतरुदोलायां पयोजदृशो
गीतयो वहन्ते प्रियमनसि मनोभवम् ।

मञ्जुनाथ निर्यापय यातुं परदेशेऽधुना
किं बहुना ? साधय समीपगतमुत्सवं
नभसि पयोदाच्छन्ननभसि नवीनसखे !
नार्हसि नवीनामेवमुज्झितुमनुत्सवम् ॥ ४४ ॥

दिगन्तान् निहुते आच्छादयति । निरुपप्लवं शान्तग्रीष्माद्युपद्रवं यथातथा नन्दति मोदते । मनोभवं वहन्ते स्मरमुद्दीपयन्तीत्यर्थः । यातुं निर्यापय गमनविचारं त्यजेत्यर्थः । यातेः स्वार्थिको णिः । बहुना जल्पितेन किम् ? समीपगतं कज्जलीतृतीयाद्युत्सवम्, साधय अनुभव । पयोदाच्छन्नं नभः आकाशं यत्र ईदृशे नभसि श्रावणे । नवीनावस्थामिमां नायिकामेवं निरुत्सवं यथातथा त्यक्तुं नार्हसि । त्वयि गते अस्या उत्सवा न भविष्यन्तीति निरुत्सवता । त्वमपि नवतरुणः इयमपि नवोढा, अतएव नवागतान् तृतीयाद्युत्सवान्परिहृत्य गन्तुं नार्हमिति सहचरस्योक्तिः ॥ ४४ ॥

---

## विरहिणी

कज्जलमलिनजलवाहकनिविडघटा
गाहते गगनतटान्तमतिगहना
पुष्पितकदम्बवनवीथीगन्धवाहिनीयं
वाति वायुलहरी समिद्धकामदहना ।
श्यामलजलदगतचञ्चला चमत्कुरुते
निकषनिहितहेमरेखारुचिवहना
नायकविरहपञ्चसायकविकलमना
नेक्षते नवीनवधूरम्बरमसहना ॥ ४५ ॥

कज्जलमलिनानां मेघानां निविडा घटा। गगनतटस्य अन्तपर्यन्तं गाहते विलोडयति, सर्वगगने भ्रमतीत्यर्थः। समिद्धः दीप्तः कामानलो यस्यां सा। निकषे स्वर्णपरीक्षणपाषाणे निहितायाः स्वर्णरेखायाः कान्तिवाहिनी। चञ्चला विद्युत्। श्यामजलदे पीताया विद्युतो रेखा तथा प्रतीयते यथा निकषे (कसौटी) कषितस्य स्वर्णस्य रेखेत्याशयः। रुचिं वहतीति नन्दनेति वह्युः। नायकविरहेण, पञ्चसायकेन (कामेन) च विकलं मनो यस्याः सा, नवीना वधूः, एतदुद्दीपनमसहमाना सती गगनं न वीक्षते॥ ४५॥

---

## वर्षासु निकुञ्जविहारः

---

मेचकमनोज्ञमेघपुञ्जे दिवमावृण्वति
याता यन्निकुञ्जे तस्य फलमुपधार्यताम्
सुन्दरि! निरुन्धि मुक्तं कुन्तलकलापमिमं
निविडनितम्बे! तीव्रगतिरपि वार्यताम्।
स्रस्तं ते दुकूलमवमुञ्च मूर्ध्नि भामिनि! हे
सरभसगामिनि मनागपि विचार्यतां
प्रेयसि! पयोदस्तव पीवरपयोधरयोः
प्रवरं पिधत्ते विन्दुहारं न निवार्यताम्॥ ४६॥

मेचके श्यामे मनोज्ञे च मेघपुञ्जे, दिवमावृण्वति गगनं व्याप्नुवति सति। उपधार्यतां सह्यताम्। मुक्तं रभसगमनाद्विस्रस्तं कुन्तलकलापं केशनिचयं निरुन्धि हस्ततोऽवलम्बस्व। हे घनपृथुलनितम्बे! शीघ्रगमनं त्यज्यताम्। घननितम्बभारवत्यास्तव त्वरितगमनेन खेदो भवेदित्यर्थः। मस्तकतो विस्रस्तं ते दुकूलं (पट्टवसनं) शिरसि अवमुञ्च स्थापय। अयि शीघ्रगामिनि क्षणमिदं विचार्यतां यत्–मेघस्तव पीनकुचयोरुपरि प्रवरं लोकेऽलभ्यं जलविन्दुघटितं

## वर्षा:



"प्रेयसि! पयोदस्तव पीवरपयोधरयोः
प्रवरं पिधत्ते बिन्दुहारं, न निवार्यताम्॥"

Lakshmi Art, Bombay, 8

हारं पिधत्ते आमुञ्चति। एष घनो न निवार्यतां परिह्रियताम्। तव सेवकस्यास्य मेघस्यानुरोधो न परिहर्तव्य इत्यर्थः ॥ ४६ ॥

---

### जलधरं प्रत्युपालम्भः

प्रारम्भे दिनानि कानिचिद्वै भृशं प्रस्रवता
भूमेरन्तरङ्गे भवताऽऽशाबीजमाहितम्
तदनु निरन्तरं त्वदागमप्रतीक्षावती
कथमपि नीतवती कालं सेयमायतम्।
साम्प्रतमुपरि लम्बमानेनापि मञ्जुनाथ
भवता न किञ्चित्फलमधुनाप्युपाहितं
हंहो धूर्त धाराधर! धरणीं विधूनयसे
नयसे न दीनामिमां प्रमदमनारतम् ॥ ४७ ॥

कानिचिद्दिनानि कतिचिद्दिनपर्यन्तम्। अत्यन्तसंयोगे द्वितीया। प्रस्रवता जलबिन्दून्निश्चोतता। अन्तरङ्गे अन्तः, हृदि। आशाया बीजं स्थापितम्। इदानीं यथारम्भ एव एवंक्रमस्तथाग्रे गाढं वर्षिष्यतीति। सेयं धरणी। कथमपि यथाकथंचित्कालं प्रयापितवती। उपरि लम्बमानेन, केवलं वटाडम्बरं कुर्वाणेनेत्यर्थः। अधुनापि किंचित्फलं वर्षणादिकं न दर्शितम्। उपरिलम्बमानस्यापि ते क्लीबतैवेत्यर्थः। विधूनयसे क्लेशेन कम्पयसे। प्रमदं न नयसे नानन्दयसि। अत्र अप्रस्तुतप्रशंसाविधया, स्वलक्ष्यकालार्थं नायिकां प्रीणितवतोऽनन्तर च वैमुख्यमवलम्बमानस्य नायकस्यापि वृत्तं ध्वन्यते ॥ ४७ ॥

### सोरठाच्छन्दः

जलधाराधर वर्ष, हे धाराधर! सन्ततम्।
धरतु धरापि च हर्ष,—मविरतरविकरतापिता ॥ ४८ ॥

जलधाराणां धारक! मेघ! अविरतं रविकरैस्तापिता धरा हर्षं धरतु यातु ॥ ४८ ॥

—॥ श्रीकृष्णं प्रति दूत्या उक्तिः ॥—

दो०—हरिता सम्प्रति तरुलता हरिता भूरपि भाति ।
हरिता तर्हिं तु तव हरे! हरिता सा यदि याति ॥४९॥

सम्प्रति वर्षासु तरुलता हरिता, जीर्णापि नूतना जाता। सद्यस्कत्वं हरितपदस्यार्थः, यथा 'घाव हरे हुए' हिन्दी। भूः हरिता हरितवर्णा। हे हरे! तव हरिता (हरित्वं, अहं हरिरस्मीति चातुर्यम्) तदैव, यदि सा हरिता, तव समागमेन प्रसन्नचित्ता याति। हरितपदस्य प्रसन्नत्वमर्थः—'चित्तहरा होगया' हिन्दी। प्रत्येकं हरितपदस्य नवीनोऽर्थश्चमत्कारः ॥ ४९ ॥

—॥ जलधरं प्रत्यभिनन्दनम् ॥—

साधुसौधपृष्ठे तव चञ्चलाविलासमेक्ष्य
कङ्कणझणत्कृतिभिर्मधुरमुपास्यसे
विलुलितकुन्तलकलापगलत्पुष्पभरं
काममुत्तरङ्गनयनाभिः परिलास्यसे।
न्यञ्चत्कञ्चुकीनामुरःसुषमामवेहि मनाक्
भूरिभाग्यशालिन् घन वाग्भिर्न समास्यसे
इन्दुवदनाभिरद्य बन्धुवर धाराधर!
विन्दुचयमाप्य रससिन्धुभिरुपास्यसे ॥ ५० ॥

हे धाराधर! सुन्दरे सौधपृष्ठे तव विद्युद्विलसितं आ-ईक्ष्य। इन्दुवदनाभिः (कर्तृपदम्) भयसंभ्रमावस्थायां कङ्कणझणत्कारद्वारा (करणे तृतीया) मधुरं यथा स्यात्तथा त्व उपास्यसे सेव्यसे। मधुरैः कङ्कणझणत्कारैः सुन्दर्यस्त्वां प्रीणयन्तीत्यर्थः। तव विलोकनाय उत्तरङ्गे (उन्मुख-

वर्षाः



इन्दुवदनाभिरद्य बन्धुवर धाराधर !
बिन्दुचयमाप्य रससिन्धुभिरुपास्यसे ॥ ”

Lakshmi Art, Bombay, 8.

कटाक्षे ) नयने यासां ताभिः । ऊर्ध्वमालोकनसमये विलुलितात्कुन्तलकलापात् गलन् पुष्पभरो यस्मिन्कर्मणि तथा परिलास्यसे प्रीणयसे, णिजन्ताल्लसतेः कर्मणि लट् । उपरिविलोकनावस्थायां, न्यञ्चन्ती नीचैः प्रसरन्ती कञ्चुकी यासां एतादृशीनामासां सुन्दरीणां किञ्चित् वक्षःशोभामवेहि परिचिनुहि, वीक्षस्वेत्यर्थः । अतएव भाग्यशालिन् घनवाग्भिर्न समासतो वर्ण्यसे । यतो हि—चन्द्रमुखीभिस्त्वत्सकाशाद्बिन्दुसमूहं प्राप्य त्वं रससमुद्रोपायनद्वारा उपास्यसे सेव्यसे । ताभिस्त्वत्सकाशात् रसस्य (जलस्य) बिन्दवः प्राप्ताः, तत्परिवर्ते तुभ्यं शृङ्गाररससिन्धवो वितीर्णा इत्याशयः । परिवृत्तिः ॥ ५० ॥






दूरीभूतवारिवाहगहनघटाभिभवा
द्यौरियमतुल्यां नवामाभासवलम्बते
हर्षभरशंसा भूरि भान्ति राजहंसा अमी
विकचसरोजे साधुसरसि करम्बिते ।
हिमभरनीकाशा विजृम्भन्ते वनीकाशा हि
जलनिधिपायिमुनिर्नूनमयं स्तम्भते
पुष्यत्पुरुपन्नगा मृगाङ्ककरशोभिनगा
पञ्चशरशासनगा शरदभिजृम्भते ॥ ५१ ॥

दूरीभूतः वारिवाहनिबिडघटानां अभिभवः ( आच्छादनम् ) यस्याः, इयं द्यौः गगनम् । अनुपमाम्, आभाम् शोभाम् । हर्षभरं शंसन्ति सूचयन्ति ते । करम्बिते शोभया व्याप्ते । हिमसमूहसदृशाः वनीनां काशाः ( काशस्तम्बाः ) विजृम्भन्ते उत्फुल्लन्ति । जलनिधिपायी मुनिः अगस्त्यः । स्तम्भते वृष्टिं रोद्धुमुदेतीत्यर्थः, अगस्त्योदयेन शरदः सूचनात् । 'ष्टभि स्कभि' प्रतिबन्धे । पुष्यन्तो वृष्टिकालोत्तरं पुष्टीभवन्तः पुरवो बहवः पन्नगा यस्यां सा । मृगाङ्ककिरणैः शोभिनो नगाः ( पर्वताः ) यस्याम् । पञ्चशरशासनं गच्छति अनुसरति सा, कामकलानुकूलेत्यर्थः शरद् वर्द्धते । त्रिष्वपि 'नगा' 'नगा' इत्यनुप्रासः प्रत्येकं पृथक्स्वरूपेण निरूढत्वात्प्रेक्षणीयः ॥ ५१ ॥

चञ्चति चतुर्दिक्षु चारु चन्द्रिकावितानमिदं
मध्ये मध्यमणिरिव विधुरुपभासते

कलुषं विहाय हारि हरितो हसन्ति मुदा
माद्यन्तीव मेदिनी समन्तात्समुपेयते ।
मञ्जुनाथ यामिनीयमाप्नुते महत्त्वगुणं
कामिनीषु कापि मोदलहरी समेधते
स्मरदिननायकस्य हरदिव दैन्यभरं
शरदि समस्तजगद्वैभवमुदीयते ॥ ५२ ॥

चन्द्रिकारूपं वितानम् । वितानस्य मध्यलम्बी मणिरिव चन्द्रो राजते । कलुषं मालिन्यं विहाय दिशः हारि (मनोहरं यथा स्यात्तथा) हसन्ति प्रसन्नसुभगा भवन्तीत्यर्थः । माद्यन्तीव नन्दन्ती इव । समुपेयते प्राप्यते । इयं यामिनी महत्त्वगुणं (दीर्घत्वं, कामकलानुकूलत्वेन गौरवं च) आप्नुते । शरदि रजनीनां दैर्घ्यात् । स्मररूपस्य दिननायकस्य (सूर्यस्य) दैन्यभरं हरदिव, उज्जृम्भणं प्रापयदिव । समस्तजगतो वैभवं (शोभा) उदीयते उदेति ॥ ईड् । स्मरदि-हरदि-शरदि-प्राससंघटना प्रेक्ष्या ॥ ५२ ॥

---

## शरदो राज्ञीरूपकम्

गगनविचुम्बिचारुचन्द्रिकावितानेलस-
च्छत्रमादधानेव हि चन्द्ररुचिरीयते
विकचसरोजमञ्जुनयना सहासमुखी
दिग्ललनापङ्क्तिः परिचारिकेव नीयते ।
मञ्जुनाथ राजत्काशचामरमनोज्ञविभा
हंसवन्दिशंसितगभीरगुणा गीयते
विद्रावितमेघमानमुद्रा महीमण्डलतः
सेयमासमुद्राच्छरद्राज्ञी समुदीयते ॥ ५३ ॥

चन्द्रिकारूपे विताने चन्द्रस्य कान्तिः छत्रं धारयन्तीव ईयते ज्ञायते। चन्द्रिकारूपं तु परितो वितानं (शामियाना) वर्तते, तन्मध्यतः पूर्णचन्द्रः श्वेतच्छत्राकारो दृश्यत इत्याशयः। विकचसरोजान्येव नयनानि यस्याः सा, दिग्रूपाणां स्त्रीणां पङ्क्तिः दासीमण्डलीव सह नीयते। राजतां काशरूपाणां चामराणां मनोज्ञा विभा यस्याः सा। हंसरूपैर्वन्दिभिः प्रख्यापिता गभीर-गुणाः (यशः) यस्याः सा, शरद् सर्वैर्गीयते प्रशस्यते। काशाश्चामराः हंसा बन्दिन इति भावः। महीमण्डलात् विद्राविता निर्यापिता मेघानां मानमुद्रा (संमानपरिस्थितिः) यया; सेयं शरद्रूपा राज्ञी समुद्रपर्यन्तं समुदीयते विजृम्भते। शरद्राज्ञ्या मेघरूपाः परिपन्थिनो भूतलात्ताडिताः, स्वयं च सर्वत्र विजृम्भितेति भावः॥ ५३॥

---

## शरदि चन्द्रोदयः



प्राचीवरवामा मन्दहसितमुपैति मुखे
साचीकृता सेयं तमोलहरी निलीयते
चटुकचकोरवधूरञ्चति मनसि मुदं
किञ्चन विरञ्चिसर्गचारवं प्रचीयते।
मञ्जुनाथ मोदते मनोभूर्मदमेदुरितो
जगति जयाज्ञा पश्य परितो विनीयते
सोयं सुविलासिनी विलासरसलीलासखो
ललितकलावहकलानिधिरुदीयते॥ ५४॥

प्राची पूर्वदिग्रूपा नाम सुन्दरी। मुखे मन्दहसितमुपैति। साचीकृता तिर्यक्कृता। निलीयते लुप्यते। चटुला चञ्चला। मुदमञ्चति मोदते। विर-ञ्चिसर्गस्य ब्रह्मणः सृष्टिप्रपञ्चस्य किञ्चित् चारवं चारुत्वं प्रतीयते, चन्द्रप्रकाशे

सृष्टेः सौन्दर्यमेवान्यादृशं भवतीत्यर्थः। मदेन मेदुरितो विजृम्भितः। जगति परितः कामस्य जयाज्ञा विनीयते प्रचार्यते। सुन्दरविलासिनीनां विलासरसलीलायाः सखा (सहायकः)। चन्द्रस्य शृङ्गारोद्दीपकत्वात्। ललितकलाः भावविलासादिकान्, आवहति कामिजने प्रचारयति, सोयं कलानिधिः, उदीयते। प्रथमे प्राची साची, द्वितीये चकारवृत्तिः, तृतीये दुरितो-परितो, चतुर्थे विला-विला-लीले-त्यादयोऽनुप्रासा. प्रेक्षणीयाः॥ ५४॥

अमृतशिशिरमस्य मेदुरमरीचिजाल-
मसमं निभालयामि भावपरिबोधेऽहम्
कुसुमशरोपि पुनरन्तिके वितन्वन्निमं
जयति जगन्ति नूनमेतदुपमोदेऽहम्।
मञ्जुनाथ नाधिकमुदीरयामि चाटुवचः
किं वा बहु वर्णयामि वैदुषीविनोदेऽहं
साम्प्रतमुदयशैलमौलिमुकुटाङ्कवहं
नयनमनोरममृगाङ्कमनुमोदेऽहम्॥ ५५॥

अमृतशिशिरम्, मेदुरं सान्द्रस्निग्धमस्य मरीचिजालं किरणवृन्दम्। भावोद्दीपने असममसाधारणं निभालयामि। पश्यामि इमं चन्द्रमन्तिके वितन्वन्स्थापयन्। जगन्ति भुवनानि जयति, एतदुपमोदे समर्थये। वैदुष्यस्य विनोदे क्रीडायाम्। उदयशैलमौलेः मुकुटचिह्नस्थापकम्, नयनयोर्मनोहरं मृगाङ्कमनुमोदे अभिनन्दामि। उदयन् चन्द्र. उदयपर्वतस्य शिरसि मुकुटायितो भवतीत्याशयः। चतुर्थे टाङ्क, गाङ्क-प्रासः प्रेक्ष्यः॥ ५५॥

---



## शरदि नायिकाः

### प्रवत्स्यत्पतिका

### सवैयाच्छन्दः

नवनीरापगा किमु ते प्रमदं
　　न वनी नवनीरजिनी तनुते ?
विकचन्ते वियोगिकृतव्यसना
　　असनाः श्वसनाः सुरभिं सुवते ।
कलितेन्दुकलाकलना रजनी
　　वत मञ्जुलनाथ मनो धुनुते
शरदेषा दशापि दिशा वृणुते
　　परदेशाऽग्रहोयमहो ननु ते !! ॥ ५६ ॥

नवनीराः ( नवजलभरिताः ) आपगाः ( नद्यः ) यस्यां सा, नवनीरजैर्युक्ता वनी, किमु ते प्रमोदं न तनुते ( कुरुते ) ? वियोगिभ्यः कृतं व्यसनं ( दुःखं ) यैस्ते, असना असनवृक्षाः विकचन्ते विकसन्ति । श्वसनाः पवनाः सुरभि घ्राणतर्पणं गन्धं उत्पादयन्ति । 'षूङ्' प्राणिगर्भविमोचने । कलिता संघटिता इन्दुकलानां कलना रचना यया सा । मनः धुनुते चलयति, धुञ् कम्पने स्वादिः । एषा शरद् दश अपि दिशाः ( भागुरेराप् ) वृणुते व्याप्नुते । अहो ननु अयं च ते परदेशगमनाय आग्रहः । अस्यामुद्दीपितमदनायां शरदि ते प्रवासो नोचित इति भावः । सख्या नायिकाया वा उक्तिः । शरदेषा० परदेशा० अहो० महो० इति चतुर्थे प्रासः प्रेक्ष्यः ॥ ५६ ॥

## वासकसज्जा

सुविहितदिव्यसुधाधौतसौधमालान्तरे
विशदविशालाऽट्टालिकासौ धरतेऽञ्चलम्
श्वेतास्तरणायां भुवि मर्मरनिकरमय्या—
मेषा शुभ्रशय्या हसतीव चन्द्रकं चलम् ।
मालतीसुगन्धात्स्मररंहो वर्धतेऽद्य भूरि
हंहो शरदेषा मनो रचयति चञ्चलं
चन्द्रकरनिचयसुचारुचन्द्रशालान्तरे
चलयति चन्द्रमुखी चञ्चलदृगञ्चलम् ॥ ५७ ॥

सुविहितया दिव्यसुधया उत्तमखटिकया ( 'सफेदी, कली' भाषा ) धौतायाः लिप्तायाः सौधमालायाः अन्तरे मध्ये । विशदा विशाला च अट्टालिका उपरिगृहं ( अटारी ) अञ्चलं धरते, शोभातिशयात् स्थातुं मनो वशयतीत्यर्थः । मर्मरपाषाणनिचयनिबद्धायाम् भुवि, शुभ्रा शय्या चलं चन्द्रकं ( इन्दुं कर्पूरं वा ) हसति, श्वेतत्वेन विडम्बयति इव । स्मररंहः स्मरवेगः । चन्द्रकरसमूहेन सुचारुणि चन्द्रशालायाः ( शिरोगृहम् 'चांदनी' हिन्दी ) अन्तरे चञ्चलं दृगञ्चलं चलयति, वारंवारं चकितचकितं प्रियस्य पन्थानं वीक्षत इत्यर्थः । प्रथमे माला शाला, मय्या शय्या, रंहो हंहो, चतुर्थे चकारवृत्तिः प्रेक्ष्या ॥ ५७ ॥

---

## शरदि वनशोभा



मेदुरमृगाङ्कमृदुमधुरमरीचिचयैः
सुषमा समस्तादिशामेषा विनिधीयते

वान्ति फुल्लसप्तच्छदमञ्जुगन्धवन्तोऽनिलाः
काशान्कम्पयन्तो विपिनेऽमी नलिनीयुते ।
मञ्जुनाथ पक्वशालिकेदारे प्रसन्नमुखी
सेयं संमुखीनैः शालिगोपी परिपीयते
विहितवियोगिजनमात्रमनःक्षोभा सेयं
स्वच्छसरोभासि-शरच्छोभा समुदीयते ॥ ५८ ॥

सान्द्रस्निग्धस्य मृगाङ्कस्य मृदुमधुरैः किरणनिकरैः । समस्तदिशां शोभा निधीयते स्थाप्यते । फुल्लस्य सप्तच्छदस्य मञ्जुगन्धयुक्ताः, काशान् कम्पयन्तः विपिने वान्ति । शरदि सप्तच्छदानां विकासात् । पक्वशालीनां केदारे क्षेत्रे । शालिरक्षिका संमुखस्थितै रसिकैः पीयते अतिशयेन दृश्यते । विहितो वियोगिजनमात्रस्य ( संपूर्णवियोगिजनस्य ) मनःक्षोभो ( विकार, ) यया, स्वच्छसरोभिर्भासिनी ( शोभा समुदीयते–क्रमशो वर्द्धते । वन्तो यन्तो मुखी मुखी गोपी रिपी क्षोभा रोभा शोभा प्रासाः प्रेक्ष्याः ॥ ५८ ॥



## शरत्



" स्वच्छसरोभासिशरच्छोभा समुदीयते ॥"



## हेमन्तः

मरुबकमञ्जुगन्धवन्तो यवगुल्मगणान्
वाताः कम्पयन्तो वान्ति नभसि करम्बिते
कुङ्कुमसुगन्धमधिसन्तोषं विलासिगणो
मालतीमरन्दगतचिन्तोऽप्यवलम्बते ।
मञ्जुनाथ निर्मितसरोजसम्पदन्तो दूर-
दर्शितदिगन्तोऽनङ्गनिगमेऽवलम्बिते
विकलवियोगिविद्धपञ्चशरदन्तो हन्त
कृतशरदन्तो हारिहेमन्तो विजृम्भते ॥ ५९ ॥

यवस्तम्बान् कम्पयन्तः मरुबक ( मरुआ ) मधुरगन्धयुक्ता वाता वान्ति। हेमन्ते मरुबकानां विकासात्, यवगुल्मानां च प्ररोहात्। करम्बिते पूर्वोक्त-गन्धेन व्याप्ते। मालत्याः ( जात्याः ) मरन्दे गता प्रसृता चिन्ता ( स्मरणं ) यस्य, मालतीसौरभासक्तोपीत्यर्थः। विलासिगणः सन्तोषेण कुङ्कुमस्य केशरस्य सुगन्धं स्वीकरोति। एष हेमन्तः, निर्मितः सरोजसम्पदः कमलश्रियः अन्तो येनेदृशः। ( हेमन्ते कमलानां विलोपात् )। अवलम्बिते स्वीकृते अनङ्गनिगमे कामागमे ( मार्गे ) दूरं यथा स्यात्तथा दर्शितो दिगन्तः ( चरमसीमा ) येनेदृशश्चास्ति। हेमन्तः कामकलानां परां काष्ठां दर्शयतीत्यर्थः। विकलवियोगिषु विद्धः पञ्चशरेण ( कामेन) दन्तो यस्मिन्, वियोगिपीडनाय संनद्धः कामस्तत्रेत्यर्थः। कृतः शरदः अन्तः ( अवसानम् ) येन, ईदृशो हारी ( मनोहरः ) हेमन्तो विजृम्भते। वन्तो यन्तो इत्यादि सर्वपादगोऽनुप्रासः विशेषतश्च शरदन्तो शरदन्तो इति प्रेक्षणीयः ॥ ५९ ॥

संततसमीरनदनीरशीततायां वर-
वसननिवीततायामिह परिमेदते
सुघटितयामिनीगभीरगुरुतायामथ
दिनलघुतायामयमधिकमुपैधते ।
मञ्जुनाथ तरुणनितम्बिनीसुपीनकुच-
सरससुखोष्णतायामतिसुखमेधते
निर्भरमनङ्गरससङ्गरसुकरतायां
सुखकरतायां सखि हेमन्तः समेधते ॥ ६० ॥

संततं समीरस्य (पवनस्य) नदनीरस्य च शीततायाम् । हेमन्ते तयोः शैत्यात् । श्रेष्ठवसनावृततायाम् । परिमेदते स्निग्धो भवति । 'निमिदा स्नेहने' । सुघटिताया यामिन्याः गभीरायां (सुनिपुणमालोचनीयायाम्) गुरुतायाम्, अयमधिकं यथा तथा कुचानां सरसायां सुखकारिण्यां च उष्णतायाम् । नितम्बिनीपदेन हेमन्ते मांसलनिबिडस्य नितम्बस्य सुखकरत्वस्वारस्यमपि न विस्मरणीयम् । अतिसुखं यथा तथा । निर्भरं यथा स्यात्तथा कामानन्दसंगरस्य (सुरतकेलिकलहस्य) सुकरतायाम्, अतएव सुखोत्पादकतायाम्–(विषये) अन्येषामृतूनामपेक्षया हेमन्तर्तुः समेधते वर्धते, उत्कर्षतीत्यर्थः । सर्वत्र वैषयिकसप्तमी । मीर नीर नङ्ग सङ्ग तायां तायां प्रासः ॥ ६० ॥

---

### हेमन्ते प्रवत्स्यत्पतिका

---

शिशिरसमीराः प्रवहन्ते वेगवाहिनोऽमी,
मोदमावहन्ते मधु मधुपा निपीय ते

कुन्दा विकचन्ते, मञ्जुमरुवका विजृम्भन्ते,
रसिका रमन्ते, हन्त नलिनी निलीयते ।
मञ्जुनाथ मानिनीमनांसि मदयन्ते काम-
बाणा निर्दयन्ते, धृतिरन्ते परिहीयते,
हेमन्ते वियोगिजनदारुणदुरन्ते, वद
दयित कथं ते गन्तुमीहितमुदीयते ॥ ६१ ॥

शीताः पवनाः । मधुपा मधु निपीय मोदन्ते । मधुपा भ्रमरा आसवसेविनश्च । मधु मकरन्दो मद्यं च । कमलिनी निलीयते म्लायते, शीते तस्यास्तथाभावात् । कामबाणा मानिनीनां मनांसि उन्मदयन्ति, अतएव बाणा निर्दया भवन्ति । अन्ते कामबाणजर्जरिता धृतिः ( धैर्यम् ) परिहीयते । कथं ईहितमिच्छा चेष्टा वा, उदीयते इति वद ! नोचितोऽस्मिन्समये विरह इति भावः ॥ ६१ ॥

## हेमन्ते विरही

वीथिषु गतागतैः, सुहृज्जनस्य संलपितै-
रेवं बत कष्टाद्दिनं कार्यशतैः पूर्यते
शीतलसमीरपरिपूरितदिगन्ता सेय-
मधिकदुरन्ता परं रजनी गुरूयते ।
मञ्जुनाथ नानाविधचिन्तापरिवर्तशतैः
सन्तापाकुलोपि बत शीतात्परिभूयते
घनशिशिरेषु दिवसेषु कथं क्षेमं तस्य
हन्त यो हि हेमन्तस्य विरही विदूयते ॥ ६२ ॥

संलपितैर्वार्तालापैः । कार्यशतैः एवंविधैरेव बहुभिः कार्यैः पूर्यते समाप्यते । शीतलवायुभिः परिपूरितो दिगन्तो यस्यां सा, रात्रिर्गुरूयते यादृशी

सर्वेषां कृते गुर्वी भवति, तदपेक्षयाप्यधिकगुर्वीवाचरति अतिदीर्घा भवतीति भावः। कर्तुः क्यङ्ङित्याचारे क्यङ्। क्यङ्मानिनोश्चेति पुंवत्। चिन्तानां परिवर्तशतैः। संतापेन (मानसिकतापेन) आकुलोपि शीतात्परिभूयते आक्रान्तो भवति। तापाकुलस्यापि शीतेन दुःखमिति विरोधः। घनं शिशिरं (शीतम्) येषु। क्षेमं कल्याणम्। विदूयते क्लिश्यति। 'दूङ् परितापे' ॥६२॥

---

## पौषस्य तीव्रता

तलिनतिरस्करिणीमातन्याथ तोरणेषु
सेयं तनुतर्षिवाततिग्मता विकीर्यते
तैलं परिमर्द्य; तूलं तनुवसनेषु कृत्वा
ताम्बूलं प्रयुज्य, तपनीयं परिधीयते।
तरणितनूनपात्प्रयोगैस्तप्ततोययोगैः
तरुणीसुतल्पतूलिकोपभोगैरीर्यते
तुमुलतकारैस्तनुतन्द्रातिरस्कारैरहो
ततचिततासौ तैषतीव्रताद्य तीर्यते ॥ ६३ ॥

तलिनामुत्तमां तिरस्करिणीम् (जवनिका 'परदा')। 'तलिनं विरले स्तोके' अमरः। आतन्य आस्तीर्य। तनु तर्षिणो (शरीरक्लेशकस्य) वातस्य तिग्मता असह्यता। विकीर्यते क्षिप्यते दूरीक्रियते इति यावत्। तनुवसनेषु शरीरवस्त्रेषु अङ्गरक्षकादिषु तूलं कृत्वा। तपनीयं परिधीयते सुवर्णं धार्यते तस्य शीते सुखदत्वात्। तरणेः सूर्यस्य तनूनपातः वह्नेश्च प्रयोगैः सेवनैः तप्ततोयस्योपयोगैः। तरुण्याः, सुन्दरस्य (बहुतरनवतूलेन उन्नतमृदुलस्य) तल्पस्य शयनीयस्य, तूलिकानां तूलभृतास्तरणप्रावरणादीनां चोपभोगैः ईर्यते शीतं क्षिप्यते। तनुतन्द्रातिरस्कारैः शरीरग्लानिदूरकारकैः (तिरस्कृ-

अण्) तुमुलतकारैः अतिमिलितैस्तकारैः । ततवितता अति विस्तृता (महती), तैपस्य पौषस्य तीव्रता तीर्यते याप्यते । तकारस्य वृत्तौ—तूलं-चूलं; योगैः भोगैः, कारैः कारैः प्रासः ॥ ६३ ॥

---

## हेमन्ते सुखसज्जा

द्योतन्ते समन्ताच्चित्रशोभामनुयाता गृहा
वातायनवर्गो भूरिकालं विनिमील्यते
चित्रितमहार्हपटतूलिकासनाथा वर-
शय्या श्रमोन्मूलिका समोदमनुशील्यते ।
मञ्जुनाथ चन्द्रकरजालाध्युपितापि नून-
मेषा चन्द्रशाला बहुकालात्परिकील्यते
हेमन्ते समन्तात्सुखसाधनविशाला वर-
वालारुचिचारुचित्रशाला परिशील्यते ॥ ६४ ॥

चित्रणशोभां (सौष्ठवम्) अनुयाताः गृहाः (हर्म्याणि) समन्ताद्द्योतन्ते । वातायनवर्गो गवाक्षसमूहः । भूरिकालं बहिर्दर्शनादिकालं विहाय सर्वकालम् । चित्रितः बहुमूल्यश्च पटो यस्यास्तया तूलिकया (आस्तरणेन, प्रावरणेन च) सनाथा । अनुशील्यते उपयोगे आनीयते । चन्द्रकिरणनिकरैरध्युपिता मण्डितापि । चन्द्रशाला उन्मुक्तं शिरोगृहम् (चांदनी) । बहुकालात् (शुक्लकार्तिकादेव) निबध्यते । सुखसाधनैर्विशाला (पूर्णा) । वरवाला (सुन्दरी) रुचिभिः चार्वी चित्रशाला (चित्रैर्मनोहरं केलिभवनम्) । परिशील्यते सेव्यते । याता वाता, तूलिका मूलिका, जाला शालादयः प्रासाः ॥ ६४ ॥

---

## हेमन्ते रात्रयः

सायमवसाने केलिमन्दिरमुपागतानां
प्रेमसमालापैर्याति यामः सुखमासिनाम्
शयनमुदेति मध्ययामसमारम्भ एव
भुजपरिरम्भभरैर्मनसि विकासिनाम् ।
मञ्जुनाथ यामिनीचरमयामजागरिणा-
मेति समयोसौ कामकेलिसमुल्लासिनां
हेमन्तान्तराले काममेधन्तां त्रियामा इमाः
सपदि समेधन्तां सुखानि सुविलासिनाम् ॥६५॥

सायंकालस्यावसाने (अष्टवादनात्पूर्वम्), केलिभवनागमनोत्तरं सुखं यथास्यात्तथा आसिनां स्थितानाम् (आस्तेर्णिनिः) नायकनायिकानां प्रेमालापैर्यामः प्रहरो याति, (नववादनं भवति)। मध्ययामस्य समारम्भे (एकादशवादनोत्तरम्)। मनसि मोदमानानां (नायकनायिकानाम्) शयनं भवति। चरमयामे (पञ्चवादने) जागरिणां जागृतानाम्। जागर्तेर्णिनिः 'जाग्रोऽविचिण्णि' ति गुणश्च। अतएव कामकेल्या समुल्लासिनां (प्रसीदतां) समयो गच्छति। इमा रात्रयः कामं एधन्तां वर्धन्ताम्। यदि रात्रयो वर्द्धन्ते, सपदि (तर्हि) सुदक्षिणानां विलासिनां सुखान्यपि समेधन्ताम्। अन्येषामृतूनामपेक्षया वर्धन्ताम्। अन्यत्र एतावत्कालमेतादृशसुखस्यानुपलम्भात्। कामचारानुज्ञायां (आमन्त्रणे) लोट्। हेमन्तां एधन्तामादयः प्रासाः ॥ ६५ ॥

भवनविलम्बिनवजवनिकाभिरारुद्धा
वातायनवर्गे वायुलहरी विकम्पिनी

हेमन्तः



" नूनमविरामानन्दसन्दोहैः सुपुण्यकृता-
मविदितयामा याति हैमननिशीथिनी ॥ "

Lakshmi Art, Bombay, 8.

कोमलबहुलतूलमय्यामिह संमूर्च्छति
शय्यायाममन्दगन्धलहरी विमोदिनी ।
अम्बरसुगन्धमयचीनांशुकयुक्ता सेय-
मुरसि निलीना भाति तरुणनितम्बिनी
नूनमविरामानन्दसन्दोहैः सुपुण्यकृता-
मविदितयामा याति हैमननिशीथिनी ॥ ६६ ॥

भवनविलम्बिनीभिः नवजवनिकाभिः, (परदा), विकम्पिनी लोकान् कम्पयन्ती, णिजन्ताण्णिनिः । आरुद्धा समन्ततो निवारिता । तूलमय्यां शय्यायाम् । विमोदिनी मनःप्रसादिनी निर्भरगन्धलहरी संमूर्च्छति व्याप्नोति । 'मुर्च्छा मोहसमुच्छ्राययोः' । अम्बरं सामुद्रिकसुगन्धपदार्थः, तस्य सुन्दरगन्धयुक्तेन चीनांशुकेन शरीरसुखावहेन सुमसृणवस्त्रेण युक्ता । नितम्बिनीपदस्य स्वारस्यं न विस्मरणीयम् । 'निलीना' पदेन गाढपरिरम्भो ध्वन्यते । अविरामैः अविश्रान्तैः आनन्दसमूहैः । गच्छन्तो न विदिता यामाः प्रहरा यस्याः सा, हेमन्तसम्बन्धिनी रात्रिः अतिशयितपुण्यकृतां व्यत्येति । हेमन्तस्येयं हैमनी । 'सर्वत्राण् च तलोपश्च' । मयया-शयया, चीना लीना, रामा-यामा, प्रासाः ॥ ६६ ॥





## शिशिरः



महितमहार्हसुखसज्जा मञ्जुमन्दिरेषु
तूलगर्भतलिनतिरस्करिणी लम्बते
कुहचन कुङ्कुमसुगन्ध उपरुन्धे मनो
मृगमदगन्धेनापि कुत्रचिद्विनन्द्यते ।
मञ्जुनाथ जातरूपपद्मरागरत्नचयै-
र्जातरूपयोगा वधूर्भोगानवलम्बते
जृम्भमाणमीनकेतुविभ्रमरसानुगमा
विशदतमासौ शीतसुषमा विजृम्भते ॥ ६७ ॥

महितया प्रशस्तया बहुमूल्यया, सुखसामग्र्या मञ्जुषु मन्दिरेषु । तूलगर्भा तलिना महामूल्या, तिरस्कारिणी जवनिका । केशरसुगन्धः, मानसं उपरुन्धे वशयति । रुधधातोरात्मनेपदे लट् । कुत्रचित् (द्वितीये स्थले) कस्तूरीगन्धेन (करणे तृतीया) विनन्द्यते आनन्दः प्राप्यते कर्मणि लट् । जातरूपं सुवर्णम्, पद्मरागो माणिक्यम्, अन्ये च शीतसुखदाः रत्नसमूहास्तैः, जातः रूपयोगः (सौन्दर्यवृद्धिः) यस्याः सा । जृम्भमाणो वृद्धिं गतः, मीनकेतुविलासानां रसानुगमः (आनन्दानुभवः) यत्र सा, असौ विशदतमा अतिस्पष्टा प्रसिद्धेति यावत् । शिशिरर्तोः सुषमा (परमा शोभा) विजृम्भते उत्कृष्यति ॥ ६७ ॥

निर्धुनोति नीहारं नयन्निव नभस्वानयं
निलये निविश्य वातायनमवमील्यताम्
कूर्पासकसंकुलेषु कामकलनाऽऽकुलेषु
कामिनीकुलेषु कामकेलिरुपकील्यताम् ।
मञ्जुनाथ मञ्जुलमहार्हमृगनाभियुतं
मुकुरमनोज्ञमञ्जुमन्दिरमुन्मील्यतां
शर्वरीषु शीधुषु शशाङ्कमुखीशृङ्गारेषु
शुभ्रशयनेषु शीतशोभा परिशील्यताम् ॥ ६८ ॥

नीहारं नयन्निव हिमं वर्षन्निव । नभस्वान् पवनः निर्धुनोति कम्पयति । निलये भवने । कूर्पासकसंकुलेषु शिशिरोचितचोलकावृतेषु । 'चोलः कूर्पासकोऽस्त्रियाम्' अमरः । कामकलाव्यग्रेषु, सुन्दरीवृन्देषु, उपकील्यतां अतिस्थैर्येण सेव्यताम् । मुकुरैर्दर्पणैर्मनोज्ञं मण्डितम्, सुन्दरं मन्दिरमुन्मील्यताम् उद्घाट्यताम् । शीधुषु आसवेषु । शशाङ्कमुखीषु, नानाविधेषु वस्त्रादिषु शृङ्गारेषु च शशाङ्कमुख्याः विविधेषु शृङ्गारेषु वा । श्वेतप्रच्छद-पट्युतेषु तूलास्तरणेषु । शिशिर एव तस्याऽसाधारणसुखदत्वात् । परिशील्यताम् अनुभूयताम् ॥ ६८ ॥

## शिशिरस्य नरेशरूपकम्

मेचकधवलतैषतुरगमधिष्ठितोयं
सार्द्धं नह्यमाना सरसेना संनिवेशिता
कुक्षिंभरकुज्झटिका ककुभो विलोपयते
मन्ये रेणुरूपितो न दीव्यति दिनेशिता ।

मञ्जुनाथ नानारणसेनाजयशालिनोपि
वेपन्ते सुवीराः, जाताऽऽत्मसुखगवेषिता
शीतलसमीरवीरसेनापतिसंमिलितो
जगति विजृम्भितोऽद्य शिशिरनरेशिता ॥ ६९ ॥

मेचकधवलः कृष्णशुक्लपक्षात्मको यस्तैषः पौषः स एव तुरगस्तमधिष्ठितः, अन्योपि राजा शुक्लकृष्णोभयवर्णं तुरगमारूढो भवति । नह्यमाना सज्जा । 'णह बन्धने' । सार्द्ध संनिवेशिता, सह नीतेत्यर्थः। कुक्षिम्भरा सर्वत्र व्याप्ता, कुज्झटिका ('कुहासा') दिश आच्छादयति । तत्रोत्प्रेक्षते—रेणुरूषितः अभियानोत्थितधूलिभिः स्थगितो दिननायको न दीप्यते । नरेशस्य यात्रायां धूलिभिर्यथा रविरप्याच्छादितो भवति, तथा कुज्झटिकया सूर्यस्थगनमिति भावः । नरेन्द्रयात्रायां बहुसेनाविजयिनोपि वीरा भयात्कम्पन्ते, अत्रापि वीरेभ्योऽपि वीरा महाशैत्यात्कम्पन्ते । प्रचण्डनरपालसकाशाद्भयमाशङ्क्य, स्वपररक्षां विहाय, आत्मनो हितं (स्वरक्षणादिकम्) गवेषयन्ति, तेषां-भावः तत्ता । अत्रापि आत्मसुखगवेषिता ('आतमसुख' तूलभृतसुपरि प्रावारकमङ्गरक्षकं प्रसिद्धम्) जाता । शीतसमीर एव वीरसेनापतिस्तेन संमिलितः ॥ ६९ ॥

प्राकृतस्थलानि परिमुच्योन्मुक्तमारुतानि
सर्वैरपि भूरिभवनान्तर्विनिलीयते
वसननिवीतैर्मनुजैरिव महीजैरपि
पिण्डीकृतभावेनैव भूयः परिस्थीयते
मञ्जुनाथ किं बहुना, भूमाऽसौ न विद्यते ? यद्
धूमायितभावो बहिर्वीराणां विनीयते
सर्वेषामृतूनामद्य विषमहिमागमेन
शिशिरनरेश ! तव महिमा महीयते ॥ ७० ॥

उन्मुक्तः ( अवारितः ) वायुर्येषु तानि । प्राकृतस्थलानि उद्यानतडागादीनि, परिमुच्य विहाय । प्रचण्डं राजानमागतं वीक्ष्य यथा लोका निलीयन्ते, तथेहापि सर्वे गृहे गुप्ता भवन्ति । शीतोचितवस्त्रावेष्टितैर्नरैरिव, महीजैर्वृक्षैरपि पिण्डीकृतभावेनैव ( आकुञ्चितसर्वावयवत्वेन ) भूयः अधिकं स्थीयते । शीते वृक्षाणां व्याकोचात् । भूमा महत्त्वम् । किं न विद्यते, अपि तु विद्यत एव । काकुः । यद् वीराणां धूमायितभावः ( पराक्रमगर्व. ) बहिर्निस्सार्यते । शीतेऽपि, बलशालिनां मुखाद्धूमो बहिर्निस्सरति । (गर्वस्य धूमत्वेनोत्प्रेक्षणं भाषायामपि प्रसिद्धं 'कुछ धूआं हो तो निकाल दूं') । सर्वेषां ऋतूनां मध्ये ( निर्धारणे ) । विषमहिमागमतः तव महिमा महीयते श्लाघ्यत इत्यर्थः । ऋतूनां मध्ये तवैव माहात्म्यमधिकमित्यर्थः । अथ वा सर्वेषां ऋतूनामद्य त्वदग्रे हिमागमो जातः ( 'पाला मार गया' ) पराजिताः सर्वे इत्यर्थः । तेन तव महिमा श्लाघ्यते । महिमा-महिमा-प्रासाः ॥ ७० ॥

---

## शीताधिक्यम्



हिमकणवाहा वेगवन्तो गन्धवाहा वान्ति,
    व्याप्ता वारिवाहावलिरातपनिरासिनी
वसननिवीता परं कम्पते विनीता प्रजा
    हिमभयभीता भूरि भवननिवासिनी ।
मञ्जुनाथ सन्दीपितवह्निसन्निधाने क्षणं
    मन्दीभूतजाड्याऽपैति विकृतिरुदासिनी
स्यात्किं शीतबाधा लोकसाधारणसह्या, ? न चे-
    त्संगमसुसाधा बलमाधास्यद्विलासिनी ॥ ७१ ॥

हिमकणवाहिनः गन्धवाहाः (वायवः 'रूढियोगापहारिणी')। आतपतिरोधायिनी वारिवाहावलिः मेघमाला। भूरि यथा स्यात्तथा हिमभयभीता। विनीता दीना। मन्दीभूतं जाड्यं (अज्ञानां जडता) यस्याः सा। उदासयति तटस्थान्करोति तीव्रेत्यर्थः। णिजन्तादास्तेर्णिनिः। विकृतिः शीतबाधा क्षणमपैति। संगमे सुसाधा सुलभा। विलासिनी यदि बलं न आधास्यात उष्णतासंपादनेन बलं न अस्थापयिष्यत् तर्हि किं शीतबाधा साधारणलोकसह्या स्यात्, अपि तु नेत्यर्थः। 'वोताप्यो'रिति लृङ्विकल्पाल्लिङ्। किं वा 'आदध्यात्' इति लिङ्स्थाने क्रियातिपत्तिविवक्षया लृङ्। सर्वथा विवक्षामाश्रित्य लिङ्लृङौ व्यवस्थापनीयाविति तत्त्वरसिकेष्वलमुक्त्वा ॥ ७१ ॥

भूमिर्भाति भूरितरशीता, व्योमखण्डमिदं
शीतातिशयेन हिमवर्षामवलम्बते
वान्ति कम्पयन्तो भूरिशीता मरुतोऽमी भृशं
शीताधिकवृद्ध्या वारि दंष्टुमवष्टम्भते।
कुज्झटिकाव्याजाद्दिक्षु शीतस्यैव भूतिर्भाति
किं बहुना वह्नावपि शैत्यं जातु जम्भते
शिशिरवशेन यान्ति परिभवमन्ये गुणा
मन्ये शीतमात्रस्यैकराज्यं परिजृम्भते ॥ ७२ ॥

लोकान् कम्पयन्तः दंष्टुमवष्टम्भते दंशने प्रतिबध्नातीत्यर्थः ('पानी काटने दौडता है' एव भावः।) कुज्झटिकायाः (कुहासा—कोहरा) व्याजात्। भूतिर्वैभवम्। शैत्यं जम्भते सातिशयमुदेति, वह्निरपि तथोष्णो न प्रतीयते। अतएव हस्तेन तं गृह्णन्तीति भावः। अन्ये तापगन्धादयो गुणाः परिभवं मन्दतां यान्ति। परिजृम्भते उत्कर्षं लभते ॥ ७२ ॥

---

## —❀ शिशिरे वियोगी ❀—

वारं वारमुल्लोलति हृदयविकम्पकरी
शीतानिललहरी हि तुहिनपुरस्सरी
उष्णोच्छ्वासकोष्णीकृततूलिकातलेपि नैति
निद्रा बत विद्राणैव संगमसुखाकरी ।
मञ्जुनाथ चञ्चति न चिन्ताततिरन्तरतो
दृश्यते समन्ततोपि सैव भावनाचरी
पार्श्वपरिवर्तननिवर्तनविवर्तशतै-
र्व्ययति वियोगिनोऽद्य शिशिरविभावरी ॥७३॥

हृदयकम्पकरीति, 'कृञो हेत्वि'ति टः । तुहिनस्य (हिमस्य) पुरस्सरी अग्रतो गामिनी । हिमसहकृतेत्यर्थः । 'पुरोग्रतोग्रेषु सर्ते'रिति टः । शीतपवनलहरी मुहुर्मुहुः उल्लोलति उद्वेलं चलति । चञ्चलीभावार्थको लोलधातुर्वैयाकरणैर्भ्वादेराकृतिगणत्वादुन्नेयः । लोडृ उन्मादे, अत्रैव वा डलयोरेकत्वस्मरणात्संतोष्टव्यम् । उल्लोला इवाचरतीति आचारक्रियया वा कार्यं निर्वोढव्यम् । उष्णनिःश्वासेन ईषदुष्णीकृतायाः तूलिकायाः ( तूलभृतं प्रावरणम् 'रजाई' ) तलेपि निद्रा न एति । स्वप्नद्वारकसंगमेन, सुखाकरी (अनुकूलकरणेनानन्दकरी) 'सुखप्रियादानुलोम्ये' डाच् । निद्रा विद्राणैव, निन्दितविधया पलायितेव । 'द्रा कुत्सायां गतौ' । 'संयोगादेरात' इति निष्ठानत्वम् । अन्तरतो हृदयात् । न चञ्चति ( न अपसरति ) । भावनायां रात्रिदिनविचारे, चरति हृदये भ्राम्यति सा । चरेष्टः । सा नायिकैव समन्ततो दृश्यते । पार्श्वस्य परिवर्तनम् ( 'करवट' ग्रहणम् ) पुनस्तस्य निवर्तनम् ( त्यागः ), एवंविधैर्विवर्तशतैः आवृत्तिशतैः । व्ययति व्यत्येति ॥ ७३ ॥

---

## शीतं प्रत्युपालम्भः

सहजसुगन्धगुणसिन्धुं पद्ममर्दयसे
सौरभसुबन्धुं किञ्च पाटलां दलयसे
शीतलसमीरैर्मञ्जुमल्लीमवमर्दयसे
यूथिकामतल्लीमपि निःसहं व्यथयसे ।
मञ्जुनाथ सेयं गुणवैरिताऽपि मर्षिता ते
क्षुद्रतामथापि बत दारुण ! कलयसे
हंहो दुर्विनीत कथमेतत्सहनीयं शीत !
यत्त्वं वीतगन्धानपि कुन्दान् कन्दलयसे ॥७४॥

हे शीत ! त्वं, सहजस्य सुगन्धगुणस्य सिन्धुम् (आकरम्) कमलम्, अर्दयसे मथ्नासि। शीते कमलविलोपात्। 'वा पुंसि पद्म'मिति यदि पद्मस्य पुंस्त्वं कदाचिदाम्नातमस्ति, तर्हि तस्यैवंविधोऽवकाशः (सिन्धुं बन्धुम् इत्यनुप्रासपूरकः) अन्यत्र कुत्र स्यादित्याग्रहतः प्रायोजि। सौरभस्य सुबन्धुं सुहृदम्। पाटलां दक्षिणदिशि प्रसिद्धं काचस्थालीपुष्पम् (पामरेषु पाटनशब्देन प्रसिद्धं 'गुलाब' पुष्पं वा)। मल्ली मल्लिका ('वेला'), नामैव तस्याः 'शीतभीरु'-रिति। यूथिकामतल्लीम्-प्रशस्तां यूथीम्। तव गुणवैरिताऽपि मर्षिता, गुणविद्वेषोऽपि सोढः। क्षुद्रताम् तुच्छताम्। वीतगन्धान्। कन्दलयसे विकासयसि। अविवेकिनोऽद्भुतबुद्धेः स्वामिनोऽन्योक्तिविधया ध्वन्यमानो वृत्तान्तस्तु मार्मिकेषु पुनरुक्तिप्राय इत्यलम्। सर्वेपि प्रासाः अनुपमन्यासाः ॥ ७४ ॥

## शीतस्याभिनन्दनम्

निभृतनिकुञ्जकेलिसदने समिद्धसुखं
स्थीयते निबद्धरसालापमतिनिर्भरे
केसरसुगन्धमतिमादकममन्दमाप्य
शयनमुदेति मृदुतूलसुखसंस्तरे।
नूनमृतुराजमपि निर्भरमतीतमहो
प्रियवर शीत! गुणमेतं समुदाहरे
पीवरमुरोजयुगमुरसि निधाय मम
सुन्दरसरोजमुखी शेते भुजपञ्जरे॥ ७५॥

अतिनिर्भरे विलासवस्तुभिः पूर्णे, निभृतनिकुञ्जस्य केलिसदने। समिद्ध-सुखम् (उदीयमानानि सुखानि यस्मिन्कर्मणि यथा तथा) निबद्धो रसपूर्ण-आलापो यस्मिन्कर्मणि यथा स्यात्तथा च स्थीयते। अन्येषु ऋतुषु रसालापो-चिता ईदृशी निभृतपरिस्थितिर्न भवतीति भाव.। काश्मीरजस्य अतिमादकं गन्धम्, अमन्दं यथा तथा आ—आप्य! मृदुले तूलस्य सुखकारके आस्तरणे शयनं भवति। अन्येष्वृतुषु बहुलतूलं तादृक्प्रियाकरं न भवति। ऋतूनां राजानं वसन्तमपि निर्भरमत्यन्तं अतीतम् उल्लंघितवन्तम्, वसन्ततोऽप्यति-शयितम्। समुदाहरे उदाहरणरूपेण वर्णयामि। चतुर्थे—पीवर सुन्दर उरोज सरोज, आसाः॥ ७५॥





# नवरसवीथी

## मङ्गलसोरठा छन्दः



अकलितकलनाकारु, कुण्डलिमण्डनमण्डितम् ।
दलदिन्दीवरचारु, चरणयुगं सुखयतु सदा ॥ १ ॥

अन्यैर्देवैः अकलितायाः घटनायाः कारु, शिल्पि । अन्यकविलोकैरक्षुण्णाया रचनायाः परिचयोपि तच्चरणयुगस्यैवानुभाव इति अग्रेतनीं रचनामारभ्यमाणामप्यनेन ध्वनयति ॥ १ ॥

---

## शृङ्गारः



### सोरठाछन्दः

रतिस्थायिकोऽगायि, नायिकादिजनितः शुचिः ।
दृक्क्षेपाद्यनुयायि,-चिन्तादिकसंचारिकः ॥ २ ॥

रतिः स्थायिभावो यत्र, नायिका (नायक)दिभिः (विभावैः) आलम्बित., नायिकाद्यालम्बनक इत्यर्थः । दृक्क्षेपादयः (कटाक्षादयः) अनुभावा यत्र ईदृशश्च, चिन्तादिकः संचारी यत्रैवंविधश्चेति कर्मधारयः । शुचिः शृङ्गारः अगायि प्रोक्तः ॥ २ ॥

## पूर्वानुरागः



" अधुनाऽनधीननवनायके निलीनमना
दूयते नवीनमीननयना निरन्तरम् ॥ "

Lakshmi Art, Bombay, 8

## तत्र पूर्वं नायिकाः

## तत्रापि पूर्वं पूर्वानुरागे–

### मुग्धा

नयनविलोक एव हृदयनिलीनं प्रियं
जानती न मौग्ध्याद् हृदयं च कुचबन्धुरम्
ताम्यति नवीनरोमरेखया सहैव जात-
मेषा विदती न मानसस्य महदन्तरम् ।
सपदि सुसज्जसुखसदनेऽपि मञ्चगता
मानसिकभावैः श्रिता पञ्चशरपञ्जरं
अधुनाऽनधीननवनायके निलीनमना
दूयते नवीनमीननयना निरन्तरम् ॥ २ ॥

नयनाभ्यां विलोके दर्शनमात्रे एव हृदये निलीनं प्रियतमम्, नवोद्गताभ्यां कुचाभ्यां वन्धुरं नतोन्नतं स्वस्य हृदयं च मुग्धतावशात् न जानती । तथा नवीनोद्भिन्नया रोमावल्या सहैव उत्पन्नम्, मानसस्य महदन्तरं न विदती, एषा ताम्यति क्लिश्यति । पूर्वं पुत्तलिकाक्रीडादिषु विपक्तमासीत्, इदानीं तु प्रियविषयकवार्तासु मनो रमते इति । महदन्तरं रोमावल्युद्भेदेन [ यौवनोद्गमेन ] सहैवाऽजायतेति भाव. । सुसज्जे आस्तरणपुष्पाधारादिमण्डिते सुखसदने मञ्चगताऽपि । मनोविचारैः कामबाणपञ्जरे स्थिता । प्रियतमचिन्तया स्मरेण पीडितेति भावः । अनधीने पित्रादीनां पराधीने, नवे नायके आसक्तमनाः । नवीना मीननयना ॥ २ ॥

## स्वाधीनपतिका

मामेवाऽनुमोदयन् करोति वेषभूषादिकं
मामेवाऽनुमान्य वस्तु किञ्चिदुपनीयते
मामिह विहाय न प्रयाति बहुकालं बहि-
र्मामेवावलम्ब्य तेन दिनमतिनीयते ।
मञ्जुनाथ तिर्यगवलोकनतोऽप्युद्विजते
किञ्चिद्भ्रूविभङ्गतोऽपि काममनुनीयते
प्रेयसोभिमाने सखि ! कथमु वसन्ति स्त्रियो ?
हन्त मम मानेऽप्यवकाशो नाभ्युदीयते ॥ ४ ॥

अनुमोदयन् अनुसरन् । मन्मनोऽनुसारमेव आत्मनोपि शृङ्गारादिकं रचयतीति भावः । मामेव अनुमान्य मामेव अनुमतां कृत्वा। किञ्चिद्वस्तु आनीयते । अतिनीयते याप्यते । भ्रूवक्रीकरणेपि तेन कामं यथेच्छम् । अनुनीयते अनुनयः क्रियते, भावे प्रत्ययः । प्रेयसा कृतेऽभिमाने, प्रेयसि रुष्टे इत्यर्थः । प्रेयान् मत्तो रुष्टो भवेदिति तु का कथा, परं ममापि मानस्यावकाशो न अभ्युदीयते आगच्छति । तथाऽयं ममानुवर्तते, यथा मम अन्यमानवतीदर्शनेन मानेच्छायां सत्यामप्यवकाशो न प्राप्नोतीति भावः ॥ ४ ॥

## वासकसज्जा

विरचितकुसुमहारसौरभसुभगतमे
ताम्बूलोपहारमसौ सदने समीक्षते
वातायनसन्निधौ च तल्पं कल्पयित्वा स्वयं
निह्नवमनल्पं सखीलोकात्सुपरीक्षते ।

## वासकसज्जा



" अवसितमंडनापि रतिसदनाभिमुखी
काचिच्चारुचन्द्रमुखी मुकुरमवेक्षते ॥ "

Lakshmi Art, Bombay, 8

मञ्जुनाथ सामोदं विरच्य वरवेषमियं
द्वारदेशमानर्तितनयनमुदीक्षते
अवसितमण्डनापि रतिसदनाभिमुखी
काचिच्चारुचन्द्रमुखी मुकुरमवेक्षते ॥ ५ ॥

विरचितानां कुसुमहाराणां सौरभेण सुभगतमे अतिमनोहरे । दयिताय देयं ताम्बूलोपायनं समीक्षते पश्यति । स्वयं तल्पं कल्पयित्वेत्यनेन परिजनादपि गोपनं ध्वनितम् । सखीजनात् अनल्पं निह्नवं अतिगुप्ततां सुपरीक्षते । सख्यः पश्यन्ति तु नेति तासां सकाशात्सर्वं गोपायतीत्यर्थः, पश्चान्मामेतदर्थं परिहसेयुस्ता इति भावः । वरम् उत्कृष्टतमं वेषम् । विरच्य कृत्वा । णिचः पाक्षिकतया न अयू । आनर्तितनयनं यथा तथा प्रियप्रतीक्षायां द्वारदेशमुदीक्षते । अवसितमण्डना समापितशृङ्गारा अत एव केलिभवनाभिमुखी अपि काचिच्चन्द्रमुखी दर्पणमवेक्षते । शृङ्गारे कापि त्रुटिस्तु नास्ति किंवा, अद्य कथं वा प्रियमनोमोहकं मे शृङ्गारमस्तीति अनावश्यकत्वेपि सौन्दर्यगर्वाद्दर्पणं वीक्षत इति भावः । मध्या च सेयम् ॥ ५ ॥

---

## अभिसारिका

---

रूपकघनाक्षरीच्छन्दः

दूरमवमोचितमनोज्ञमणिमञ्जीरक-
मथ परिमोचितमुखरमेखलं प्रयाति
चकितं चतुर्दिक् परिपश्यन्ती विनम्रमुखं
साध्वसमयन्ती जने दृष्टिपथमुपयाति ।

मञ्जुनाथ संकोचं वहन्ती पदशब्देनापि
प्रीतिमियमङ्गीकृत्य साहसे पदं दधाति
मेचकनिचोलगुरुगोपितकपोलयुगा
सेयं नीलचोलवृता तन्वङ्गी तिरोदधाति ॥ ६ ॥

दूरम् अवमोचितौ मनोज्ञौ मणिमञ्जीरकौ (नूपुरौ) यस्मिन् कर्मणि यथा तथा, परिमोचिता मुखरा (किङ्किणीशब्दकारिणी) मेखला यस्मिन्कर्मणि तथा च। प्रयाति अभिसरति। विनम्रं मुखं यस्मिन्कर्मणि तथा। जने दृष्टिपथम् आगच्छत्येव साध्वसम् अयन्ती, भयं प्राप्नुवती सती। 'इट किट कटी' इति प्रश्लिष्टात् शता। निजपदशब्देनापि संकोचं वहन्ती, सेयं भीरुः, प्रेमपथमङ्गीकृत्य, घनतमसि अभिसरणरूपे साहसे पदं स्थापयति। मेचकनिचोले श्यामे प्रच्छदपटे, अतिगोपितं कपोलयुगं यया। कपोलयोश्चन्द्रवदवदातत्वात् स्पष्टता भवेदिति नायिकायाः सौन्दर्यातिशयो ध्वन्यते। नीलचोलकावृता तिरोदधाति निलीयते। चतुर्थे चोल पोल चोल प्रासाः प्रेक्ष्याः॥ ६ ॥

---

## विरहोत्कण्ठिता

प्रायः पूर्वयाम एव रात्रेरयमेति गृहा-
नद्य दुःसहाऽसावर्द्धरजनी व्यतीयते
म्लानः पुष्पहार एष, भूषा भूरिभार इयं
नानाविधचिन्ता मे समन्तादुपचीयते।
मञ्जुनाथ कञ्जदृशा दत्तदीर्घनिश्वसितं
दूयमानयैवं सखी दैन्यादभिधीयते
दृष्टिं विनिधाय मार्गवातायने निम्नमुखं
नयने प्रमृज्य हन्त शयने निलीयते ॥ ७ ॥

कलहान्तरिता



" एवं द्रागमन्दीकृततापं परितप्यतेऽद्य
संदीपितकामवेगमिन्दीवरनेत्रया ॥ "

Lakshmi Art, Bombay, 8.

दूयमानया कञ्जदृशा, दत्तो दीर्घो निःश्वासो यस्मिन्कर्मण्येवम्। सहचरी दैन्याद् एवं (वक्ष्यमाणप्रकारेण) उच्यते—"रात्रेः प्रथमप्रहरे एव अयं (नायकः) गृहानेति। दुःसहा, असौ। नानाविधा चिन्ता किं सपत्न्या विलम्बितः, उत किंचिदनिष्टं जातमित्यादि।" सखीसंलापोत्तरम्–निम्नमुखं यथा स्यात्तथा मार्गवातायने प्रियप्रतीक्षया दृष्टिं स्थापयित्वा, ततोपि सुखमलभमाना, साश्रुणी नयने प्रमृज्य, शय्यायां निलीयते, तन्वङ्गीत्वादास्तरणे लीनेव भवति। 'निलीयते' पदेन अवमूर्द्धशय्याया आस्तरणे सातिशयनिलयनेन विमनस्कत्वाधिक्यं ध्वन्यते ॥ ७ ॥

---

## कलहान्तरिता

केलिगृहमध्यं मन्दमन्दमुपयातोऽप्यसौ
दृष्टिविनिपाततोऽपि नाभिनन्दितो मया
भृशमपराधलोकलज्जाऽऽनतनयनमयं
बाढमनुनयन्नपि नेक्षितोऽसहनया।
मञ्जुनाथ नूनं बाहुपाशेनोपबध्नन्नपि
दयितोऽवधीरितोऽभूत्काममकरुणया
एवं द्रागमन्दीकृततापं परितप्यतेऽद्य
सन्दीपितकामवेगमिन्दीवरनेत्रया ॥ ८ ॥

"मन्दमन्दम्, सदोषत्वादतिमन्थरमित्यर्थः। असौ नायकः। दृष्टिविनिपातात् अवलोकनादपि। अभिनन्दितः सत्कृतः प्रीणितो वा। भृशमपराधेन, लोकलज्जया च ('पुनर्नैवं भावि' इति कारितप्रतिज्ञाः सख्यो मा किं वदिष्यन्तीति) आनतनयनं यथा स्यात्तथा। अनुनयन्नपि दयितो नेक्षितः। अनेनाप्युपायेन कदाचित्प्रसीदेदिति, बाहुपाशेन परिरभमाणोपि दयितः, अतिनिर्दयया मया तिरस्कृतः।" इति, द्राक् झटिति। अमन्दीकृततापं सन्दीपितकामवेगं च यथा स्यात्तथा। कञ्जदृशा अनुतप्यते ॥ ८ ॥

---

## खण्डिता



अविरतजागरादलसतमलोचनेऽथ
  दयिते भवनमुपयाति मौनवहना
व्रीडादैन्यचिन्तानतनयनमुपागतेऽथ
  तस्मिन् किल संमुखम्, तदासीन्नतवदना ।
मञ्जुनाथ निर्भरनिरुद्धवाष्पसन्नमुखी
  नेत्रे संमुखीकर्तुं न शेकेऽसावसहना-
शयनादुपेत्य कोपचिन्तादैन्यदूनमना
  भवनादयासीन्नतनीररुहनयना ॥ ९ ॥

निरन्तरजागरणात् अत्यलसलोचने दयिते गृहमागच्छति सति मौनवहना तूर्णीभूता । कर्तरि ल्युः । व्रीडया, दैन्येन चिन्तया च नते नयने यस्मिन्कर्मणि तथा, तस्मिन् (दयिते) संमुखमागते सति, तदा नतवदना आसीत् । निर्भरं निरुद्धेन बाष्पेण सन्नं (विषण्णम्) मुखं यस्याः सा अत एव असहना (प्रियकर्तृकं सपत्नीसंगमं सोढुमसहमाना) असौ नायिका । कोपेन, समस्तरात्रिपर्यन्तं मां विहाय अन्यत्रावस्थाने प्रसीदति, ततश्चाग्रे क्रमशो मयि विरागो भवेदिति चिन्तया, वियोगकृतेन दैन्येन, च दूनमनाः सा, नते नीररुहवत् नयने यस्या एवंभूता सती, किञ्चिदनुक्त्वा भवनादयासीत् ॥ ९ ॥

प्रातर्वासभवनमयासीदलसाङ्गलतं
  पादौ निदधानो मन्दमन्दं चलनासहौ
नेत्रे रात्रिजागरोपरक्ते सविलक्षं वहन्
  प्रेयानङ्गरागारुणौ वाहू मञ्जिमावहौ ।

"उत्का"



"पर्यङ्के प्रसूनपरिरचितेऽनुतप्ता भृशं
शङ्के फुल्लपङ्केरुहनयना निषीदति ॥"

Lakshmi Art, Bombay, 8.

मञ्जुनाथ संमुखमुपागतेऽपि मन्दपदं
दयिते, न किञ्चिदपि वाचमियं संजहौ
सलिलभरेण रुद्धनयनसरोजयुगा
मञ्जुलमृगाक्षी दीर्घनिःश्वासं शनैर्जहौ ॥ १० ॥

अलसा अङ्गलता यस्मिन् कर्मणि यथा स्यात्तथा, मन्दमन्दं चलनमसहमानौ पादौ भुवि निदधानः, रात्रिजागरणेन उपरक्ते नेत्रे, सपत्न्या अङ्गरागेण अरुणौ, अतएव मञ्जिमाऽऽवहौ बाहू च, सविलक्षं सलज्जं वहन् प्रेयान् (प्रियः) प्रातः वासभवनं निजकेलिगृहमयासीत् । संकोचेन मन्दपदं यथा तथा, संमुखागतेपि दयिते किञ्चिदपि वाचम्, इयं (नायिका) न संजहौ, किञ्चिदपि नोवाचेत्यर्थः । किन्तु—॥ १० ॥

---

## उत्का

---

भवदुपसूच्यमानसंकेतं समधिगम्य
नियतनिकेतं नीयमाना सा प्रसीदति
एवं व्याहरेयं पुनरेवमाचरेयं चेति
प्रचुरं मनसि चिन्तयन्ती हन्त सीदति ।
मञ्जुनाथ समयविलङ्घनेन खिन्ना चिरा-
त्कामं मदनेन दूयमाना सा विषीदति
पर्यङ्के प्रसूनपरिरचितेऽनुतप्ता भृशं
शङ्के फुल्लपङ्केरुहनयना निषीदति ॥ ११ ॥

नायकं प्रति दूत्या उक्तिः । भवता सूच्यमानं संकेतं ज्ञात्वा, नियतं निकेतं (स्थानम्) मद्द्वारा प्राप्यमाणा सा भवत्समागमाशया प्रसीदति । अहं प्रिय-

तस्मै समागते एवं संलपेयम्, एवं च संगमचातुर्यं दर्शयेयम् इति बहु विचारयन्ती सीदति, परिश्रान्ता भवति । कामपीडिता सा पाषाणफलके कुसुमै रचिते पर्यङ्के भृशमनुतप्ता सती सांप्रतं तिष्ठतीति अहं शङ्के । अत एव न तस्या औत्कण्ठ्यं विफलनीयमिति भावः ॥ ११ ॥

---

## ॥ वृत्तसुरतगोपना गुप्ता ॥

सायमवकाशमुपलभ्य गृहकार्यभरा-
त्कुसुमचयार्थमुपयाता भयभुग्नाऽहम्
परिमृदिता मे तरुलग्ना पश्य शाटिकाऽसौ
वृक्षवाटिकायां घनतमसि यदूनाऽहम् ।
मञ्जुनाथ कुसुमनिलीनैरनुयाताऽलिभिः
सरभसमायाताऽपि विटपविलूनाऽहं
शङ्कतामलीकं नर्मशाली काममालीजनो
हन्त मधुपालीदत्तदंशा दृढदूनाऽहम् ॥ १२ ॥

गृहकार्यभारात्, सायमवकाशं प्राप्य । भारपदेन कौटुम्बिककार्यस्य बाहुल्यं स्वकर्तव्यतां च सूचयति, अतएव कार्योत्तरं सायमेवावकाश इति पारतन्त्र्येण निर्दोषता ध्वन्यते । भयेन भुग्ना संकुचिताऽहं कुसुमचयार्थं वाटिकामुपयाता । पल्लवितेषु तरुषु लग्ना मे शाटिका, परिमृदिता वलीविलुलिता जाता, न तु छिन्नेति भावः । कथं वृक्षवाटिकायां शाटिका विलग्नेति चेत्— यत् यतः, अहं घनतमसि ऊना एकाकिनी । एकाकिन्याः अन्धकारे भयवशात् शीघ्रं शीघ्रं पुष्पिततरुसमीपगमनेन अनवधानवशाद्विलग्नेत्याशयः । कथं स्थाने स्थाने क्षतानीत्याह—कुसुमेषु निलीनैः रात्रिकारणाद्विश्वस्तं स्थितैः भ्रमरैः अनुयाता । विश्रब्धमास्थितानां भ्रमराणां सहसा स्थानविच्छेदात्को-

## विरहिणी



" ध्यानमग्नाचित्तमवधानरहितेयं हन्त
भृशमुपधानतले विवशं निषीदति ॥ "

Lakshmi Art, Bombay, 8

पातिशय इति सुदूरमनुसरणम्। अतएव तेषां भयात्सरभसं चलितापि अहं तरुशाखाभिर्विलूना विक्षता। भ्रमरभयवशादमार्गेण पलायनाद्विटपैः शरीरोल्लेख इति भावः। नर्मशाली परिहासशीलः सखीजनः काम (यथेच्छम् अनेन निर्दोषाया मे न भयमिति सूच्यते) अलीकं मिथ्या यत्किञ्चित परिशङ्कताम्, मधुपानाम् आल्या दत्तो दशो यस्याः साऽहं दृढं दूना पीडिता। दृढपीडाप्रदर्शनाच्चाहमविककालं वक्तुं वा स्थातुं वा शक्तेति गोपनचातुर्यं ध्वन्यते। नर्मशालीत्युक्त्या यदि सखीजनः किञ्चित्कल्पयेत्तदपि परिहासमात्रं परिगण्येतेति सूच्यते। किञ्च अलीकं नर्मशाली सखीजनः प्रायो अकाण्डमेव परिहासं करोति, अत एव न तत्परिहासे विश्वसनीयमिति ध्वन्यते ॥ १२ ॥

---

## प्रोषितपतिका (विरहिणी)

पञ्जरशकुन्तैर्नाधिगच्छन्ती प्रमोदं मनाग्
विरहविनोदं वीणयाऽऽप्तुं सा प्रसीदति
प्रियगतचित्ता पुनस्तामपि निधाय पृथक्
कामं चिन्तयन्ती हन्त विरहाद्विपीदति।
पाण्डुरकपोलपरिचुम्बिनश्चिकुरभरान्
पृष्ठे विनिधाय मञ्चपृष्ठे गता सीदति
ध्यानमग्नचित्तमवधानरहितेयं हन्त
भृशमुपधानतले विवशं निषीदति ॥ १३ ॥

पञ्जरस्थैः पक्षिभिः प्रमोदं न प्राप्नुवती, ततः पराङ्मुखीभूता, वीणाद्वारा मनाक (किञ्चित्) विरहे विनोदनं लब्धुं सा प्रसीदति। सखीप्रार्थनया वीणाद्वारा विरहं विस्मर्तुं माऽनुमता भवनीत्याशयः। तत्रापि विनोदमलभमाना तां निक्षिप्य कामं यथेच्छं दयितं चिन्तयन्ती सा तस्य विरहाद् हन्त

विषादं प्राप्नोति। चिकुरभरान् केशनिचयान्। अनेन घनानामपि तेषां भारायिततैवेति सूच्यते। 'भरम्' इत्यनुक्त्वा 'भरान्' इति बहुलेन, अप्रसाधनवशात्केशानां वेणयो जातास्ताश्च बहुशो विकीर्णा इति समूहस्यापि बहुत्वेन विरहातिशयो ध्वन्यते। मञ्चोपरिस्थिता सीदति (क्लिश्यति)। ध्यानमग्नं चित्तं यस्मिन्कर्मणि यथा भवति तथा, भृशम् अवधानरहिता, मीलितनयनतया वैचित्यमवाप्ता इयं चित्रगता वियोगिनी हन्त विवशम्, उपधानोपरि निषीदति—सर्वभरं तस्मिन्नेव स्थापयतीत्याशयः॥ १३ ॥

कृशकरकञ्जशायिकोमलकपोलतला
मुकुरमनञ्जनदृङ् मन्थरमवेक्षते
सदयसखीभिरुपनीतं वेषभूषादिक-
मुष्णमुच्छ्वसन्ती विपरीतं पर्यवेक्षते।
मञ्जुनाथ काञ्चनपिशङ्गदूनदेहलता
मनुजगतागतेषु तमिव प्रतीक्षते
निबिडनिबद्धामेकवेणीमियमन्यमना
वारं वारमेणीचलनयना निरीक्षते॥ १४ ॥

कृशे करकमले शेते तच्छीलं कोमलं कपोलतलं यस्याः सा, कफोणिदत्तभरे करे स्थापितमुखाम्बुजा इत्यर्थः। 'शायि'पदेन मुखकमलस्य निश्चेष्टता ध्वन्यते। अनादृतशृङ्गारत्वाद् अनञ्जने दृशौ (नेत्रे) यस्याः, अथवा सखीनामाग्रहान्नेत्रपीडाशान्त्यर्थं दत्तकज्जलापि रोदनादनञ्जनदृक्। सखीनामाग्रहात् कृशशरीरावलोकनार्थमानीतं दर्पणं मन्दं यथा स्यात्तथाऽवेक्षते। निरुत्साहतया नेत्रचाञ्चल्यापगमेन विरहातिशयो ध्वन्यते। कदाचित्प्रसाधनादिषु व्यासक्तमानसायाः क्षणं विनोदः स्यादिति सदयाभिः सखीभिरानीतवेषभूषादिकं गृहीतकोष्णोच्छ्वासा विपरीतं (अमण्डनकरम्) पर्यवेक्षते जानाति। अथवा, सदयसखीभिर्वेषभूषादिकं संमुखे आनीतम्, इयं तु उष्णं निःश्वसन्ती

गुणावशात् विपरीतं ( ततो विरुद्धं पृष्ठभागे ) अवेक्षते । काञ्चनवत् पिशङ्गा ( पीता ) तूना च देहलता यस्याः सा । अनेन स्वाभाविकशोभाशालिता ध्वनिता । गृहवर्तिनां लोकानां गमनाऽऽगमनेषु तं प्रतीक्षत इव । एवमाम-नामनाः प्रियतमः कथमवधिकालं लङ्घयेदिति असमयेपि तं प्रतीक्षत इति प्रेमातिशयो ध्वन्यते । गाढं परिजटिताम् एकां वेणीम् ( सर्वेषां केशानामेकं घनीकरणम् ) अन्यत्र मन्थरवीक्षणापि, वेणीनिरीक्षणे मृगीवचञ्चलनयना सती मुहुर्मुहुर्वीक्षते । वेणीं पश्यन्ती पुनः प्रियतमसमागमसुखं स्मरतीत्य-न्यमनाः । प्रिय एव गमनसमयप्रतिज्ञानुसारं वेणीमवमोचयिष्यति, अथवा दृश्यतां कदेयं वेणी सुन्दरधम्मिल्लस्वरूपे परिणमते इति मुहुर्वेणीवीक्षणस्या-शयः ॥ १४ ॥



## —॥ देवघनाक्षरीच्छन्दः ॥—

विश्रम्भं प्रयातवति परिजनवर्गे भूरि-
   संरम्भं दधाति परिचरणं चरति चरति
विरहहुताशनान्वितान्तमेव तान्ति गता
   शान्तिं नोपयाति हृदि पङ्कजं हरति हरति ।
मञ्जुनाथ मन्युसमारोहं वर्णयामि किमु
   संमोहं समेति जने सविधे सरति सरति
विषममधैर्यमहो वर्द्धते वयस्यागणे
   धैर्यमद्य तस्या मनोधरणी धरति धरति ॥ १५ ॥

विषये क्रोधं गच्छतीति ध्वन्यते । ["परिचर्या करते करतेभी झुंझलाती है' एष भावः ।] एवं सर्वत्र द्विरुक्तौ बोध्यम् । परिजनवर्गे शीतलतानिमित्तं हृदये कमलं स्थापयति स्थापयत्येव । तान्ति खेदम् । मन्युसमारोहं शोकोपचयम् । किं वर्णयामि, आश्वासननिमित्तं लोके समीपमागच्छत्येव संमोहं समेति, मूर्च्छां गच्छति । तस्या (विरहिण्याः) मनोधरणौ हृदयस्थले धैर्यं (आश्वासनम्) धरति धरत्येव सखीगणे, विषममवर्णनीयमधैर्यम् (स्नेहकृता अधीरता) अहो वर्द्धते । असंगतिः । अत एव, एवमवस्था सा नः सखी त्वरितमाश्वासनीयेति दयितदेशगामिनं पान्थं प्रति सख्याः सन्देशः ॥ १५ ॥

क०—विरहविनोदनाय सेयमुपवीणयन्ती
वल्लभं विचिन्तयन्ती मोहमुपवहते
कृशकरकञ्जपरिकीलितकपोलतला
विलुलितकुन्तला विलोकमपहरते ।
मञ्जुनाथ रशनाकलापेनोपभान्ती भृशं
शिथिलदुकूलं भुजमूलं मञ्जु वहते
वीणामियमङ्के विनिधाय हन्त पर्यङ्केऽपि
मीलन्नेत्रपङ्केरुहा प्रीतिं नोपलभते ॥ १६ ॥

उपवीणयन्ती वीणया उपगायन्ती सेयं (नायिका), दयितुं स्मरन्ती, मोहं गच्छति । विलुलिता इतस्ततो विकीर्णाः केशा यस्याः सा, विलोकमपहरते अवलोकनं संहरते, नेत्रे निमीलयतीत्यर्थः । 'परिकीलित' पदेन यत्ने सत्यपि मुखस्य हस्तादनपसरणेन मनोमालिन्यातिशयो ध्वन्यते । मनोहरेण (रत्नाद्यलंकृतेन) काञ्चीकलापेन भृशं शोभमाना, शिथिलशाटिकाञ्चलं सुन्दरं भुजमूलं (कुचतटम्) वहते, संभ्रमवशाद्दुकूलाञ्चलं वक्षःस्थलाद् गलति, अत एव कुचतटमालोक्यत इत्याशयः । अतएव शयनपर्यङ्केपि, मुद्र्यमाणनेत्रकमला प्रीतिं नोपगच्छति । वीणावादनादयः सर्वेपि विनोदाः प्रियस्मरणका-

## प्रोषितपतिका



"वीणामियमङ्के विनिधाय हन्त पर्यङ्केपि
मीलन्नेत्रपङ्केरुहा प्रीतिं नोपलभते ॥"

Lakshmi Art, Bombay, 8.

लिकविषादस्याग्रे पराजिता भवन्तीति परमवैभवशालिन्याः पदेपदे सखीभी राजोचितैरुपकरणैः सेव्यमानाया विरहिण्याः क्लेशावस्था सूच्यते। विरहिण्याः शृङ्गारमालोक्य न समालोचकैर्विमनायितव्यम्, अपि तु बलात्सखीभिर्विनोदाय भूष्यमाणापि न मनागपि मनःसन्तोषं प्रयाति, प्रत्युत मनोवेगो वर्द्धत एवेत्यान्तरिकी अवस्था सूक्ष्ममालोचनीयेत्यलम् ॥ १६ ॥

---

## प्रवसत्पतिका

दयितेऽतिदूरदेशयात्राकथामातन्वति
ग्लानिमुपयाति बत बद्धबाष्पमोचना
उषसि विदेशनेयवस्तु विनयन्ती भृशं
ताम्यति वहन्ती मोहमस्ताऽभूत्प्ररोचना।
मञ्जुनाथ मन्दिरसमीपादुपयान्तमिमं
पश्यन्ती प्रकामं हन्त बाष्पभृतलोचना
वातायनदेहलीविलम्बिदूनदेहलता
जाता प्रतिमेव वरवारिजविलोचना ॥ १७ ॥

दयिते (ननु स्वामिनि, अतिप्रणयो द्योत्यते) करिष्यमाणाया अतिदूरदेशयात्रायाः कथां कुर्वति सति, बद्धं रुद्धं अश्रुविमोचनं यया, (बलादवरुद्धरोदना) (सा इय नायिका) ग्लानिमुपयाति। प्रवासकथाश्रवणमात्रेण, यादृशी प्रफुल्लता पूर्वं मुखे आसीत्सा लुप्यत इति भावः। पुनः प्रातः, विदेशे नेयं स्वामिनो वस्तु विनयन्ती संगृह्णती, अतएव विषादवशात् भृशं मोहं (विह्वलतां) वहन्ती, ताम्यति क्लिश्यति। प्ररोचना (प्रोत्साहनादिकम्) अस्ताऽभूदलुप्यत। 'त्वं तु विवेकिनी, न मम गमने मनःखेदं धारयिष्यसी'-त्यादि स्वामिदत्तमाश्वासनादिकं तस्मिन् क्षणे सर्वमसंगतमिति भावः। अथ

निजगृहसकाशाद् गच्छन्तमिमं ( दयितम् ) पश्यन्ती, भृशं अश्रुभृतलोचनाऽभूत् । किं च तस्मिन् क्षणे प्रवसतो वल्लभस्य विलोकनाय, अट्टालिकाया वातायनस्य ('खिडकी') देहल्यां विलम्बिनी ( दूरंगतस्यापि प्रियस्य भृशमानस्य विलोकनात् ) दूना म्लाना देहलता यस्याः सा । लतापदेन गच्छतो दयितस्य दर्शनात्तात्कालिकोऽवसादः सूच्यते । अथवा लता, यथा वृक्षाद्याश्रितैव तिष्ठति, तथाऽयं देहोऽग्रे ( विरहे ) किमाश्रयो भवेदिति भावो ध्वन्यते । कमलनयना ( नायिका ) प्रतिमा इव, मूर्तिरिव जाता । वारिजपदेन तत्कालं निर्गलन्नयनवारि स्मर्यते । चतुर्थे—वाता जाता प्रासो बन्धानुगुणः ॥ १७ ॥



## प्रवत्स्यत्पतिका

दयिते विदेशगमनानुमतिमाकाङ्क्षति
गलितदुकूलमसौ सीदति ससंभ्रमम्
नेत्राभ्यां समीपजलयन्त्रमनुकुर्वतीव
कान्तहृदयेपि सृजतीह मौनविभ्रमम् ।
मञ्जुनाथ वपुषि निषक्तबाहुवल्लीभरा
मारुतमथितमञ्जुमल्लीवैति विभ्रमं
कीलितकुचाग्रमवमीलितनयनमियं
शीलितविनयमवरुन्धे गमनोद्यमम् ॥ १८ ॥

आकाङ्क्षति याचति सति, विषादकृतेन वैचित्त्येन गलितं दुकूलं यस्मिन्कर्मणि तथा, ससंभ्रमं सीदति अवसन्ना भवति । समीपस्थं जलयन्त्रम् (फुंहारा) अनुकुर्वतीव, नेत्राभ्यां बहुलमश्रु विसृजन्तीत्यर्थः । दयितहृदयेपि मौनभावमुत्पादयति, नायिकाया इमामवस्थामवलोक्य दयितोपि न किञ्चिद्वक्तुं प्राभवदिति भावः । कान्तस्य वपुषि स्थापितभुजलताभारा । मारुतोन्मू-

## प्रवत्स्यत्पतिका



" कीलितकुचाग्रमवमीलितनयनामियं
शीलितविनयमवरुन्धे गमनोद्यमम् ॥ "

Lakshmi Art, Bombay 8

लितमल्लिकालतेव (कान्तवपुषि) विश्रमम् एति, कान्तशरीरमवलम्बते इति भावः। अत एव, कीलितं कुचाग्रं यथा स्यात्तथा (अनेन कुचयोः कठोरता, वक्षः कान्तवपुषि विसृज्य निश्चलाऽभवदित्यपि च ध्वन्यते।) निमीलितनयनम्, शीलितविनयं (स्वीकृतनम्रतावचनं) च यथा स्यात्तथा दयितस्य गमनोद्यमं वारयति। सैषा राजकुलवधूर्नायिका ॥ १८ ॥

---

## विश्रब्धसुरता मध्या



नानाविधव्याजैः केलिभवनविनीताप्यसौ
भूरिभयभीता द्वार एव स्थितिमातनोति
मातृगृहवार्ताभिर्निकाममवरुद्धाप्यहो
संनिधौ समेतुं हन्त भूयः करं संधुनोति।
एवमतिमुग्धमतिमञ्जुलमतीता वयो
नैपुणेन नीताऽनङ्गगोचरं मनो धिनोति
या वै स्पर्श एव चटुचीत्कृतानि चक्रे चिरं
सैव सीत्कृतानि सुखसदने समातनोति ॥ १९ ॥

केलिभवनं विनीता प्रापितापि। केलिभवनस्य द्वारे एव तिष्ठति। यदा च भवनद्वारादपि गन्तुं प्रयतते, तदा मातृगृहस्य वार्ताभिः अतिप्रयत्नेन अवरुद्धापि, प्रियस्य संनिधौ आगन्तुं तु पुनः करं धुनोति। करं कम्पयित्वा आगन्तुं निषिध्यतीत्यर्थः, पितृगृहस्य स्थाने मातृगृहपदेन मातुर्वृत्तान्ताद् मनोविनोदेन निसर्गतो मातुः प्रेम तस्याः सूच्यते। एवं शनैः शनैः अतिमुग्धम्, अतिमनोहरं च सन्धिवयः अतीता, (उल्लङ्घितवती) प्रियतमेन अतिनैपुणपूर्वकं शनैः शनैरनङ्गगोचरं कामपरिचयं नीता सती, इदानीं स्वचे-

ष्टाभिः प्रियस्य मनः प्रीणयति । अतएव सर्वसारमाह—पूर्वं या स्पर्शमात्रे कृते एव निजमोचनाय प्रियचाटुपूर्वकाणि चीत्कृतानि चक्रे । अथवा चटुलानि चञ्चलानि चीत्कृतानि चक्रे, सा एव संप्रति सुखसदने सीत्कृतानि करोति । पूर्वं नाममात्रतः केलिभवनमासीदिदानीं तु सत्यं तत्सुखसदनमभूदिति सुखसदनपदेन ध्वन्यते ॥ १९ ॥

---

## लज्जिता



निभृतमुपागतेन नक्तं दयितेन रतिं
　समधिकलज्जा सा सखीतो यत्तिरोदधौ
तदिदं निबुध्य सखी प्रातः कुसुमोपवने
　व्यङ्ग्यवचनेन तामजस्रं लज्जितां दधौ ।
विदलितकङ्कणं छलेन गोपयन्ती सा तु
　दक्षिणं कराब्जमवकुञ्च्य मौनमाययौ
लुम्पन्ती कपोलमवमर्शमुद्रयैव सखी-
　संमुखे शशाङ्कमुखी नम्रमुखी संबभौ ॥ २० ॥

नक्तं रात्रौ गुप्तमागतेन दयितेन साकं संजातां रतिम्, अतिलज्जावती सा नायिका सखीसकाशे, यत् ( यस्मात् कारणात् ) गोपयांचकार । तदिदं गोपितं वृत्तं निबुध्य (ज्ञात्वा), सखी प्रातः कुसुमोपवने तां नायिकां व्यङ्ग्यवचनैः अतिलज्जितां चकार । रात्रौ रतिसंभ्रमे, विदलितः कङ्कणः (काचवलय.) यस्य ईदृशं दक्षिणं करकमलं मिषेण, अवकुञ्च्य पृष्ठदेशे संहृत्य गोपयन्ती सा ( नायिका ) मौनमाययौ, तूष्णीमभवत् । ततश्च—अवमर्शमुद्रयैव विचारमुद्रयैव शिरःशाट्या ( प्रियदशनाङ्कितं ) कपोलं गोपयन्ती शशाङ्क-

## लक्षिता



" लुम्पन्ती कपोलमवमर्शमुद्रयैव सखीसमुखे
शशांकमुखी नम्रमुखी संबभौ ॥ "

Lakshmi Art, Bombay, 8

मुखी, सख्याः संमुखे नम्रमुखी सती शुशुभे। नायिकया एवं मुखमुद्रा कृता यथा किञ्चिदियं विचारयति, ततश्च तादृशे व्यापारे मुखमवनमयन्ती, सा युक्त्या मुखाञ्चलेन कपोलमाच्छाद्य नम्रमुखी सती तस्थावित्याशयः २०

---

## स्वयंदूतिका (वचनविदग्धा)

याता निजजनकनिकेतमुपयाता पति-
रुषसि विदेशान्प्रति याता शयितोऽधुना
श्वश्रूरियमन्धा, निशि शय्यायां निमग्ना भवे-
द्देवरोपि कार्यप्रतिबन्धादयितोऽधुना।
मञ्जुनाथ मेघमण्डलेन मेचकाभं नभो
भवनेऽहमेका न भोः सुस्था भयतोऽधुना
क्षम्यतां दिनान्तसमयागत चतुरपान्थ!
विवशा नितान्तमहमावासे यतोऽधुना ॥ २१ ॥

याता ज्येष्ठपत्नी देवरपत्नी वा। निजपितृगृहं गता। पतिः प्रातःकाले परदेशं प्रति याता यास्यति, लुट्, अत एव अधुना शयितः। 'अधुना' पदेन इदानीमेव शयितस्य न शीघ्रं प्रबोध इति ध्वन्यते। पतिपदेन 'एष किल केवलं मम रक्षणे एव तत्परो, न भोगपाटवेन मम प्रियतम इति द्योत्यते। शय्यायां निमग्नेत्यनेन, शिथिलरज्जुकायामस्यां खट्वायां तथेयं परिपतति यथा नास्याः परिबोधः, अत एव गभीरमञ्चरूपकूपनिमग्नाया अस्या न भयमिति ध्वन्यते। 'प्रतिबन्ध' पदेन देवरोपि कार्येण प्रतिबद्धः (रुद्धः) नागच्छेदिति सूच्यते। अयितः गत.। अत्राप्यधुनापदेन अधुनैव गतस्य कार्यप्रतिबन्धवशान्न शीघ्रमागमनमिति सूच्यते। अथ मञ्जुना मम मनोवशीकुर्वता मेघमण्डलेन नभः (गगनम्) मेचकाभम्, श्यामच्छवि, अन्ध-

कारितमिति यावत्। मञ्जुनेत्यनेन मम मनो न हस्तगतमत एवास्मिन्नन्ध-कारितदिगन्ते समयेऽवश्यं स्थातव्यमिति गुप्तं सूच्यते। भोः (पान्थ) भवने अहम् एका, अत एव भयात् अधुना सुस्था सुचित्ता नास्मि। भयाद् अधुना सुस्था नेत्यनेन, एवं दशायां त्वां विना मम सुस्थितिर्न भवेदिति सूच्यते। 'अधुना' पदेनात्र 'इदानीमसुस्थापि त्वत्समागमे' सुखिनी भवे-यमिति पान्थानुकूल्यं द्योत्यते। त्वं दिनान्ते सायमागत इति एकाकिनी स्त्री अहं त्वां कथं आवासयामीति वाच्योऽर्थः। वास्तवे तु सायंकाले आगतः पान्थः क्वान्यत्र ग्रहीयेतेति तव स्थितिरत्रैव समुचितेति व्यज्यते। 'चतुर' पदेन त्वं चतुर इति मद्विवशतां ज्ञात्वा क्षमापूर्वकमन्यत्र गमिष्यसीति वाच्योऽर्थः। वास्तवे तु एवं व्यङ्ग्यार्थबोधविदग्धाय किं तेऽधिकं वदामीति स्वाभिप्रायो द्योत्यते। अधुना आवासे (निवासं कारयितुम्) विवशास्मीति 'अधुना' पदेन यदि आवयोः संवादं शृण्वतां लोकानां भयेन, इदानीमिति गच्छसि, तदा किञ्चिद्विलम्ब्य पुनरागन्तव्यमिति मार्गो दर्श्यते ॥ २१ ॥

---

## विप्रलब्धा

कश्चिन्मिषमाप्य मञ्जु विरचितवेषा पूर्व-
संकेतितमेषा केलिवनमपि संययौ
तत्र चिरचिन्तितमनागतं दयितमेक्ष्य
दूनहृदयाऽसौ दीर्घनिःश्वासान्मुहुर्जहौ।
भ्राम्यन्नेत्रकञ्जमतिताम्यत्तुङ्गवक्षोरुहं
भ्राम्यद्भुजलतिकं विमोहमियमाययौ
तामेतामवस्थामवलोक्य सखी स्तम्भितेव,
मोहमागतेव, चित्रलिखितेव, निर्बभौ ॥ २२ ॥

"विप्रलब्धा"



"तामेतामवस्थामवलोक्य सखी स्तम्भितेव
मोहमागतेव चित्रलिखितेव निर्बभौ ॥"

Lakshmi Art, Bombay, 8

"मानिनी"



"मन्दीभूतमानापि च किं दीनं न मोदयसे
कालिन्दीपुलिनगतमिन्दीवरनयने !"

Lakshmi Art, Bombay, 8.

मञ्जु मनोहरं यथा स्यात्तथा विरचितवेषा कृतशृङ्गारा एषा ( नायिका ) पूर्वतः संकेतितं केलिवनं कंचिद् मिषम् आ—आप्य ययौ । तत्र केलिवने चिरकालात् हृदये चिन्तितं दयितम् अनागतम्, आ—ईक्ष्य ( दृष्ट्वा ) । ततश्च प्रियमार्गविलोकनेन श्राम्यन्ती खिद्यमाने नेत्रकमले यस्मिन्कर्मणि तथा, निःश्वासप्रश्वासैर्गाढाञ्चितकञ्चुक्यां अतिताम्यन्तौ ( क्लिश्यन्तौ ) तुङ्गौ वक्षोरुहौ यस्मिन् कर्मणि तथा, श्राम्यन्त्यौ भुजलते यस्मिन् कर्मणि तथा, इयम् नायिका विमोहम् आययौ, मुमोह । निकटे स्थिता सखी, तामेतां मोहावस्थां विलोक्य, मोहम् आगतेव वैचित्र्यं प्राप्तेव, स्तम्भं गतेव चित्राङ्कितेव, नितरां बभौ शुशुभे ॥ २२ ॥

---

## मानिनी

निपुणपुलिन्दीगणसेवितसमीपभुवि
सरसि न सङ्गताऽसि तं दीनं सुवदने !
बाढं दीर्घदाही कामबन्दीकुरुतेयं बत
मोहमदस्यन्दी ते विलासो मञ्जुनयने ! ।
मञ्जुनाथ सन्दीपितविरहहुताशमिमं
दयितममन्दीभूततापं कञ्जशयने
मन्दीभूतमानापि च किं दीनं न मोदयसे
कालिन्दीपुलिनगतमिन्दीवरनयने ! ॥ २३ ॥

हे सुवदने ! ( इदानीं कोपप्रभावस्ते मुखाद् गत इति सूच्यते ) निपुणेन रहस्यगोपनचतुरेण पुलिन्दीगणेन सेविता ( रक्षिता ) समीपभूः ( प्रान्तदेशः) यस्य ईदृशे सरोवरे, तं दीनं नायकं त्वं न संगतासि न अभिसृतासि । नायकेन यस्मिन् सरस्तटे संकेतो दत्तस्त्वं तत्र तेन साकं न मिलितासि । न

च तत्र रहस्यभेदशङ्का कार्या, यतस्तत्र निपुणो भिल्लीगणः समन्ताद्रक्षणावेक्षणं करोतीत्याशयः। हे सञ्जुनयने! तव वियोगे अतिदीर्घं (अत्यन्तम्) दाहकरः, मोहं मदं च स्यन्दते प्रसूते ईदृशस्तेऽयं विलासस्तं जनं कामस्य बन्दिनं कुरुते। दयितस्ते विलासैरतिवशीभूतस्तथा च कामबन्दीकृतः सोऽवश्यं रक्षणीय इत्याशयः। सन्दीपितो विरहवह्निर्यस्य तम्, अत एव कमलनिर्मिते शयने शयनीयेपि, न मन्दीभूतः (प्रशान्तः) तापो यस्येदृशमिमम्। अत एव दीनं दयायोग्यम्, त्वत्प्रतीक्षायां कालिन्दीपुलिने स्थितमिमं दयितम्, मन्दीभूतमानापि हे इन्दीवरनेत्रे त्वं किमिति न प्रीणयसि। तव मानोपि शान्तः, सोपि त्वत्प्रतीक्षया अतिक्रान्तो दयायोग्योस्तीति साम्प्रतमपि तं किमिति नाभिसरसीति नायिकां प्रति सख्या दूत्या वा उक्तिः। पुलिन्दी तं दीत्यादयः सर्वचरणगताः प्रासाः प्रेक्ष्याः ॥ २३ ॥






तत्र पूर्व

## स्वयं सन्देशः

काचित्कुवलयलोचना निजभवनान्तिकमेव ।
दिनावसाने समचरत्सायंसमयरमेव ॥ १ ॥
प्रतिवेशिन्यपि निजभवनमेका समधिरुरोह ।
पथि पथिकः कश्चन तदा पूर्वां वीक्ष्य मुमोह ॥२॥
निशि निवासमयमभिलषन् साकूतं समुवाच ।
संबोध्य प्रतिवेशिनीं सरसं शंसति सा च ॥ ३ ॥

काचित्सुन्दरी दिनस्यावसानकाले सायंकालस्य रमा (लक्ष्मीः शोभा) इव, निजगृहस्य समीपे एव संचरति स्म विहरति स्मेत्यर्थः ॥ १ ॥ तस्मिन् समये तस्या. सुन्दर्याः एका प्रतिवेशिनी अपि ('पडौसिन') निजभवनम्, आरुरोह, गृहपृष्ठे आगतवतीत्यर्थः । तदा मार्गे गच्छन् कोपि पथिकः पूर्वाम् (पूर्वोक्तां सुन्दरीम्) दृष्ट्वा मोहितोऽभूत् ॥ २ ॥ अत एव, अयं सुन्दर्या गृहे रात्रौ निवासं वाञ्छन् सन् साकूतं (साभिप्रायम्) उवाच । सा (सुन्दरी अपि) प्रतिवेशिनी संबोध्य मधुरं शंसति प्रत्युत्तरयति । सा साक्षात्पथिकाय उत्तरं न ददाति, किन्तु मध्ये प्रतिवेशिनीं संबोधयति; उत्तरं तु तत् पथिकार्थमस्तीत्याशयः ॥ ३ ॥ (भूमिका ।)

पथिकः—नभसि जृम्भते घनघटा, तमसि लुप्यतेऽध्वापि ।
वदसि वसतिमुपयासि यदि, भवसि पथिकसदयापि ॥४॥

जृम्भते क्रमक्रमेण वर्द्धते मेघघटायाः पर्यन्तो न दृश्यते, अग्रे किं भवेदिति भयेन अत्रैव निवासस्यावश्यकता द्योत्यते । अध्वा मार्गोपि अन्धकारे न दृश्यते । अग्रे कथं गम्येत । यदि त्वं वदसि, तर्हि वसतिं (निवासम्) प्राप्नोमि अत्र निवसामीत्यर्थः । 'यदि' काकाक्षिगोलकन्यायेनाग्रेपि संवध्यते । यदि त्वं पथिके (मार्गलङ्घनपरिश्रमाद्दयनीये) सदयापि भवसि, तर्हि अत्र निवासं प्राप्नोमि । अनेन केवलं निवास एव नाभीष्टः किन्तु अहं ते दयामपि वाञ्छामीति निगूढमभिप्रायो ध्वन्यते चतुर्ष्वपि चरणेषु 'नभसि, तमसि' इत्यादयः प्रासाः प्रेक्ष्याः ॥ ४ ॥

सुन्दरी—भवनमपरिजनमिदमियं विजनविनेयनिशास्मि ।
वसतिमभ्युपैतुं पुरः प्रतिवेशिनि! विवशास्मि ॥ ५ ॥

इदं भवनम् परिजनशून्यमस्ति । इयम् अहम्, विजने विनेया (यापनीया) निशा यस्या ईदृशी, अस्मि । अपरिजनेस्मिन्भवने अहमेकाकिनी रात्रिं यापयिष्यामि । अत एव हे पुरः प्रतिवेशिनि! मम गृहाग्रे निवासिनि! निवासं स्वीकर्तुं विवशास्मि । त्वं मम सर्वदा गृहे दृष्टिं स्थापयसि, यतस्त्वं मम गृहाग्रभागे वससि अतएवैकाकिनी रात्रौ कथं निवासं स्वीकरोमीति वाच्योऽर्थः । ध्वन्यर्थस्तु—पुरः अग्रे (अस्याः प्रतिवेशिन्याः संमुखे) तव रात्रिनिवासं स्वीकर्तुं कथं शक्नोमि । अतएवाहमुपरितः प्रतिषिध्यामि, अस्यां गतायां तव निवासो ममावश्यकः, यतोऽहं 'विजनविनेयनिशास्मि ।' इति ॥ ५ ॥

पथिकः—न परिजनापेक्षा सुमुखि! पथिकजनाय निशेति ।
दूरपरिश्रान्तोऽधुना पान्थो वसतिमवैति ॥ ६ ॥

गृहे परिजनो नास्ति, अतएवागन्तुकस्यावश्यककार्यं कः कुर्यादित्यर्थं ज्ञात्वा, पथिकः प्रत्याह—हे सुमुखि! (यदवधि त्वन्मुखं विलोकितं तत एव

त्वदायत्तोसीति ध्वन्यते ।) निशा रात्रिरस्तीति, पथिकजनाय परिजनस्यापेक्षा नास्ति रात्रौ शयनं विहाय नान्यत्कार्यम् , अतएव परिजनो नापेक्ष्यत इत्यर्थः । अतिपरिश्रान्तः पथिकः साम्प्रतं निवासमेव अवैति जानाति । अहं न कालविलम्बं सहे, अत एव निवासस्वीकार एवावश्यक इति सूच्यते ॥ ६ ॥

सुन्द०—संनिहितो न हि गृहपतिश्चलितोऽथ परिजनोपि ।
भवतो भवतु कथं स्थितिर्न पुनरितोऽन्यः कोपि ॥ ७ ॥

गृहस्य पतिः भर्ता अत्र नास्ति । अनेन 'गृहमात्रस्य स स्वामी न मम हृदयस्येति सूच्यते । परिजनोपि गतः । इत' अस्मिन् स्थाने । संनिहितो चलितो' इत्यादयश्चतुर्ष्वपि पादेषु प्रासाः ॥ ७ ॥

पथि०—उपनतघनजाले जलदकाले कोपि न याति ।
जनरहिता शालेयमिति बाले ! नवमिव भाति ॥ ८ ॥

उपनतं घनजालं यस्मिन् घनघटाऽऽच्छन्ने इत्यर्थः । प्रायः ईदृशे समये यात्रा निषिद्धा, अतएव ईदृशे समये इयं शाला ( भवनम् ) जनरहितेति मे मनसि नवीनमिव भाति प्रतीयते । बाले ! इति संबुद्ध्या बालां भवादृशीं विहाय सोऽस्मिन्समये प्रोषित इति सत्यं स केवलं गृहपतिरेवेति ध्वन्यते । वार्ताप्रसङ्गे सरसं विषयमुपक्रान्तुं तदिदमारब्धं पथिकेनेति बोद्धव्यम् ॥ ८ ॥

सुन्द०—चिरतीर्थव्यसनी पतिर्जरती परमबुधेति ।
युवती त्वहमेकाकिनी कियतीयं विपदेति ॥ ९ ॥

कथमस्मिन्समये स प्रोषित इति तदुत्तरे सखेदमाह—पतिः स चिरात् तीर्थयात्राव्यसनी । पतिपदेन स केवलं मां रक्षत्येव न पुनर्मोदयतीति खेदो ध्वनितः । जरती वृद्धा श्वश्रू', परम् अत्यन्तं अबुधा अज्ञा इति । सा वृद्धा सत्यपि नानुभवशालिनी, अतएवास्मिन्समये स्वसुतं प्रवासयति । अनेन, इमां वृद्धां दृष्ट्वा न संकुचितव्यम्-यत इयं महामूढेति स्पष्टमभिव्य-

कम् । जरतीपदेन तस्यामनास्था च ध्वनिता । युवती अहम् एकाकिनी अस्मि इयं विपत् कियती किंपरिमाणा एति आगच्छति । तीर्थयात्रया कीदृश्याप्त्तिर्युवत्या मम मेघकालेऽस्मिन्समुपस्थितेति तमेवानुयाहि । चिरती जरतीत्यादयः चतुर्ष्वपि चरणेषु प्रासाः ॥ ९ ॥

पथि०—हन्त न किल सन्ततमहं सुदति ! वसतिमिच्छामि ।
निशि निवासमपि नो दिशसि निभृतमुषसि गच्छामि ॥१०॥

पतिस्तीर्थे गतः, जरती अज्ञेति दीर्घा गृहकथा त्वयारब्धेत्याह—अहं संततं सर्वदा निवासं नेच्छामि । अपि तु केवलमेकस्यां रात्रौ नो दिशसि, न ददासि । उषसि प्रातः निभृतं निःशब्दं गच्छामि गमिष्यामि, न पुनरग्रे निवासं याचिष्ये इति वाच्योर्थः । ध्वन्यर्थस्तु, रात्रौ मम निवासो न कस्यचिद्विदितो भवेद्यतः, अतिप्रातःकाले निःशब्दं यास्यामीति न त्वया भेतव्यमिति ॥ १० ॥

सुन्द०—जाने पथि सखि ! संकटान् स्थितिदानेपि बिभेमि ।
निशि निवासवामे जने प्रतिवेशिनि ! किमुपैमि ॥ ११ ॥

मार्गे वर्षाकालेस्मिन् संकटान् क्लेशानहं जानामि, परं सखि ! स्थितेर्निवासस्य दानेपि बिभेमि । मार्गक्लेशान् बुद्ध्वापि निवासदाने लोकेभ्योहं बिभेमीति सूच्यते । निशि रात्रौ निवासात् (हेतोः) वामे वक्रे लोकेऽहं किमुपैमि, किं करोमि ? यदि रात्रौ वासयामि, तर्हि लोकाः सर्वेपि (प्रतिवेश्यादयः) वक्रा भविष्यन्तीत्याशयः ॥ ११ ॥

पथि०—इममलिन्दमरविन्दमुखि ! यदि सहसेऽधिवसामि ।
वामलोकलोचनविषयमयि वद कथमुपयामि ॥ १२ ॥

दृष्ट्वा लोका वक्राः भविष्यन्तीत्यस्योत्तरे आह—हे कमलमुखि ! यदि सहसे मर्षयसे, तर्हि इमम् अङ्गुल्या निर्दिश्य अलिन्दम् द्वारसमीपवर्तिकोष्ठकम्, ('पौली') अधिवसामि । एवंकृते—वामस्य लोकस्य लोचनविषयं कथं गच्छामि, यद्यस्मिन् निभृतप्रकोष्ठके वासयसि तर्हि लोकाः कथं पश्ये-

युरित्याशयो व्यङ्ग्यः । वाच्यस्तु—अलिन्दे शयानं मां दृष्ट्वा लोकाः कथं शङ्का भवेयुर्यतो ह्यहं बहिर्द्वारसमीपे स्थास्यामीति ॥ १२ ॥

सुन्द०—अ(ना)स्तरणमलिन्दतलमन्धकारबहुलं तु ।
सखि ! सुखमन्या वसतयः पथिकसुखाय भवन्तु ॥१३॥

अलिन्दतलम् आस्तरणरहितम्, बहुलान्धकारम् । अस्ति अत एव तव क्लेशो भवेदिति वाच्योऽर्थः । अन्धकारे लोकदृष्टितो निर्भयस्त्वमनास्तरणे किं करिष्यसीति पूर्वत एव विचारयेति व्यङ्ग्योऽर्थः । अन्या वसतयः अन्यानि निवासस्थानानि, पथिकसुखाय सुखं यथा तथा जायन्ताम् । तव सुखं मेऽभिप्रेतं, यदीदृशे अलिन्दे तव सुखं संभवति तर्हि सज्जमिदम्, अन्यथा त्वहं विवशेत्याशयः ॥ १३ ॥

पथि०—वियति विस्तृताऽम्बुदघटा, वहति पूर्वपवनोऽपि ।
महति विप्रकर्षे भवेत्सुदति ! सुखदवासोऽपि ॥ १४ ॥

सुखं मे भवेदिति त्वं वाञ्छसि, तर्हि पश्य, वियति आकाशे मेघघटा सर्वतः प्रसृता । सुखदो निवासो महति विप्रकर्षे अतिदूरे भवेत् । यदि मम सुखं पृच्छसि, तर्हि प्रवासान्निवृत्य गृहं गतस्यैव मम प्रियतमासमागमात्सुखदो वासो भवेत् । अत एवातिदूरात्तस्मात्पूर्वं घनघटाच्छादितायामस्यां रजनौ, अत्रैव सुखदो वासोऽस्त्वित्याशयः । वियति वहतीत्यादयश्चतुर्ष्वपि पादेषु नियमतोऽनुप्रासा ॥ १४ ॥

सुन्द०—त्यज निवासनिर्बन्धमयि व्रज निपुणं किमु शास्मि ।
अजनि पयोधरसन्नता रजनिरियं विवशास्मि ॥ १५ ॥

एतावदुक्तेपि न निवासाग्रहाद्विरमतीति किञ्चित्कुप्यन्तीव प्रतिवेशिनीमनुक्त्वा साक्षात्पथिकमेवाह—अयि ! निवासस्य इमं निर्बन्धमाग्रहं त्यज । इदानीं व्रज, गच्छ । निपुणं त्वामहं किं वदामि । अहं युवतिरेकाकिनी इयं च रात्रिरिति लोकमर्यादानिपुणं त्वां किमहं वदामीति वाच्योर्थः । एतावदुक्तेपि निपुणं व्यङ्ग्यावबोधचतुरं किं वच्मीति व्यङ्ग्यः । इयं रजनिः

पयोधरैः मेघैः संनता व्याप्ता अजनि जाता । अतएवास्मिन्नन्धकारे तवागन्तुकं पुरुषं किमधिकं संलपामि । अत एव निवासने अहं विवशास्मि। तत्त्वतस्तु—पयोधरयोः सन्नता रोमाञ्चकम्पादिवशादसहनता अजनि जाता। सद्+क्त+ता । अहमुद्दीपितमदनतया पुलकितस्विन्नपयोधरा जाता । इयं च रजनिः (अर्थात् अतितरां कामं प्रदीपयति।) अत एवाहं विवशास्मि, नाधिकं सोढुं पारयामीत्याशयः। त्यजनि अजनि व्रजनि इत्यादयश्चतुर्षु प्रासाः ॥१५॥

* * * *

इति संलपतोरेतयोस्त्वरितो वारिधरोऽपि ।
जवतो वर्षितुमापतत्परितो धरणिरलोपि ॥ १६ ॥

एवं तयोः (सुन्दरीपथिकयोः) संलापं कुर्वतोरेव त्वरायुक्तो मेघः, वेगात् वर्षितुमापतत्, सहसाऽगमत् । तथा च मेघो वर्षणमारब्धः यथा वायुमिश्रितजलेन पर्यन्ततः पृथिवी लुप्ता । एवं च, न कोपि द्रष्टुं पारयेदिति पथिकनिवाससौकर्यं सूचितम् ॥ १६ ॥

प्रतिवेशनमनुपदमियं प्रतिवेशिन्ययति स्म ।
युवतिरसावविशद् गृहं पथिकोपि च विशति स्म ॥१७॥

वृष्टिभयात् इयं प्रतिवेशिनी, प्रतिवेशनं गृहम्, अयति गच्छति स्म। इयं युवतिरपि निजगृहमविशत्। अस्मिन्व्यतिकरे पथिकोपि पूर्वोक्तसुन्दर्या गृहं विशति स्म ॥ १७ ॥

सो०—युवतिविलासमवेक्ष्य, द्रवति घनोपि मनो विना ।
चलति ललितमनवेक्ष्य, तदतिरसिकपथिकः कथम्॥१८॥

मनो विना, मनसा शून्यः, अचेतन इति यावत्। मेघोपि युवत्या विलासं दृष्ट्वा द्रवति द्रुतहृदयो भवति अतएव तदैवापतत् वास्तवे तु वर्षति। यदाऽचेतनस्यैवेयं दशा, तद् तदा अतिरसिकः पथिकः, ललितं (युवत्या विलासम्) अनवेक्ष्य अननुभूय कथं चलति? अपि तु न चलति। विलासानुभवार्थमेव स सुन्दरीसदनं प्राविशदित्यर्थः ॥ १८ ॥



# विहारिविलासः

[ व्रजभाषासर्वस्वमियं विहारिसूक्तिः, सुरसरित्संमिलिता सूरतनयेव (यमुना), सुरसरस्वती समाश्रितापि सुधीभिः समधिकं समादरणीया स्यादिति सेयं सुबहोः समयात्पूर्वमेव मया संस्कृतसरस्वत्यां सुबहुतरमवतारिताऽभूत्। दोहासदृशे स्वल्पावकाशे छन्दसि, विहारिमहाकविरेतादृशमसीमव्यङ्ग्यार्थमतुलमपूर्वं कवयामासेति को वा व्रजभाषायै विहारिणे च प्रशंसामुखरमुखो हृदि स्थानं न दद्यात्।

यद्यपि व्रजभाषायामक्षराणां लघुगुरूकरणम्, रूपान्तरकरणमित्यादिरपभ्रंशप्रकार एव तत्र सुबहु सहायकः, परमेवं सौकर्याभावेपि, प्रत्युत सन्धि-संयुक्ताक्षर-द्विवचनभेदादि-संकटसहस्रसांमुख्येपि सेयं विहारिसुभाषित-नीवी संस्कृतेऽप्यानेतु शक्या न वेति चेत.प्रत्यय एव चापलाय प्रचोदितवान्।

अस्माकं सजातीयः कथंचित्सम्बन्धी च बुन्देलखण्डाभिजनो लल्लोपनामकः परमानन्दपण्डितोपि भारतेन्दुहरिश्चन्द्रस्य समये विहारि-सप्तशतीं संस्कृतेऽनूदितवान्। परमस्मिन्ननुवादे भूयान्विवाद एव। व्याकरणनियमानां तु सोयं प्रत्यक्षमपवाद इव। विहारिसूक्तेरर्थसंवादेपि (संगतौ), प्रायः

१ जिगमिषति पितृसदनमारिरमिषती पतिमेव।
सा तन्वी त्यजति तनु दुर्योधनसममेव ॥ ३ ॥

उभयत्र जिगमिषन्तीत्यादिनुम् स्यात् आरिरमिषन्तीत्यप्यशुद्धम्, सकर्मकमपि न। उत्तरार्धेऽक्षरनिवेशं विना छन्दोभङ्गः। 'सगच्छतः सहैव (१६१)' 'सा जजम्भ भेजे पुनः' (२२६) 'रसमपि बुध्यसि नैव' (७८५) 'पुनर्मिमिलतुः विश्यतुः पुनरासतुः शयेपि' (२०४) 'छलयित्वा सहचरिगणं बिन्दुमिषेण ववन्द' (८९) 'विरहाग्निना बभास' एवंविधा परस्मैपदस्याशुद्धिर्वहुत्र।

प्रतिवाद इव दृश्यते। स्थाने स्थाने च चपलविप्र—वाद इव भाषानुगः प्रवाद एव बाहुल्येनावलोक्यते। अस्तु संस्कृतसरस्वत्यास्तमिममपवाद-मुन्मार्ष्टुमेवास्मिन्विषयेऽवतीर्णोऽभवमित्यास्तामतिवादः। एष विषयो भूमिकाभागे विशदीकृतः।

इदानीं यानि मयाऽक्षराणि योजितानि, तानि श्रीमतां पुरतः सभयकम्प-मुपस्थाप्यन्ते। संपूर्णायाः सप्तशत्याः प्रकाशनस्यावसरो भवेन्नवेति 'दोहा-

---

'चरणौ विषमगतीव' (१९७) सन्ध्यशुद्धिरेवंविधा बहु.। 'गगनमंशुमालीकरैः' (१४९) दीर्घाशुद्धि'। 'चातुरतया (१४१) भावस्य भावः। कराङ्गुलिना पस्पर्श' (२८१) लिङ्गव्यत्ययः। 'चित्तं चकितमिवासते' (१८०) आस्ते इति स्यात्।

एवकारः स्थाने स्थानेऽनावश्यकः यथा—'प्रीतिः कृष्ण तवैव। (३०१) 'कर्षति मनो ममैव' (३०७) इत्यादि.

एक बह्वादिवचनान्यनावश्यकानि यथा—'न चलसि हितमिलनाय किं सखि सन्ध्यासमयेषु' (१५५) इत्यादि.

'लसति ललाम' ललाममिति स्यात् (४)

'टटकी धोई धोवती चटकीली मुखजोति। लसति रसोईके वगर जगरमर दुति होति (२३४) अस्यानुवादः 'विदलीकृतसूपस्य सा परिमार्जनं करोति।' सूपमार्जनं कुत आयातम्?

सटपटाति सी ससिमुखी मुखघूंघट पट ढाकि। पावक झरसी झमकिकैं गई ओचकौं झाँकि (४८०) 'द्रुतं चन्द्रवदना च सा वसनावृतवदनैव। प्रदर्शयित्वा? निजतनुं दहनलतेव गतैव।' एवकारस्य स्वारस्यं तु गच्छतु परं क्व विहारिणोऽर्थः?

'तिय तिथि तरनि किसोरवय पुन्यकाल समदौन।
काहू पुन्यन पाइयत वैससन्धि संक्रौन॥'
'शैशवतस्तरुणीतिथौ यदा मदनरविरेति।
तारुणसंक्रमकालमतिधन्यः कोपि तमेति॥'

अस्मिन्ननुवादे कैशोरं गलहस्तयित्वा मदनः कथं रविर्जातः? शैशवादग्रे सहसैव तारुण्यस्योदयः? कैशोरायार्धचन्द्रः? अर्थसंगमोपि विहारिणाभिप्रेतः कथम्? उभयचरणयोः 'एति' 'एति', पौनरुक्त्यहेतिं वाचकेषु प्रक्षिपति।

चत्वर' प्रसङ्गादुपशतानि पद्यानि, उपह्रियन्ते तावत्। भाषानुकूलो भावः, उभयार्धयोरन्त्यानुप्रास. (तुकान्त), संस्कृतभाषार्थमेतावच्छन्द', इत्यादि सर्वं संकटजातमवधार्यैव समीक्षणीयं भवेत्सहृदयैरिति त्वनावश्यकमेव निवेदनं निपुणेषु।

## —॥ मङ्गलम् ॥—

**भववाधामपनयतु मे, राधा सा मतिधाम।**
**श्यामो हरितद्युतिमयति, यत्तनुकान्त्या नाम ॥ १ ॥**

१—मतिधाम, बुद्धेर्विश्रामस्थानम् (अजहल्लिङ्गम्), अर्थात् भवबाधाहरणे अतिप्रवीणा (नागरी) सा राधा, मे भवबाधां जन्ममरणपीडाम्

---

डर न टरै नीद न परै हरै न कालविपाक। दिन छनदा छाकी रहत छुटत न छिन छविछाक॥ 'न निद्रासि न विभेषि सखि, नापैति च समयेन। तद्रूपासवमदो हो अहोरात्रमदनेन॥' केयं लीला? कदाचिन्नायिका संवोध्यते, कदाचिद्रूपासवमदः कीर्त्यते! दो हो अहोरात्रेत्यहो माधुर्यम्!

'लालन लहि पाये, दुरै चोरी सौंह करे न।' एतदनुवादः 'तस्करता शपथैरियं न हि गुप्ता भवतीह'। अहो 'लालने' तस्करता कियती शोभते! (७९)

'टटिया ऑगुरिन फारि।' एतदनुवादे 'सा गवाक्षनिहिताङ्गुली' इति तृणवृत्तेर्गवाक्षता जाता।

'विविदतु' स्पर्शपरीक्षया मुमुदाते च सुखेन।' एवंविधाश्छन्दोऽङ्गभङ्गास्तु स्थाने स्थाने।

'सभखचित्रवसनावृताम्।' भैर्नक्षत्रैः सहितं यत् खं तद्वच्चित्रवसनावृताम्। अहह! विहारिसूक्तिरनेन 'भखनेन' कियत्पुष्टा जाता!

'सखि सोहत गोपालके उर गुञ्जनकी माल।' 'गुञ्जपुञ्जकृतमालिका' 'मधुपतिहृदयेऽतीव।' इति गुञ्जपुञ्जेन सोयमनुवादो 'लुञ्जपुंज' इव प्रतीयते।

अत्र हि स्थालीपुलाकन्यायः। परमानन्दे शतातपरमानन्दाः।

'मेरी भवबाधा हरो राधा नागरि सोइ।
जा तनकी झॉई परैं स्याम हरितदुति होइ ॥ १ ॥'

अपनयतु नाम (पादपूरणार्थकम्) यस्याः (राधायाः) तनुकान्त्या शरीरस्य द्युत्या । श्यामः श्रीकृष्णः (व्रजभाषोचिता संज्ञा)। हरितद्युतिः प्रसन्नमुखशोभायुक्तो भवति । यस्यां श्रीराधायां समीपमागतायामिव श्रीकृष्णो म्लानिं विहाय पुनर्नवतां धारयति, सा राधा अस्माकं (भक्तानाम्) सांसारिकदुःखमपनयत्विति भावः । अत्र 'हरित'पदम् भाषाप्रयोगानुसारं ['हरा भरा'] इत्याशयमादाय अतिप्रसन्नतार्थकम् । यथा—"मित्रं दृष्ट्वा तापशतेपि नरो हरितो ('हरा') भवति ।"

२—'हरित'पदस्य हरितरङ्गमादाय द्वितीयोऽप्यर्थो भवति । यस्या राधायाश्चम्पकवत्पीतवर्णया तनुकान्त्या श्यामः, कृष्णवर्णोपि श्रीकृष्णे हरितां हरिद्राभां द्युतिं धारयति, सा राधा । श्यामपीतयोः संभेदेन हरितो वर्ण उत्पद्यत इति सुप्रसिद्धम् । एवं च–पीतश्यामयोः संयोगेन यथा अपूर्वो-हरितो वर्ण उत्पद्यते, एवम् शक्तिब्रह्मणोरुभयोरनयोः परस्परसहभावमवलम्ब्य उपासनया चित्तमलं शोधयतां साधकानामपि अपूर्वा काचिच्छान्तिरुत्पद्यत इति ध्वन्यते ।

३—यस्यास्तनुकान्त्या शरीरध्यानेन कान्तिरिच्छा (अतएव ध्यानम्), अर्थात् यस्या राधायाः स्वहृदयमन्दिरे ध्यानोपासनया श्यामवर्णः कल्मषपातकादिस्तामसपदार्थः (पातकस्य वर्णः श्यामः), भाषाशैल्यनुसारं 'हरितद्युति' हृतद्युति (निष्कालुष्यम्) भवति, सा राधेत्यन्योप्यर्थः कैश्चिट्टीकाकृद्भिः कृतः, परं सोयं केवलं विहारिणि अतिभक्तिसूचकमात्रं हठादाकर्षणं निदर्शयति ।

अस्मिन् हिन्दीपद्ये 'झांई' 'हरित' शब्दावनेकार्थकौ । 'झॉई' परछांही (१) झाँकी झलक । (२) ध्यानपदस्यापभ्रंशेन 'झाँसा' स्वरूपमापाद्य क्रमक्रमेण 'झाँई' इति निष्पन्नस्य 'ध्यानम्' इति तृतीयोऽर्थः कष्टकल्पनया लभ्यते ।

ममानुवादपद्ये तु 'यत्तनुकान्त्या' अत्र कान्तिपदस्य कान्तिः' दीप्तिः, प्रकाशः, 'कान्तिः' शोभा, 'कान्तिः' इच्छा, इत्यर्थत्रयं सर्वत्र सुप्रसिद्धमनायासेन सम्पद्यते । तथा च—यस्या राधायास्तनुकान्त्या शरीरशोभया कृष्णो हरितः प्रसन्नो भवति । (१)

२—यस्या राधायास्तनुकान्त्या शरीरदीप्त्या (प्रकाशेन) श्यामवर्णः श्रीकृष्णः, हरितो हरितवर्णविशिष्टो भवति ।

३—यस्यास्तनुकान्त्या शरीरस्य कामनया 'मम हृदयरूपसहस्रारकमले श्रीराधामूर्तिराविर्भवतु' इति ध्यानेन श्यामवर्णः पातकादिरपवर्गप्रतिकूलः प्रत्यूहः 'भाषाशैल्यनुसारम्' हृतद्युतिर्भवति ।

यावदभिलषितः (क्लिष्टोऽक्लिष्टश्च) अर्थः सर्वोऽप्यक्षरेभ्यो निःसरतीति स्यात्प्रत्यक्षं प्रेक्षावताम् । किञ्च 'बाधा' 'राधा' इति पूर्वार्धगतोऽनुप्रासोपि यथावदाविर्भूय 'मतिधाम' इत्यक्षरैः साकमधिकां रुचिं पुष्णाति ।

कश्चिदस्य पद्यस्य शिवपरम्, कश्चिच्च मुखपिटक ('मुहांसे') हरणा-योग ('नुस्खा') परम्, अर्थमुद्भावयति, तदेतत्कौतुकमात्रमेवेति को न जानीयात् ।

'अयनय भवबाधाभयं राधे त्वं कुशलासि ।
हरिरपि धरति हरिद्युतिं यदि माधवमुपयासि ॥'

इत्यस्मत्संबन्धिनः परमानन्दपण्डितस्यानुवादे तु क्वानुप्रासः? दिगर्थस्य 'हरित्' पदस्य 'हरितवर्ण' रूपोऽर्थः क्व प्रसिद्धः? एकाभिधेयस्य 'हरि' 'माधव' पदद्वयस्य, एकत्र समावेशे को गुणः? इत्यादि बहु विचारणीयम् । किञ्च—प्रथमग्रास एव मक्षिकापातस्तु सोयम्, यत्—'राधा नागरिसोइ' सा राधा नागरी । इति प्रथमपुरुषस्य 'हे राधे!' इति मध्यमपुरुषकल्पनं परमानन्दस्योत्तमपुरुषतां न सूचयति ।

नवीनटीकाकारः, 'बी-ए' उपाधिधारी रत्नाकरोपनामा जगन्नाथदासोपि अस्य पद्यस्य हिन्दी टीकायां "(हे वही राधा नागरी! मेरी भवबाधा हरो।)" इत्यर्थं मुहुर्लिखन् सहृदयैः प्रष्टव्यः 'राधा नागरी सोइ' (सा नागरी राधा।) मे भवबाधां 'हरो' (हरतु) इत्यर्थे प्रत्यक्षं दृश्यमाने (हे सा राधानागरी!) इति चतुर्दशभुवनेषु कस्य भुवनस्य प्रयोगः? लोके वेदे, हिन्दीसंस्कृतयोरुभयत्रापि 'त्यदादेः संबोधनं नास्ती'ति प्रसिद्धम् ।

हरिप्रकाशादिषु केषुचिद्व्याख्यानेषु प्रौढिवादेन कुतोऽप्ययमर्थः ('सोय' को अर्थ, वेद पुरान तुमारी स्तुति करै हैं) इति जगत्प्रसिद्धरूपार्थेन वाक्यं

छित्वाऽतिक्लेशेन साध्यते। परं "है वही राधा नागरी" इति प्रयोगस्तु नाद्यावधि श्रुतः। अस्तु रत्नाकरोपि क्षारतां कुत्रचित्प्रकटयत्येव।

आशयमात्रप्रकाशकेऽस्मिन्व्याख्यानेऽलङ्कारादिविचारस्तु न प्रस्तूयेतेति तदेतत्सर्वमन्यतोऽवसेयम्।

## —श्रीकृष्णशोभावर्णनम्—

**शिरसि मुकुटमधिकटि ललितपटो, वेणुरधिपाणि।**
**मालोरसि, तावकमिदं रूपं हृदि करवाणि॥ २॥**

हे हरे! शिरसि मुकुटम्, अधिकटि कटिदेशे ललितः पटः, नटैर्धारणीयं वस्त्रमित्यर्थः। अधिपाणि पाणौ वेणुः (वंशी), उरसि माला (वैजयन्ती)। सर्वत्र 'अस्ती'त्यध्याहार्यम्। इदं एतदुपरिवर्णितं तावकं रूपं हृदये धारयाणि। एतत्तव रूपं सदा मम हृदये वसेदिति आशासे। आशिषि लोट्॥२॥

**राजति गुञ्जामालिका वक्षसि मुरमथनस्य।**
**लसति निःसरन्ती बहिःशिखेव दवदहनस्य॥ ३॥**

व्रजवासिनां रक्षणसमये पीतस्य दावानलस्य बहिर्निःसरन्ती शिखा इव ज्वाला इव लसति। गुञ्जामाला यथा श्यामलोहिता भवति। एवम्, अग्नेरपि ज्वाला रक्ता, धूमसंबन्धेन कृष्णा च भवतीति द्वयोः साम्यम्॥ ३॥

**श्याममधुरमूर्तिर्हरिः पीतपटेन विभाति।**
**उषसि नीलमणिशैल इव बालातपेऽभियाति॥ ४॥**

---

'सीस मुकुट कटि काछनी, कर मुरली, उर माल।
ये बानिक मो मन बसो सदा बिहारी लाल॥ २॥'
'सखि! सोहत गोपालके उर गुंजनकी माल।
बाहिर लसत मनो वहै दावानलकी ज्वाल॥ ३॥'
'सोहत ओढ़ैं पीत पट स्याम सलोने गात।
मनो नीलमनिसैलपर आतप पर्‌यो प्रभात॥ ४॥'

उषसि बालातपे, उद्यतः सूर्यस्य अरुणे प्रकाशे अभियाति आगच्छति (प्राप्नुवति सति) नीलमणिशैल इव श्यामो हरिः पीताम्बरेण विभाति। 'आतपपर्यो प्रभात' इत्यस्य 'उष्णकरकोमलकरनिचयेन' इति परमानन्दानुवादे तु उद्यति सूर्ये उष्णकरता, आतपस्य करनिचय इति कल्पनमुभयमपि स्थूलम्। पीतातपे न यथा पीताम्बरसाम्यम्, तथा रज्जूपमितैः किरणैर्न परितः परिहितस्य पीतपटस्य साम्यम् ॥ ४ ॥

श्रवसि हरेः कुण्डलमिदं दीव्यति मकराकारि।
हृदयसदनमविशत्स्मरो लसति केतनं द्वारि ॥ ५ ॥

हरेः श्रवसि कर्णे, मकरवत् आकारो यस्य तादृशमिदं कुण्डलं शोभते। अत्र गम्यामुत्प्रेक्षां युनक्ति—स्मरः कामः कृष्णस्य हृदयरूपं सदनं प्राविशत्, प्रवेशस्य द्वारे च स्वस्य चिह्नभूतं केतनं (ध्वजः) लसति। कामस्य मकर एव ध्वजः। श्रीकृष्णस्य शोभां वर्णयित्वा दूती कृष्णेन सह कांचन नायिकां संगमयितुमिच्छति। तथा च कर्णद्वारा तस्य रूपगुणादिशोभामाकर्ण्य सोयं हृदये कामाय स्थानं दत्तवानत एव एतादृशेऽनुकूले नायके तव कृपा उचितैवेति व्यङ्ग्यम्। अत्र 'सुरतिमिश्रम्' अनुसरन्पद्मसिंहः—मनोगृहस्याधिकारी राजा स्मरः सांप्रतं स्वदुर्गेस्तीति सूचकं चिह्नभूतं केतनं द्वारि लसति। (जब राजा किलेके अन्दर होता है तो इस बातकी सूचनाके लिये, बाहर झंडा लहराता रहता है) इत्यादि अर्थ प्राधान्येन—आह। परं नेदं विहारिणोऽर्थानुगुणम्। 'धस्यो' इति पदेन हृदये कामस्य प्रवेशो निधेयत्वेन वर्ण्यते, नासीत्पूर्वं स तत्र अत एव दूत्या सखीं प्रति—त्वद्गुणश्रवणेन सांप्रतमयं त्वदनुरागी जातः, कामश्चास्योत्पन्न इति व्यज्यते। पूर्वमेव कामस्याधिकारे तु किं स्वारस्यम्? उक्तमपि पूर्वानुरागे—"श्रवणाद्दर्शनाद्वापि मिथः संरूढरागयोः" इत्यादि। नायिकां प्रत्युक्तिप्रसङ्गे नायिकाया एव हृदयेऽधिकारो वर्णयितुमुचितेऽपि कामस्तु तत्र सहायक एव। हृदयाधिकारिणी तु नायिकैव स्थाने स्थाने कल्पिता कविभिरित्यलम् ॥ ५ ॥

---

'मकराकृति गोपालके कुंडल सोहत कान।
धस्यो मनों हियधर समर ड्योढ़ी लसत निसांन ॥ ५ ॥'

बर्हिमुकुटचन्द्रकचयैर्मधुरिपुरिति परिभाति ।
शशिशेखरविजिगीषया शशिशतमिव निदधाति ॥ ६ ॥

बर्ह(मयूरपिच्छ)युक्तमुकुटस्य चन्द्रकचयैः (चन्द्राकारैः पिच्छशिरोदेशैः) मधुरिपुः कृष्णः, इति इत्थं शोभते । शशिशेखरस्य (शिवस्य) विजयेच्छया शेखरे चन्द्रशतं निदधाति इव । शिवेन केवलमेकश्चन्द्रः (सोपि खण्डितः) शिरसि धारितः, कृष्णस्तु चन्द्रशतमिव धारयतीति भावः ॥ ६ ॥

पीतपटाधरदृक्छटाविच्छुरिता हरिताऽपि ।
अधरधृता हरिमुरलिका सुरपतिधनुरिव भाति ॥ ७ ॥

पीताम्बरस्य, अधरस्य, दृशोः (नेत्रयोः)श्च, छटया कान्त्या विच्छुरिता मिलिता; स्वयंच पूर्वत एव हरितवंशनिर्मितत्वात् हरितवर्णा हरेः अधर-धृता, हरेर्मुरलिका । पूर्वोक्तैर्वर्णैः, इन्द्रस्य धनुरिव भाति । श्रीकृष्णे मुरलि-कामधरे धारयति सति, कृष्णधारितस्य पीताम्बरस्य पीता, अधरस्य शोणा, दृशोश्च पाटला श्यामा वा, कान्तिस्तत्र परिपतति । स्वयं हरितवर्णस्तु मुर लिकायामस्त्येवेति नानावर्णैः सा इन्द्रधनुरिव शोभते । शब्दालङ्कारो भाषा यामत्र च, बन्धं विशेषतो बन्धुरयति ॥ ७ ॥

### —※ मुग्धाया वयःसन्धिः ※—

गता न शिशुताद्युतिरितो यौवनमङ्गमुपैति ।
द्विविधरङ्गकौशेयमिव तनुराभ्यां रुचिमेति ॥ ८ ॥

---

'भोर मुकुटकी चन्द्रिकनि यों राजत नँदनन्द ।
मनु ससिसेखरकी अकस किय सेखर सतचन्द ॥ ६ ॥'
'अधर धरत हरिके परत ओठ-दीठि-पट-जोति ।
हरित बांसकी बाँसुरी इन्द्रधनुससी होति ॥ ७ ॥'
'छुटी न सिसुताकी झलक झलक्यो जोबन अङ्ग ।
दीपस्य देह दुहूंनि मिलि दिपति ताफता रङ्ग ॥ ८ ॥'

शैशवस्य द्युतिः न गता। शैशवं तु समाप्तम्, परं तस्यानिर्वचनीया काचिद् द्युतिरवशिष्यत एव, पूर्णतया न गतमित्यर्थ.। इतः (पक्षान्तरे), यौवनम्, अङ्गम् (कर्मकारकम्) उप एति। समीपे आगच्छति स्पृशतीत्यर्थः। पूर्णतया यौवनस्यागमनं न किन्तु तस्य स्पर्श एव जातः। पूर्णतया बाल्यमपि न गतम्, यौवनमपि स्पष्टतया अङ्गेषु नोद्भूतमिति सोयं वयसोः सन्धिः। अतएव—द्विविधरङ्गयुक्तं कौशेयमिव धूपछांहरङ्गयुक्तं 'रेशमीवस्त्रम्' (इव) आभ्यां शैशवयौवनस्पर्शाभ्यां तनुः मुग्धायाः शरीरं रुचिम्, अनिर्वचनीयां शोभामेति। 'धूपछायां' नाम्ना प्रसिद्धे कौशेयवस्त्रे द्वाभ्यां रङ्गाभ्यां यथा शोभा, तथा मुग्धाया अङ्गे शैशवयौवनाभ्यां शोभा भवतीत्याशयः। 'द्विविधरागमम्बरमिव द्वैरूप्यं च दधाति।' इति परमानन्दस्तु वैरूप्यमेव प्रकाशितवान्। 'दुहून मिलि, ताफतारङ्ग दिपति' इति विहारिणोऽक्षरैः द्वावपि रङ्गौ एकत्र मिलिताविति भाव। न तु तत्र द्विरूपता। यथा 'धूपछांया' वस्त्रे द्वयोर्वर्णयोरेकीभावः ॥ ८ ॥

सुतनुतिथौ कैशोररविरुदयति शुभपर्वेति।
वयःसन्धिसंक्रान्तिरतिपुण्यैः कस्यचिदेति ॥ ९ ॥

सुन्दरतनुयुक्ता मुग्धा नायिका एव तिथिस्तस्याम्। कैशोरं किशोरावस्थारूपो रविरुदेति, आगच्छति। शैशवरविर्गच्छति। इति; अस्मादेव हेतोरिदं शुभपर्व। द्वादशसु मासेषु, द्वादशनामभेदा द्वादश रवयस्तपन्ति। एकस्य मासस्य समाप्तौ, एको रविर्गच्छति द्वितीयश्चोदेति। एवं सुतनु-(स्त्री) रूपायां तिथौ शैशवनामको रविर्गच्छति कैशोरनामकश्च रविरुदेति, अयं द्वयोर्गमनागमनकालः अतिपुण्यः, अत एवेदं शुभपर्व। सोयं द्वयोर्वयसोः सन्धिः कस्यचिद्भाग्यवतः अतिपुण्यैरेति प्राप्यते। 'वयःसन्धि' पदानुरोधादेवंप्रकारेण वयोद्वयस्य समागम आवश्यकः। अतएवायमर्थ इति 'हरिप्रकाशः'। 'विहारिरत्नाकर'स्तु 'तियतिथि तरुन-किसोर-वय' इति

---

'तिय तिथि तरनि-किसोरवय पुन्यकाल सम दौन।
काहू पुन्यन पाइयत वैस संधि संक्रौन ॥ ९ ॥'

पाठमाह। परं यदा 'तिय–तिथि' इति स्त्रियां तिथित्वमारोपितम्, एवं वयसि सूर्यत्वारोपं विना संक्रान्तिः न घटत इति क्लेश एव।

## अङ्कुरितयौवना मुग्धा

बालाऽलौकिकशैशवं वीक्ष्य सखी सुखमेति।
एषु दिनेषु निरीक्ष्यतेऽङ्कुरितमुरसि समुदेति॥ १०॥

बालायाः अलौकिकम् अपूर्वम् (कैशोरस्य+संभेदेनानुपमम्) शैशवं वीक्ष्य सखी प्रसन्ना भवति। जातावेकत्वमिव, उपलक्षणे एकत्वम्। सर्वा एव सख्यः सुखं प्राप्नुवन्ति। एषु दिनेषु तस्या उरसि, अङ्कुरितं वक्षोजयोरङ्कुरणम्, उदेति उद्भवतीति दृश्यते॥ १०॥

## नवागतयौवना मुग्धा

निजाङ्गानि मत्वाभिनवयौवननृपतिवरेण।
स्तन-नितम्बदृक्चेतसां रचितोन्नतिरचिरेण॥ ११॥

अभिनवागतेन यौवनाभिधेन नृपतिवरेण, स्तननितम्बादीनि निजस्य अङ्गानि मत्वा, स्तनयोः नितम्बस्य दृशोः, चेतसश्च, अचिरेण उन्नतिः रचिता कृता। यौवनस्याविर्भावः स्तनादिष्वेव भवतीति एतानि स्वकीयानि मत्वा, यौवननरेशेन स्तनयोस्तुङ्गतारूपा, नितम्बस्य घनविशालतारूपा, नयनयोश्चाञ्चल्यकटाक्षरूपा, मनसः शृङ्गारकामनासु प्रचलनरूपा उन्नतिः कृता इति भावः। नवीनमधिकारं प्राप्य यथा कश्चिद्राजा स्वसहायकानां पदवृद्धिं करोत्येवं यौवननृपेण स्वीयाङ्गानामुन्नतिः कृतेत्याशयः। अत्र 'नयन-नितम्ब, स्तन–हृदामाधिक्यं स दिदेश' इति परमानन्दानुवादे नयने अधिके जाते,

---

'लाल! अलौकिक लरकई लखि लखि सखी सिहाँति।
आज कालिहमें देखियत उर उकसौंही भाँति॥ १०॥'
'अपने अँगके जानिकैं जोवन–नृपति प्रवीन।
स्तनमननैननितम्बको बड़ो इजाफा कीन॥ ११॥'

त्रीणि नयनानि जातानि? नितम्बयोराधिक्यम्? त्रयश्चत्वारो वा नितम्बा जाताः? कोऽर्थः? आधिक्यस्य तथैवार्थदत्वात् ॥ ११ ॥

**नवललनातनुजनपदे यौवनसामन्तेन ।**
**कृतं वस्तु लघु गुरुतरम्, गुरु लघु कृतं बलेन ॥ १२ ॥**

नवललनायाः तनुरूपे जनपदे देशे, यौवनरूपेण सामन्तेन प्रान्ताधिपतित्वादधीयते राज्ञा, (कामचक्रवर्तिनाधीनेन) बलेन बलात्कारेण (अत्याचारेणेति यावत्) यद्वस्तु लघु तद् गुरुतरं कृतम् । यद् गुरु वस्तु आसीत्, तत् लघु कृतमिति सर्वत्र विशृङ्खला कृता । नवीनः कश्चित् शासको यदि देशेऽधिकारं प्राप्नोति, स च यदि बलात्कारे प्रवृत्तो भवति तदा, येषां भूम्यधिकारिणां देयः करो न्यूनो भवति तं वर्द्धयित्वा तानधः करोति येषां च देयोऽधिको भवति तम् (उत्कोचं गृहीत्वा) न्यूनं करोति । तथा च तान् भूम्यधिकृतानुन्नमयति एवं यौवनेन स्तननितम्बादीनां लघुत्वेपि गौरवमासादितम् । कटिप्रभृतेः पूर्वं गौरवेपि, सुभृशं लघुत्वं सम्पादितमित्याशयः । अत्रापि परमानन्दः 'यदि यौवनदेशाधिपस्तरुणीपुरं शशास । तत्र गौरवं लाघवं रुचिरं रचयामास ।' यदि चेदेवं स्यादिति संभावनास्ति, उत यौवनसामन्त आगतः? तत्र तरुणीपुरे गौरवं लाघवं रचयामास । अर्थात् लघुतरुणीपुरं गुरु चकार, गुरु तरुणीपुरं लघु चकार! सम्यक् तरुणीपुरस्य सम्यक्परीक्षको भवान् ॥ १२ ॥

**यथा यथा स्तनपरिमितिर्यौवनशुचिदिवसेऽति ।**
**वृद्धिमयति, कटिरजनिरपि तथा तथा क्षयमेति ॥ १३ ॥**

यौवनरूपस्य शुचेर्ज्येष्ठमासस्य दिवसे । "ज्येष्ठे शुक्रः शुचिस्त्वयम्" अमरः । यथा यथा स्तनरूपा परिमितिर्दिनमानम्, अति अत्यन्तं वृद्धिम्,

---

'नव नागरितन–मुलक लहि जोवन–आमिल जोर ।
घटि बढितैं बढ़ि घटि रकम करी औरकी ओर ॥ १२ ॥'
'ज्यौं ज्यौं जोवन-जेठदिन कुच-मिति अति अधिकात ।
त्यौं त्यौं छनछन कटि छपा छीन परत नित जात ॥ १३ ॥'

अयति ( याति ), तथा तथा कटिरूपा रात्रिः क्षयं गच्छति । ज्येष्ठमासे प्रतिदिनं दिनमानं बर्धते सर्वतोऽधिकं च वृद्धिं याति, रात्रिस्तु प्रतिदिनं क्षीयते । एवमेव यौवनरूपे ज्येष्ठमासे कुचरूपस्य दिनस्य मानं ( परिमाणम् आकारः ) क्रमशो वर्द्धते । रात्रिवत् कटिस्तु अत्यन्तं क्षीयते । अहो! मदनोप्ममयेन यौवनेन सह प्रचण्डज्येष्ठस्य रूपणं सम्यगेव ॥ १३ ॥

**उरसिजभारो भवदुरसि यौवनभरतो भाति ।**
**सरति सपत्नीहृदि, भराच्छ्वासः कठिनतयाऽति ॥ १४ ॥**

हे सखि ! भवत्याः उरसि, यौवनभरात् ( पूर्णयौवनात् ) उरसिजयोर्भारः ( पूर्णता ) भाति, तस्य भारात् सपत्नीनां हृदये, श्वासः अतिकठिनतया सरति आगच्छति । मांसलयोः कुचयोर्भरस्तव हृदये भाति । परं तद्भारस्य खेदात् सपत्नीनां हृदये श्वासः, अतिक्लेशात् प्रतिक्षणं रुध्यमान इवागच्छतीत्यसङ्गतिः । मूले यथा शब्दालङ्कारस्तथैवेहाप्यवलोक्यः । नायिकां प्रति सख्या उक्तिः ॥ १४ ॥

## ज्ञातयौवना मुग्धा

**मांसलतामनुगतमिदं किञ्चिदङ्कुरितकेन ।**
**निभालयति बालाऽविरतमुरो हारकपटेन ॥ १५ ॥**

किञ्चिदङ्कुरितकेन किञ्चित् कुचयोरङ्कुरणेन, अल्पार्थे कन् । मांसलतामनुगतम्, किञ्चिन्मांसलतां प्रति अवतीर्णम् । स्पष्टं कुचयोरङ्कुरणं न जातं किन्तु उरसि किञ्चिन्मांसलता आरब्धेत्याशयः । एतादृशम् उरः (वक्षःस्थलम्) सा बाला, शुक्तिनिर्मितस्य हारस्य दर्शनव्याजेन अविरतं पश्यति । अङ्कुरितकुचं स्वं वक्षःस्थलं नायिका पश्यति, परं किं पश्यसीति सखीभिः पृष्टे सति, हारदर्शनेन, तदपह्नुते इत्याशयः । लोभयितुं नायकं प्रति सख्या उक्तिः ॥१५॥

---

'बाढ़त तो उर उरजभर भरतरुनई विकास ।
बोझनि सोतनिके हिये आवत रूंधि उसास ॥ १४ ॥'
'भावक उभरौं हौं भयो, कछुक पर्यो भरुआय ।
सीपहराके मिस हियो निसदिन निरखत जाय ॥ १५ ॥'

## नवोढा मुग्धा

**वधूवपुषि यौवनविभा यथा यथा समुदेति ।**
**सकलसपत्नीमुखविभा तथा तथा क्षतिमेति ॥ १६ ॥**

नववध्वाः शरीरे यौवनस्य द्युतिः यथा यथा सम्यक् उदेति, वर्धते । तथा तथा सकलसपत्नीनां मुखकान्तिः क्षीणा भवति । एतादृशीं नवयौवनां विहाय, अस्मान्कथं दयितः प्रणयेतेति सपत्न्यो विषीदन्तीत्यर्थः ॥ १६ ॥

**नववधु! तव मुखदर्शने श्वश्र्वा गृहमचिरेण ।**
**सपत्नीभिरपि सौभगं दत्तं मनः प्रियेण ॥ १७ ॥**

नायिकां प्रति सख्याः सपरिहासमुक्तिः—हे नवोढे! तव मुखदर्शनोपलक्ष्ये, श्वश्र्वा (प्रियतमजनन्या), गृहम्, प्रियतमेन मनः, सपत्नीभिः आत्मनः सौभाग्यम् दत्तम् । नववधूर्यदा पतिगृहे प्रथमप्रथममायाति, तदा श्वश्रूप्रभृतयः प्रथममुखदर्शने नववध्वै किञ्चिदुपहारं ददति ('मुख दिखावनी') । तदेवाह—यद् त्वां रूपगुणशालिनीं विलोक्यैव श्वश्रूस्तुभ्यं सर्वं गृहकर्तृत्वं समर्पितवती । प्रियस्तु मुखदर्शन एव सर्वस्वं स्वमनस्तुभ्यं दत्तवान् । सपत्नीनां सविधे न गृहभार आसीत् । नापि मनः, तत्तु प्रियतमसादासीत् । अत एव प्रियतमकृतं यत्सौभाग्यं (पतिप्रेम) आसीत्तदेव दत्तम् । अर्थात् अग्रे प्रियतमस्त्वामेव दयितां कलयिष्यति, वयंतु दर्शनमात्रेपि कदाचिदेवाधिकारिण्यो भविष्याम इति । सख्याः सखीं प्रत्युक्तौ तु—'नववध्वा मुखदर्शने' इति पाठः । नववध्वा इति षष्ठी ॥ १७ ॥

---

'देहदुलहियाकी वढ़ै ज्यौं ज्यौं जोवन जोति ।
त्यौं त्यौं लखि सौतैं सवैं बदन मलिनदुति होति ॥ १६ ॥'

'मानहु मुखदिखरावनी दुलहिनि करि अनुराग ।
सासु सदन मन ललन हू सौतिनि दियो सुहाग ॥ १७ ॥'

→⁂ सलज्जा मध्या ⁂←

रते हरति वसनं प्रिये, दीपे ज्वलति पुरोऽपि ।
उदितदेहदीप्तित्विषा, ह्रीरियमतुलमगोपि ॥ १८ ॥

सुरते, प्रियतमे वसनमपनयति सति, पुरः संमुखे दीपे ज्वलति अपि। दीपकस्य प्रकाशेऽपीत्यर्थः। वस्त्रापनयनेन उदितया, सम्यक् प्रसृतया देहदीप्तेः देहशोभायाः, त्विषा प्रसरणशीलेन प्रकाशेन, वस्त्रापहरणसमये गच्छन्ती इयं ह्रीः लज्जा, अतुलम् अनुपमम् (सम्यक् यथा स्यात्तथा) अगोपि रक्षिता। वस्त्रे शरीरादपसरत्येव नायिकायाः शरीरकान्तेरेक ईदृशः प्रकाशस्तस्याः शरीरमाच्छादयामास, येन नायकस्य दृष्टिस्तस्मिन् न सम्यक्पतितुं शशाक। अत एव लज्जा सुरक्षिताऽभवदित्यर्थः॥ १८॥

⁂ समानलज्जाकामा मध्या ⁂

त्यजति न लज्जां लालसां पितृसदने प्रियमेक्ष्य ।
ससंकोचरति लोचनं ताम्यति रीतिमपेक्ष्य ॥ १९ ॥

पितृगृहे प्राप्तम्, प्रियम् आ—ईक्ष्य, लज्जामपि न त्यजति, लालसामपि न मुञ्चति। जनकगृहे स्थिता कथं लज्जां विहाय प्रियं पश्येदिति लज्जा। रात्रिंदिवा यस्य हृदि ध्यानमासीत्स एव प्राणवल्लभः समायात इति दर्शनलालसा। उभयमपि समानबलत्वान्न त्यक्तुं शक्यत इत्यर्थः। अतएव—संकोचः, रतिः (स्नेहः) आभ्यां सहितं लोचनम्, पितृगृहनिवासस्य सलज्जा रीतिं अपेक्ष्य अनुरुध्य, ताम्यति व्याकुलं भवति। एकत्वमुपलक्षणमात्रम्। द्वयोर्नेत्रयोरभिप्रायः॥ १९॥

---

'दीप उजेरेहू पतिहिं हरत बसन रतिकाज।
रही लपटि छबिकी छटनि, नैको छुटी न लाज॥ १८॥'

'छुटै न लाज न लालचौ प्यौ लखि नैहर गेह।
सटपटात लोचन खरे, भरे सँकोच सनेह॥ १९॥'

—⁂ समदनोन्मादा प्रौढा ⁂—

वीक्ष्य मानशयितां प्रियो दयितामनु सुष्वाप ।
स्वप्नमिलनमिषतः प्रियाहृदयालिङ्गनमाप ॥ २० ॥

प्रियः, प्रियां मानकोपात् शयितां वीक्ष्य, दयितामनु दयितायाः समीपे सुप्तवान्। अनुनयं स्वीकुर्यान्न वा इति विचार्य तस्याः समीपे प्रियः सुष्वापेत्यर्थः। प्रिया, स्वप्ने यन्मिलनम् ( अर्थात् शयानया नायिकया कश्चित्स्वप्नो दृष्टोऽस्ति, तस्मिन्नेव सा मिलतीति ) मेलनस्य मिषात्, प्रियतमस्य हृदयालिङ्गनं प्राप। 'पुनरपि मिलनं तया कदाचिदिति' वत्, गाङ्कुटादिरितिसूत्रे कुटस्यादि· कुटादिरिति कृत्वा मिलनमिति भाषामाधुर्यानुरोधात्स्वीकार्यम्। दयितोपि नानुनीतवान्। इयमपि 'विनाऽनुनयं मानस्त्यक्त' इति स्वलाघवं नाङ्गीचकार, सुक्त्या सर्वं कार्यं साधितवतीत्यर्थः ॥ २० ॥

—⁂ कुलवधूः ⁂—

वदति न देवरदुर्मतिं कुलजा कलहभयेन ।
मार्जारान्तिकपञ्जरे शुकीव शुष्यति तेन ॥ २१ ॥

निजोपरि आसक्तो देवरः कामाकुलतया यां दुर्मतिं धत्ते, तां कुलोत्पन्ना सा, द्वयोर्भ्रात्रोर्मध्ये कलहो भवेदिति भयेन न कथयति। तेन, एतेन हृदयमध्य एव सहनरूपेण, हृदयस्य पुटपाकेन। मार्जारस्य अन्तिके स्थापितो यः पञ्जरस्तस्मिन् स्थिता शुकी इव, प्रतिदिनं शुष्यति कृशा भवति ॥ २१ ॥

---

'सोवत लखि मन मान धरि, ढिंग सोयो प्यौ आय ।
रही सुपनकी मिलन मिलि तिय हियसौं लपटाय ॥ २० ॥'

'कहति न देवरकी कुमति कुलतिय कलह डराय ।
पंजरगत मंजार ढिंग सुकलौं सूकति जाय ॥ २१ ॥'

## ⁂ प्रेमगर्विता परकीया ⁂

पदलग्नं कण्टकमिदं म्रियमाणामवति स्म ।
प्रीतिमञ्जयन् भीतितः प्रियो यदपनयति स्म ॥ २२ ॥

पदे लग्नमिदं कण्टकम्, म्रियमाणां माम् रक्षितवत् । यदीदं पदे नालगिष्यत् तर्हि विरहविकलाहं अमीरुयम् । यस्माद्धि प्रीतिं प्रकाशयन्, भीतितः भयपूर्वकं प्रियतमो यत् कण्टकं अपनीतवान् । कंटकोद्धारव्याजेन अङ्के नायिकायाश्चरणे नायकेन समारोपितः, सा च प्रियाङ्गसंस्पर्शमवाप्य विरहकण्टकं विशोधितवती । अत एव कण्टकं म्रियमाणां नायिकां जीवयामासेत्याशयः । अहो एतादृश्याः शिरीषकोमलाङ्ग्याः कण्टकव्यथा जाता इत्यादि प्रेमप्रकाशनम् । कण्टकोद्धारसमये—कण्टकाग्रं पदे न त्रुट्येत्-निःसारणे च कोमलाङ्ग्यास्तस्या व्यथा न भवेदिति भयप्रकाशनम् ॥ २२ ॥

वदति निषिध्यति रज्यति, द्वेष्टि मिलति जिह्रेति ।
सदने बहुलजनेपि सा, नयनेनाऽऽलपतीव ॥ २३ ॥

नयनद्वारा किञ्चित्कथयति, किञ्चिन्निषिध्यति । प्रेमाणं प्रकाशयति । द्वेष्टि, रुष्टा भूत्वा प्रेमप्रतिवादं करोतीत्यर्थः । एवं जनसंकुलेपि भवने, युक्त्या सा नयनद्वारा वार्तालापमिव करोति । इयं नायिकायाश्चेष्टा, एवमेव नायकोपि वदति निषिध्यति० । इति द्वावपि नयनेनालपतः, इति द्विवचनाभिप्रायो विहारिणः एकवचनेन प्रदर्शितः ॥ २३ ॥

---

'इहि कांटे मो पाय लगि लीनी मरति जिवाय ।
प्रीति जनावत भीतिसों मीतजु काढ्यो आय ॥ २२ ॥'

'कहत नटत रीझत खिजत मिलत लजियात ।
भरे भौनमें करत हैं नैननिहीं सब बात ॥ २३ ॥'

## —⊰ नदीतटे नायिकया मेलनम् ⊱—

स्नात्वा सा परिधाय पटमनमत्तिलकमिषेण ।
प्रियमाज्ञाप्य गृहानगाच्चञ्चलदृक्प्रसरेण ॥ २४ ॥

यदा नायिका यमुनायां स्नाति स्म, तदैव रसिकवरः श्रीकृष्णस्तत्रागतः । क्रियाविदग्धा सापि स्नात्वा, वस्त्रं परिधाय, तिलकरचनस्य मिषेण, हस्तयोरुत्थापनद्वारा प्रियम् अनमत् । अथवा, यमुनातटे वट्टोपरि देवमूर्तीनामग्रतः तिलकसामग्रीमादर्शादिकं च नीत्वा बहवो देवलकास्तिष्ठन्ति । ते कृतस्नानेभ्यो जनेभ्यस्तिलकं ददति, तद्दत्तं ताम्रखण्डादिकं च गृह्णन्ति । तथा च नायिका वृद्धदेवलकसकाशात् अवनता भूत्वा तिलकग्रहणव्याजेन नायकं प्रणनामेति भावः । चञ्चलेन दृक्प्रसरेण (कटाक्षेण) गन्तुं प्रियमाज्ञाप्य अनुमतिं दत्वा, निजगृहानगमत् । इह सर्वजनसंकुले कालिन्दीकूले तु कृपां कुरु । इदानीं गृहमेव एहि, अहं तत्रैवागच्छामीति नायकमाज्ञापितवतीत्याशयः ॥ २४ ॥

## —⊰ वाग्विदग्धा स्वयंदूतिका ⊱—

क्षणमातपमपनय पथिक ! मिलदलिपुञ्जमवेहि ।
यमुनातीरतमालगतमालतिकुञ्जमुपेहि ॥ २५ ॥

पथिक ! मार्गचलनात्परिश्रान्त ! क्षणकालम् आतपं निवारय । अवेहि जानीहि, किं ते हितकरमिति विचारय । किं तत्, तदाह—यमुनातीरे यस्तमालस्तस्मिन् गता (अर्थात् तमालवृक्षेण सहाश्लिष्टा या मालतीलता तस्याः कुञ्जम्, सौरभवशात् मिलन्तः अलिपुञ्जा यस्मिन्नीदृशमिमं संमुखस्थमुपेहि

---

'न्हाय पहिरि पट, उठि कियो बेंदी मिस परनाम ।
दृग चलाय घरकों चली बिदा किये घनस्याम ॥ २४ ॥'

'घाम घरीक निवारिये कलित ललित अलिपुंज ।
जमुनातीर तमाल तरु मिलित मालती कुंज ॥ २५ ॥'

आगच्छ। आतपक्लान्तस्त्वं यदि शीतलं सुगन्धं तमालमालतीभ्यामाच्छादितत्वात्प्रच्छन्नं स्थानं सांप्रतं गमिष्यति, तर्हि न कोप्यन्यथा ज्ञास्यति। अहमपि च तत्रायास्यामीति व्यङ्ग्यम्। किञ्च यथा तमालेन सह मालत्याश्लिष्टा एवमावयोरपि सङ्गो भवेदिति 'तमालगतमालती'पदेन स्वाभिप्रायो ध्वनितः। मूले छेक-वृत्त्यनुप्रास एव इहोत्तरार्द्धे—'तमाल' 'त—माल'ति कुञ्जेति यमकोपि ॥ २५ ॥

## —॥ नायिकानायकयोर्मिथो दर्शनम् ॥—

अधिगृहमाबद्धामचलदृष्टिरज्जुमारुह्य।
इतस्ततश्चेतो द्वयोरटति नट इवागृह्य ॥ २६ ॥

नायिकानायकौ स्वस्वसौधोपरि स्थितौ मिथः पश्यतस्तदाह—अधिगृहम् गृहे (गृहोपरि) आबद्धाम्—अचलाम् दृष्टिरूपां रज्जुमारुह्य, द्वयोरपि चेतः, आगृह्य आग्रहपुरस्सरं निर्भयमित्यर्थः। नट इव इतस्ततः अटति। नटो यथा निर्भयः सन् रज्जूपर्यारुह्य भ्रमति, एवं द्वयोरपि मानसं परस्परावद्धां दृष्टिमवलम्ब्य इतस्ततो गच्छति। न भयं करोति। इतस्तत इत्यस्याभिप्रायः—नायकस्य मनो नायिकापर्यन्तं गच्छति पुनर्लोकसकोचात्परावर्तते, एवं नायिकाया अपि मनो नायकपर्यन्तं याति, पुनः संकोचात्परावृत्यायातीति नटसाम्याय ॥ २६ ॥

द्वयोरमिलतां लोचने न निरुद्धे वसनेन।
सैन्यवृन्दमभिभूयते लघुनासीरबलेन ॥ २७ ॥

नायिकानायकयोर्द्वयोः लोचने सरभसम् अमिलताम् परस्परमयुज्येताम्। सूक्ष्मेण वसनेन न निरुद्धे अभूताम्। नायिकाया. मुखावगुण्ठनमतिसूक्ष्म'

---

'दीठि वरत बाधी अटनि चढ़ि दौरत न डरात।
इत उत तैं चित दुहुंनके नट लौं आवत जात ॥ २६ ॥'

'जुरे दुहुनिके दृग झमकि रुके न झीने चीर।
हलकी फौज हरौल ज्यौं परत गोलपर भीर ॥ २७ ॥'

मासीत्, अत एव सूक्ष्मपटं भित्त्वा नायिकाया नेत्रे, नायकनेत्राभ्यां सह बलिनायुद्ध्येताम्, इत्याशयः। दृष्टान्तमाह—लघुना स्वल्पशक्तिना नासीरबलेन अग्रसरसैन्येन (हेतुभूतेन), प्रधानं सैन्यवृन्दम् अभिभूयते आक्रम्यते। यदि अग्रे वर्तमानं रक्षकसैन्यं न्यून निर्बलं च भवेत्तर्हि, पृष्ठस्थितं प्रधानसैन्यं प्रतिपक्षेण पराभूयते। अत्रापि नायिकायाः अवगुण्ठनवस्त्ररूपं रक्षकसैन्यमतिसूक्ष्ममासीदत एव, पृष्ठस्थिते प्रधानसैन्यभूते लोचने युद्धसंरम्भः समापतित इत्याशयः। 'भित्त्वा पटमपि दृक्तयोरलभत वदनसुखानि'। इति परमानन्दः। वदनसुखानि, वदनावलोकनसुखानीति कथञ्चिदर्थे कृतेपि—परस्परं युद्धघटनावसरे सुखपदेन कथनं प्रकृतानुपयोगि। यदि सुखमेवासीत् तर्हि—पटद्वारा रक्षणस्य काऽवश्यकताभूत्? ॥ २७ ॥

अभयमयति रणसुभट इव, कोपि न तद्बध्नाति।
स्थले लक्षजनसंकुलेऽप्यक्षि लक्ष्यमुपयाति ॥ २८ ॥

रणशूर इव नेत्रं निर्भयं यथा स्यात्तथा, अयति गच्छति। तत् (नेत्रम्) कोपि जनो न निरोद्धुं शक्नोति। लक्षजनसंकुलेऽपि स्थले, अक्षि (नेत्रम्) लक्ष्यं (यद् आत्मनो निरीक्षणीयं भवति, तत्) उपयाति प्राप्नोति। नायिकानायकयोरुभयोर्नेत्रयो. परस्परसंघर्षस्य संकथेयम्। 'अक्षियुगं हरिणाक्षि तप गच्छति मधुपतिमेव' इति केवलं नायिकानेत्रमेव पस्पर्श परमानन्द. ॥ २८ ॥

सलज्जेव सा शशिमुखी मुखमवगुण्ठ्य पटेन।
दहनलतेव गता द्रुतं मामवेक्ष्य चकितेन ॥ २९ ॥

वास्तवे तादृक् लज्जा (दर्शनलालसावशात्) नासीत्तथापि सलज्जा इव सा चन्द्रमुखी, पटेन मुखं किञ्चिदपिधाय, चकितेन (सहसा, अतर्कितं

---

'पहुचति डटि रन-सुभट लौं रोक सकैं सब नाहि।
लाखन हू की भीरिमे आखि वहीं चलि जाहि ॥ २८ ॥'
'सटपटाति सी ससिमुखी मुख घूघटपट ढाकि।
पावक झरसी झमकिकैं गई औचकाँ झाकि ॥ २९ ॥'

किञ्चिद्भावोत्तेजकं वस्तु दृष्ट्वा य उद्भवति तेन भावेन) मामवेक्ष्य, अत्युज्ज्वलत्वात् अग्नेर्ज्वाला इव द्रुतं गता ! उज्ज्वलत्वेपि, अग्निज्वालायाः साम्यं नायिकायां व्रजभाषानुरोधादेव। वास्तवे तु 'ज्वाला' पदं हृदयज्वालायैव। अत एव किञ्चित्सरसतामाकर्ष्टुम् ज्वलतो वह्नेर्लताकारा इव, दृश्यमाना दहनज्वाला, दहनलता इति प्रायोजि। यदि महापण्डिता विरुध्येरन्, तर्हि 'अग्निशिखेव गता द्रुतम्' इति पठेयुः। मूले 'सटपटाति सी शशिमुखी'-त्येतत्पदं 'छटपटातीसी (मानो व्याकुल)' इति व्याख्यातवान्महापण्डितः पद्मसिंहः। परमानन्दस्यानन्दस्तु भूमिकायां प्रदर्शित एव ॥ २९ ॥

## दयितानुरागिणी

त्वमपि वदसि सखि, सुपटुतां स्वयमहमपि जानामि।
मोहनमेक्ष्य मनो वसेत्तदा मानमुपयामि ॥ ३० ॥

हे सखि ! त्वमपि सुपाटवार्थं बहु वदसि। स्वयम् अहमपि 'दयितेन साकं सगौरवं कथं व्यवहर्तव्यम्' इत्यादि सुपटुतां जानामि। परं मोहनं मोहकारकं तं नायकम्—आ—ईक्ष्य, यदि मनो मद्वशे वसेत्तदा मानं प्राप्नोमि, मानं कुर्यामित्यर्थः। नायकावलोकन एव नाहमात्मनः प्रभवामि, कथं मानं धारयेयमिति भावः ॥ ३० ॥

सततमीप्स्यमानोपि हृदि मानो न निपुणमेति।
यावानवगुण ईक्ष्यते, मनसि गुणः समुदेति ॥३१॥

हे सखि ! मम हृदि मानस्य सदा इच्छा भवति। परं सततम् ईप्स्यमानः, इष्यमाणोपि मानः हृदि निपुणं यथा स्यात्तथा न एति। मानस्य साधनाभावात् सम्यङ् मानो मम हृदि अवकाशं न लभते इत्यर्थः। यतो हि—

---

'तु हू कहति हौं आप हू समझति बहुत सयान।
लखि मोहन जो मन रहै तौ मन राखौं मान ॥ ३० ॥'
'रातदिवस हौंसै रहै मान न ठिकु ठहराय।
जे तो अवगुन ढूंढियै गुनै हाथ परि जाय ॥ ३१ ॥'

मानकरणार्थं यावान् दोषः (नायकस्य) ईक्ष्यते अन्विष्यते, मनसि गुण एव आगच्छति। दोषान्वेषणार्थं यावन्नायकचरित्रं विचारयामि तावदेव तस्य प्रत्येकवार्तासु गुणमेव पश्यामीत्याशयः॥ परमानन्दस्तु–'मानस्त्वयि रजनीदिनं न हि निश्चलतामेति। प्रिये विचिन्वति तेऽगुणे तद्धस्ते गुण एति॥' इति प्रहेलिकामाह। यदि सख्या नायकं प्रत्युक्तिरपि स्यात्तर्हि 'तव अगुणे दुर्वाक्यादिके विचिन्वति सति' इति व्याख्यायां अन्वेषकं दुर्वाक्यमस्ति, उत नायिकादिश्चेतनपदार्थः। अगुणे इति सप्तम्याः स्थाने द्वितीयां कृत्वा यस्मिन् कस्मिश्चन जने तव 'अवगुणं विचिन्वति सति' इत्यर्थः क्रियते, तर्हि प्रिये इत्यस्य कथं संगतिः। सर्वो जनः 'प्रिय' इति व्यपदेशं कथं कुर्यात्। नायिकायाः प्रियः सर्वस्य प्रियो भवेदिति बलात्कारो नास्ति। यदि नायिका अन्वेषणस्य कर्त्री तदा 'विचिन्वति सति' इति पुस्त्वं कथं घटेत? 'प्रिये नायके, तव अगुणं विचिन्वति' इति द्वितीयपक्षार्थस्य व्याख्यापि न संगच्छते, मानस्येच्छा नायकस्यास्ति उत नायिकायाः। यदि नायकदेव एव मानालीलां कर्तुमुत्सुकोऽस्ति, तर्हि विहारी बभ्राम, येन हि नायिकाया एव मानमुद्दिश्य पद्यमिदं प्रोक्तमित्यलम्॥ ३१॥

## प्रेमगर्विता

**तिलकमकृत कम्पितकरः प्रियश्चिबुकमुत्थाप्य।**
**कुटिलमटति साऽलिकतटे कुटिलतिलकमेवाप्य॥ ३२॥**

सात्त्विकोदयात्कम्पितः करो यस्य ईदृशः प्रियः, नायिकायाश्चिबुकमुन्नमय्य, तिलकम् अकृत, अकार्षीत्। सा गर्विता नायिका, अलिके ललाटे कुटिलं वक्रं जातमीदृशं तिलकमेव आ–आप्य गर्वेण वक्रं यथा स्यात्तथा भ्रमति। परमानन्दस्य 'विहरति कुटिलकृतेव।' इति 'कुटिलीकृता' इत्यर्थे अवाचकप्रायम्॥ ३२॥

---

'कियो जु चिबुक उठाय करि कंपित करि भरतार।
टेढी पै टेढी फिरै टेढे तिलक लिलार॥ ३२॥'

### लक्षिता

गतिरपरा, द्युतिरपि परा मुखे, चोक्तिरपरैव ।
प्रियहृदयारूढां वदति रूढा भ्रुकुटिलतैव ॥ ३३ ॥

मुखे द्युतिरपि परा । पूर्वं या नासीत्सा । उक्तिरपि अपरैव । वचनान्यपि गर्वव्यञ्जकान्यन्यान्येव वदसि । हे सखि ! ते अभिमानेन रूढा भ्रुकुटिलतैव, त्वाम्—एषु दिनेषु प्रियहृदये आरूढां वदति । नायिकां प्रति सख्या उक्तिः ॥ ३३ ॥

### खण्डिता

पक्ष्मसु वीटिरसोऽधरेऽञ्जनमलक्तमलिकेऽस्ति ।
रुचिररङ्गतः सङ्गतः सुस्वागतमिह तेऽस्ति ॥ ३४ ॥

नायिकाकर्तृकनेत्रचुम्बनात्पक्ष्मसु ताम्बूलरसः, त्वत्कृतनेत्रचुम्बनात् अधरे कज्जलम्, ललाटे अलक्तकम्, अस्ति । यद् अधररञ्जकं तन्नेत्रयोः, यन्नेत्ररञ्जकं तदधरे, यत्पादरञ्जक तच्छिरसि, एवं विचित्रक्रमतया रुचिरेण रङ्गेण अद्य संगतो भवान् । तेऽद्य सुस्वागतम् अस्ति । रुचिरेति विपरीतलक्षणया नायकं प्रत्याक्षेपाय । स्वागतमपि साकूतम् ॥ ३४ ॥

### प्रोषितपतिका

करपरिमर्दितकुसुममिव विह्वलिता विरहेण ।
सततसमीपसखीभिरपि परिचीयेत चिरेण ॥ ३५ ॥

'औरै गति औरै वचन भयो वदन रँग और ।
द्यौसकतै पिय चित चढी कहै चढौ हे त्यौर ॥ ३३ ॥'
'पलन पीक अजन अधर, धरैं महावर भाल ।
आज मिलेसु भली करी, भले वने हो लाल ॥ ३४ ॥'
'करके मींडे कुसुम लौं गई विरह कुम्हिलाय ।
सदा समीपिनि सखिनि हूं, नीठि पिछानी जाय ॥ ३५ ॥'

करेण परिमर्दितं बलवदुन्मथितं कुसुममिव, विरहेण उन्मथिता सा। सततं समीपस्थायिनीभिः सखीभिरपि, सैवेयमिति चिरेण (कथमपि) प्रत्यभिज्ञायेत। उन्मथिततया पिण्डिताकारं कुसुमं यथा चतुरोपि जनः अमुकमिति प्रत्यभिज्ञातुं न पारयेत्। एवं कुसुमकोमला सापि, व्याधिदशया एवमुन्मथिता, यथा सहचर्योपि न तां सहसा परिचिन्वन्तीत्याशयः॥ ३५॥

अवधिदिने व्यतियति विकलहृदया त्वासीदेव।
कुसुमितमेक्ष्य रसालमियमुन्ममाद भृशमेव॥ ३६॥

अवधिदिने व्यतिगच्छति सति, इयं विकलहृदया तु आसीदेव, इदानीम् रसालम् (आम्रम्) कुसुमितम् आ—ईक्ष्य, भृशमेव उन्ममाद। सांप्रतं वसन्तागमनेनोद्दीपितविरहा अतीव विकलतया उन्मत्ता जातेत्याशयः। अत्र 'अवधिदिनेऽतीतेथ सा कृशतरतनुरपरेव। कृता चूतकलिकाभिरपि विलसति विकलतरेव॥' इति परमानन्दः। 'टरी औधिके नाम' 'अवधिर्व्यतीत इति नाम श्रुत्वैवे'ति तात्कालिकेऽर्थे 'अवधिदिने अतीते' इति भूतकालप्रयोगः स्थूलः। 'हिय औरेंसीह्वैगई' इत्यस्य 'हृदये अन्यविधैव (अस्वाभाविकचित्तवृत्तियुक्ता) जाता' इत्यर्थेपि 'कृशतरतनुः अपरा इव जाता' इति वदन् कार्श्यकारणात् शरीरेणापरिचेया जाता' इति हृदयस्थाने शरीरकथां प्रस्तौति। किञ्च, ततोपि 'विकलतरा इव' न विकलतरा किन्तु विकलतरा इव दृश्यमाना इति इवशब्देन सर्वं लघूकरोति। म्रियमाणाया अपि 'विलसति' सम्यग् विलसति॥ ३६॥

## विरहे तापः

असहत तनुतापम्, वहन् शिशिरे शिशिरं वस्तु।
पापमभूत्प्रतिवेशिनो ग्रीष्मदिवसवासस्तु॥ ३७॥

---

'हिय औरै सी है गई टरी औधिकें नाम।
दूलै कर डारी खरी बौरी बौरे आम॥ ३६॥'
'सीरे जतननि सिसिर रितु, सहि विरहिन-तन-ताप।
बसवेको ग्रीषमदिननि पर्यो परोसिन पाप॥ ३७॥'

विरहिण्याः प्रतिवेशी जनः, शिशिरतौं हिमकर्पूरादिशीतलं वस्तु, वहन् उपयोगे नयन् सन्, समीपे वसन्त्याः तस्या विरहिण्याः तनुतापं (बलात्पवनद्वारा प्राप्यमाणं शरीरोत्तापम्) कथञ्चित् असहत सोढवान्। ग्रीष्मदिवसानां (न रात्रीणामपि। तत्र कदाचित् शैत्यमपि स्यात्) वासस्तु [अस्या विरहिण्याः प्रतिवेशे निवासस्तु] प्रतिवेशिनो जनस्य पक्षे पापमेवाऽभूत्। इदनीं प्रतिवेशिनोपि तत्र वस्तुं न शक्नुवन्तीति विरहसंतापस्य पराकाष्ठा। नायकं प्रति सखीकृतं नायिकाविरहनिवेदनमिदम्। "हिमरजनी हिमजलकणैरुपवसतामपयाति। अधुना तपनदिनेषु तत्काठिन्यं प्रतिभाति।" इति परमानन्दः। हिमजलकणद्वारा उपवसतां (उपवासं कुर्वताम्) कष्टाधदा हिमरात्रिर्व्यतीता, तदा ग्रीष्मदिनेषु काठिन्यं सम्यगेव। 'तत्काठिन्यम्', तस्य कस्य काठिन्यम्? अपोष एवार्थस्य। उपवासी 'प्रतिवेशी' इति तु निहतार्थमेव ॥ ३७ ॥

**घनतरशीतनिशास्वपि च वसनमार्द्रमपिधाय।**
**साहसेन संनिधिमयति सखीजनः स्नेहाय ॥ ३८ ॥**

घनतरं शीतं यासु, एवंविधासु शीतर्तुनिशास्वपि, ज्वालाया निवारणार्थम् अग्रे आर्द्रं वसनम् आच्छाद्य, स्नेहाय (स्नेहकारणात्) सखीजनः, साहसं कृत्वा तस्याः विरहिण्याः संनिधौ गच्छति। तस्याः शरीरात्तथा ज्वाला निःसरति यथार्द्रवस्त्रमग्रे कृत्वा अतिसाहसं कृत्वैव सख्यो गच्छन्ति, अन्यथा को वा गन्तुं पारयेदिति सख्या नायकं प्रत्युक्तिः। 'हिमतम्यामपि मधुपते! ससाहसस्नेहापि। तदुपस्थातुं न क्षमा सखी सजलवसनापि ॥' इति परमानन्दानुवादः कियत्सुन्दर इति दृश्यतां सहृदयैरेव। 'तत् ताम उपस्थातुमिति' तट्टीका ॥ ३८ ॥

**प्रवसन्ननयत्प्रियतमः सर्वसुखानि सहैव।**
**शिशिरनिशां नैदाघदिनमदधान्मां समयैव ॥ ३९ ॥**

---

'आडे दै आले बसन, जाडे हूकी राति।
साहस कै कै नेह वस सखी सबै ढिंग जाति ॥ ३८ ॥'
'चलत चलत लौं लै चले, सब सुख सग लगाय।
ग्रीषम बासर सिसिर निसि, पिय मो पास बसाय ॥ ३९ ॥'

विरहिणी सखीं प्रति वक्ति—प्रवासार्थं गच्छन् प्रियतमः सर्वाणि जीवनस्य सुखानि सहैव नीतवान् । शिशिरर्तोः रात्रिम्, नैदाघं दिनं च, मां समया एव मत्समीप एव, अदधात् अस्थापयत् । शिशिरर्तोः रात्रौ ग्रीष्मदिनमस्थापयत्, अर्थात् शीतरात्रिरपि विरहोत्तापाद् ग्रीष्मर्तोर्दिवस इव संतापकरी दीर्घा च प्रतीयते । निदाघदिने शीतरात्रिम् अदधात् । अर्थात् ग्रीष्मेपि कामवशात्कम्पमुपयामि इत्याकूतम् । अथवा—इदानीं मम रात्रयः शिशिरर्तोः सन्ति (अतिदीर्घाः) दिवसाश्च निदाघस्य सन्ति, (विरहखेदादतिदीर्घा उष्णाश्च) इति सामान्यार्थः । 'नीत्वा सर्वसुखानि वै गच्छसि रमणसहैव । शिशिरनिदाघनिशादिने त्यक्ते कथमत्रैव ।'' इति परमानन्दः । गमिष्यन्तं नायकं प्रति नायिकाया उक्तिः । यावत्कालं रात्रिदिने न यापिते तावत्, रात्रिः शिशिरस्य, दिनं निदाघस्येति अनुभवः कविप्रसिद्धविरहवर्णनानुकारितयाऽस्वाभाविक एव । 'त्यक्ते' इति भूतकालोपि विरुद्धः । यदा गमिष्यन्तं प्रति 'गच्छसि' इत्युच्यते तदा रात्रिदिने त्यक्ते इति कथं ज्ञातम् ? परमानन्दानुवादे विहारिस्वारस्यमिव रात्रिदिनयुगलमपि गच्छेच्चेत् को जानीयात् ॥ ३९ ॥

अहमेवोन्मादं गता ग्रामो वा नु जगाम ।
किमवबुध्य सोयं दिशति शशिनि शीतकरनाम ॥ ४० ॥

विरहवशात् अहमेव उन्मादं गता, किंवा सर्वो ग्रामो नु उन्मादं जगाम? सोऽयं ग्रामः, किं ज्ञात्वा चन्द्रे शीतकरेति नाम दिशति प्रयुङ्क्ते । प्रत्यक्षं तापकारकेऽस्मिन्कथं शीतकरत्वमित्याशयः । 'किमु मत्ता ग्रामे जना मत्ता किं त्वहमेव । ये वदन्ति सर्वे शशिं मुधा शिशिरकरमेव ॥' इति परमानन्दः मत्ता किं त्वहमेवेत्यनेन, अहं मत्ता अस्मीत्येव चन्द्रात्तापमनुभवामि इत्यर्थो निश्चीयते । न तथा विहारी वाञ्छति । 'शशिम्' इत्यपि रूपं लोकोत्तरव्याकरणसाध्यम् ॥ ४० ॥

---

'हौंही बौरी बिरह बस, कै बौरो सब गाम ।
कहा जानि ये कहत है ससिंहि सीतकर नाम ॥ ४० ॥'

→※ सोरठा ※←

विरहे शुष्यति देह, इतः स्नेह उपचयमयति।
वर्षति यदि मघवेह, यासो ह्रसतिः, यवाः स्थिराः ॥४१॥

विरहे देहः शुष्यति, परम् अपरतः स्नेहो वृद्धिम् याति। यदि इह (जगति) मघवा मेघो वर्षति तर्हि यवासः ('जवासा') ह्रसति शुष्यति। यवाः स्थिराः सुदृढा भवन्ति ॥ ४१ ॥

दो०–विरहपावके प्लुष्यते, वहति विलोचनवारि।
श्वासमरुति चोड्डीयते चित्तमहर्निशचारि ॥ ४२ ॥

अहर्निशं चरति वैकल्याद् भ्रमति ईदृशमिदमेकं मे हृदयम्, विरहाग्नौ दह्यते ज्वलति। विलोचनयोः वारि वारिणि जले। 'वार्' शब्दस्य सप्तमी। वहति, बलात् प्रवाह्य विवशमन्यत्र नीयते। श्वासपवने च उड्डीयते। अहो अस्य हृदयस्योपरि कियत्यो विपत्तयः। अग्निना ज्वाल्यते। वारिणा प्रवाह्यते। मारुतेन चोड्डायते। इत्याशयः। सर्वाः सप्तम्यः। 'तप्तं तद्विरहानलैः क्लिन्नं प्रीतिरसेन। खिन्नं वहसि हृदेव किं वीरं नयनपथेन ॥' इति परमानन्दः 'उड्यो उसास समीर' इति तु प्रथममेवोड्डाययामास। टीकायाम्–"हृदा खिन्नं गात्रप्रस्रवणरूपं वारि किमिति वहसि' इति प्रश्नमुत्थाप्य पुनः 'कीदृशं वारि, विरहानलेन तप्तम्, प्रीतिरसेन जलेन क्लिन्नम् आर्द्रतरमित्यादि विचित्रं वदति। जलमप्यनार्द्रं भवति किम्। यस्य आर्द्रतरता अत्र विधीयते ॥ ४२ ॥

१ यवा नवाः ॥ पाठान्तरम्।

'विरह सुखाई देह, नेह कियो अतिडहडहौ।
जैसें बरसे मेह, जरै जवासो जौ जमैं ॥ ४१ ॥'
'पजर्‌यो आगवियोगकी, बह्यो विलोचन नीर।
आठौं जाम हियो रहै, उड्यौ उसास समीर ॥ ४२ ॥'

चेदवलोकितुमभिलषसि देहदशामस्या हि।
तर्हि निभृतनीरवमिमामवलोकय ननु याहि॥ ४३॥

इति नायकं वक्ति—अस्या विरहिण्याः देहदशां स्वयं स्वनेत्राभ्यामवलोकितु वाञ्छसि। अस्मद्वचने तावान्विश्वासो नास्ति। तर्हि निभृतं गुप्तम्, नीरवं निःशब्दं यथा स्यात्तथा, (येन सा न विजानीयात्) याहि, तां च अवलोकय। तवागमनस्य हर्षेण तस्या दशा परिवर्तेत, परं गुप्तं यदि तां द्रक्ष्यसि, तदा मया यादृशी तस्या दशा वर्णिता सा ते प्रत्यक्षं भविष्यतीत्याशयः॥ ४३॥

कति वारान्न जगाद सा खद्योतानभिदृश्य।
अङ्गारा वर्षन्ति सखि! तिष्ठ गृहानधिविश्य॥ ४४॥

विरहतापेन व्याकुला सा खद्योतान् अभिदृश्य दृष्ट्वा—"हे सखि! अद्य अङ्गारा वर्षन्ति। एहि, गृहान् प्रविश्य, तिष्ठ" इति कतिवारान् न जगाद। अपि तु बहून् वारान् कथयामास। विरहवह्निज्वलितायाः चमत्कुर्वत्सु खद्योतेष्वपि अङ्गारबुद्धिरेवाभूदित्याशयः। नायकं प्रति नायिकाया दशां सखी वक्ति। कतिवारं न जगाद सा दृष्ट्वा खद्योतानि। वर्षति नभसोनिलमिति प्रविश प्रविश सदनानि॥' इति परमानन्दस्तु खद्योतानलयोरुभयोरपि क्लीवतामादिदेश। सखीं प्रति नायिकाया उक्तिरिति चिह्नमपि लोपयामास॥ ४४॥

## प्रेमगर्विता

क्षणमनक्ति छुपति क्षणं क्षणमावृणुते सेति।
मुकुरे प्रियखण्डितमधरमीक्षन्त्या दिनमेति॥ ४५॥

---

'जो वाके तनकी दसा देख्यौ चाहत आप।
तौ बलि नेक विलोकिये चलि अचका चुपचाप॥ ४३॥'
'विरह जरी लखि जीगननुं कह्यो न उहि कै बार।
अरी आउ भजि भीतरैं, बरसत आज अँगार॥ ४४॥'
'छिनक उघारत छिन छुवति राखत छिनक छुपाय।
सबदिन पियखंडित अधर दरपन देखत जाय॥ ४५॥'

क्षणं, प्रियखण्डितम् अधरम् अनक्ति उद्घाट्य प्रकाशयति। क्षणं तं स्पृशति स्पृशति। क्षणं सा तमधरम् आवृणुते आच्छादयति। इति मुकुरे प्रियदष्टमधरं वीक्षमाणायाः सर्वं दिनं व्यत्येति। सखीं प्रति सखी नायिकाया लीलां वक्ति। अनुदात्तेत्त्वलक्षणमात्मनेपदं क्षणमनित्यं स्वीकुर्वन्तु वैयाकरणाः, येन ईक्षन्त्या इति स्यात्। यदि तु सर्वथैव वक्रीभावस्तर्हि 'अवयत्याः (जानन्त्याः, पश्यन्त्या इति भावः) दिनमेति।' इति योजयितव्यम्। परमानन्दस्तु—'क्षणं क्षणं प्रियखण्डितं स्पृशति पिधत्ते करेण। दर्शयति कदाचित्स्वाधरं स्वं पश्यति मुकुरेण।' इति क्षणपदं प्रत्येकमसंबध्यापि छन्दसोऽङ्गभङ्गस्थाने स्थाने चकार ॥ ४५ ॥

## क्रियाविदग्धा

न समलपज्जनमध्यगा पुरतः प्रियमधिगम्य।
उरसि शिरसि सस्मितमसावधरत्करमवनम्य ॥ ४६ ॥

जनस्य बहिरङ्गलोकस्य मध्यगता, असौ नायिका पुरतः संमुखे प्रियं प्राप्य, संलापं न अकरोत्। सस्मितमवनम्य (प्रणम्य) उरसि शिरसि च करं धृतवती। कृष्णवर्णे केशपाशे हस्तविन्यासाद्रात्रौ आवयोः समागमः, उरसि, कुचयोः शंभुना साम्यात्तत्स्पर्शेन तच्छपथपूर्वकं सत्यता सूचितेत्यादि बहवोऽर्थाः परिज्ञेयाः ॥ ४६ ॥

## अतिरसाविष्टा

क्षणं चलेत्तिष्ठेत्क्षणं बाहौ प्रियमासाद्य।
हर्म्यतटात् पश्यति घटामबला तडिच्छटाऽद्य ॥ ४७ ॥

---

'हरषि न बोली लखि ललन निरखि अमिल सँगसाथ।
आँखिन हीमे हँसि धरयो सीस हिये पर हाथ ॥ ४६ ॥'
'छिनक चलति ठिठकति छिनक भुजप्रीतम गल डारि।
चढी अटा देखति घटा बिज्जुछटा सी नारि ॥ ४७ ॥'

क्षणं चलेत्। क्षणं बाहौ प्रियं प्राप्य, अर्थात् बाहुना कन्धरायां प्रियतममालिङ्ग्य तिष्ठेत्। अद्य एवंप्रकारेण, तडितश्छटेव च्छटा यस्या ईदृशी अबला, हर्म्यतटात् मेघानां घटामवलोकयति। विद्युदपि क्षणं चलति क्षणं मेघे तिष्ठतीति चाञ्चल्यात् वर्णदीप्तिभ्यां च तडित्तुल्या। मूलवदत्रापि तथैव शब्दालंकारः॥ ४७॥

---

## →⁂ नायिकाया रूपवर्णनम् ⁂←

## →⁂ मुखं चन्द्रः ⁂←



**तद्गृहमभितस्तिथिमहो पञ्चाङ्गादवयाति।**
**वदनविभाप्रतिभासतः प्रतितिथि पूर्णा भाति॥ ४८॥**

अहो जनः, तस्या नायिकाया गृहम् अभितः, गृहस्य समीपे। पञ्चाङ्गं (तिथिपत्रम्,) तद्द्वारा तिथिं जानाति। तस्या वदनविभायाः प्रतिभासतः (प्रकाशात्), प्रत्येकतिथौ पूर्णिमैव भाति। तस्याः गृहस्य समीपे प्रकाशद्वारा तिथिज्ञानस्यावकाशो नास्ति। यतः प्रकाशद्वारा तु सर्वैव तिथिः पूर्णिमा प्रतीयत इत्याशयः। 'तव गृहमभि नापुस्तकस्तिथिं कोपि जानाति।' इत्यादि अपूर्णमेवाह परमानन्दः। पुस्तकपदस्य पञ्चाङ्गार्थबोधकता कथम्? बन्धे हठाकर्षणं प्रत्यक्षं खेलतीत्येव परमार्थः॥ ४८॥

**तिष्ठ, शशिनमीक्षेऽलमहमुपरि न बाले याहि।**
**असमयमर्घ्यमवीक्ष्य विधुमखिला दद्युरिमा हि॥४९॥**

हे बाले! त्वं तिष्ठ, उपरि (अट्टालिकायाः उपरि) न गच्छ। अहमेव

---

'पत्राही तिथि पाइये वा घरके चहुंपास।
नित प्रति पूनौ ही रहत आनन ओप उजास॥ ४८॥
'तूं रहि, हौंही सखि लखौं, चढि न अटा, वलि वाल।
सवहिं नु विन ही ससि लखैं देहैं अरघ अकाल॥ ४९॥'

शशिनं पश्यामि। इमाः (चतुर्थीव्रते चन्द्रायार्घ्यं दित्सन्त्यः) अखिलाः, सभयं विनैव विधुम् अदृष्ट्वैव अर्घ्यं दधुः। यदि चन्द्रोदयो जातो न वेति ते ज्ञातुमिच्छा, तर्हि अहमेव तत्पश्यामि। तव मुखं दृष्ट्वा सर्वासां चन्द्रभ्रमो भवेदित्याशयः॥ ४९॥

राजति नीलपटान्तरितमेतन्मुखमवधेहि।
कलितकलानिधिरुल्लसति कालिन्दी सलिले हि॥५०॥

अवधेहि अवहितो भव। सावधानं पश्येत्यर्थः। सूक्ष्मेण नीलपटेन अन्तरितम्—अर्थात् दृश्यमानमपि नीलवसनेन (सूक्ष्मेण) किञ्चित्सव्यवधानम् इदं नायिकायाः मुखम्, राजति। तत्र गम्यामुत्प्रेक्षामाह—कालिन्दी-(यमुना) सलिले पूर्णः कलानिधिः शोभते। श्यामे यमुनाजले यथा चन्द्रः शोभते, तथा सूक्ष्मेण नीलपटेनान्तरितमिदं मुखं शोभत इत्याशयः। 'मुखं नीलवसनावृतं लसति प्रिये तवैव। खलु कलिन्दकन्याजले धन्या चन्द्रकलैव॥' इति परमानन्दः। नीलवसनेनावृतमित्यवाचकं विहारिवाञ्छितार्थस्य। मुखेन सार्कं चन्द्रकलाया उपमा, परमानन्दादेव श्रुता। वृत्ताकारस्य, पूर्णचन्द्रेण सार्कं तुलना स्यान्न कलया। तवैव कलैवेत्येवकारस्याप्यनावश्यकता। आरम्भे एव 'खलु' पदमपि शोभां खिलीकरोति॥ ५०॥

नेत्रे

सूक्ष्मपटे चञ्चलनयनयुगं कान्तिमुपयाति।
मन्ये सुरसरिताजले मीनमिथुनमाभाति॥ ५१॥

कान्तिमुपयाति प्रकाशते। सुरसरितायाः गङ्गायाः। भागुरेराप्। मीनयोर्मिथुनं युग्मम्। उच्छलनेनाभाति 'उच्छलदमलसरिज्जले मीनद्वयमिव याति' इत्यादि परमानन्दः। सुरसरित्पदं लोपितम्। उच्छलन्मीनद्वयं

'छिप्यौ छबीलो मुंह लसै, नीले ऑचरचीर।
मनौं कलानिधि झलमलै कालिन्दीके नीर॥ ५०॥
'चम चमात चंचल नयन, विच घुंघट पट झींन।
मानौं सुरसरिताविमलजल उछलत जुगमीन॥ ५१॥

यातीत्येतदपि 'तुक'पूरणप्रायम् । मीनद्वयं यदा याति, तदा उपमार्थं कथं धृतम् । अत एव विहार्यपि 'चमचमात' इत्येवाह न 'गच्छत्' इति ॥ ५१ ॥

**नयनं रसमग्नं प्रिये, लज्जाकृत्कञ्जाय ।**
**तदनञ्जनमपि संभवति, खञ्जनमदगञ्जाय ॥ ५२ ॥**

हे प्रिये ! रसे ( प्रकरणात् शृङ्गाररसे ) मग्नम् शृङ्गाररसोचितेषु हावभावादिषु निपुणमित्याशयः । ते नयनं कमलाय लज्जाकारकम् । कमलं सदैव रसे ( जले ) मग्नं स्वच्छं भवति परं तव नयनं स्वाभाविकस्वच्छतया तस्यापि लज्जां करोतीत्याशयः । तद् ते नेत्रम्–अञ्जनरहितमपि, कृष्णतया खञ्जनपक्षिणो मदगञ्जाय मदमर्दनाय संभवति प्रभवति । गञ्जनं गञ्जः भावे घञ् । नयनयोः प्रसाधनं कुर्वर्ती नायिकां प्रति नायकस्योक्तिः । "नयनयुगं कृतमज्जने ! सज्जं शृङ्गाराय । तदनञ्जनमपि संभवति खञ्जनमदभङ्गाय ।" इति परमानन्दः । विहारी 'रस सिगाँर मज्जन कियें' इति कमलाधरीकरणाय नयने योजयामास परमानन्दस्तु नायिकामेव मज्जयामास । विशेषस्तु भूमिकायां द्रष्टव्यः ॥ ५२ ॥

**कवयः कमलसमं जगुर्वेद्मि नयनमश्मेति ।**
**कथमनयोर्योगे द्वयोर्विरहकृशानुरुदेति ॥ ५३ ॥**

सर्वे कवयः नयनं कमलसदृशं कथयामासु. । अहं नयनम्, अश्मा ( पाषाणः ) अस्ति, इति वेद्मि । अन्यथा द्वयोः अनयोर्नेत्रयोः ( नायिकानायकसम्बन्धिनोः ) योगे विरहवह्निः कथमुत्पद्यते । द्वयोः पाषाणयोरेव परस्परसंघर्षे वह्निरुदेति–अतएव अग्नेरुदयात् नेत्रं पाषाणं जाने इत्याशयः ।

---

'रससिगाँर मजनै किये, कंजन भजन दैन ।
अजन रंजन हू बिना खंजन गंजन नैन ॥ ५२ ॥'
'कहत सबै कवि कमलसे, मो मत नैन पखान ।
न तरुक कत इन विय लगत उपजत बिरह कृसान ॥ ५३ ॥'

१ विहारीरत्नाकरे तु 'मंजनु, कंजनु भंजनु' इत्यादेव सर्वत्र पाठः, । 'उ' कारपाठः प्राय प्राचीनहिन्द्यां दृश्यते । परं विहारिसमये नासीत्सोयं प्रकार. । दृश्यताम् 'कहुं मुरली कहुँ पीत पट, कहूं मुकट वनमाल'

'नयनकमलमिति यन्मुधा नयनोपलमिदमेव। अनयोरपि योगे विरहदहनं भवति यदेव॥' इति परमानन्दः। विधेयं किम्-अस्य स्पष्टोऽत्र अविमर्शः। लिङ्गज्ञानेपि परमानन्दः, परमानन्द एव। अत्रोपलदहनयोरुपरि क्लीबता-कृपा प्रदर्शिता एवकारोपि बलात्कारं सूचयति॥ ५३॥

विषमशीलदृग्भ्यामहो कां गतिमयमारोपि।
क्वचिद्वेणुमाले क्वचित्पटः क्वचिन्मुकुटोपि॥ ५४॥

नेत्रयोः कृते सखी, नायिकामुपालभते—विषमशीलाभ्याम् (युद्धद्वारा अपरलोकं विकलीकुर्वद्भ्याम्) ते दृग्भ्यां अयं श्रीकृष्णः कां दशाम् आरोपि (प्रापितः)। यत् वेणु–माला–पट–मुकुटादयः क्वचिदपि विस्रस्ताः सन्तीति स न जानाति। अतिविकलः स आत्मने न प्रभवतीति भावः। 'लडैते' पदस्य युद्धशीले इत्यर्थं स्वीकृत्यायमर्थः। 'लाड'युक्ते (लालिते) इत्यर्थोपि कैश्चित्स्वीकृतः। परमानन्दस्तु 'भुवि शेते स्रंसितवसनमुकुटलकुटकलयैव' स्रस्तस्य स्थाने स्रंसितप्रयोगो निरर्थकः। विहारी कथयति- 'कहुं मुरली कहुं पीतपट' अर्थात् ते स्वस्थानात्पतिताः सन्ति अयं तु व्याख्याति 'शिथिलीभूता वसनादीनां कला, तया'। माला परमानन्दमहाशयेन लुकायिता! अथ च केयं कला?॥ ५४॥

मुखनिर्गतवचनान्यमून्यनृतायन्त इतीव।
संलापाय विलोचने रचयति विधिरकृतीव॥ ५५॥

---

'कहा लडैते दृग किये परे लाल बेहाल।
कहुं मुरली कहुं पीतपट, कहूँ मुकुट बनमाल॥ ५४॥'
'झूंठे जानि न संग्रहे मनु मुंह निकसे बैन।
याहीतें मानहु किये बातनको विधि नैन॥ ५५॥'

इति किं रूचिरः प्रतीयते? अनेन पीतपट्टपाठसंग्रहेण 'रत्नाकर' महाशयः केषांचन दृष्टौ पटु: स्यादस्माकं तु समक्षं कटुरेव। यो विहारी 'कलितललितअलिपुंज। यमुनातीरतमालतरुमिलितमालतीकुंज।' इत्यादीन्मनोहरान्सस्कृतशब्दान्प्रयुनक्ति, स पीतपटं 'पीतपट्ट' लिखेदिति 'रत्नाकरमहाराजस्यैव बुद्धिः। एवंविधाभिः कुचेष्टाभिरहं तु एनं 'शंबूकाकरं' जाने॥

संकेतस्थले आगमनादिविषये, प्रेमिणां वचनानि प्रायो मिथ्या भवन्ति। अत एव वचनानि लोकेषु अविश्वसनीयानि संजातानि। विधात्रा वचनानि मनोभावसूचनाय, विश्वासाय च रचितान्यासन्। एवं स्थितौ अकृतार्थ इव विधिर्लोचने विरचयामास। तथा च चतुराणां लोचनान्येव वचनानां कार्यं साधयन्ति। एवं च नायिकादेः परमदाक्षिण्यं व्यज्यते। एष एव भावोऽस्मिन् पद्ये। अमूनि वचनानि अनृतानि भवन्ति एतदर्थमेव अकृतार्थ इव विधिः संलापाय लोचने रचयामास। परमानन्दोक्तिस्त्वत्रत्या भूमिकायां द्रष्टव्या ॥ ५५ ॥

मृगनयने ! मृगयाविधिं मदनो मञ्जुमुवाच।
वनचरनयनमृगाविमौ नागरनरमृगया च ॥ ५६ ॥

वनविहारं कुर्वतीं नायिकां प्रति सख्याः परिहासोक्तिः—हे मृगनयने ! मदनो (मृगयाशिक्षकः) तुभ्यं मृगयाप्रकारं विलक्षणं प्रोवाच (लक्षणया उपदिदेश)—यत् इमौ वनचरौ नयनमृगौ स्त, अनयोः कर्तव्या च नागरनराणां मृगया। अन्यत्र मृगयायां नगरनिवासिनो जना वनचराणां मृगाणां मृगयां कुर्वन्ति। अत्र तु वनचरौ इमौ (नयन) मृगावेव नागराणां नराणां मृगयां कुरुतः यं नरं त्वं नेत्राभ्यां पश्यसि स एव कामविह्वलो भवतीत्याशयः। मूले तु 'काननचारी नैन मृग' इत्यस्य 'कर्णपर्यन्तविश्रान्ते नयने' इत्यप्यर्थः श्लेषेण भवति, न सोऽत्र साध्यः। 'अद्भुत इति मृगलोचने मृगयाविधिस्तवैव। यल्लोचनमृगकृतचतुरनरहिंसनमधुनैव ॥' इति परमानन्दः। वनचर–नगरनिवासिपदयोः परस्परवैषम्यसूचको भावोऽत्रास्तं गतः। हिंसनपदमपि माधुर्यहिंसनमुद्घोषयति। अधुनैव हिंसनम्? पश्चाद्यदि हिंसनं भवेत्तर्हि वैदिकी हिंसा हिंसा न भवति' इतिवत् सह्यमपि भवेत्! अधुनैव!! कलिवर्ज्यप्रकरणे पाठस्तु नास्ति!!! ॥ ५६ ॥

---

'खेलन सिखये अलि भलैं चतुर अहेरी मार।
काननचारी नैन मृग नागर नरन सिकार ॥ ५६ ॥'

## भ्रूः

कुञ्चितनासिकमुत्क्रमितनयनं शपथमियाय ।
कण्टक इव हृदि पीडयति कुटिला भ्रूः सुचिराय ॥५७॥

कुञ्चिता नासिका यस्मिन् कर्मणि तथा, उत्क्रमिते (नर्तिते) नयने यस्मिंस्तथा सा । अनभिमते विषये शपथं इयाय (चकार) । शपथसमये कुटिलीकृता भ्रुकुटिः, कण्टक इव हृदि विद्धा चिराय मां पीडयति । न तां भ्रुकुटिं विस्मर्तुं प्रभवामीत्याशयः । 'किञ्चित्कुञ्चितनासिकं नर्तितदृशं तथापि । कण्टकमिव तद्भ्रूतटं विध्यति मामद्यापि ॥' परमानन्दः । प्रकृतविषयस्य मूलोच्छेद एव । क्रिया लुप्ता, क्रियाविशेषणे खेलतः । 'तथापि' कण्टकस्य क्लीबत्वं विशेषतो विध्यति ॥ ५७ ॥

## केशाः

सहजमसृणशुचिमेचकं कचकुलमेक्ष्य सुगन्धि ।
गणयति मार्गममार्गमपि मनो न रत्यनुबन्धि ॥ ५८ ॥

स्वभावतश्चिक्कणम्, स्वच्छम्, श्यामकान्ति, सुरभितम् कचकुलम्, आ-ईक्ष्य, रत्यनुबन्धि प्रीतिपरवशं मनः, मार्गममार्गमपि न गणयति, बलवद्वशे भवतीत्याशयः । 'सुरभिसचिक्कणश्यामशुचितरलरुचिरकेशेषु । कापथेषु गत्वा मनो मुह्यति मुहुरपि तेषु ॥' परमानन्दः । 'कापथतुल्येषु केशेष्वि'ति व्याख्या । 'गनत न मन पथ अपथ, लखि बिथुरे सुथरे बार' इति विहारी केशान्दृष्ट्वा मनः कापथं न गणयतीत्याह । परमानन्दः केशानेव कापथांश्चकार । 'किं च चिक्कणं मसृणं स्निग्धम्' इत्येव कोपे श्रुतम् ।

---

'नासा, मोरि, नचाय दृग करी कका की सौंह ।
कांटेसी कसकत हिये, गडी कटीली भौंह ॥ ५७ ॥'

'सहजसचिक्कनस्यामरुचि सुचि सुगन्धसुकुमार ।
गनत न मन पथ अपथ लखि बिथुरे सुथरे बार ॥ ५८ ॥

'सचिक्कणं' तु नाद्यापि श्रुतम् । न कोपि ससुन्दरमित्याह । व्रजभाषामात्र-पंडितास्तु 'चिक्कणं' सचिक्कणं वदन्ति । आमूलचूडं ससशत्यनुवादं दृष्ट्वा मया तु ज्ञातं यत्परमानन्दमहाशयस्य संस्कृतभाषायां परिमित एवाधिकार आसीत् । अस्तु क्षम्यतां विचक्षणैः 'तरल' विशेषणं कुत आगतम्? अपि तरलताप्यावश्यकी? ॥ ५८ ॥

### —भालबिन्दुः—

**अङ्को दशगुणितो भवति बिन्दौ निकटे याति ।**
**तदलिकमिह बिन्दौ घृते बहुगुणितं प्रतिभाति ॥५९॥**

बिन्दौ निकटे याति (बिन्दौ धृते सति) एक—द्व्यादिरङ्को दशगुणितो भवति । परं तस्या नायिकायाः अलिकं बिन्दौ (भालतिलके) धृते सति बहुगुणितं भवति न दशगुणमेव । वस्तुतस्तु बहुः गुणः (सौन्दर्यगुणः) यस्य तादृशं शोभते । गुणपदे श्लेषः । मूले—"कहत सबै बैंदी दियैं आँक दसगुनो होत । तियलिलार बैंदी दियैं अगनित बढ़त उदोत ॥" यथा बिन्दुः दशगुणो भवतीत्युच्यते, तथा 'लिलार' पक्षेपि श्लेषेण समार्थता कर्तव्याऽसीत् । 'आँक दस गुनो होत—अगनित बढ़त उदोत' अत्र 'आँक' 'उदोत' योर्न साम्यं संघटितम् । संस्कृते तु श्लेषेण तत्सम्पन्नम् । 'लोकेऽङ्को धृतबिन्दुः किल दशगुणतामुपयाति ।' इति परमानन्दस्तु छन्दसेवाधोमुखः पपात, किमग्रे ॥ ५९ ॥

### —चिबुकम्—

**खिन्ना कुचगिरिरोहणान्मुखमनुदृष्टिरियाय ।**
**पुनरग्रे चलिता न सा, चिबुकगता तु चिराय ॥ ६० ॥**

---

'कहत सबै बैंदी दीये आँक दसगुनो होत ।
तिय ललाट बैंदी दियैं अगनित बढ़त उदोत ॥ ५९ ॥'
'कुच गिरि चढ़ि, अति थकित ह्वै, चली दीठि मुख चाड ।
फिरि न टरी, परियै रही, गिरी चिबुककी गाढ ॥ ६० ॥'

उच्चयोः कुचपर्वतयोरारोहणात् खिन्ना (कामाद्विकलिता श्रान्ता च) (मे) दृष्टिः, मुखशोभालोभात् मुखम् अनु इयाय जगाम। परमग्रे न चलिता, आरंभ एव चिबुकस्य रन्ध्र एव चिराय पतिता। श्रान्तोपि न चलति, एवं मे दृष्टिश्चिबुकसौन्दर्यमुग्धा तत्रैव कीलिताभूदित्याशयः ॥ ६० ॥

## कुचौ

कुचयुगमधिकञ्चुकि सिते वसने संव्रियते न।
सुकविगिरामर्थोपमं प्रकटमीयतेऽनेन ॥ ६१ ॥

अधिकञ्चुकि कञ्चुक्या मध्ये, सिते वसने श्वेतायां शाट्याम्, तस्याः कुचयुगं न तिरोधीयते। सुकविवाणीनां यथा अर्थस्तथा, अनेन (कञ्चुकेन) (तत्) प्रकटम्, ईयते प्रतीयते। उपरि श्वेता सूक्ष्मशाटी परिहिता, अन्तः कञ्चुलिका धारिता तथापि कुचौ दृश्येते एव। यथा सुकवीनां वर्णाः, आपाततो गुप्तार्था अपि किञ्चिदवधाने एव स्पष्टार्था भवन्ति तथेत्याशयः। अनेन प्रकाशयोरपि किञ्चिद् गुप्तयोरेव कुचयोः शोभेति ध्वनितम्। यथा कश्चित्—"कवि अच्छर तियके सु कुच अध उघरे सुखदेत॥' (अर्थो गिरामपिहितः पिहितश्च कश्चित्सौभाग्यमेति मरहट्टवधूकुचाभः) 'अत्रापि—'सत्कविकृतवर्णार्थमिव चपलमुल्लसत्येव।' इति अर्थस्य क्लीबतां चकार परमानन्दः ॥ ६१ ॥

## कटिः

लसति वपुषि नवयौवनं ह्रसति वलग्नमनेन।
वशयति नयनमिदं यदा नमति मन्दगमनेन ॥ ६२ ॥

---

'दुरत न कुच, बिच कंचुकी चुपरी, सारी सेत।
कवि आँकनके अर्थ लौं प्रगट दिखाई देत ॥ ६१ ॥'
'लहलहाति तन तरुनई लचि लग लौं लफि जाय।
लगै लाक लोयनभरी लोयन लेत लगाय ॥ ६२ ॥'

अनेन (नवयौवनेन) अवलग्नम् कटिः (भागुरेरकारलोपः), हसति। इदम् अवलग्नम् मन्देनापि चलनेन यदा नमति, कृशतावशात्कम्पते इत्यर्थः। तदा वेत्रयष्टेरिव शोभां प्राप्य, पश्यतो जनस्य नेत्रं वशयति। (हरिप्रकाशटीकामतेन)। रत्नाकराद्यास्तु अन्यविधमर्थं क्लिष्टप्रायमाविर्भावयन्ति। मूले 'ल'स्य वृत्त्यनुप्रासः। इह चतुर्ष्वपि चरणेषु 'लसति हसति' इत्यादि अनुप्रास इति शब्दालङ्कारस्य न न्यूनतेति बोध्यम्॥ ६२॥

## रूपवर्णनम्

यत्नशते विहितेऽप्यहो, साहसशते कृतेऽति।
वपुषि रूपरत्नाकरे दृङ् नहि पारमुपैति॥ ६३॥

नायिकारूपमुग्धस्य नायकस्योक्तिः, (नायिकोक्तिरपि संभवति)। तस्या रूपमालोक्य, कदाचिन्मन. नाभ्याद्यावर्ते एव भ्रान्त्वा विवशं भवति, कदाचिच्च जाड्यकम्पादिसात्त्विकविवशं नाग्रे प्रसरति। एवं दर्शनप्रतिबन्धे सत्यपि यत्नशते कृते, साहसशते अत्यर्थं निर्मितेपि। रूपसागरे तस्याः शरीरे मे दृक् (दृष्टिः) पारं न उपैति रूपं विलोकयन्ती दृष्टिर्न तृप्यतीति भावः)। शतपदमनन्तार्थकम्। (हरिप्रकाशः)। रत्नाकरस्तु—पूर्वानुरागिण्या नायिकाया उक्तिं स्वीकृत्य—लोकापवादादात्मरक्षणाय यत्ने कृतेपि, विरोधिलोकानां दृष्टेर्भये सत्यपि, साहसे कृते लावण्यमये (समुद्रः, शरीरशोभयमपि लावण्यमयम्) तनु–सागरे दृष्टि. पारं न यातीत्यर्थमाह॥६३॥

दृशमुपैति कनकं न वपुराप्य कनकसमकान्ति।
भूषणानि करकर्कशस्पर्शतया प्रतिभान्ति॥ ६४॥

---

'लीने हूं साहस सहस, कीने जतन हजार।
लोयन लोयन–सिन्धु तन पैरि न पावत पार॥ ६३॥'
'दीठि न परत समानदुति कनक, कनकसे गात।
भूषन करकरकस लगत परस पिछाने जात॥ ६४॥'

कनकसमा सुवर्णसदृशी कान्तिर्यस्य ईदृशं तस्याः वपुः, आ–आप्य। कनकं सुवर्णं दृशं नोपैति। न दृश्यते इत्यर्थः। करयोः कर्कशः स्पर्शो येषां तत्तया भूषणानि प्रतिभान्ति प्रतीयन्ते। कनकसदृशे तस्याः शरीरे सुवर्ण-भूषणानि वर्णतो न प्रतीयन्ते। किन्तु स्पर्शे कृते, यदा करयोः कर्कशता प्रतीयते तदा भूषणानि प्रत्यभिज्ञायन्त इत्याशयः। "किमङ्गानि किं कनकमयभूषणानि विलसन्ति। इति तदङ्गसङ्गं विना सहचरिजना न यन्ति।" इति परमानन्दः। 'हे सहचरिजनाः तस्याः अङ्गसङ्गं विना केपि जनाः एतन्न जानन्ति यद् भूषणानि उत अङ्गानि' इत्यादि, तट्टीका। अत्र बहुवचनमनौचित्यमाकर्षति। किं सर्वेषामेव अङ्गसङ्गस्याधिकारः? हन्त धिक्! भूषणानि कर्कशानीति प्रत्यभिज्ञायन्ते इत्यर्थलाभः कथम्? आलिङ्गने कृते भूषणानि धारितानीत्येव बोधः, तानि कर्कशानीति तु शब्दतो न प्रतीयन्ते॥ ६४॥

किं कुसुमं का कौमुदी, कियती मुकुरविभाऽपि।
यस्या उज्ज्वलतावशाद् दृग्भ्यामुज्ज्वलताऽऽपि॥ ६५॥

यस्या नायिकायाः उज्ज्वलतावशात् (गौरतावैभवात्) दर्शकानां नेत्राभ्यामपि उज्ज्वलता (विलक्षणज्योतिःसंपन्नता) आपि प्रापि। आप् धातोः कर्मणि लुङ्। तस्याः समीपे कुसुमादीनि कानि। तस्या उज्ज्वलतां विलोक्य कुसुम–कौमुदी–मुकुरादयो मलिना इव प्रतीयन्त इत्याशयः। अस्यानुवादेपि परमानन्दः पपात। 'यद्विलोक्य विमलानि खलु'। यत् किम्? यत्पदेन 'याम्' इत्यर्थस्तु न संभवेत्। उज्ज्वलतार्थे विमलमपि नार्थसमर्पकम्। विमलपदं मलराहित्यमेवाह, न गौरतामपि। 'जाकी उजराई लखैं आंखि ऊजरी होति।' इति 'उजराई ऊजरी'ति विहारिनिहितः शब्दालङ्कारोपि नात्र निरुह्यते॥ ६५॥

---

'कहा कुसुम कह कौमुदी, कितिक आरसी जोति।
जाकी उजराई लखै आखि ऊजरी होति॥ ६५॥'

### महानसे विलसन्त्या रूपशोभा

**रुचिरा मुखरुचिरालसति विशदा शाटी भाति ।**
**महाकान्तिराभावहा महानसे प्रतिभाति ॥ ६६ ॥**

विशदा, तत्कालधौततया स्वच्छा शाटी शोभते, तदन्तः रुचिरा, अतिदीप्तिशालिनी मुखरुचिः मुखशोभा, आलसति । अत एव—आभावहा पर्यन्ततः प्रकाशं प्रसारयन्ती, काचिदनिर्वचनीया अतिशोभा, महानसे पाकशालायां प्रतिभाति । नायिकाया मुखदीप्त्या सर्वमपि महानसं द्योतत इत्याशयः । 'टटकी' 'चटकी' ति मूले शब्दालङ्कारस्तथेह 'रुचिरा रुचिरा' इति । 'वगर जगर मगर' स्थानेपि–'महा–वहा–महा–' इत्यनुप्रास इति प्रेक्ष्यतां सहृदयैः । परमानन्दस्तु 'सूपविदलीकरणस्य' स्वप्नमत्र ददर्शेति पूर्वमुक्तम् ॥ ६६ ॥

### नवोढाया मधुपानम्

**समधिकलज्जा नववधूर्मधु निषेव्य मदमेति ।**
**तथा तथा प्रियतामयति यथा यथोन्मदमेति ॥ ६७ ॥**

अतिलज्जावती अपि नववधूर्मधु पीत्वा मत्ततां याति । यथा यथा च उन्मदं गच्छति । अर्थात् उन्मत्ततया यथा यथा अविनयमाचरति, तथा तथा प्रियतमस्य अधिकाधिकं प्रियतां याति । परमानन्दस्तु–'मधुपसखीजनसंगत सा मधु पपौ यथैव । सलज्जापि लज्जां विना विहसति तथा तथैव ॥' इति सर्वतः प्रथमं 'लज्जां विना' इति श्रवणेऽनुचितमेव भाति । तथा तथैवेत्यनेन सह यथैवेत्यस्य न योगः । तथा तथेत्यत्र तु क्रमः प्रतीयते, यथेत्यत्र न । विहारी तु "त्यौं त्यौं अति मीठी लगति ज्यौं ज्यौं ढीठ्यौ देइ ।" इति वदन् मधुनिषेवणकृतया—धृष्टतया प्रियोऽत्यर्थं प्रीयत इति म-

---

'टटकी धोई धोवती, चटकीली मुखजोति ।
लसति रसोई के वगर जगर मगर दुति होति ॥ ६६ ॥'
'निपट लजीली नवल तिय बहकि वारुनी सेइ ।
त्यौं त्यौं अति मीठी लगति ज्यौं ज्यौं ढीठ्यौ देइ ॥ ६७ ॥'

धुरमाह। परमानन्दस्तु–लज्जां परित्यज्य हसतीत्येवाह। लज्जापरित्यागोत्तरं हसनेन माधुर्यमुतानौचित्यम्? मधुपसखीजनेत्यप्यमधुरम्। अस्तु सहृदयाः स्वतः परिचेष्यन्ति माधुर्यं काटवं वा। मद, उन्मद इत्यन्तानुप्रासः (तुकान्त)। 'मेति मेति' इति यामकं 'तुकान्त'मेव ॥ ६७ ॥

## अवलोकनम्

कलयति वेणीं सुनयना कलितमज्जना, पश्य।
अङ्गुलिकुन्तलमध्यतः पश्यति हरिमुद्दिश्य ॥ ६८ ॥

कृतस्नाना एषा सुनयना, परस्परं संलग्नान् केशान्विमोच्य वेणीं रचयति। अङ्गुलीनां कुन्तलानां च मध्यतः हरिमुद्दिश्य पश्यति इति त्वं पश्य। सखीं प्रति सख्या उक्तिः ॥ ६८ ॥

निशितविशालविलोचनाः कति न हि ललनाः सन्ति।
अन्यास्तास्तव दृष्टयो याः सुधियो वशयन्ति ॥ ६९ ॥

निशिते तीक्ष्णे विशाले च लोचने यासां ताः, कति स्त्रियो न सन्ति। यथा तव तीक्ष्णे विशाले च लोचने एवं बहूनां रमणीनां नेत्रे स्तः। किन्तु तव ता दृष्टयः किञ्चिदनिर्वचनीया एव याभिर्दृष्टिभिः प्रवीणा अपि वशे भवन्तीत्याशयः। त्वयाऽनुपमेन विलोकनेन स प्रवीणोपि नायको वशीकृत इति सखी नायिकां स्तौति ॥ ६९ ॥

गुरुजनपरिजनपरिवृता स्थिता मुखं परिवर्त्य।
तदपि सस्मिता पतति दृक् सहजसलज्जाऽऽदृत्य ॥७०॥

---

'कंजनयनि मंजन किये बैठी ब्यौरति बार।
कच अंगुरिन बिच दीठिदै निरखत नन्दकुमार ॥ ६८ ॥'
'अनियारे दीरघ दृगनि किती न तरुनि समान।
वह चितवन औरै कछु, जिहिं बस होत सुजान ॥ ६९ ॥'
'गड़ी कुटुम की भीरमें रही बैठि दै पीठि।
तऊ पलक पर जात इत सलज हँसौही दीठि ॥ ७० ॥'

सा गुरुजनपरिजनादिकुटुम्बमध्ये मां प्रति मुखं परावर्त्य स्थिता। तदपि सस्मिता, स्वभावतः सलज्जा, तस्याः दृष्टिः, आदृत्य ( मां प्रति आदरं प्रयुज्य ) इतो मां प्रति, पतति। यद्यपि कुटुम्बमध्ये स्थिता, पृष्ठं दत्त्वा चावस्थिता, तदपि मम प्रेमानुबन्धात्तस्या दृष्टिः क्षणं मदुपरि पतत्येवेति नायकः स्वमनसि नायिकाप्रेमाणं विचारयति। 'सदसि कुटुम्बजनस्य सा तिष्ठति पृष्ठकृतैव। क्वापि क्षणमपि सस्मितं पश्यति मामुदितैव॥' इति परमानन्दः। 'पृष्ठं दत्त्वा' इत्यर्थे पृष्ठकृता इत्यनेन कोऽर्थः? 'क्वापि' पश्यति तर्हि नायकस्य को लाभः? 'क्वापि समये' इति तु 'क्वापि' मात्रेण क्वापि न प्रतीतं भवति। 'सदसी' त्यप्यनावश्यकम्। यदि सभा वर्तते नायकस्यापि तत्राधिकारोऽस्त्येव, पुन. 'सभामध्ये स्थिता तदपि पश्यती'त्यत्र को वा विशेषः? ॥ ७० ॥

सङ्गो दृशि भङ्गो जने रतिरनुषङ्गमुपैति।
ग्रन्थिर्दुर्जनहृदि पतति चित्रमिदं समुदेति॥ ७१॥

दृशि दृष्ट्यां सङ्ग.। अर्थात् नायिकानायकयोर्नेत्रे परस्परं ग्रथिते भवतः ( ओलझते हैं' )। नेत्रे ग्रथिते भवतः, परं जने कुटुम्बजने, भङ्गो विच्छेदः उपैति। कुटुम्बजनैः सार्कं प्रीतिसम्बन्धो विच्छिन्नो भवतीत्यर्थः। कुटुम्बे विच्छेद. पतति परं रतिः उभयोः प्रेमिणोश्चित्तप्रीतिः अनुषङ्गं योगं प्राप्नोति। परस्परं तयोः प्रीतिर्बद्धा भवतीत्याशयः। प्रीतिर्योगं प्राप्नोति, परं ग्रन्थिर्दुर्जनहृदये पतति। इदमत्याश्चर्यमुदेति। यद्वस्तु परस्परमतिगाढं ग्रथितं भवति तदेव किञ्चिदाकर्षणे भङ्गं प्राप्नोति। यस्य च भङ्गो भवति तत्रैव पुनर्योजनस्यावश्यकता। यत्र च त्रुटितस्य पुनर्योग. सम्पाद्यते, तत्रैव ग्रन्थिः पतति इति सोयं जगद्व्यवहारः। प्रीत्यां तु विचित्रा लीला, नेत्रयोर्योग., कुटुम्बे भङ्गः, पुनरनुषङ्गस्तु चित्तप्रीत्याम्। ग्रन्थिर्दुर्जनहृदये इति स्पष्टमसङ्गतिः। परमानन्दस्तु—"मिलति दृशोरिह दृग्युगं सहचरिकुलं ज-

---

'दृग उरझत टूटत कुटुम जुरत चतुर चित प्रीति।
परत गाठ दुरजन हिये दई नई यह रीति॥ ७१॥'

हाति । ग्रन्थिर्दुर्जनमानसे प्रीतिरद्भुता भाति ॥' इत्याह । दृशोः दृग्युगं मिलति ? कोऽर्थः ? 'नेत्राभ्यां नेत्रे मिलतः' इत्यर्थश्चेदभिप्रेतस्तर्हि 'दृग्भ्याम्' इति तृतीयां विना सोऽयं दुःसाधः । हे सहचरि ! कुलं मां जहाति ? युक्तमेव । अन्यत्र नेत्रपरिचालने कृते कुटुम्बजना वहिष्कुर्वन्त्येव । काऽसङ्गतिः ? ग्रन्थिर्दुर्जनहृदये पतिता ! कीदृशी ग्रन्थिः ? कुटुम्बत्यागोत्तरं यावत्कालं पुनर्योगो न भवेत्तावत्कालं ग्रन्थिः कथमुद्भवेत् ? अस्तु—विहारिणा कृत्रिमरूपेण असङ्गतिः ( अलङ्कारः ) परिदृताऽभूत् । परमानन्दमहाभागेन तु स्पष्टेयमसङ्गतिः पुरतः स्थापिता ॥ ७१ ॥

लोचनयोरनयोरभूत्किमिति मतौ नायाति ।
नीरभरितयोरपि चिरात्तृष्णा[1] किमपि न याति ॥ ७२ ॥

अनयोर्नेत्रयोः का विपदुपस्थिता इति बुद्धौ नायाति । सर्वदा ( नायकविरहे ) अश्रुजलपूर्णयोरप्यनयोः किञ्चिदपि तृषा न निवर्तते । यस्य सविधे जलं भवति न स तृषितो भवति । परं सर्वदा जलपूर्णयोरप्यनयोःतृष्णा न यातीत्याशयः । परमानन्दस्तु—'निस्नेहं नयनद्वयं नेदं सखि विपदेव ।' इत्याह । स्नेहेन ( स्निग्धतया, ) शून्ये तृष्णा भवत्येवेति विहारिवाञ्छितमर्थमुन्मूलयामासैव । अत्र 'विहारि रत्नाकर'कारो जगन्नाथदासोऽपि नेह न, 'नैननिको कछू' इति पाठं स्वीकृत्य विचित्रमाह—"यह प्रेमरूपी तेल नहीं हैं, मेरे लिये बलाय है इत्यादि." । अत्र स्नेहपदस्य तैलार्थश्लेषे को लाभः ? किमु तैलेन तृषा निवर्तते । प्रत्युत तैलवस्तूनामुपयोगे तृषा विशेषतो बाधते । न चायं तैलरूपोऽर्थो 'हरिप्रकाशा'दि प्राचीनटीकासु दृष्टः । आयुर्वेदीयपञ्चकर्मसु' स्नेहनरूपे कर्मणि, तैलं पानाय दीयते, तेन स्नेहेन व्यतिक्रमाद् व्याधिरभूदिति तु 'नेह न नैननिको कछु' पदेन स्पष्टं न प्रतीयते इदं हि आकर्षणमात्रम् । पुनर्यथा रोचते ॥ ७२ ॥

---

१ किं वा 'तृषा कथमपि ययोर्न याति'

'अलि इन लोयनको कछू उपजी बड़ी बलाय ।
नीर भरे नित प्रति रहैं तऊ न प्यास बुझाय ॥ ७२ ॥

—※ विरहोत्कण्ठिता ※—

खमरुणमालीना निशा चटकालीध्वनिरेति ।
रतिपाली परया समं वनमाली न समेति ॥ ७३ ॥

खं गगनम्, उषःप्रादुर्भावादरुणं जातम् । निशा आ (ईषत्) लीना, नाममात्रतो निशा अवशिष्यते इत्यर्थः । चटकपङ्क्तीनां ध्वनिः कर्णयोराग-च्छति । प्रियतमं प्रतीक्षमाणाया मे प्रातःकालो जात इत्याशयः । परन्तु—परया अन्यया कयाचिन्नायिकया सह, रतिपाली (रतिं प्रीतिं पालयति स, णिनिः) प्रेमकारकः स वनमाली नाधुनापि समेति संगच्छते । मूले 'नभलाली चाली निसा' इत्यादिर्योऽनुप्रासः, सोऽत्रापि निर्वाहित इति प्रेक्ष्यम् । 'चलीनिसा' इत्यस्य सर्वैरपि टीकाकृद्भिः 'निशा चलिता' इत्येवार्थः कृतः । रत्नाकरस्तु—'गगनारुणिम्ना निशा सच्छिद्रा कृता ('नमकी लालीने रात्रि चाल डाली') इत्यर्थमाह । परमानन्दस्य—"गगनमंशुमालीकरैररुणतरं प्रतिभाति । जातश्चटकालीध्वनिर्वनमाली नायाति॥" इत्यनुवादे 'चाली निशा' चलतु नाम । परं 'रतिपाली आली अनत' इति पद्यस्य मेरुदण्डस्वरूपो मुख्योंऽश एव लीनः । केवलं नायकस्य अनागमनेन, तावान् न खेदो यावान् सपत्न्या सह समागमानुमानेन । अत एव हि सा शोचति । 'अंशु-मालीकरैः' इति तु पूर्वं परिदृष्टमेव श्रीमद्भिः ॥ ७३ ॥

—※ प्रवत्स्यत्पतिका ※—

विरहतनुस्तनुरिदमवधि न सहजरङ्गमियाय ।
किमधुनैव संस्तूयते कमन ! गमनमह्नाय ॥ ७४ ॥

---

'नभ लाली चाली निसा चटकाली धुनि कीन ।
रति पाली आली अनत आये बनमाली न ॥ ७३ ॥'
'अजौं न आये सहजरँग विरह दूबरे गात ।
अबही कहा चलाइयत ललन चलनकी बात ॥ ७४ ॥'

अस्या नायिकायाः; विरहेण तनुः कृशा, तनुः (शरीरम्), इदमवधि (अयमवधिर्यस्य) एतत्पर्यन्तमपि, स्वाभाविकं रङ्गम् (शरीरस्य यः पूर्वं स्वाभाविको वर्ण आसीत्) न इयाय न प्राप। हे कमन! हे प्रणयिन्! अधुनैव अह्नाय (झटिति) गमनं किं प्रस्तूयते, त्वमात्मानमस्याः कामयितारं मन्यसे, एवमवस्थायाम्, पूर्वप्रवासक्लेशादेव नाद्याप्यस्याः शरीरं सुस्थमभवत्। अथापि पुनः प्रवासस्य प्रस्तावं करोषीति नायिकायाः सखी प्रवत्स्यन्तं नायकमाह। मूले 'ललन चलनकी बात' अत्र योऽनुप्रासः सोऽप्यत्र निर्व्यूढः। 'कम्रः कामयिताऽभीकः कमनः कामनोऽभिकः' इत्यमरः। रत्नाकरस्तु सर्वतो नवीनम् 'विरह दूबरे गात' पदेन नायिकानायकयोरुभयोः 'गात्र'रूपमर्थमाह॥ ७४॥

### —अनुरागः—

रमण रम्यरूपस्य ते केयं रीतिरुदेति।
क्षणमपि लग्ना यत्र दृक् क्षणमपि न क्षणमेति॥ ७५॥

हे सुन्दर! तव रमणीयस्य रूपस्य केयं रीतिरस्ति। यत्र रूपे क्षणकालमपि लग्ना पतिता दृष्टिः, क्षणकालार्थमपि क्षणं सुखं (निद्रादिजनितम्) न प्राप्नोति। त्वयि विलोकिते सति, तव सम्बन्धिनानुरागेण विवशीकृतहृदया सा न क्षणमपि निद्रां भजते इति नायिकासखी नायकं वक्ति॥७५॥

गोकुलकुलनार्यो न कति, कति न शिक्षिताः सन्ति।
मुरलीस्वरलीना न कति, कुलरीतिं व्यपयन्ति॥ ७६॥

गोकुले कति वा कुलनार्यो न सन्ति। अपि तु सर्वा एव। कति च ताः कुलनार्यः काभिर्न शिक्षिताः सन्ति। अपि तु सर्वा एव सर्वाभिः कुलमर्या-

---

'लाल तुह्मारे रूपकी कहौ रीति यह कौन।
जासौं लागत पलक दृग लागत पलक पलौन॥ ७५॥'
'किती न गोकुल कुलवधू काहि न केहि सिख दीन।
कौने तजी न कुलगली है मुरली-सुर-लीन॥ ७६॥'

दापालनार्थं शिक्षिताः । एवंस्थितावपि तस्य श्रीकृष्णस्य मुरलीस्वरे लीना वशीकृतचित्ताः, कति वा ताः कुलनार्यः कुलरीतिं न व्यपगच्छन्ति, अपि तु सर्वा एव कुलमर्यादां विहाय कृष्णाऽनुगा भवन्तीत्याशयः। परमानन्दस्तु —"का न गोकुले कुलवधूः का धर्मं न जहाति। का निपीय हरिमुरलिकाऽमृतं न तं प्रतियाति ॥" 'किती न गोकुलकुलवधू,' इति बहुवचने यत्स्वारस्यं तदपजहार। अतिशिक्षिता अपि सर्वथा मर्यादानुगा अपि, मुरलीस्वरलीनतया कुलपद्धतिं परित्यजन्तीति शिक्षाविषयमेव तिरश्चकार, प्रत्युत तत्स्थाने 'का धर्मं न जहाति।' इति श्रवणे कटुकमिव स्थापयामास। 'कौनै तजी न कुलगली' इति स्थाने धर्मपरित्यागरूपोऽर्थो रूक्षोऽनुचितश्च। भागवतादिभक्तिसंहिताप्रमाणैः साध्यतां नाम, परं परमौचित्यविचारे साहित्यसारे तन्न संघटते। अन्यः किल कविसमयः, अन्यश्च भक्तानां हृदयोद्गार इत्यलम्।

प्रैरि तेन सस्मितमितः, सस्मितमदादियं च।
द्वयोरभूद् गोमेलने मिलितं हृन्नयनं च ॥ ७७ ॥

चारयितुं गोधनं नयन्तं नायकं प्रति, नायिका स्वां धेनुं चारणाय सर्वासु नायकधेनुषु मेलयितुं प्रार्थयत्। नायकः परिहासमकरोदियमपि तदुत्तरमदादेवं द्वयोरनुरागोऽभवदिति वृत्तं सखी सखीं वक्ति—तेन नायकेन इतः (नायिका प्रति) सस्मितं गौः प्रैरि प्रहिता। [नायिकया स्वकीया गौः सर्वासु गोषु योजिता, परं नायकेन परिहासार्थं सा गौः नायिकासमीपे परावर्त्य प्रेरितेत्याशयः] इयं नायिकापि हास्यस्य उत्तरे हास्यमेव कुर्वती (सस्मितम्), ता गाम् अदात्। अर्थात् नायकं प्रति प्रेरितवती। एवं गोमेलने द्वयोर्नायिकानायकयोः पूर्वं नयन पश्चाच्च हृदयं मिलितमभवत्। द्वयोरनुरागोऽभवदित्याशयः ॥ ७७ ॥

---

'उन हरकी हँसिकै इतै इन सौंपी मुसकाइ।
नैन मिलैं मन मिल गये दोऊ मिलवत गाइ ॥ ७७ ॥'

दत्तं मे, मामकमभून्निवसति सह जीवेन ।
दयित ! सपत्नीकर इदं मनो देहि न बलेन ॥ ७८ ॥

हे दयित ! त्वया स्वस्य मनो मह्यं दत्तम् । त्वया यदा मनो मह्यं दत्तं तर्हि तत्, मदीयमेवाऽभवत् । इदानीं तस्योपरि ममैवाधिकारः । तत् मनः, साम्प्रतं मम जीवेन सह निवसति । अहं तत्ते मनः स्वजीवितसमं प्रतिपालयामीत्यर्थः । इदानीं तदिदं मनः, बलात् (अर्थात् मज्जीवितेन सह बद्धमपि, बलपूर्वकं आकृष्य) सपत्न्या हस्ते न देहि । यदि तत् बलादाकर्ष्यसि, तदा मम जीवितमपि गमिष्यसीति ध्वन्यते । अत्र 'उपपत्नीभ्यो रासि तत्कथमुचितमधुनैव ।' इति परमानन्दः । छन्दोभङ्गस्तु प्रत्यक्ष एव—'रासि' इति कियन्मधुरो धातुः ! अधुनैव इति एवकारस्य किं स्वारस्यम् ? अग्रे यदि मनोऽन्याभ्यो दीयेत तर्हि किं नायिका प्रसीदेत् ? विहारी तु अग्रे दानस्य वाग्दानं न करोति । आह स—"सो मन बाँधि न सौंपियै पिय सौतिन के हाथ ।" उपपत्नीभ्य इत्यपि सपत्न्या उपपर्याय एव ॥ ७८ ॥

## दम्पत्योरभिसारः

मिलितमभूदङ्गं द्वयोश्छायाचन्द्ररुचीषु ।
निर्बाधे सह गच्छतो हरिराधे वीथीषु ॥ ७९ ॥

हरेः राधायाश्चेति द्वयोरङ्गम्, छायायां चन्द्रकान्तिषु च मिलितमभूत् । कृष्णत्वात् हरेरङ्गं छायायां मिलितम्, गौरत्वाद् राधाया अङ्गं चन्द्ररुचिषु मिलितम् । यथासंख्यम् । अत एव केनाप्यलक्षिते, इति निर्बाधे निःशङ्के हरिराधे, वीथीषु ('गली') सह गच्छतः । हरिः राधा च वीथीषु कृता-

---

'मोहि दियो, मेरो भयो, रहत जु मिल जिय साथ ।
सो मन बांधि न सौंपियै पिय सौतिनके हाथ ॥ ७८ ॥'
'मिलि परछांही जौन्हसौं रहे दुहुनके गात ।
हरि राधा इक संग ही चले गली महिँ जात ॥ ७९ ॥'

लिङ्गनौ सह सह गच्छतः, परं तौ कोपि न पश्यति । हरिः श्यामवर्णत्वाच्छायाभागे मिलितः, राधा च चन्द्रिकायामेकीभूता इति निःशङ्कौ सह गच्छत इत्याशयः । मीलितम् । रुचीषु, वीथीष्विति 'कृदिकारादक्तिनः' इति ङीप् । बाधे, राधे इति प्रासः । परमानन्दस्तु "बभूवतुर्न च लक्षिते संगच्छतः सहैव ।" इत्याद्याह । संगच्छत इति लोकान्तरव्याकरणमपेक्षत इत्याद्युक्तम् ॥ ७९ ॥

## सुरतम्

पावकशिखेव सा यथा यथा हृदयमुपयाति ।
वक्षस्तरुणीस्पृष्टमिव तथा तथा निर्वाति ॥ ८० ॥

अग्निज्वाला इव उज्ज्वलकान्तिः सा नायिका, यथा यथा हृदयमुपयाति, वक्षःस्थलमालिङ्गति । तथा तथा तरुणी-('गुलाब') जलस्पृष्टमिव हृदयं निर्वाति शीतलं भवति । अग्निज्वालासादृश्यं भाषाशैल्यनुरोधेनेति पूर्वमुक्तम् । अग्निज्वालोपमाया आलिङ्गनेपि निर्वृतिरिति पञ्चमी विभावना, विषमो (द्वितीयः) वा ॥ ८० ॥

सपदविनति विपरीतरतमर्थितमथ रमणेन ।
दीपमिङ्गयन्ती जगौ सा सस्मितमौनेन॥ ८१ ॥

पदप्रणामपूर्वकं रमणेन विपरीतरतं याचितम् । अथ सा नायिका दीपम् इङ्गयन्ती सूचयन्ती । 'दीपो ज्वलति । अस्य प्रकाशे नेदं संभवति ।' इति दीपं प्रति इङ्गितं कुर्वतीत्यर्थः । सस्मितेन मौनेनैव जगौ उत्तरमददात् । प्रार्थनाया उत्तरे किञ्चन नोक्तम्, अपि तु स्मितं कृतमनेनैव अवचनमुत्तरं दत्तमित्या-

---

'ज्यौं ज्यौं पावक-लपट सी तिय हियसौं लपटाति ।
त्यौं त्यौं छुही गुलाब सौं छतिया अति सियराति ॥ ८० ॥'
'विनती रति विपरीतकी करी परसि पिय पाइ ।
हँसि, अनबोलैँ हीँ दियो ऊतर, दियो बताइ ॥ ८१ ॥'

शयः। परमानन्दस्तु—'सुरतविपर्ययवाञ्छया पत्यौ प्रणमति सैव। ददावुत्तरं भामिनी सस्मितमौनेनैव ॥' इति दीपं प्रति इङ्गितस्य कथामेवापललाप। 'सैव उत्तरं ददौ'? तर्हि अन्यः कश्चन वाक्कीलस्तत्राप्यपेक्ष्यते? सुरतविपर्ययपदेन विपरीतरतस्य ग्रहणमपि न कुत्रचिद्दृष्टम् ॥ ८१ ॥

→॥ नखक्षतम् ॥←

मरकतभाजनसलिलगा मृगाङ्कनवलेखेव।
सूक्ष्मपटान्तरिता लसति हरितनुनखरेखेह ॥ ८२ ॥

सूक्ष्मवस्त्रेण अन्तरिता, सूक्ष्मवस्त्रमध्याद् दृश्यमाना इत्यर्थः। हरेः, श्यामवर्णायाः तनोः (शरीरस्य) नखरेखा। मरकतभाजने भरिते सलिले गता (प्रतिबिम्बिता), चन्द्रस्य नवीना कला इव, इह लसति। श्वेतवर्णसूक्ष्मपटान्तरिते श्यामशरीरे नखलेखा, नीलमणिभाजनमध्ये जलं भृतं भवेत्तत्र द्वितीयातृतीयाचन्द्रस्य कला प्रतिबिम्बिता भवेत्, तादृशी शोभत इत्याशयः। सपत्न्याः सविधे कृतकेलिरागतोसीति सूचयितुं नायिकासख्याः नायकं प्रत्युक्तिः। अन्यटीकासु नायिकाया एवोक्तिः। परमानन्दस्तु—"नखरेखा मेचकतनौ तनुवसनावृत एव।" इत्यादि। 'सूक्ष्मं यद्वसनं तेनावृते तव मेचकतनौ' इति टीका। तनुशब्दस्य स्त्रीत्वमेव प्रसिद्धम्, अन्यलिङ्गं तु परमानन्द एव जानीयात् ॥ ८२ ॥

→॥ परिहासः ॥←

हरिरवदद्दिनमणिमिमं प्रणमत करद्वयेन।
श्रुत्वाऽऽसां सस्मितमभून्नयनं सेर्ष्यमनेन ॥ ८३ ॥

---

'मरकत-भाजन-सलिल-गत इन्दुकला कैं भेख।
झीन झगामैं झलमलत स्याम गात नखरेख ॥ ८२ ॥'
'रवि बंदो कर जोरि, ए सुनत स्यामके बैन।
भये हँसौहैं सबनके अति अनखौहैं नैन ॥ ८३ ॥'

चीरहरणलीलायाः प्रसङ्गोयम् । यदा नग्ना गोपिकाः, एकं हस्तं कुचयोर-परं च जघने विन्यस्य लज्जां गोपयन्त्यो, निजवस्त्राणि श्रीकृष्णाद्याचन्ते स्म, तदा हरिः अवदत्—'इम दिनमणिं सूर्यं करद्वयेन करद्वयस्य अञ्जलिं बद्ध्वा प्रणमत' इति । एतद्वचनं श्रुत्वा, ईर्ष्याक्रोधयुक्तमपि आसां नयनम्, अनेन परिहासेन सस्मितमभूत् । अनया युक्त्या, द्वावपि हस्तौ दूरयित्वा नग्नानाम-स्माकं दर्शनं वाञ्छतीति ज्ञात्वा, क्रोधेपि सहसैवाऽहसन्निति भावः । परमा-नन्दस्तु—'सर्वाः प्रणमत पद्मिनीबन्धुं करद्वयेन । सेर्ष्यसहासं तत्कृतं ताभिर्ह-रिवचनेन ॥' पूर्वं सेर्ष्यमपि नयनं सहासमभूदिति वार्तैव नास्ति । विहारी तु वक्ति 'भये हँसौहैं नैन' नेत्रं सस्मितमभून्न तु, श्रुत्वैव ताभिस्तत् कृतम् । तथा रसाऽनुदयात्, प्रत्युत ग्राम्यत्वात् । परमानन्दस्तु कथां वाचयति यत्—'ताभिः सूर्यप्रणमनं कृतम् ।' इति ॥ ८३ ॥

श्रुत्वा परवनिताफलं सस्मितमैक्षि कयापि ।
स्मितमगोपि कथमपि तदा कथावाचकेनापि ॥ ८४ ॥

पौराणिकः परस्त्रीगमनदोषं पुराणकथायां वाचयन्नासीत् । तत्र तस्य काचित्प्रियतमाप्यासीत् । परवनितानाम् (गमनस्य) फलम् (दुष्टम्) श्रुत्वा, कयापि (पौराणिकसुखप्रदया) अयं कथावाचकः सस्मितम्, ऐक्षि दृष्टः । तां स्मयमानां दृष्ट्वा कथावाचकेनापि, अतिकष्टात् स्मितम् गोपितम् । अन्यथा सर्वेषु श्रोतृषु तद्रहस्यं विदितमभविष्यत् । परमानन्दस्तु—'परवनि-तालम्पटफलं कथयन् बुधश्चकास । यदा कयापि विलक्षितो मन्दं तदा जहास ॥' विहारी वक्ति 'कसि करि राखी मिस्र हू, मुख आई मुसक्यानि ।' बलात्स्मितमगोपयदिति । परमानन्दो वक्ति—'मन्दं तदा जहास' । 'लखि मुलकी सुखदानि' इति यः प्रधानांशः स एव धूलीकृतः । प्रत्युत विपरीतं 'कथयन् बुधश्चकास ।' हन्त महाशय ? घासमेव कृतवानसि ॥ ८४ ॥

---

'परतिय दोस पुरान सुनि, लखि मुलकी सुखदानि ।
कसि करि राखी मिसहू मुख आई मुसक्यानि ॥ ८४ ॥'

## —अनुरागिणी—

**गुरुर्गुरुजनापत्रपा मनो मनोहरवर्ति ।**
**हिन्दोलितहृदयापि सा गृहकार्याणि बिभर्ति ॥ ८५ ॥**

गुरुजनानाम् अपत्रपा ( लज्जा ) गुर्वी, 'वोतो गुणे'ति वा ङीप् । मनस्तु मनोहारके तस्मिन् नायके वर्तमानम् । अत एव, हिन्दोलाधिरूढं हृदयं यस्याः ईदृश्यपि सा, बलात् गृहकार्याणि करोत्येव । मूले 'उर उरझ्यो' 'गुरु गुरुजन' इति यः शब्दालंकारः सोऽत्रापि निर्वोढ इति प्रेक्ष्यम् । परमानन्दस्तु—"हृदेकत्र हरते हरिर्गुर्वी गुरुत्रपा चा । स दोलाधिगतेव निजगृहकर्मसु विरराच ।" 'एकतः' इति भाव्यम् । त्रल् सार्वविभक्तिको न । दोलाधिरूढे मनसि यत्स्वारस्यं तच्छरीरदोलने न । वैकल्पिकणिच्साधनेपि 'विरराच' 'गृहकर्मसु चकार' इत्यस्य कोऽर्थः स्यात्? 'विरराच' अस्य माधुर्यमपि तुलया तोलनीयम् ॥ ८५ ॥

## —अनुरागी भक्तः—

**मनसो गतिमनुरागिणो मम न कश्चिदवयाति ।**
**श्यामरङ्गमग्नं क्रमादिदमुज्वलमाभाति ॥ ८६ ॥**

मदीयस्य अनुरागिणो मनसो गतिं कोपि न जानाति । यथा यथा श्यामरङ्गे कृष्णीकारकरागे मग्नं भवति, तथा तथा ('क्रमात्' पदलभ्यम्) उज्वलं श्वेतं भवति । श्यामरङ्गे रक्तं वस्तु, श्याममेव भवति न उज्वलम् । अत्र तु श्यामस्य श्रीकृष्णस्य अनुरागे मग्नम् एकान्ततो लीनं हृदयं वासनाविरहादुज्वलं निर्मलं भवतीत्याशयः । अत्रापि परमानन्दो यथा यथेत्यादि स्वारस्यं बभञ्ज ॥ ८६ ॥

---

'उर उरझ्यो चितचोरसों गुरु गुरुजनकी लाज ।
चढ़ी हिंडोरे से हिये किये बनैं गृहकाज ॥ ८५ ॥'
'या अनुरागी चित्तकी गति समुझै नहिं कोइ ।
ज्यौं ज्यौं बूडै स्याम रँग त्यौं त्यौं उज्जल होइ ॥ ८६ ॥'

**भ्रमसि गृहं गृहमर्थयसि जनं जनं दययाऽति ।**
**स्पृहोपनेत्रे दृशि धृते लघुरपि महान् विभाति ॥ ८७ ॥**

गृहं गृहम् अटसि । जनं जनम् (सामान्यमपि जनम्) अतिदयया याचसि । प्रार्थयन्ति शयनोत्थितमितिवदर्थयसि । नेदं पश्यसि, यदयं जनो महान् (याचनार्होऽस्ति) अथवा, अतिलघुर्दूरतः परिहरणीय इत्याशयः । मन्ये—स्पृहा (लालसा–)–रूपे उपनेत्रे, (दृशि) नेत्रोपरि धृते सति, लघुरपि जनो महान् प्रतीयते । त्वं लोभादेव लघुमपि महान्तं दृष्ट्वा याचसि । अहो! कीदृशी सूक्तिः । धन्यो विहारी । परमानन्दस्तु—'धृतलोभोपदृशो भृशं लघ्वपि महद्विभाति ।' उपदृक्पदमप्रसिद्धं प्रयुज्य सर्वमेवास्पष्टं तिरोदधौ ॥ ८७ ॥

## —॥ वसन्तपवनः ॥—

**रणद्भृङ्गघण्टावलिः स्रवन् दानमधु भाति ।**
**कुञ्जमरुत्कुञ्जर इतो मन्दमन्दमायाति ॥ ८८ ॥**

रणन्तो भृङ्गा एव घण्टावलिर्यस्य, दान (मद–)–सदृशं मधु पुष्परसं स्रवन् वर्षन् असौ भाति । सोयं कुञ्जपवनरूपः कुञ्जरः, इतः अस्माकमभिमुखं मन्दमन्दं शनैः शनैर्गजोचितया गत्या आगच्छति । अहो कीदृशं गजरूपकम् । 'कुञ्जमरुत्कुञ्जर' पदे कीदृशं शब्दलालित्यम् । परमानन्दस्तु शब्दस्वारस्यादिकमत्रापि चूर्णयामास ॥ ८८ ॥

---

'घर घर डोलत दीन ह्वै जन जन जाचत जाइ ।
दियैं लोभचसमा चखनि लघु पुनि बड़ौ लखाइ ॥ ८७ ॥'
'रनित भृंग घंटावली, झरत दान मधुनीर ।
मन्द मन्द आवत चल्यो कुंजर कुंज-समीर ॥ ८८ ॥'

## वसन्तवनम्

चकितचेतसा गृहमगुर्नवपथिकाः पुनरेव ।
कुसुमितकिंशुककाननं वनवह्निं ज्ञात्वेव ॥ ८९ ॥

नवीनपथिका., यैर्वसन्ते वनयात्रा न पूर्वं कृताऽभूत् । गृहाद् वने गत्वा, पुष्पितं किंशुकवनं (पलाशवनम्) दवाग्निमिव ज्ञात्वा, चकितेन चेतसा पुनरेव स्वगृहमयासिषुः । किंशुकवनं वसन्ते साक्षाद्दवाग्निरिव दृश्यते इति अनुभविभिः प्रत्यक्षीकृतम् । परमानन्दः—'नवपथिकः कथमपि निजं यदा सदनमुपयाति । नेदं विकचपलाशमिति दावानलो विभाति ॥' मत्तप्रलापं चकार । द्वयोरर्द्धयोः कः संबन्धः? किं विकचपलाशम्? वनम्? तत्तु दूर-दूरमपि न दृश्यते । बिहारी, गृहाद्बहिर्गत्वा पुनर्गृहागमनं वक्ति । परमानन्दस्तु—'यदा निजसदनं कथमपि उपयाति, तदा इदमुत्प्रेक्षते' इति स्वप्नं वीक्षते । हन्त सर्वं पद्यमेव मृत्तिकयामास ॥ ८९ ॥

## प्रावृट्पयोदः

धूमभरैर्धरणी भृता, सखि! जलदा न कदापि ।
प्रावृट्प्रथमपयोधरैर्ज्वलयद्भिर्जगदापि ॥ ९० ॥

हे सखि! इमे कदापि मेघा न सन्ति । जगत् ज्वलयद्भिः प्रावृट्कालस्य प्रथमैः पयोधरैः आपि, प्राप्तम् । भावे प्रत्ययः । प्रावृट्कालस्य वारिदाः प्राप्ता इति भावः । ते जगत् ज्वलयन्तीत्यस्य प्रमाणमाह—यत्पश्य! इमे गगनमूले मेघा न सन्ति, किन्तु धूमभरैर्धरणी व्याप्तास्ति । यदि ते भुवनं न दहन्ति, तर्हि धूमः कथमुत्पद्यते । विरहिण्या उक्तिः ॥ ९० ॥

---

'फिरि घरकों नूतन पथिक चले चकित-चित भागि ।
फूल्यो देखि पलासबन समुही समुझि दवागि ॥ ८९ ॥'
'धुरवा होंहिं न अलि, उठै धुवां धरनि चहुँ कोद ।
जारत आवत जगतकों पावस-प्रथमपयोद ॥ ९० ॥

## हेमन्तः

**न प्रतिभाति गतागतम्, शाम्यति तेजो न्यस्य ।**
**गृहजामातुरिवाऽह्रसन्मानं पौषदिनस्य ॥ ९१ ॥**

श्वशुरगृहनिवासिनो जामातुः संमानो यथा, तथा पौषदिनस्य मानं (प्रमाणम्) अह्रसत् अहीयत । दिवसः कदा उदेति कदा च अस्तमेति इति दिनस्य, कदा जामाता गृहे आयातः, कदा च बहिर्गतः इति जामातुः, द्वयोरपि गतागतं न प्रतीयते, इत्याशयः । उग्रस्वभावोपि जामाता श्वशुरगृहे निजस्य तेजः न्यस्य मुक्त्वा, शाम्यति शान्तो भवति । एवं पौषदिवसोपि रवितेजो दूरयित्वा शीतलो जातः । जामातृपक्षे मानपदस्य पुंस्त्वमावश्यकम्, परम् एकस्यैव 'मान'स्य ('मा' धातुनिष्पन्नस्य) धातूनामनेकार्थतया कार्यं साधनीयम् । परमानन्दस्तु—'दिन दिनं दिनमानमिह पौषे परं क्षिणोति । श्वशुरगृहे जामातुरिव मानः स्वयं मिनोति ।" इति सर्वं भावमेव भस्मीचकार । क्व 'आवत जात न जानिये !' क्व च 'तेजहिं तजि सियरान' ! दिनं दिनमिति आवृत्त्याप्यतृप्तः पुनर्दिनमानमित्याम्रेडयति । 'क्षिणोति' 'मिनोति' पदयोः, क्षीण करोति हन्ति, इत्येवार्थः । क्षीयते, हीयते इत्यर्थस्तु स्वर्गीयव्याकरणसाध्यः । हन्त सर्वं पद्यस्यानन्दमेव कवलीचकार । किं फलमनुवादेन? ॥ ९१ ॥

## अन्योक्तयः

### भ्रमरः

**न परागो न हि मधुरमधु, न च विकासमियमेति ।**
**कलिकयैव बद्धोऽस्त्यलिः, किमपरतो भवितेति ॥९२॥**

---

'आवत जात न जानियत, तेजहिं तजि सियरान ।
घरहँ जमाई लौं घट्यो खरो पूस-दिन-मान ॥ ९१ ॥'
'नहि पराग नहि मधुर मधु, नहि विकास इँहिं काल ।
अली कली ही सौं बँध्यौ, आगैं कौन हवाल ॥ ९२ ॥'

अस्यां पुष्पकलिकायां न परागोऽस्ति, मधुरं मधु (यद्धि पूर्णविकसितेषु कुसुमेषु लभ्यते, तदपि )नास्ति । न च इयं विकासं प्राप्नोति, (पूर्णे पुष्पे यो विकासः, पक्षान्तरे च यौवनजनिता अङ्गानां प्रफुल्लता, अस्यां नास्ति) अलिर्भ्रमरः कलिकया एव बद्धः (सर्वं कार्यजातं विस्मार्य) वशीकृतः। अपरतः अग्रतः, किं भविता भविष्यतीति विचार्यम् । यदा इयं कलिका विकसिष्यति तदा भ्रमरस्य का दशा स्यादित्याशयः । अतिमुग्धासक्तं नायकमुपदेष्टुं सख्यादिकस्योक्तिः । हन्त हन्त परमानन्दः सप्तशतीसारभूतमिदं पद्यं कथं कदर्थयामास—'मधुप न मधुरपरागोपि, न विकासः कलिकासु। सपदि राग ईदृशोहो अग्रे कीदृश आसु ॥' कस्मिन् छन्दसि, कां गाथां प्रलपति इति स्वर्गतः स एव जानीयात् । बहुवचनं विना परमानन्दस्य तृप्तिर्नाभवत्किं येन सर्वोपि भावो निर्मूलितः। 'ईदृशो हो' तु माधुर्यस्य परां सीमानं दर्शयामास । नेदं मुद्रणाशुद्धिकृतं बोद्धव्यम् । टीकायामपि स्पष्टमिदमेव व्याख्याति । भाग्यं सप्तशत्याः ! ! ॥ ९२ ॥

**भ्रमति सरसकुसुमेप्यलिर्झटिति नमन्न समेति ।**
**अतिमृदुतनुमवलोकयन् स्पृशन्न हृदि प्रत्येति ॥ ९३ ॥**

सरसेपि कुसुमे अलिरुपरितो भ्राम्यति, नमन् सन् झटिति तत् न समेति नालिङ्गति। पुष्पस्य अतिमृद्वीं तनुमवलोकयन्, तत्पुष्पं स्पृशन् हृदये न विश्वसिति । इदं पुष्पं मम भारं सहेत न वा इति हृदये संदिह्य, पूर्वं भ्रमन्नेव रसं गृह्णाति, न सहसाऽऽलिङ्गतीति भावः । अत्रापि पूर्व एव प्रसङ्गः। अत्रापि परमानन्दः 'परसत मन न पत्यात' इति आवश्यकमंशं सर्वथा तत्याज। बहुवचनस्य तु रोग एव । अथवा 'तुकान्त'निमित्तं निपतति तत्र—'किल शिरीषकुसुमेषु' इत्याह । किंजल्कोपि प्रायः कमल एव श्रुतः ॥ ९३ ॥

---

'सरस कुसुम मँडरात अलि, न झुकि झपटि लपटात ।
दरसत अति सुकुमार तनु परसत मन न पत्यात ॥ ९३ ॥'

## —ॐ गान्धिकः —

करे गृहीत्वा सस्तवं घ्रात्वा, मौनमयन्ति ।
गान्धिक मूढ ! सुगन्धि ते के ग्राम्याः क्रीणन्ति ॥९४॥

सर्वे ग्रामीणाः सुगन्धि (पुष्पसारम्) हस्ते गृहीत्वा, उत्तममस्तीति प्रशंसापूर्वकं घ्रात्वापि, तूष्णीमेव स्थिताः । न केनचिन्मूल्यमपि पृष्टम्, क्रयणस्य तु का कथा? अत एव हे मूढ़ गान्धिक ! ते पुष्पसारं के क्रीणन्ति? केपि ग्राम्या न क्रीणन्ति, व्यर्थस्ते परिश्रम इति भावः । अत्र हि ग्रामीणानामविकलं चेष्टां वर्णितवान् विहारी—तैः स्वकीयं बुद्धिमत्त्वं प्रकाशयितुं हस्ते गृहीतम्, सुगन्धि घ्रायते इति तैराघ्रातमपि, परं गुणज्ञत्वाभावात्क्रयणं क्वासीत्? परमानन्दस्तु सर्वमिदं परित्यज्य गान्धिककथां वाचितवान्—'हे सौरभ्यवणिग्वृथा ग्रामे ग्राम्यजनेषु । सौरभ्यं किमु दर्शयसि तदादरारसिकेषु ॥' इति । सुरभेर्भावः सौरभ्यम्, न पुनः सुरभि वस्तु सौरभ्यम् ॥ ९५ ॥

सुरभितैलमाचम्य ये मधुरमतीव वदन्ति ।
सौगन्धिक मत्यन्ध ! ते गन्धं के जानन्ति ॥ ९५ ॥

मत्या अन्ध ! निर्बुद्धे ! इति भावः । अत्रापि परमानन्दः 'इह मा दर्शय सौरभान्यर्थास्तेपि भवन्ति' इति वक्ति । रत्नाकरेण पद्यमिदं सप्तशतीतो बहिर्भूतं परिगणितम् ॥ ९५ ॥

---

'करले सूंघि सराहि हू रहे सबै गहि मौन ।
गन्धी अन्ध, गुलाबको गँवई गाहक कौन ॥ ९४ ॥'
'करि फुलेलको आचमन मीठो कहत सराहि ।
ये गन्धी मति अन्ध तू अतर दिखावत काहि ॥ ९५ ॥'

गोपः

त्वं गायन गायननिपुण! किं गायसि गोपेषु ।
करवीणां कलयसि कथं 'करवी'णां रसिकेषु ॥ ९६ ॥

गायननिपुण गायक! गोपालनचतुरेषु गोपेषु किं गायसि। 'करवी'णां ('कड़वी' इति भाषाप्रसिद्धं कड्ङ्गरवाचकम्) रसिकेषु एषु, करे वीणां (वल्लकीम्) कथं कलयसि। महिष्याः पुरतो वादने यो लाभः स एवात्रेति भावः। इदमपि सप्तशत्यां न परिगणितम् ॥ ९६ ॥

कनकः

कनकाद्बहुगुणितं मतं कनकं मदजनकं तु ।
तद्भुक्तं मदयति मनाङ् मदयति तद्युक्तं तु ॥ ९७ ॥

कनकं सुवर्णम्, कनकाद् धत्तूराद् बहुगुणितं मदकारकं मतम्। तद्धत्तूरचूर्णम् (द्वितीयकनकसांनिध्यादस्मिन्कनकेपि क्लीबत्वं सह्यम्) भुक्तं सत् मदमुत्पादयति। इदं कनकं तु युक्तं सत् (योगे सति 'जुडनेपर') मदयति ॥९७॥

विरुदभैररपि गुणमृते न हि महत्त्वमुपयाति ।
कनकमाह धत्तूरकं भूषां न हि विदधाति ॥ ९८ ॥

प्रशंसोपपदसमूहैरपि गुणं विना कोपि जनो महत्त्वं न प्राप्नोति । जनो धत्तूरं कनकमित्याह (कथयति), परं स कनको भूषणानि न निर्माति। परमानन्दस्तु कथान्तरमेवाह—'कनक त्यज कनकभिधां किमु नाम्ना प्रभुतापि। भूषानिर्मितिशालिनी शक्तिस्त्वयि न तथापि ॥' 'गुनन बिन बिरद

---

'तू गायन गायनचतुर ये गायन परवीन ।
ये गाहक करबीनके लै बैठ्यो कर बीन ॥ ९६ ॥'
'कनक कनकतैं सौगुनो मादकता अधिकाय ।
वह खायैं बौरात नर वह पायैं बौराय ॥ ९७ ॥'
'बडे न हूजे गुनन बिन विरद–बडाई पाइ ।
कहत धतूरे सौं कनक गहनो गढ्यौ न जाइ ॥ ९८ ॥'

बढाई पाय।' इति यन्मर्म तदस्मिन् कोशेष्वपि न। उभयार्द्धयोः परस्परं सम्बन्धोपि 'बादरायण' इव॥ ९८॥

महत्त्वम्

**न हि लघवो गुरुतां दधति, कामं व्योम लिहन्तु।**
**दृशौ न दधतो दीर्घताम्, बहून्मील्य पश्यन्तु॥ ९९॥**

कामं यथेच्छं ते शरीरमुच्छ्राय्य (उन्नतं कृत्वा), गगनमपि स्पृशन्तु, परं तुच्छाः कदापि गौरवं न गच्छन्ति। अत्यन्तम् उन्मील्य विस्फार्य, पश्यन्तु परं दृशौ (नयने) कदापि दीर्घतां न धारयतः। अत्रापि परमानन्दः स्वबुद्धिं दर्शितवान्—'धिक्कृतोपि लघुरिह पुनर्न महत्वं प्रतियाति। विस्फारितमपि दृग्युगं न दीर्घत्वमनुलाति।' 'लगौ सतर ह्वै गैन (गगन)' इति जीवभूतमेव पञ्चत्वं नीतवान्। किञ्च, यो धिक्कृतः स महत्त्वं गच्छेदेव केन मार्गेण? किं नु धिक्कारो महत्त्वस्य कारणम्? प्रतिबिम्बकोटौ विस्फारणमक्ष्णोर्धिक्कारो नाम?॥ ९९॥

आशीः

**हिन्दुयवनयोषागणः सस्तुति साशीराह।**
**पतीनवन्नददाद्भवान् सौभाग्यं 'जयशाह'॥ १००॥**

'बलख'नगराद्धारतेशसैन्याऽऽनयनेन, सैनिकपत्न्यो वैधव्यदुःखाद्रक्षिताः। अतएव गृहे गृहे हिन्दुयवनमहिलानां समूहः प्रशंसापूर्वकम् आशीर्वादप्रदानपुरस्सरं चेदमाह—हे जयशाह! (आम्बेरपते!) अस्माकं पतीन् अवन् (रक्षन्) भवानेव सौभाग्यमददात्। हिन्दुस्त्रीणां करकंकणाः ('चूडी'), यवनीनां चावगुण्ठनम् ('चादर') त्वयैव रक्षितानीत्याशयः॥ १००॥

---

'ओछे बडे न ह्वै सकैं लगौ सतर ह्वै गैन।
दीरघ होहिं न नैंकहूं फारि निहारैं नैन॥ ९९॥'
'घर घर हिन्दुन तुरकिनी देत असीस सराहि।
पतिन्नु राखि चादर चुरी तैं राखी 'जयसाहि'॥ १००॥'

### —⊰ वेणीबन्धनम् ⊱—

#### —⊰ घनाक्षरी ⊱—

मर्मरशिलातले निषण्णवामजानुभरं
 कामभुत्तरङ्गनयनाऽसौ बहिरीक्षते
पार्श्वतो निरीक्ष्य तुङ्गमेतद्भुजमूलं मनाक्
 कामसुखमूलं मनो मोदमवपद्यते ।
रशनानिबद्ध-पृथु-निबिड़-नितम्बमेक्ष्य
 गृहशिखिनापि नृत्यविवशं निषद्यते
मन्थरमवाप्य जालवातायनश्रेणीमिमा-
 मेणीदृशा पुष्पैरियं वेणी विनिबध्यते ॥ २४ ॥

मर्मरशिलायाः [ सङ्गेमरमर ] उपरि, स्थितः वामजानुनः भारो यस्मिन्कर्मणि यथा स्यात्तथा । अत्यन्तम्, चंचलनयनाऽसौ, बहिः, गवाक्षाद्बहिःस्थं जलाशयादिदृश्यम्, ईक्षते । वामपार्श्वतः, तुङ्गम्, एतद् भुजमूलं वीक्ष्य । पश्यतो जनस्य चित्तम्, कामसुखमूलम् ( स्मरविलाससंबन्धिनम् ) मोदम्, प्राप्नोति । रशनया ( रत्नादिजटितया कटिमेखलया ) निबद्धम्, विशालम्, घनम्, नितम्बम् ( पृष्ठभागतः ) आ–ईक्ष्य । पालितमयूरेणापि हर्षनृत्यवशाद्विवशं यथा स्यात्तथा निषद्यते ( स्थीयते ), रसिकस्य मनुष्यस्य तु का कथा ? एवं मनोहरप्रकारेण, इमां जालवातायनस्य श्रेणीम् मन्थरम् उपेत्य, अनया संमुखे दृश्यमानया मृगलोचनया पुष्पैरियं वेणी विरच्यते । प्रतिचरणं प्रासाः ॥ २४ ॥

### —⊰ अलक्तकेन चरणरञ्जनम् ⊱—

चम्पकसमानरुचि कम्पकरमम्बुरुहां
 सम्पन्नवपल्लवेऽपि सुपट्ठु पराहता

## वेणीबन्धनम्



"एणीदृशा पुष्पैरियं वेणी विनिबध्यते ॥"

Lakshmi Art, Bombay, 8

मञ्जुलममलमवधीरिताऽऽभरणमये
शोभते ते चरणमलभ्या तत्समानता ।
मञ्जुनाथ शिञ्जारवमुखरमनोज्ञकरं
किं पश्यसि दासीदत्तरङ्गमिदमानता
लाक्षा नेयमिन्दुमुखि ! चरणतलोपगता
साक्षादियमम्भोरुहलक्ष्मीः समुपागता ॥ २५ ॥

दासी नायिकाश्चरणौ लाक्षारागेण रञ्जयति । सा च निजचरणं वारं वारमीक्षते, तत्राह—इदं ते चरणं चम्पकपुष्पसदृशकान्ति । कमलानामपि शोभातिशयेन कम्पकरम् । नवीने पल्लवेपि शोभा, अत्यन्तं तिरस्कृता । किसलयतोपि तदिदं कोमलमित्याशयः । अये ! (सुन्दरि !) मञ्जुलम्, स्वच्छम्, अवधीरिताभरणम्, अभूषणमपि ते चरणं शोभते । तस्य (चरणस्य) समानता अलभ्या अप्राप्या । चम्पककमलकिसलयादयश्चरणोपमानभूता आसंस्ते सर्वेप्यनेन पराजिता इति, इदानीं चरणसमानता अप्राप्यैवेति भावः । हे सुन्दरि ! शिञ्जारवेण (भूषणशब्देन) मुखरो मनोज्ञः करो यस्मिंस्तथा त्वम्, दासीदत्तरङ्गम् इदं चरणम्, आनता सती किं पश्यसि ? हे इन्दुमुखि ! इयं लाक्षा नास्ति, चरणतलोपगता इयं साक्षात् कमललक्ष्मीः (शोभा) समागताऽस्ति । सर्वतः सुन्दरं तव चरणं प्रसादयितुमियं कमलशोभा (रक्तवर्णा) आगतेत्याशयः ॥ २५ ॥

## केलिवातायनम्

मर्मरनिबद्धचन्द्रशालाजालवातायने
काचिद्वरबाला सुस्थिताऽभून्मदमन्थरम्
तावन्मन्दमन्दमुपयातो दयितोऽभूत्सुखं
तदिदमुदीक्ष्य सखी निर्गता मिषोत्तरम् ।

मुखरितकङ्कणं करेण करं कर्षन्नसौ
पृष्ठतः समेत्य भुजमूलमनयत्करं
स्पर्शपुलकेन काममुच्छ्वसदुरोजयुगा
सापि च सरोजमुखी लीनाऽभून्निरन्तरम् ॥ २६ ॥

मर्मरपाषाणनिर्मिते चन्द्रशालायाः (उपरिगृहस्य) जालवातायने। काचिद् वरा सुन्दरी, मदमन्थरं सुस्थिताऽभूत्। तावत् (अस्मिन्नन्तरे) प्रियतमो मन्दमन्दं यथा स्यात्तथा सुखमुपागतोऽभवत्। तत् इदम् (नायिकानायकयोः एकत्रावस्थानम्) निरीक्ष्य सखी, मिषोत्तरं व्याजं कृत्वा, वातायनाद्बहिर्निर्गता। असौ नायको विविक्तं वीक्ष्य, पृष्ठतः समागत्य, वामेन निजकरेण मुखरकङ्कणं नायिकाकरमाकर्षन्, दक्षिणं निजकरं नायिकाया भुजमूलं प्रति अनयत्। नायकस्पर्शजातेन पुलकेन, कामम्, उन्नमत्कुचयुगला, सापि प्रेमपरवशा निरन्तरं लीनाऽभूत्। नायकस्पर्शसुखं प्राप्य, पुलकितकम्प्रतनुलता सा तूष्णीं भूत्वा, वातायनमाश्रित्य बहिः प्रेक्षांचक्रे, न प्रतिवादमकार्षीदिति भावः। प्रतिपादमनुप्रासाः ॥ २६ ॥

## दम्पत्योर्मानकलहः

किञ्चिन्मात्रमेव मनोऽभीष्टे प्रतिरुद्धे सति
मानविनिबद्धे हृदि कोपः समुपेयते
अन्येभ्यो निगूढे गाढकलहेऽतियाति दिनं
वाञ्छन्नपि कोपि नापि संमुखमवेक्षते।
'नाऽहं वच्मि पूर्वमि'ति सायं मन्दमानौ, निशि
निभृतं शयानौ ततस्तुष्यतोऽक्षिण संगते
मानालीढमत्योरहो! दम्पत्योर्विचित्रः कलि-
श्चाद्भुतचरित्रश्चोपसंहारः समेधते ॥ २७ ॥

केलिवातायनम्



" स्पर्शपुलकेन काममुच्छ्वसदुरोजयुगा
सापि च सरोजमुखी लीनाभून्निरन्तरम् ॥"

Lakshmi Art, Bombay, 8.



" नृपतिकिशोरी कापि शेते मदविह्वलम् ॥ "

Lakshmi Art, Bombay, 8

किञ्चिन्मात्रमेव, मनोऽभीष्टे विषये प्रतिरुद्धे सति ( आह्वाने आगमनम्, स्पर्शे आनुकूल्यम् इत्यादौ निजमनोरथे किञ्चिदपि रुद्धे सति )। मानयुक्ते मनसि (नायकस्य, नायिकायाश्च)। कोपः आगच्छति। ईङ् गतौ। अन्येभ्यो गृहजनेभ्यो गूढे ( कस्याप्यविदिते ) गाढे कलहे दिनं व्यत्येति। शनैः शनैः कोपमन्दीभावेन वाञ्छन्नपि, नायिकानायकयोर्मध्ये कोपि, क्रोधमभिनेतुं संमुखमपि न वीक्षते, संलापादिकस्य तु का कथा। सायंकाले जाते द्वावपि मन्दमानौ। इदानीम्, "अहं पूर्वं न संलपामि, यदि द्वितीयपक्षतः प्रथमं संलापो भवेत्तर्हि सम्यग् भवेत्" इति विचारयन्तावेव रात्रौ तूष्णीमेव शयानौ अभूताम्। मानस्तु पूर्वमेव निःशेष आसीत्। केवलमनुनयप्रतीक्षाऽसीत्, अत एव नेत्रे संगते एव, द्वावपि तुष्यतः। अहो! मानयुक्तचेतसोर्दम्पत्योः कलहोऽपि विचित्रः, कलहस्योपसंहारोपि विचित्रचरित्रयुक्तोस्ति ॥ २७ ॥

## विश्रब्धशयनम्

पाण्डुविमलेऽस्मिन् किल कोमलोपधानतले
　मञ्जु मुखमावहन्ती विलुलितकुन्तलम्
मदनमहीपस्येव मञ्जुलेऽत्र छत्रतले
　न्यञ्चति निधानमिव कुचयुगमुज्ज्वलम्।
स्वप्ने संगताय परिरम्भं दयिताय सुखं
　ददतीव बाहुलतां चलयति चञ्चलं
मञ्जु युगमेषा दृशोरीपदवमील्य मनाङ्
　नृपतिकिशोरी कापि शेते मदविह्वलम् ॥ २८ ॥

पाण्डुरे विमलेऽस्मिन्, कोमले उपधानपृष्ठे। शयनवशात् विलुलितकेशं सुन्दरं मुखम् आवहन्ती। कामनरपतेरिव मञ्जुले छत्रतले। कामसर्वस्वनि-

धिरिव, उज्वलं कुचयुग्मं न्यञ्चति नीचैर्मुखं तिष्ठति। स्वप्ने संगताय प्रियतमाय सुखपूर्वकमालिङ्गनं ददतीव, बाहुं प्रसारयति । भुजस्तथा प्रसारितो यथा कञ्चन आलिङ्गितुं प्रसारितो भवेदित्याशयः। स्वप्नसमागमसूचकं दयितस्य मन्दच्छायं चिह्नमप्यवलोक्यताम्। मञ्जुलं दृशोः (नयनयोः) युग्मम् ईषदवमील्य (संपूर्णं न मीलयित्वा, भाग्यवतां शयनेपि अर्द्धमीलितं नेत्रयुग्मं भवतीति सामुद्रिकम्) काचित् नृपतिकिशोरी। यौवनवशात्, मदविह्वलं शेते। चतुर्थे–दृशोरी किशोरी इति अनुप्रासः॥ २८॥





# 'बरवै' चत्वरः ।

### द्वादशमासी [1]

मम सखि ! चैत्रे चन्दननिचयचरेण ।
चित्रं विचलति चेतः पवनभरेण ॥ १ ॥

हे सखि ! चैत्रे चन्दनतरुखण्डचारिणा, मलयागतेन पवनभरेण अपि, मम चेतः खिद्यते । चन्दनवायुः शीतलत्वात्सर्वानानन्दयति । मां तु एषोपि दहतीति चित्रम् ॥ १ ॥

वैशाखे सरविशिखा विक्लवयन्ति ।
विषमविरहविषवह्निं वपुषि वमन्ति ॥ २ ॥

विह्वलयन्ति, मां विह्वलां कुर्वन्ति । यतो हि शरीरे विषमं विरहविषाग्निं ते वमन्ति । अत एवाहं संतप्ये इति भावः ॥ २ ॥

ज्येष्ठे ज्वरमिव जनयति जलजसखोपि ।
जिह्मं जीवति जीवनधनरहितोऽपि ॥ ३ ॥

ज्येष्ठमासे कमलिनीबन्धुरपि सूर्यस्तापवशात्, ज्वरमिव उत्पादयति । जीवनधनेन प्रियतमेन रहितः सन्नपि मादृशो जनः, जिह्मं कुटिलं जीवति । प्राणवल्लभरहितस्य मादृशस्य जीवनं निरर्थकमेवेत्याशयः ॥ ३ ॥

---

१ व्रजभाषायाम् 'बारहमासी' नाम्ना, नायिकाया विरहावस्थावर्णनपुरस्सरं द्वादशमासकार्याणि वर्ण्यन्ते । संस्कृतेऽपि तदिदं संभवतीति दर्श्यतेऽत्र । द्वादशमासाना समाहारः ।

आषाढे मुहुराशा घनैरपूरि ।
प्रियसखि ! मम पुनराशा भ्रमयति भूरि ॥ ४ ॥

मेघैः आशा ( दिक् ) मुहुः पूर्णा अक्रियत । मम आशा ( मनोरथः ) तु मां भ्रमयति, बद्धाशाहं भूरि दुःखं प्राप्नोमीत्याशयः ॥ ४ ॥

नभसि नभसि नवजलदैर्वृष्टिरकारि ।
चित्रं सखि ! मम दृग्भ्यां प्रवहति वारि ॥ ५ ॥

नभसि (श्रावणे) मेघैः, नभसि (आकाशे) वृष्टिः कृता । मम दृग्भ्यां तु जलं प्रवहति । यत्र वृष्टिर्भवति तत्रैव जलं प्रवहति । अत्र तु वृष्टिराकाशे, जलप्रवाहो नेत्रयोरित्यसङ्गतिरलङ्कारः ॥ ५ ॥

भाद्रे घनजलभरिताः सरिता भान्ति ।
आशाः पश्य ! कदा मे हरिता भान्ति ॥ ६ ॥

मेघजलपूर्णाः नद्यो भान्ति ( भागुरेराप् ) । पश्य ! मम आशाः (मनोरथाः) कदा हरिताः सत्यो भान्ति । कदा पूर्णा भवन्तीत्याशयः ॥ ६ ॥

आश्विनमासि मृगाङ्को मुदितमुपैति ।
सखि मम मानससदने तिमिरमिवैति ॥ ७ ॥

मृगाङ्कः (चन्द्रः) मोदं प्राप्नोति, भृशं दीप्यते इत्यर्थः । परं हे सखि ! मम मानसगृहे, तथापि अन्धकार इव आगच्छति । विरहवशान्मम चित्तं तिमिरावृतमिवास्तीत्याशयः ॥ ७ ॥

कार्तिकिके किल कमलामर्चति को न ? ।
क्लिश्यति मादृक् कृपणः क्रीडति यो न ॥ ८ ॥

कार्तिके लक्ष्मीं को वा न अर्चति, सर्वे एव पूजयतीत्यर्थः । यो विरहदुःखात् न क्रीडति, स मादृक् दरिद्रः क्लिश्यति ॥ ८ ॥

मार्गे हैमनपवनो जवनो वाति ।
न मनो मदनोद्रेकाद्धृतिमिह याति ॥ ९ ॥

मार्गशीर्षे हेमन्तसम्बन्धी ( शिशिरः ) जवयुक्तः पवनो वाति । मम मनः, मदनवेगवृद्धेर्वशात् धृतिं न गच्छति ॥ ९ ॥

पौषेऽपरिमितशीतं वपुरुपहन्ति ।
प्रियतमविरहः प्रियसखि ! तदपि निहन्ति ॥ १० ॥

अपरिमितं शीतं मम शरीरं पूर्वमेव क्लेशयति, तदुपरि प्रियविरहो निहन्तीत्याशयः ॥ १० ॥

माघे मञ्जुदृशोऽमूर्मुदमुपयान्ति ।
मयि सखि ! मनसिजबाणा मुहुरभियान्ति ॥ ११ ॥

इमाः सुदृशः(स्त्रियः) दयितसमागमरूपमानन्दं गच्छन्ति । अभियान्ति आपतन्ति ॥ ११ ॥

फाल्गुन ! फलयसि कामांस्तदिह नमामि ।
प्रियतमसंगमसुखिनी मनसि न मामि ॥ १२ ॥

हे फाल्गुन ! त्वं मम मनोरथान् फलितान्करोषि, अतस्त्वां नमामि । प्रियसमागमसुखिताऽहं संप्रति हृदये न मामि । ममानन्दो हृदये न मातीत्यर्थः । नमामि, न मामीति यमकः ॥ १२ ॥

## विरहिणी

बाला वल्लभविरहाद्विपिनगतेव ।
निर्यन्नीरं शोचति पटलिखितेव ॥ १३ ॥

विपिनं गता इव, शून्ये स्थिता इवेत्यर्थः। चित्रपटेऽङ्कितेव निर्यद्बाष्पं यथा स्यात्तथा शोचति ॥ १३ ॥

ताम्यति शेते श्राम्यति शुचमुपयाति।
सा विरहे तव, मुह्यति लुठति जहाति ॥ १४ ॥

तव वियोगे सा ( नायिका ) ताम्यति व्यथते। मुह्यति मोहं प्राप्नोति, भूमौ लुठति, पुनस्तल्लोठनं जहाति ॥ १४ ॥

करधृतपाण्डुकपोला नयनजलेन।
सिञ्चति हृदयं तप्तं स्मरदहनेन ॥ १५ ॥

स्मरदहनेन तप्तं हृदयं नयनजलेन सिञ्चति ॥ १५ ॥

विरहवह्निरयमद्भुतमिह समुदेति।
नयनजलैः परिषेकादुपचयमेति ॥ १६ ॥

वह्निर्जलस्य सेकात् शाम्यति, परं विरहवह्निरयम्, अद्भुतं यथा स्यात्तथा उद्भवति, यत् नयनजलसेकादुपचीयते ॥ १६ ॥

शयने लोठति शोचति विपिनगतेव।
सा परिताम्यति शफरी स्थलनिहितेव ॥ १७ ॥

शयनीये लोठति। स्थले निहिता मत्सीव, सा परिताम्यति दूयते ॥१७॥

## विरही

विकचकदम्बविडम्बकपुलकयुतेन।
गगनमुदीक्ष्य विहसितं विरहिगणेन ॥ १८ ॥

विकचकदम्बपुष्पवत् रोमाञ्चकण्टकयुक्तेन विरहिगणेन वर्षासु गगनं दृष्ट्वा हसितम्। आकाशे मेघागमनेन प्रावृट् प्रारब्धा। इदानीमेव रोमा-

आदेरियं दशा तर्हि अग्रे न जीविष्यामस्तथा च विरहदुःखान्मुक्ता इत्याशयः ॥ १८ ॥

विधुरोऽनिन्ददगस्त्यं विधुमभिवीक्ष्य ।
अस्तावीत्पितृलोकान् सपदि समीक्ष्य ॥ १९ ॥

विधुरो विरही। चन्द्रोत्पत्तेः पूर्वमेव किमिति न पीतोऽब्धिरित्यनिन्दत्। एते चन्द्रकलानाममृतं निपीय कृष्णपक्षं सम्पादयन्तीति पितॄनस्तावीत् ॥१९॥

## रूपवर्णना

विलुलितकुन्तलमेतन्न मुखमवेहि ।
सरसि सशैवलमम्बुजमिदमवधेहि ॥ २० ॥

विलुलिताः केशा यस्योपरि ईदृशमिदं मुखं नास्ति, किन्तु शैवलसहितं कमलं जानीहि ॥ २० ॥

अलिके रचयसि तिलकं सिन्दूरेण ।
प्रदिशसि सुन्दरि मयि किमसिं दूरेण ? ॥ २१ ॥

ललाटे सिन्दूरेण भालबिन्दुं न रचयसि, अपि तु मयि दूरेणैव असिं (खड्गम्) क्षिपसि। कामाकुले मच्चेतसि असेरिवाघातो भवतीत्याशयः २१

कनकमालिका कुचयोर्द्युतिमुपयाति ।
कमलकोषयोरुपरि स्रगिव विभाति ॥ २२ ॥

कुचयोरुपरि सुवर्णरचिता माला, कमलकुड्मलयोरुपरि परिधापिता पीतयूथीमालिकेव भाति ॥ २२ ॥

सरसि सरसिरुहनयना विहरति भूरि ।
सलिले मज्जति कमलं कुतुकविदूरि ॥ २३ ॥

निष्कौतुकं (वैचित्र्यरहितम्) कमलं लज्जितत्वाज्जले मज्जति, नयना: पराजितत्वात् ॥ २३ ॥

वदने मेचकमधुराश्चिकुरा भान्ति।
विकचकमलमिव मधुपा भृशमनुयान्ति ॥ २४ ॥

श्यामाः सुन्दराश्च केशा मुखे तथा भान्ति, यथा फुल्लं कमलं श्या मधुकरा अनुसरन्ति ॥ २४ ॥

कुचयुगमुरसि विनिहितं द्युतिमुपयाति।
सुरतसरितमुपगन्तुं तरिरिव भाति ॥ २५ ॥

सुरते, वक्षसि योजितं कुचयुगम्, सुरतनदीं तरीतुं परिधृता घटनौवे भाति। 'घडनाव' अधोमुखघटाभ्यां निर्मिता। स्तनयोः कलशाकार व्यङ्ग्यम् ॥ २५ ॥

सुन्दरि! केयं सरणिस्तव नयनस्य।
सकृदवलोके हृदयं विशति जनस्य ॥ २६ ॥

सरणिः रीतिः। एकवारमेव दर्शने जनस्य हृदये प्रविशति, वशयतीत्यर्थः २

महति नितम्बे विलसति रशनादाम।
स्रगिव मतङ्गजकुम्भे विलुठति नाम ॥ २७ ॥

गजकुम्भे परिधापिता कनकमालेव, नितम्बे सुवर्णरशना भाति ॥ २७।

वातायनगा पश्यसि किं कुतुकेन।
सुन्दरि! दीनान्पथिकान् विध्यसि केन? ॥ २८ ॥

तव नयनशरेण मार्गे गच्छन्तः पथिका विद्धा भवन्ति। नयनयोः शरो पमत्वं व्यङ्ग्यम् ॥ २८ ॥

विनदत्कटितटकिङ्किणि! किं किल नैषि?
तव तनुसुषमाडिण्डिममपि नावैषि! ॥ २९ ॥

विनदन्ती कटितटे किङ्किणी (रशनागता) यस्यास्तत्संबुद्धौ, हे शब्दायमानकटिरशने! किमिति समीपे नागच्छसि। आगमने इच्छा न भवेत्तथापि तव तनुशोभाडिडिममपि न जानासि? इयं किङ्किणी शोभाया डिण्डिम इवेत्याशयः॥ २९॥

वितरसि झङ्कृतिमुखरं करवलयेन।
औदार्यं तव वदता रणितं येन॥ ३०॥

किंचिद्वस्तु समर्पयन्तीं प्रत्युक्तिः। झङ्कृतिमुखरं यथा स्यात्तथा करवलयेनोपलक्षिता त्वं वितरसि। येन करवलयेन तव औदार्यं घोषयता इव रणितम्। करवलयः शिञ्जितं न करोति किन्तु तव दाने औदार्यं घोषयतीत्याशयः॥ ३०॥

सुन्दरि! दधती दीपं भूरि विभासि।
विनिहितसुन्दरताऽऽपणदीपविभाऽसि॥ ३१॥

सुन्दरतायाः आपणे, स्थापिता दीपविभा (प्रकाशः) यया सा इव त्वं हस्ते दीपं दधती शोभसे। आपणस्य शोभां द्विगुणयितुं यथा जनैर्विद्युत्प्रदीपो द्वारि प्रज्वाल्यते, तथा त्वं सौन्दर्यापणं द्विगुणं शोभयितुं दीपं दधासीत्याशयः। विभासि विभासीति यमकः॥ ३१॥

रशनाऽऽलम्बितकुञ्चिकमञ्चसि केन।
पथि चलतो बत पथिकान् वञ्चसि केन॥ ३२॥

रशनायाम् लम्बिताः कुञ्चिकाः ('तालियोंका गुच्छा') यस्मिन्कर्मणि यथा स्यात्तथा किमिति चलसि। मार्गे गच्छतः पथिकान् किमिति लुण्ठसि (प्रतारयसि) ['रास्ते चलते हुए' स भावः]। इदानीं ते पथिकाः सन्मार्गे चलन्ति तव एतादृशीं कामोद्दीपिनीं शोभामालोक्य सत्पथाद्विच्युता भूत्वा त्वदनुगा भविष्यन्तीति ध्वन्यते॥ ३२॥

हृदयमितः प्रपलायितमतिरभसेन ।
उचितं रचयसि दमयसि दृढनिगडेन ॥ ३३ ॥

नायकः कथयति—मत्सकाशात्प्रपलायितं मम मनस्त्वं दृढनिगडेन दमयसि, तद् उचितं करोषि । पलायितः किल बन्दी पुनर्दृढेन निगडेन (काराबन्धेन) दम्यते । एवं मम हृदयं मच्छरीरे निगडितमपि, पलाय्य गतं त्वयका तु तन्निगडितम्, पूर्वतोपि सुदृढं निगडितं चेत्युचितमित्याशयः। पलायितमित्यनेन—'मम हृदयं त्वद्दर्शनादारभ्यैव स्मरविलासलालसारूपं दोषं धृतवत् । मया तु तदिदं बलान्निगडितमिव अवरुद्धम्—अद्य तु विवशत्वादिदं पलाय्य गतमेव, त्वया तु ईदृशं निगडितं यन्मत्समीपेपि नायातुं 'शक्नोति' इति स्वमनोभावो ध्वन्यते । अतिरभसेनेति पदेन 'यदा इदं हृदयं त्वां प्रति गतम्, तस्मिन् काले लोकमर्यादादिकं किमपि न विचारितम्' इति द्योत्यते। हृदयं दमयन्तीं प्रति उचितं रचयसीति विपरीतलक्षणया, "उचितं न करोषि, यत्त्वदनुचरस्य मम हृदयं गृहीत्वा, इदानीं सुखस्य परिवर्ते विरहदुःखमनुभावयसि ।" इति लक्ष्यते । लक्षणाप्रयोजनं चाग्रे 'इदानीं संगमसुखमेव मह्यं दातुमुचितम्' इति स्वप्रार्थना व्यज्यते । यथा प्रियः शिशुः स्वल्पेऽप्यपराधे यदि केनचन भृशं दण्डितस्तर्हि—दण्डदातारं प्रति महति क्रोधेऽपि, प्रियं पुत्रं प्रति अतिवात्सल्येपि, उपरितो मुखात् प्रकाशमिदमेवोच्यते यत् 'सम्यक् कृतम्! अयमविनीत एतादृशस्य दण्डस्यैवाधिकारी' अनेन हि पुत्रः शिक्ष्यते, यदग्रे तादृशमुपद्रवं न कुर्यात् । एवमिहापि 'उचितं रचयसि, यद्दृढनिगडेन दमयसि' इत्यनेन 'हंहो ! हृदय ! वारितमपि यत्त्वं बलाद् गतमसि, भुङ्क्ष्व फलमिति' हृदयं प्रति अवशतासूचिका भर्त्सना, नायिकां प्रति तु 'विरहेण बाढं मे हृदयं पीडयसीति' उपालम्भश्च ध्वन्यते । भूयान् ध्वन्यमानोऽन्नार्थ इति सहृदयाः स्वयमेव विचारेण जानीयुरित्यलम् ॥ ३३ ॥

—॥ मानिनी ॥—

दयितविमानिनि मानिनि ! मञ्चमुपेहि ।
व्रजति रजनिरयि कठिने ! क्षणमवधेहि ॥ ३४ ॥

## मानिनी



बरवै'-दयिताविमानिनि मानिनि मञ्चमुपेहि ।
भवति रजनिरयि कठिने क्षणमवधेहि ॥

Lakshmi Art, Bombay, 8

दयितस्य तिरस्कारिणि ! समीपे स्थितं पल्यङ्कम् एहि । अयि कठिने, इयं रजनी व्यत्येति, इति तु बुध्यस्व । कठिने ! इत्यनेन नायकस्य व्याकुलता सूच्यते । यदेतादृशीं नायकस्य व्याकुलतां दृष्ट्वापि त्वमनुनयं न गृह्णासि, अतिकठोरासीति उपालम्भो ध्वन्यते । मानिनीं प्रति 'मानिनि !' इति संबोधनेन 'त्वमेव अपूर्वा मानिनी अद्योत्पन्नासि, या दयितसमागमाय कृतप्रसाधनापि स्वल्पघटनायामेव एतादृशमाग्रहिलं मानं नेदानीमपि त्यजसीति सख्याः प्रेमगर्भा भर्त्सना ध्वन्यते ॥ ३४ ॥

अजनीयं सुखरजनी नभसि घनेन ।
मानिनि ! मानेनालं सुखविमुखेन ॥ ३५ ॥

नभसि श्रावणे । मेघाडम्बरेण इयं रजनी सुखकारिका रजनी, अजनि जाता । 'मानिनि' पदेन 'अयि अपूर्वे मानिनि ! भाग्यवैभवात्सुसमये मेघाडम्बरेण मनोहरामिमां रजनीमपि मानक्लेशे यापयितुमिच्छसि, धन्यासि' इति उपालम्भो व्यज्यते । सुखविमुखेनेत्यनेन 'सुखं यदि वाञ्छसि, तर्हि तु एतादृक्समये मानो नोचितः अन्यथा तु दुःखमेव माने' इति सूच्यते । अजनी, रजनीत्यनुप्रासः कविता'सजनीं' प्रसाधयति ॥ ३५ ॥

दयिते कुप्यसि दयिते ! पदपतितेपि ।
संनह्यन्ते शूराः किमवनतेपि ॥ ३६ ॥

अहो ! पदपतितेपि प्रिये कुप्यसि इति काकुः । पदपतिते कोपो नोचितः । किं शूराः प्रणतेपि प्रतिपक्षे सन्नाहं (युद्धसंभारम्) कुर्वन्ति ? अपि तु न । दयिते इति सप्तम्यन्तेन दयितपदेन, यस्तव हृदयदयितस्तत्रापि क्रोध इत्युपालम्भो ध्वन्यते । दयिते ! इति संबोधनेन 'त्वं तस्य दयिताऽसि, दयिता भूत्वापि अनुनयाय प्रणतेप्यस्मिन्नानुकम्पसे इति भर्त्सनाऽभिव्यज्यते । नायिकां प्रति सख्या उक्तिः ॥ ३६ ॥

अपराधिनि मयि विहससि किमिति मृषैव ।
अदयं विध्यसि हृदयं सुदति ! रुषैव ॥ ३७ ॥

अनुनयतो नायकस्योक्तिः। 'अहमपराधी अस्मि' इति अहं स्वयं स्वीकरोमि, पुनर्मयि उपहासं किं करोषि। हे सुदति! त्वं रोषेणैव निर्दयं यथा स्यात्तथा मद्हृदयं विध्यसि। तवायमुपहासः क्रोधतोपि चित्तक्लेशावह इत्यर्थः॥ ३७॥

### प्रेमगर्विता

**सखिनिकरो गजमौक्तिकदर्पमुपैति।**
**शबरी कबरीकुसुमे गर्वमवैति॥ ३८॥**

भिल्लवध्वाः सखीनिकरः, (ङ्यापोरिति ह्रस्वः।) अस्माभिः गजमौक्तिकानां भूषणानि धारितानीति गर्वं याति। किन्तु सा शबरी (भिल्ली) केशपाशस्य कुसुमे गर्वं बुध्यते। यद्धि कुसुममतिप्रणयेन दयितः स्वहस्ततो भूषितवान्, तत्पुष्पं निजकराभ्यां केवलं दयितव्यामोहनाय धारितेभ्यो मौक्तिकेभ्यो बहुतरमधिकमिति सा दृप्यति। गजमौक्तिकं धारयित्वा यूयं दयितं वशयितुमिदानीमिच्छथ। मम तु दयितोऽनुचरः, अत एव मम शृंगारादिकीं सेवां रचयति, पश्य, तदिदं पुष्पं तेनैव धम्मिल्ले निहितमिति तन्मनोभावः॥ ३८॥

### प्रेमचेष्टा

**विवलितवारिजवदनं वीक्ष्य विहस्य।**
**सरभसमविशदलिन्दे निजसदनस्य॥ ३९॥**

काचिन्नायिका निजगृहद्वारे स्थिताऽभूत्। तां दृष्ट्वा नायकः स्मरपरवशोऽभवत्। साऽपि च तं (नायकम्) विवलितं (स्मरावर्तितम्) कमलसदृशं मुखं यस्मिन्कर्मणि तथा वीक्ष्य, विहस्य, त्वरितं निजगृहस्य द्वारप्रकोष्ठकं प्राविशत्॥ ३९॥

**तरुणि! तरुणिमनि विलसति किमिति कृशाऽसि।**
**अविनयनयने नयने न किमवयासि?॥ ४०॥**

काचित्प्रौढा सखी नायिकां पृच्छति—"तारुण्येपि [शरीरस्योपचयसमयेपि] किं कृशाऽसि?" सा उत्तरमददात्—"अविनयस्य नेतृणी इमे नेत्रे

त्वं न जानासि किम्?" आभ्यां नेत्राभ्यामेव अविनयं कृत्वा अहं कृशीकृतास्मि। यावत्कालं स दृष्टस्तदारभ्यैव अहं देहाद्दुर्बलास्मीति भावः। 'तरुणि' इति आमन्त्रणेन 'त्वं मत्संमुखे एव बाल्यात्तारुण्यमुपगतासि, मत्तः अतिस्वल्पावस्था त्वमसीति' सहानुभूतिः सूच्यते। तरुणि तरुणि, नयने नयने। यमकः॥ ४० ॥

### शीतान्योक्तिः

मल्लीं दलयसि सौरभगुणविपरीत!
नन्दयसे बत कुन्दान् प्रियसख! शीत ॥ ४१ ॥

हे सौरभगुणस्य विरोधिन्! मल्लीं क्षपयसि, या अतिसुरभितास्ति। कुन्दान् वर्द्धयसे, ये निर्गन्धाः। प्रियसखेत्याक्षेपः ॥ ४१ ॥

### जर्मनयुद्धकालिकी भारतेशाशीः

दृप्यज्जर्मनजयकर जॉर्जनरेन्द्र!
भारतभुवमनुरञ्जय जय बृटिशेन्द्र! ॥ ४२ ॥

निजौदार्येण भारतभूमिमनुरक्तां कुरु। यथा त्वयि वीरवशीकरणसामर्थ्यमस्ति, तथा उदारनीत्या प्रजावशीकरणसामर्थ्यं दर्शय। न तत्रापि बलस्यावश्यकतेति ध्वन्यते। बृटिशेन्द्रेत्यनेन, सिंहस्य ते, अनुगतेषु उदारनीतिरेवोचितेति द्योत्यते ॥ ४२ ॥

### जयपुरपुरन्दरायाशीः

भानुवंशमणिमण्डन! तुलितमहेन्द्र!
प्रकृतीश्चिरमनुरञ्जय जयनगरेन्द्र ॥ ४३ ॥

भानुवंशस्य मणिभूषणायित! प्रकृतीः प्रजाः। तुलितः साम्यं नीतो महेन्द्रो येन सह, तादृश! त्वामुपमानं कृत्वा कवयो महेन्द्रं त्वया सह तुलयन्तीति वस्तुना व्यतिरेकालङ्कारध्वनिः ॥ ४३ ॥

---

१ 'बरवै' छन्दःप्रसङ्गेन पद्यद्वयमिदं न्यस्तम्।

—॥ विद्याधरसुन्दरी ॥—

अस्तमिते चन्द्रे तस्य कान्तिरिव मूर्तिमती
तारकिते नभसि नितान्तमवभासते
गमनजवेन मिलन्मारुतविलोलपटा
कामवैजयन्तीच्छटामेषा संविगाहते ।
सूक्ष्मतमचेलाञ्चललक्ष्यकुचकञ्चुकीय—
मुत्तरङ्गकुन्तलकलापमधिराजते
गगनचरीव रसनिर्झरी विनीलं नभो
विद्याधरसुन्दरी सलीलमवगाहते ॥ २९* ॥

चन्द्रे अस्तंगते सति, तस्य ( चन्द्रस्य ) मूर्तिधारिणी कान्तिरिव नभसि शोभते। आकाशे गमनस्य वेगेन, मिलन् यो मारुतस्तेन विलोलपरिधानवस्त्रा एषा (विद्याधरी) कामस्य वैजयन्त्याश्छटाम् गाहते (अवलम्बते)। आकाशे, देहलतायाः पश्चात्, पवनदोधूयमानशाटिकाञ्चला सेयं कामवैजयन्तीव राजत इत्याशयः। अतिसूक्ष्मात् वस्त्राञ्चलात् दृश्या कुचकञ्चुकी यस्याः सा इयम्, उत्तरङ्गायितः ( पवनेन व्याकीर्यमाणः ) केशकलापो यस्मिन् तथा, अतिशोभते। आकाशान्निष्पतन्ती रसस्य निर्झरीव सेयं सुन्दरी नभः ( आकाशम् ) अवगाहते उल्लङ्घयति ॥ २९ ॥

—॥ प्रवासिनो दुःखम् ॥—

यामि परदेशमिति मानसे विचारो भवे-
त्को वा निर्विकारोऽमुं प्रियायै कथयिष्यति ?

---

* 'वरवै चत्वरात्' पूर्वतोऽनुवृत्ता संख्या ।

१ व्याकरणाचार्यराजगुरुचन्द्रदत्तमैथिलमहाभागेन प्राचीनं पद्यं प्रदाय, कवित्वच्छन्दसि परिवर्तयितुमादिष्टोऽभवम्। ग्रन्थकृत्।

विद्याधरी



" गगनचरीव रसनिर्झरी बिनलिं तमो
विद्याधरसुन्दरी सलीलमवगाहते ॥ "

Lakshmi Art, Bombay, 8.

मोहकमरीचिकानिपतितेन कामं मया
कथितं प्रियाग्रे तत्, यदन्यो न वदिष्यति ।
मञ्जुनाथ निर्यन्नेत्रनीरं दयिताया मुखं
स्मृत्वापि च धीरं मां विना को बहिरेष्यति ।
सेयं धनलाभलवलालसापिशाची हन्त
सङ्गसुखात्साचीकृत्य किं किं दर्शयिष्यति ? ॥३०॥

'धनोपार्जनार्थं परदेशं यामि' इति मनोविचारो भवेत्परम्, ईदृशः को वा निर्विकारः (वशीकृतचित्तः) अस्ति यः, इमं विचारं प्रियां प्रति कथयेत्। मनोरथे सत्यपि प्रियां प्रति कठोरमिदं कथं वक्तुं शक्येतेति भावः। अन्यो जनो यद् न कथयितुं शक्ष्यति, तत् मया प्रियाया अग्रेपि मरीचिकावशात्कथितम्। निर्यद्बाष्पं प्रियाया मुखं स्मृत्वापि धैर्ययुक्तं मां विहाय अन्यो जनः को वा बहिःप्रवासं करिष्यति। अहमेवेदृशो धीरोऽस्मि यः प्रियाया अश्रु दृष्ट्वापि यात्रामङ्गीकृतवानित्याशयः। हन्त! धनलाभस्य (लवस्यापि) लालसारूपा सेयं पिशाची, प्रियासंगमसुखात् तिर्यक् कृत्वा, न जाने किं किं दर्शयिष्यति ? अनया लिप्सापिशाच्यैवाहं प्रवासदुःखं प्रापितोस्मीत्याशयः ॥ ३० ॥

## केलिसदनाभिमुखी

### देवघनाक्षरीच्छन्दः

दासीपरिसेवितेयमासीदति सोपानाग्र-
माभरणैश्चञ्चलेव चञ्चन्ती चमिति चमिति
निभृतमयन्त्या अपि रशना स्वनति मुहु-
र्ध्वनतः सुमञ्जु मणिमञ्जीरौ छमिति छमिति ।

मञ्जुनाथ निर्जनेपि परितोऽवलोकयन्त्या
रणतो मनोज्ञकरकङ्कणौ झमिति झमिति
मन्येऽहं मनोजरङ्गशालामुपयान्त्यामद्य
बालायां भवन्ति भेरिझङ्कारा झणिति झणिति ॥३१॥

दास्या अनुगता इयम्, भूषणैः विद्युदिव चमिति चमिति चञ्चन्ती 'चमत्कुर्वती' सती, केलिभवनं गन्तुं सोपानस्याग्रभागम् आसीदति आप्नोति। 'चम् चम् चमकना' इति भाषाशैली। चमिति, छमिति प्रभृतयः सर्वे ध्वनेरनुकरणशब्दाः। अतिमन्दं गच्छन्त्या अपि मेखला मुहुः शब्दायते। मणिमञ्जीरौ नूपरौ सुमञ्जु यथा स्यात्तथा 'छमिति छमिति' ध्वनतः शब्दं कुरुतः। 'छम् छम्' इति मञ्जीरशब्दः प्रसिद्धः। निर्जनेप्यन्तर्भवने, लज्जावशात् परितो विलोकयन्त्याः अस्याः, सुन्दरौ करवलयौ झमिति झमिति स्वनतः। एवं च मेखला–कङ्कणादीनां शब्दात्, अहं मन्ये, यदस्यां बालायां कामरङ्गशालाम् गच्छन्त्यां भेरिझाङ्कारा भवन्ति। वीरा यदा रङ्गशालायामवतरन्ति तर्हि मङ्गलभेरीध्वनिर्भवति। तथात्रापि कामरङ्गशालागमने सोयं भेरीध्वनिरित्याशयः। प्रतिपादमनुप्रासः॥ ३१ ॥



## केलिसदनाभिमुखी



“ मन्येहं मनोजरंगशालामुपयान्त्यामद्य
बालायां भवन्ति भेरिझङ्कारा झणिति झणिति ॥ ”

Lakshmi Art, Bombay, 8



# वीरः

छप्पय

जेतव्याद्यालम्ब्य दीपितस्तच्चेष्टाद्यैः
पुनरनुभावैर्भृतः सहायाश्रयण–नयाद्यैः ।
धृतिगर्वस्मृतिमतिप्रभृतिसंचार्यनुयायी
यत्र भवेत्सकलस्य मूलमुत्साहः स्थायी ।
सोयं वीररसो, दया–दान–धर्म–युद्धाह्वयैः
चतुरभिधोऽप्युपवर्द्धितो विद्यादिः परतो नवैः ॥ १ ॥

विजेतव्यादिः आलम्बनविभावो यस्मिन्, विजेतव्यचेष्टादिर्यत्र उद्दीपन-विभावः, सहायाश्रयण–नीति–प्रभृतिभिरनुभावैः प्रतीतियोग्यः कृतः, धृति-गर्वादि–संचारिभावैः परिपोषितः स्थायी भावः (उत्साहः) एव वीररसता-मापद्यते । सोयं वीररसः साहित्यदर्पणकारपर्यन्तं 'दयावीर–दानवीर–धर्म-वीर–युद्धवीरेति' नामभिश्चतुर्विधोपि नवैः पण्डितराजादिभिः, परतः अग्रे सत्यवीरविद्यावीरादिभिः नामभिः परिवर्धितः ॥ १ ॥

---



## दयावीरः

[ भगवद्गौतमबुद्धगोत्रजः श्रीमान् शक्तिधरः कुमारो वनविहारायागतोस्ति। स हि पुष्पितेषु लताकुञ्जेष्वितस्ततो विचरन् संप्रति सरस्तीरमधितिष्ठति। एतस्मिन्नेव समये वृक्षगुल्मेष्वन्तर्हितो व्याधः सरभसमेकं हंसं बाणेनाजघान। बाणवेदनाविकलः स पक्षी करुणमाक्रन्द्य, भूमौ पतितः परितो विलोठति। तस्य तादृशीं दयनीयां दशामालोक्य, कुमारस्य हृदयमकस्मादभूतपूर्वया दयया विगलितमिवाभवत्। स हि सरभसं प्रधाव्य धूलिधूसरं हंसमतिनिभृतमुत्थापितवान्। महार्हकोमलकौशेयवसनाऽऽवृते निजोत्सङ्गे निधाय उत्तरीयाञ्चलेन वीजयामास। शरीराद्बाणमपनेतुमुद्योगमकार्षीत्। भीतो व्याधो राजकुमारमग्रतो दृष्ट्वा संकुचितोऽभवत्। ममेदमाजीवनमिति मन्दमन्दाक्षरं कुमाराय निवेदयामास। प्रोद्दीप्तदयाभावः कुमारः सोत्साहं प्रोवाच— ]

### घनाक्षरी

परितः प्रयच्छन्दृशमुग्रशरवेदनया
मोहमुपगच्छन्नेष पक्षी परिहीयताम्।
हंहो मांसवृत्ते न विषीद मनाग् व्याध सखे!
एतत्परिवर्ते भूरि मांसमुपादीयताम्।
आबाल्यात् सयत्नं परिपोषितानि मांसलानि
छिन्धि ममाङ्गानि, काममेतैरति प्रीयतां
विहगदयापरस्य सौहृदोदयादनल्प–
माहो! हृदयाग्रमांसमेतन्मम नीयताम्॥ २॥

उग्रशरपीडया परितो दृष्टिं क्षिपन्, मूर्छां प्राप्नुवन्नेष पक्षी त्यज्यताम्। मांसं वृत्तिः (जीविका) यस्य तत्संबुद्धौ। एतत्परिवर्ते (एतस्य विनिमये) अधिकं मांसं गृह्यताम्। ममाङ्गानि राजकुमारभावादतियत्नेन पोषितानि पुष्टानि सन्ति। (अतिमांसलाभः सूच्यते)। एतैः अङ्गैः कामं यथा स्यात्तथा प्रीयताम्! हंसस्य मांसं मनुष्यापेक्षया कोमलं भवति, तथा च तदुपायमाह—विहगोपरि दयायुक्तस्य मम, सौहार्दभावस्योदयात् (हृदये सौहार्दोदयकृतेन उच्छ्वासेन) उपचितम्, एतत् हृदयस्य अग्रमांसं नीयताम्, एतद्धि हंसमांसतो नातिकठिनमिति भावः। भूपतितो हंस आलम्बनम्, तद्विलोठनादिकमुद्दीपनम्। अश्रु, व्याधनिवेदनादिकमनुभावः। धृतिप्रभृतयः संचारिणः। कुमारनिष्ठश्चोत्साहश्च परिणामे दयावीरतामुपगतः। दयाभावानुकूला स्वल्पसमासा प्रसन्नमधुरा वृत्तिः। प्रतिपादं प्रासाः। चतुर्थे–दया० उदया० हृदया० इत्यचुम्बितानां यमनम्॥ २॥

## दानवीरः

[बलिराजेन भगवते वामनाय त्रिपादपरिमिता भूर्दातुं प्रतिज्ञाता। गुरुः शुक्राचार्यः 'देवकार्यसाधको विष्णुरयम्' इति बहुतमं निवारयामास। एतत्सर्वं विदित्वापि दानवीरो बलिः प्रोवाच—]

सादरं प्रवर्तन्तां सपर्याः सुखमर्थिनोऽद्य
भो भो विप्रवर्याः! प्रणिधानं धत्त सुस्थितम्।
जायन्तां प्रदानसमयोचितानि मङ्गलानि
नूनमहमर्थिने ददानि निजमर्थितम्।
भार्गवमहर्षे! संभ्रमोऽयमवमुच्यतां ते
विफलविमर्शे कालयापनमनर्हितं
प्राज्यमिदं त्रैलोक्यस्य राज्यमेव किं नु मुने!
दद्यामहमर्थिने निजासूनपि निश्चितम्॥ ३॥

अर्थिनः (याचकस्य) सपर्याः (पूजाः) सादरं सुखं च जायन्ताम्। मम त्रैलोक्याधिपत्यं गच्छतीति विषादकृतः संकोचो मास्तु तत्रेति भावः। हे यज्ञस्था ब्राह्मणाः! इदमवधानं दत्त! दानकालिकानि मङ्गलकार्याणि प्रवर्तन्ताम्। ददानि 'लोट्'। हे भार्गवमहर्षे! ते अयं संभ्रमः (राज्यगमनकृतश्चिन्तावेगः) त्यज्यताम्। इदानीं निरर्थके पूर्वापरविचारे कालयापनमयोग्यम्! निजासून् निजप्राणान् अपि याचकाय निश्चितं दद्याम्॥ ३॥

## धर्मवीरः

[ गुरुगोविन्दसिंहस्य द्वावपि बालकौ माहम्मदभूमिपालस्य संमुखे बन्दीकृतौ तिष्ठतः। शासनबलोद्दीप्तो यवनाधिपतिर्माहम्मदधर्मं स्वीकर्तुं वारं वारं राज्यस्य प्रलोभनानि, शासनपदस्य मरीचिकाश्च प्रदर्शयति। वीरबालकौ साभिमानगाम्भीर्यं सर्वं प्रतिषिध्यतः। क्रोधेन जाज्वल्यमानो यवनेन्द्रो जीवतोरपि द्वयोर्बालकयोर्भित्तौ प्रोथनस्य घोरामाज्ञां प्रचारयामास। पुनरप्येकवारं मृत्युं संमुखे प्रदर्श्य, सक्रोधाभिमानं बालौ प्राह—"यदि माहम्मदधर्मो न स्वीक्रियते तर्हि अयं वां मृत्युः!"

धर्मवीरौ बालकौ सोत्साहाभिमानं कथयतः—]

आस्तामुदयाद्रेस्तावदस्तावधि राज्यमिदं
तिष्ठतु परस्ताद्राजलक्ष्मीरविचलिता
किं बहुना, त्रैलोक्यस्य राज्यमपि प्राज्यमहो
धर्मपालनार्थं परित्याज्यमेव भविता।
बालावबलौ स्वः परं धर्मरतिरावयोः सा
कालानलतुल्यभवत्कोपान्न विगलिता
यवननरेश! कामं मर्माण्यवपाटय नौ
किन्तु निजधर्मादिदं चित्तं न विचलिता॥ ४॥

उदयाचलादारभ्य अस्ताचलावधि, इदं राज्यम् आस्ताम्, दूरे तिष्ठतु इति भावः। अविचलिता अक्षया राजलक्ष्मीरपि परस्तात्तिष्ठतु। बहुना किम्, प्राज्यं त्रैलोक्यराज्यमपि धर्मपालनार्थं परित्याज्यमेव, भविता भविष्यति। 'लुट्'। आवां बालौ, तदुपरि बन्दीकरणाद् अबलौ स्वः। परम्, आवयोः सा (सिक्खजातौ या प्रसिद्धा) धर्मप्रीतिः कालानलतुल्याद् भवत्कोपात् न विगलिता, न विगलिष्यति (गमिष्यति) 'लुट्'। नौ (आवयोः) शरीरस्य मर्मस्थलानि, कामम् अवपाटय छेदय। परं धर्मात् चित्तं न विचलिष्यति। अनद्यतनभविष्यत्प्रयोगेण 'अद्य तु मरणस्य भयमेवास्ति, परस्मेऽपि कदाचिन्न विचलेत्' इति दार्ढ्यातिशयो ध्वन्यते। प्रतिपादमुत्साहसंवर्द्धकोऽनुप्रासः। चतुर्थे मर्मा धर्मा इति ॥ ४ ॥

## विद्यावीरः

[राजसभायां शास्त्रविचारे सर्वान् पण्डितान् कवीन्द्रो मूकीचकार। पण्डितान्विलक्षान्विलोक्य राजा राजगौरवतः कवीन्द्रमानमर्पितुं काञ्चिद्व्यङ्ग्यवार्तां प्रोवाच। तात्कालिकशास्त्रविचारात्प्रदीप्तसारस्वतवैभवः कवीन्द्रः सोल्लुण्ठनमाह—]

स्यात्ते राज्यशासनमखण्डं शब्दशासनं मे
सिंहासनगस्त्वं हृदयासनसभाजाः स्मः
परहृदि लग्नास्तव मौलिं दोलयन्ते शराः
सूक्तिभिः सभासु समान्दोलितसमाजाः स्मः।
मञ्जुनाथ जाने कोषसञ्चयमचिन्त्यं तव
वाङ्मयमनन्तमुपजीव्य राजराजाः स्मः
का जाता तवेयं गर्वघटना मनसि मुधा ?
यूयं महाराजास्तर्हि वयं कविराजाः स्मः ॥ ५ ॥

अखण्डम् साङ्गम् । शब्दशास्त्रम् ( व्याकरणादिकम् ) । त्वं सिंहासनस्थः, वयं लोकानाम् हृदयरूपम् आसनं ये सभाजयन्ति अलंकुर्वन्ति तादृशाः स्मः । सभाजयतेः कर्मण्यण् । रसिकैः स्वहृदयेऽस्माभ्यं स्थानं दत्तमित्याशयः । ततश्च हिंसालभ्य–काष्ठादिसिंहासनापेक्षया हृदयासनम् ( तदपि च ससंमानम् ) कियदभ्यर्हितमिति साकूतं सूच्यते । तथा च प्रजाप्रियस्त्वं नासीति व्यज्यते । त्वं तु एकशरेण एकस्य मस्तकं भ्रमयसि । वयं तु एकयैव सूक्त्या संपूर्णं समाजमेव आन्दोलयामः । अस्माकमेकां नवीनां सूक्तिमाकर्ण्य संपूर्णोऽपि समाजः प्रशंसापरवशो भवतीत्याशयः । यदि भवतः समीपे अचिन्त्यः (चिन्तायाः यत्रावश्यकता नास्ति, पूर्णः) कोषसंचयः (द्रव्यसंग्रहः) भवेत्तमपि अहं जाने । वयं हि अनन्तं वाङ्मयरूपं निधिं प्राप्य राज्ञामपि राजानः कुबेरसमाः स्मः । वयं 'महाराजाः' इति तव मनसि मुधा गर्वघटना केयं जाता ? स्थाने स्थाने राजानं प्रति एकवचनप्रयोगेण, आत्मनि च बहुत्वप्रयोगेण गर्वसंचारिणा परिपुष्टो वीरः सुतरां विजृम्भते । किञ्च बहुवचनेन, 'अहमेव किम्, अस्मादृशाः सर्वेऽपि विद्योपजीविनः, त्वामेव किं सर्वानपि नरेशान् यावत्कालं मर्यादां नोल्लंघयन्ति तावदेव संमानयामः, अन्यथा तु स्पष्टं तत्स्वरूपज्ञानं कारयाम, इति द्योत्यते । चतुर्थे, काजा राजा राजा इति प्रासाः ॥ ५ ॥

## युद्धवीरः

[आम्बेराधिपतिः प्राक्तनः श्रीमन्मानसिंहमहाराजो दिल्लीशसैन्यप्रमुखो भूत्वा पठानदमनाय कम्बोजम् (काबुल) अभिययाविति जयपुरप्रान्ते प्रसिद्धिः । तद्युद्धस्यैवाऽग्रे विस्तृत्य वर्णनम् ।]

सज्जजवशालि–तुङ्गतरलतुरङ्गभृता
सेना पञ्चरङ्गयुता सज्जा हेतिमालाभिः
दन्ध्वन्यत एतद्व्योम वीरसिंहनादैर्भृशं
वीरवरणागताभिर्व्याप्तं देवबालाभिः ।

मञ्जुनाथ दिङ्मण्डलमखिलं विमण्डयता—
त्कीर्तिभिः प्रभूतभवज्ज्योत्स्नाऽजिह्मजालाभिः
त्रस्यद्दस्युमण्डले प्रचण्डबाहुदण्डसखः
श्रीमन्मानसिंहखड्ग! खेल मुण्डमालाभिः ॥ ६ ॥

युद्धसज्जया सज्जन्तो जवशालिनः, तुङ्गाः (उन्नताः), चञ्चलाश्च ये तुरङ्गास्तैः पूर्णा। 'पञ्चरङ्गेण' आम्बेरराज्यध्वजेन युता, सेयं सेना हेतिमालाभिः (आयुधसमूहैः) सज्जाऽस्ति। वीराणां वरणाय आगताभिर्देवबालाभिर्व्याप्तमिदं गगनं वीराणां सिंहनादैर्भृशं दन्ध्वन्यते। दन्ध्वनीति, इति यङ्लुगन्तात्कर्मणि लट्। अतितमां ध्वनितं क्रियते इत्याशयः। हे मंजुनाथ! (श्रेष्ठस्वामिन्!) भवान्, प्रभूतं यथा स्यात्तथा भवन्ति (शतृ) ज्योत्स्नायाः अजिह्मानि (सत्यानि) जालानि यासां ताभिः। ज्योत्स्नासदृशं विमलप्रकाशमुत्पादयन्तीभिरित्याशयः। कीर्तिभिः अखिलं दिङ्मण्डलं मण्डयतात्। किञ्च हे मानसिंहस्य खड्ग! प्रचण्डो (माननरेन्द्रस्य) बाहुदण्डः सखा (सहायकः) यस्य ईदृशस्त्वं त्रस्यतां शत्रूणां मण्डले मुण्डमालाभिः क्रीड! शत्रूणां मुण्डानि छिन्धीत्याशयः। कवेरुक्तिः ॥ ६ ॥

अम्बरनरेशचमूः कम्बोजे प्रयाता यदा
म्लेच्छदृगम्भोजे हिमपुञ्जोऽभ्युदयांचक्रे
तरलतुरङ्ग—तुङ्गदन्तावलधूलिभरा—
द्धन्ताखिलदेशमन्धकारैः पूरयांचक्रे।
मञ्जुनाथ मान्यो मानसिंहनरनाथमणि—
र्यः स्वसैन्यचक्रे म्लेच्छचक्रं चूर्णयांचक्रे
किञ्च हठावेशात्परिखण्डितविबुधमठान्
संग्रामे पठानशठान् दैन्यं शिक्षयांचक्रे ॥ ७ ॥

म्लेच्छानां पठानानां नयनकमले तुषारपुञ्जः उदितः। हिमाद् यथा कमलानि म्लानानि भवन्ति तथा नेत्राणि हतप्रभाण्यभवन्। अथवा कमले तुषार इव, नेत्रेऽश्रूण्यभवन्। अय गतौ लिट्। तरलानां तुरङ्गाणां, तुङ्गानां हस्तिनां च पदधूलिभरात् हन्त अखिलं देशमेव सा चमूरन्धकारितमकरोत्। हठात् परिखण्डिताः देवमठाः यैस्तान् पठानशठान् दैन्यं (दीनताम्) अशिक्षयत्। एतावत्कालं धृष्टतामकुर्वन्, इदानीं दीनतायाः शिक्षा मानभूपालेन तेभ्यो दत्तेत्याशयः। युद्धवीरोचिता समासबहुला संयुक्ताक्षर–टवर्गादि-प्रचुरा संघटना ॥ ७ ॥

## युद्धवर्णनम्

[सर्वापि सेना, रणसामग्री च युद्धस्थले प्रयाति। अत्रैव प्रसङ्गतो हस्त्य-आदिसेनाङ्गानां वर्णनमारभ्यते।]

### हस्तिनः

### छप्पय



झणिति झणिति रवमुखर-हेमकिङ्किणीर्वहन्ती
चञ्चच्चलनजवेन घोरघण्टां ध्वनयन्ती।
कर्णतालनिनदेषु मधुपझङ्कारमुखरिता
दिग्दिगन्तसंचारिमदोचितचीत्कृतिभरिता।
मदधारादुर्दिनभरैर्दुर्निरीक्ष्यतमकटतटा
विजयाङ्गणसंमुखमगादम्बरेशरणगजघटा ॥ ८ ॥

झण् झण् इति रवेण मुखराः सुवर्णकिङ्किणीः (घण्टिकाः) धारयन्ती। चञ्चलं यत् चलनं तस्य जवेन। पृष्ठलम्बितां महाघण्टां नादयन्ती। दिग्-दिगन्तसंचारिणी मदोचिता या चीत्कृतिः (हस्तिशब्दः, बृंहा) तया भरिता।

मदधाराभिर्यद्दुर्दिनं (वर्षाडम्बरः) तद्धरैः, अवीक्षणीयगण्डस्थला। अम्बरेशस्य रणगजानां घटा, विजयाङ्गणस्य संमुखं प्रतितिष्ठते स्म ॥ ८ ॥

→ रूपकघनाक्षरी ←

अञ्जनगिरीन्द्रसममेचकशरीररुचो
वैरिगर्वगञ्जनगरिष्ठवीर्यसारा भान्ति
कुण्डलितचारु-घन-शुण्डादण्डशोभाभृतो
मण्डितकपोलयुगे दानवारिपूरैः स्नान्ति।
मञ्जुनाथ येषां मञ्जिमानमवलोक्य मनाग्
दिक्कुञ्जरपुञ्जरुचः पिञ्जरिता नोपभान्ति
भूमिधरतुङ्गतमा वारिदविभङ्गसमा
भ्राम्यद्भूरिभृङ्गरमाः स्तम्बेरमा मञ्जु यान्ति ॥ ९ ॥

कज्जलपर्वतसमानश्यामशरीरकान्तयः। वैरिगर्वगञ्जनो गरिष्ठो वीर्यसारो येषां ते। कुण्डलाकृतिः कृतः, चारुः निबिडो यः शुण्डादण्डः तच्छोभाधारिणः। गैरिकादिचित्रैर्मण्डिते कपोलयुगे मदजलभरैः स्नान्ति। मञ्जिमानं मञ्जुताम्। दिक्कुञ्जरसमूहस्यापि रुचः कान्तयः, पिञ्जरिता नैर्बल्यात्पिङ्गा इव न शोभन्ते। दिग्गजानामपि शरीरकान्तिर्येषामग्रे रोगपिङ्गा इव दृश्यत इत्याशयः। पर्वतवत् अतितुङ्गाः। वारिदविभङ्गस्य (घनखण्डस्य) समाः। भ्राम्यतो भूरीन् भृङ्गान् रमयन्ति तादृशाः। स्तम्बेरमा गजाः, मनोरमं यथा स्यात्तथा गच्छन्ति ॥ ९ ॥

आशा द्वारसीम्नि मत्ता मौलिमवघूर्णयन्ति
चूर्णयन्ति चक्रमरैः संगरे यदि व्रजन्ति
दिग्वारणदर्पविनिवारणप्रसक्ता इति
वारणाय शृङ्खलिता मर्यादार्हमाचरन्ति।

शुण्डावारिपूरैः पूरयन्त इव वारिनिधिं
वारिधेरधीनघनगर्वं ये समाहरन्ति
ऊढपञ्चरङ्गा गाढधृतरणरङ्गा अमी
मानमेदिनीशमत्तमातङ्गाः पुरस्सरन्ति ॥ १० ॥

राजद्वारे प्राप्ता ये मदात् मस्तकं घूर्णयन्ति । युद्धे यदि गच्छन्ति तर्हि वैरिणो व्यूहं भिन्दन्ति । दिग्गजानां गर्वदूरीकरणाय प्रवृत्ताः, इति तन्निवारणाय रक्षकैः शृङ्खलाबद्धा इमे मर्यादां रक्षन्ति । इमे गजा दिग्गजानां गर्वं दूरीकर्तुं धावन्ति तदा आधोरणास्तान् शृङ्खलया बध्नन्ति, इमेऽपि मर्यादां ज्ञात्वा शृङ्खलाबन्धसहनं आचरन्ति, अन्यथा तु एषामग्रे का वराकी शृङ्खलेत्याशयः । निजशुण्डाफूत्कारजलैः समुद्रं पूरयन्त इव, समुद्राधीनानां घनानां गर्वं हरन्ति । घनास्तु समुद्राज्जलं यदा गृह्णन्ति तदैव वर्षन्ति, इमे तु समुद्रमपि शुण्डाजलेन भरन्तीति ततो व्यतिरेकः । ऊढः (धारितः) पञ्चरङ्गः (पंचरंग) अम्बरराज्यध्वजो यैस्ते । गाढं धृतो रणस्य रङ्गः अनुरागो यैस्ते ॥ १० ॥

कवि०—गर्वभराच्छुण्डादण्डमुपरि नयन्तो मुहु-
श्चण्डकरमण्डलविभासं स्थगयन्तेऽमी
नानावर्णचित्रगण्डमण्डलविकासवहा
धातुरङ्गशालिशृङ्गशोभां दर्शयन्तेऽमी ।
मञ्जुनाथ मञ्जुमदनिर्झरं क्षरन्तो मुहुः
संमुखे विशालं कर्णतालं दोलयन्तेऽमी
मन्ये पक्षशातकपुरन्दरविपक्षधराः
पक्षधराः पर्वता इतीव सूचयन्तेऽमी ॥ ११ ॥

गर्वभरात् शुण्डादण्डम् उपरि नयन्तः, इमे (गजाः) सूर्यमण्डलस्य भासम् (प्रकाशम्) आच्छादयन्ति । नानावर्णैश्चित्रितं यत्कपोलमण्डलं

तद्विकासवहाः (शोभाधारिणः) इमे गैरिकादिधातूनां रङ्गैः शोभमानानां शृङ्गाणां शोभां प्रकटयन्ति। अग्रे हि इमे पर्वता इत्युत्प्रेक्ष्यते। तथा च, यथा पर्वतानां शृङ्गेषु गैरिकादिधातुशोभा, एवमेषां गण्डेषु नानारङ्गाणां चित्राणां शोभेत्याशयः। पर्वता निर्झरं क्षरन्ति। इमे मदनिर्झरं क्षरन्तो विशालं कर्णतालं दोलयन्ते। तत्रोत्प्रेक्षते—पक्षच्छेदकस्य पुरन्दरस्य विरुद्ध-पक्षधारिणः 'पक्षधारिणो वयं पर्वताः स्म.' इतीव इमे सूचयन्ति। कर्ण-तालं न दोलयन्ति, किन्तु पक्षौ द्वौ प्रकम्प्य 'वयं पक्षधारकाः पर्वताः स्म.' इत्येव सूचयन्ति। इन्द्रेण तु पक्षाः सर्वेषां छिन्नाः, परं वयं तु तस्यापि विपक्षाः स्मो यतो ह्यस्माकं पक्षौ न छेत्तुमशकदिन्द्र इति भावः॥ ११॥

काञ्चनकलिततन्तुसन्ततवसनधराः
कन्धरास्वमन्दहेमशृङ्खला विभासन्ते
चारुदन्तमण्डले विभासितवलयभरा
झङ्कृतिकरा ये हेमकिङ्किणीभिरायन्ते।
मञ्जुनाथ लम्बमानमुक्तामणिनिकरधरा-
मलिके सुवर्णश्रियं दधतः प्रकाशन्ते
तुलितधरित्रीधरा गण्डमदवारिधरा
अम्बरधराधिपतिकुञ्जरा विराजन्ते॥ १२॥

ये कुञ्जराः, काञ्चनकलितैः तन्तुभिः ('कलाबत्तू') संततानां (व्याप्तानाम्) वसनानां धारकाः। सौवर्णसूत्रव्याप्त (–'कारचोबी'कार्य–) वस्त्रधारकाः इत्यर्थः। येषां कन्धरासु अमन्दाः (अनल्पाः) सुवर्णशृंखला भासन्ते। दन्तमण्डले शोभितः सुवर्णवलयभरो येषां ते। हस्तिनां दीर्घेषु दन्तेषु, मध्ये मध्ये सुवर्णवलयाः परिधाप्यन्ते, तैर्युक्ता इत्यर्थः। सुवर्णघण्टिकाभिः झाङ्का-रकारिणः ये आयन्ते आगच्छन्ति। आङ्पूर्व अय्धातुः। अलिके ललाटे, लम्बितमुक्तामणियुक्तां सुवर्णस्य श्रियम् ('सिरी' हस्तिनः शिरोभूषणम्)

धारयन्तो ये शोभन्ते । तुलितः समीकृतो धरित्रीधरः पर्वतो यैस्ते । गण्डयोः मदवारिणो धारकाः । सर्वपादेषु धरा भरा इत्यादयः प्रासाः ॥ १२ ॥

—※ छप्पय ※—

फुङ्कृतिवारिभरेण गगनतलमुद्धरयन्ती
  चरणधरणबलभराद्धरणितलमानमयन्ती ।
सरभसचीत्कृतिचयाच्चकितभावं विदधाना
  घोरबृंहितारवैर्वैरिहृदि भयं ददाना ।
तुङ्गतया तारापथं तरलयितुं जनितोद्यमा
मानमेदिनीसुरपतेर्भाति गजघटा घनसमा ॥ १३ ॥

उद्धरयन्ती । पूरयन्ती पादस्थापनस्य बलभरात् भूतलं नमयन्ती । चीत्कृतिभिर्लोकानां चकितभावं कुर्वती । बृंहितारवैः । 'बृंहितं करिगर्जितम्' । निजस्य तुङ्गतया ( उच्चतया ) गगनमपि चलयितुं कृतोद्यमा । घनसदृशी, मानस्य भूमेरिन्द्रस्य गजघटा ॥ १३ ॥

—※ अश्वाः ※—

—※ रूपकघनाक्षरी ※—

चञ्चलमुदस्य मुहुर्ग्रीवामवकुञ्चयन्तो
  वदनमुदञ्चयन्तो लोचनमिहाहरन्ति
मुखरं वहन्तो मुहुः प्रोथपुटमुन्नमय्य
  सपदि समन्ततोऽथ फेनभरैरुद्धरन्ति ।
मञ्जुनाथ कर्णयुगमुत्तरङ्गयन्तो मुहु-
  श्चञ्चलदृगञ्चलेन वञ्चनमिवाचरन्ति

गमनजवेन जातु विजितविहङ्गाः, पुरः
कीलितकुरङ्गास्ते तुरङ्गाः सुखं संचरन्ति ॥ १४ ॥

चञ्चलं यथा स्यात्तथा उत्क्षिप्य मुहुर्ग्रीवाम् अवकुञ्चयन्ति ( मोटयन्ति ), वारं वारं ग्रीवावमोटनं तुरगस्वभावः । मुखम् उदञ्चयन्तः ( उन्नमयन्तः ) पश्यतां लोचनं वशयन्ति । 'फुर फुर' इति शब्देन मुखरं प्रोथपुटं ( नासापुटम् ) वहन्तः ये अश्वाः परितो मुखफेनैः पूरयन्ति । मुहुः कर्णयुगम् उत्तरङ्गयन्तः ( प्रकारविशेषेण चलयन्त. ) ये, मुहुः चंचलेन नेत्रप्रान्तेन लोकानां प्रतारणमिवाचरन्ति । वारंवारं नेत्रपरिचालनं तुरगस्वभावः । गमनवेगेन जितविहङ्गाः, कीलितकुरङ्गाः ( स्तब्धीकृतहरिणाः ) ते तुरङ्गाः पुरः ( अग्रे ) सुखं संचरन्ति । स्वभावोक्तिः । प्रतिपदं प्रासाः ॥ १४ ॥

## —॥ अश्वकुलानां वर्णनम् ॥—

क०—काम्बोजोपकुलजकलिङ्गकाननेयावन्त्य-
काश्मीरककैवर्तककुलजा विराजन्ते
बाह्लीकार्जुनेययावनेयवङ्गवासन्तक-
क्रन्थिनोपवन्तकवनायुजाः सुखायन्ते ।
मञ्जुनाथ मेचकाष्मकेयलघुयावनेय-
मालविकमौघरसुमौलिकाः प्रकाशन्ते
नानाकुलसंभवाश्च नानादूरदेशोद्भवा
नानाविधसैन्धवाः समन्तादुपभासन्ते ॥ १५ ॥

अश्वकुलानां भेदाः इमे । एतेषां रूप-गुणादिपरिज्ञानं तु तच्छास्त्रादवगन्तव्यम् । ओडछानरेशार्थं साम्प्रतमेवास्मत्सजातीयश्रीरामनेतमहोदयसंगृहीतात् अमुद्रितात् 'अश्वकुलसंस्थान' नामकात् (हिन्दी) पुस्तकाद्विशेषोऽत्र परिगृहीतः ॥ १५ ॥

## अश्वजातीनां वर्णनम्

### रूपकघनाक्षरी

श्यामकर्णताजिततुषारचक्रवाककर्क-
ताडजकल्याणपञ्चकास्ते द्युतिं यान्ति भूरि
मिश्रवर्णमल्लिकाख्यमालवाष्टमङ्गलाख्या
मेचकसारङ्गनीललोहिता न मान्ति भूरि ।
पाण्डुरपिशङ्गपीतपाटलकपिशरङ्ग-
धूसरधवलधूम्रधूपायिता यान्ति भूरि
चित्रीकृतवासवाः समीकृतसमीरजवा
अम्बरनरेशवाजिपुङ्गवा विभान्ति भूरि ॥ १६ ॥

सर्वश्वेतो हयो यस्तु श्यामैकश्रवणो भवेत् । स वाजी वाजिमेधार्हः श्यामकर्णः सुदुर्लभः ॥ ताजिताः खुरशालाश्च तुषाराश्चोत्तमा हयाः । गोजिकाणाश्च केकाणाः प्रौढाहाराश्च मध्यमाः ॥ ताडजा उत्तमाशाश्च वाजशूलाश्च मध्यमाः ॥* पीताङ्गः श्वेतपादो यो यश्च स्यात्सितलोचनः । चक्रवाकः स विज्ञेयो राजार्हः प्रियसत्तमः ॥ 'पृष्ठ्यः स्थौरी सितः कर्कः' अमरः । यस्य पादाः सिताः सर्वे, चन्द्रकं च ललाटके । कल्याणपञ्चकः प्रोक्तो भर्तुः कल्याणकारकः ॥* विमिश्रवर्णकाः सर्वे प्रशस्ता वाजिनो मताः ।* मुखे चन्द्रकसंवीतः पक्कजम्बूफलाकृतिः । श्वेतपादः स विज्ञेयो मल्लिकाख्यः सुपूजितः ॥* मालवदेशोद्भवत्वान्मालवः ।* यस्य पादाः सिताः सर्वे पुच्छो मुष्को मुखं तथा । मूर्द्धजास्तु सिता यस्य तं विद्यादष्टमङ्गलम् ॥* मेचक—सारङ्गाद्या रङ्गेण घोटकभेदाः । यथा—सितो रक्तस्तथा पीतः तारङ्गः पिङ्ग एव च । नीलः कृष्णोऽथ सर्वेषां श्वेतः श्रेष्ठतमो मतः ॥* धूसर—धूम्रादयस्तु, सप्तवर्णेभ्योऽवान्तरवर्णा अनेके उत्पन्नास्तद्युक्ताः । यथा—'सप्तवर्णा भवन्तीह सर्वेषां वाजिनां ध्रुवम् । तानहं कीर्तयिष्यामि भेदैर्जाताननेकधा ॥' इत्यादि तुरग-

परीक्षाविज्ञानं भोजराजकृत 'युक्तिकल्पतरु' तोऽवास्तव्यम् ।॥ वासवः इन्द्रः । स किल उच्चैःश्रवःपतिरपि यान् हयान् दृष्ट्वा चित्रीभूतः । समीरस्य पवनस्यापि, जवः समानः कुतो यैस्ते ॥ १६ ॥

चञ्चति सुचारु वपुश्चिक्कणचमत्कृतिदं
मन्ये वेगवीचयोऽङ्गसीम्नि मुहुः संचरन्ति
चञ्चलितकर्णास्तार्क्ष्यवेगकथामाकलय्य
तमिव निरोद्धुमग्रपादाभ्यां समुच्छलन्ति ।
मञ्जुनाथ घोरतरवल्गापरिणद्धा अपि
पवनविरुद्धाहवलालसां न संत्यजन्ति
अर्वन्तोऽस्मदग्रे के जरन्तो दिनभर्तुरिति
कोपं कलयन्तो मुखे लोहं मुहुश्चर्वयन्ति ॥ १७ ॥

चिक्कणं स्निग्धम् अत एव चमत्कृतियुक्तम्, सुन्दरं येषां हयानां वपुः चञ्चति शोभते । तत्रोत्प्रेक्षते—मन्ये, अङ्गेषु वेगस्य तरङ्गाः वारं वारं संचरन्ति । तार्क्ष्यस्य गरुडस्य, वेगकथां श्रुत्वा इव चञ्चलितकर्णाः ये घोटकाः तं (गरुडम्) पराजेतुमिव अग्रपादाभ्यां समुच्छलन्ति । अग्रवर्तिपादद्वयेन उच्छलने गरुडनिरोधरूपो हेतुरुत्प्रेक्ष्यते । ये अश्वाः घोरतरया वल्गया ('लगाम') बद्धा अपि, पवनविरुद्धस्य युद्धस्य लालसां न त्यजन्ति । द्विगुणवल्गानिरुद्धा अपि वेगविषये पवनेन साकं योद्धुमिच्छन्तीत्याशयः । दिनभर्तुः (सूर्यस्य) वृद्धाः, अर्वन्तः (घोटकाः), अस्माकमग्रे के सन्ति ? न किमपि वस्तु, इति कोपं कुर्वन्तः सन्तः क्रोधेन मुखे वारं वारं लोहं चर्वयन्ति । लोह 'कविका' चर्वणे कोपो हेतुरुत्प्रेक्ष्यते । 'दिनभर्तृ' पदेन 'दिनपूरणं तस्य कर्तव्यम् । अत एव निरन्तरमविश्रम्य घोटकान् परिचालयति, 'एवंविधस्य आपद्ग्रस्तस्य ('वेगारी') श्रमकर्षिता वृद्धा घोटकाः के' इति अवधीरणातिशयो ध्वन्यते ॥ १७ ॥

## घोटकानां शृङ्गारः

क०—चारुचरणेषु हेमहंसका विभान्ति भूरि
जानुयुगमध्ये रणह्लया विराजन्ते
हेममणिहारावलिरुल्लोठति कन्धरायां
पुच्छे बन्धुराणि रम्यरत्नान्यवलम्बन्ते ।
मञ्जुनाथ मौलौ मञ्जुलोत्तंसो विभाति चल—
न्नंसोपरि तन्तुस्यूतमणयः प्रकाशन्ते
संसूचयमानानीव रत्नाकरजन्म निजं
रत्नालङ्कृतानि हयरत्नान्यवभासन्ते ॥ १८ ॥

सुवर्णस्य हंसकाः 'हंसकः पादकटकः' अमरः। अग्रवर्तिनोः जानुनोर्मध्ये रणह्लयाः 'नेवरी'। हेम्नो मणीनां च हारावलिः, ग्रीवायाम् गमनसंरंभेण इतस्ततः उल्लोठति (परिचलति)। पुच्छे तनूरुहेषु ग्रथितानि सुन्दराणि रत्नानि लम्बन्ते। शिरसि (कर्णयुगस्य पश्चात्) चलन् गमनसंरंभेण कम्पमानः, रुचिरः उत्तंसः (कलँगी) भाति। स्कन्धस्योपरि (कन्धरायाम् 'अयाल') मूर्द्धजेषु स्यूताः मणयः शोभन्ते। अतएव निजं जन्म रत्नाकरात् (समुद्रात्) जातम् इति संसूचयन्ति इव रत्नमंडितानि हयरत्नानि (अश्वश्रेष्ठाः) भासन्ते। रत्नालङ्कारधारणेन वयं रत्नाकराज्जाताः (उच्चैःश्रवसः सहोदराः) स्मः इति सूचयन्त इव अश्वाः शोभन्त इत्याशयः॥ १८॥

## अश्वानां चलनप्रकारः

### छप्पय

झमिति झमिति रवमुखर—समरभरधरणधुरीणाः
कथमपि रोधमयन्ति हन्त मुखलीन-खलीनाः ।

उच्छलन्ति नृत्यन्ति तिर्यगुपयन्ति रमन्ते
मुहुरिह फूत्कुर्वन्ति शीघ्रगतये त्वरयन्ते ।
कविकामनिशमुदस्य ये कविकामितसुषमाऽऽवहाः
संचरन्ति चपलक्रमं ते किल वाजिकुलोद्वहाः ॥ १९ ॥

'झम् झम्' इति रवेण मुखराः । संग्रामभरधारणे निपुणाः, संग्रामस्य सर्वस्वमित्याशयः । मुखे लीनः लग्नः खलीनः कविका (लोहनिर्मितः लगाममध्यभाग.) येषां ते । अर्थात् खलीनेन नियमिता अपि कष्टेन रुध्यन्ते । तिर्यगुपयन्ति, सरलं गच्छन्तः सहसा तिर्यक् परिचलन्ति । रमन्ते क्रीडन्ति । ये अश्वाः कविकाम् खलीनम् अनिशं सदा उदस्य (उच्चैःकृत्य) कविवाञ्छितशोभावहाः (भवन्ति) । ते वाजिकुलश्रेष्ठाः चपलक्रमं गच्छन्ति । कविका—कविका—यमकः ॥ १९ ॥

## उष्ट्राः

क०—सुन्दरसुवर्णसूचिकार्यैश्चित्रशोभावहान्
मञ्जुमखमल्लपरिस्तोमान् ये समावहन्
भूषणसमिद्धा भृशमग्रपटबन्धभृतो
लम्बितगुलच्छाः पार्श्वतो ये द्रुतमभ्रमन् ।
पात्रान्नोत्किरन्तो निजगत्या जलबिन्दुमपि
शब्दसिन्धुमेते जानुवलयैरिवाऽवमन्
क्रोशशतमार्गस्यावहेलका मुदैव, मञ्जु-
मेलकाभिनन्द्यास्ते क्रमेलकाः समागमन् ॥२०॥

सुन्दरैः सुवर्णसूचिकार्यैः ('जरदोजीकाम कसीदा') विचित्रशोभाधारकान् मनोहरमखमल्लस्य ('मखमल') परिस्तोमान् कुथान् (पृष्ठास्तरणानि) ये अधारयन् । ये भूषणैः भृशं दीप्यमानाः, अग्रपटबन्धं (मुख-

मारभ्य वक्षःपर्यन्तलम्बिनम्) धारयन्तः। पार्श्वतः उभयपार्श्वयोः, लम्बमानकौशेयगुच्छकाः (उष्ट्राणां पृष्ठे उभयतो नानावर्णा गुच्छका लम्बन्ते, यथा हस्तिनां घण्टाः) ये त्वरितमभ्रमन्। निजगतिलाघवेन जलभृतपात्रात् जलस्य बिन्दुमपि न पातयन्तः (जलपूर्णं पात्रमादाय पृष्ठे स्थीयते, तथापि जलबिन्दुरेकोपि न पततीत्युष्ट्राणां गतिकौशलम्) जानुधृतैः वलयैः ('नेवरी') शब्दस्य सिन्धुमिवाऽवमन्, जानुवलयैरतिशब्दमकुर्वन्नित्याशयः। शतक्रोशात्मकमार्गस्य लीलयैव अवहेलका उल्लङ्घकाः, मञ्जुमेलके ('मेला') प्रशंसनीयास्ते उष्ट्राः समागच्छन्॥ २०॥

## रथाः

मृदुलमहार्हमखमल्लमञ्जुलावरणा
हारिहेमवल्लरीविताना गुल्मकान्तरे
सर्वरणसज्जासंविधानाः सोपधानाः पुनः
काञ्चनकलशशोभमाना मौलिशिखरे।
मुष्णन्तो मनांसि चित्ररचनाचमत्कृतिभि-
र्भूषणझणत्कृतिभिर्भान्तो भूरि संगरे
संपूरितसंपरायसंपत्सुमनोरथास्ते
मानमेदिनीशरथा निर्ययुरथान्तरे॥ २१॥

येषां रथानामुपरि, मृदुलस्य महार्हमखमल्लस्यावरणमस्ति। गुल्मकस्य 'छतरी'तिख्यातस्य अन्तः, मनोहरसौवर्णवल्लरीणां वितानोस्ति ('सुनहरी-झालर' युक्ताः)। सर्वस्याः रणसज्जायाः (शस्त्रादिसमरसामग्र्याः) संविधानं येषु ते। उपधानयुक्ताः, मौलिदेशे सुवर्णकलशेन शोभमानाः। चित्ररचनाभिः पश्यतां मनो हरन्तः। भूषणानां झणत्कारैः संग्रामे शोभमानाः। संपूरितः संग्रामश्रियो मनोरथो यैः, (यैः रथैः आवश्यकसामग्रीद्वारा योद्धॄणां युद्धमनोरथाः पूरिता इत्याशयः।) अथ, एतदन्तरे मानभूपस्य रथा निर्ययुः। चतुर्थे रथा-रथा-इति त्रियमकम्॥ २१॥

## शतघ्नीप्रभृतिरन्य सामग्री

एकगोलकेन निजनिघ्नीकृतसर्वरणो
निशितशतघ्नीगणो मन्थरमुपासरत्
नानाविधशस्त्रवस्त्रसामग्रीसमेधितानि
शकटशतानि बत सेयं सार्द्धमावहत् ।
वैतालिक-बन्दि-चार-परिचर-चक्रं याति
विपुलपदातिसैन्यमेतन्मध्यमामिलत्
सर्वां रणसज्जामुपसज्ज्य निजसार्द्धमिय-
मेवं रणसज्जा मानसेना संयुगेऽचलत् ॥ २२ ॥

निजनिघ्नीकृतः स्वाधीनीकृतः सर्वो रणो येन सः । एकगोलकमात्रेण विजितसंग्राम इत्याशयः । 'शतघ्नी', 'तोप' इति भाषा । अतिगुरु—विशालत्वान्मन्दमचलत् । सामग्रीसमेधितानि, सामग्रीपूरितानि । सेयं सेना अनन्तशकटान् सह, अनयत् । चाराः, गुप्तचराः । परिचराः, सेवकाः । एतन्मध्यम्, एतस्याः सेनाया मध्ये, विपुलं पदातिसैन्यमपि अमिलदित्यर्थः । एवं स्वेन सह रणसज्जां रणसामग्रीम्, उपसज्य संभृत्य । रणाय सज्जा संनद्धा, मानसेना समरेऽचलत् ॥ २२ ॥

## अथ युद्धदुन्दुभिध्वनिः

नन्दयन्नमन्द-वीरमोदोन्मत्तमानसानि
बाढमुपविन्दन्निह बहलबलोत्करे
नीरन्ध्रं निरुन्धन्द्रुमगहन-वनान्तराणि
घोरं ध्वनिमासुवन् सुघोरगिरिगह्वरे ।

भिन्दन्नरिवक्षो भूरि निन्दन्कान्दिशीकगणा-
न्व्याप्नुवन् वसुन्धरां समिन्धन्नयमम्बरे
सन्धिमुपरुन्धन् ध्वनिसिन्धुभिरशेषदिशां
दुन्दुभिरनादीद्गन्धसिन्धुरशिरोऽजिरे ॥ २३ ॥

अमन्दानां वीराणां हर्षोन्मत्तानि मानसानि नन्दयन् (हर्षयन्)। बहले विस्तृते सैन्यसमूहे उपविन्दन् (प्राप्नुवन्)। द्रुमैर्गहनानि (निबिडानि) वनान्तराणि, नीरन्ध्रं (अत्यन्तम्) निरुन्धन्। अतिघोरे गिरिगह्वरे (गुहायाम्) घोरं ध्वनिम् आसुवन् उत्पादयन्। वनेषु गुहासु च गमनेन प्रतिध्वनिद्वारा दुन्दुभिध्वनेर्घोरतरता सूच्यते। कांदिशीकगणान् भयद्रुतान् लोकान्, निन्दन्। अम्बरे समिन्धन् समिद्धो भवन् (अत्यन्तं वर्द्धमानः)। ध्वनिसिन्धुभिः ध्वनिपूरैः, अशेषदिशाम् सन्धिम् अन्तरालमुपरुन्धन्। अयं दुन्दुभिः गन्धसिन्धुरस्य शिरोरूपेऽङ्गणे अनादीत् नादमकार्षीत्। यस्य गन्धमाघ्राय निर्बला अन्ये गजाः पलायन्ते स गन्धगजः। दुन्दुभेर्ध्वन्यनुकरणं कुर्वन्निव नन्द—विन्द—रुन्ध इत्यादिः प्रासः। सर्वत्र शत्रुनिर्वाहरूपः समाधिः॥२३॥

### अथ युद्धारम्भे नानाविधवाद्यानां ध्वनिः

### पद्धरीच्छन्दः

अथ समरमाप्य कोणाः क्वणन्ति। वाद्यानि वीररागं रणन्ति॥
मन्ये समीकसज्ञां भणन्ति। शूराय शौर्यगाथां गृणन्ति॥२४॥
पटुपटहघोरघोषा भवन्ति। उत्साहमखिलसैन्ये स्रवन्ति॥
करिपृष्ठगता ढक्का नदन्ति। क्षत्रियकुलस्य विजयं वदन्ति॥२५॥
पुनरुष्ट्रगताः पटहा ध्वनन्ति। वीराय समरसुखमामनन्ति॥
हयदुन्दुभयः सरसं स्वनन्ति। वीरव्रजेषु घोरं घनन्ति॥ २६॥

कोणा भेरीवादनदण्डाः। 'नगारेकी चोब'। 'कोणाघातेषु गर्जदिति' वेणी। वीररागो 'मारू' 'जुझाऊ'प्रभृतिः। समीकं युद्धम्॥ २४॥ घनन्ति मेघा इव आचरन्ति॥ २६॥

रणडमरुरवा घोरं भवन्ति । उत्साहनृत्यसमयं वदन्ति ॥
उन्मादिमड्डुनादा मिलन्ति । भटमानसेषु मदमासुवन्ति ॥२७॥
अपि समरडिण्डिमाः संचरन्ति । धीरेषु धैर्यधारां धरन्ति ॥
मदमत्तमर्दलाः संनदन्ति । प्रतिपन्थिमानमिव मर्दयन्ति ॥२८॥
रणशृङ्गरवाः परितो विभान्ति । अपि दिग्दिगन्तमपि संप्रयान्ति॥
अपि वक्रशृङ्गनादान्निशम्य । वीराश्चलन्ति हेतीर्नियम्य ॥२९॥
ध्वनिमातनोति रणतूर्यकापि । रणरतिरुदेति वीरेषु कापि ॥
तारं नदन्ति पटु वादितानि । अपि चर्मभस्त्रिकावाद्यकानि ॥३०॥
सह घनाऽऽतोद्यमपि पटु रवीति । वीरस्य समरचर्या ब्रवीति ॥
सहनायिकापि नदतीह भूरि । कौतुकमुदेति हृदयाऽवपूरि ॥३१॥
पटुमारवरागध्वनिरुदेति । वरवीरमनः प्रोन्मादमेति ॥
एवं रणमङ्गलसमुचितानि । हृदि वीरभावसंवर्धकानि ॥ ३२ ॥
भृशमम्बरेशसेनोचितानि । वाद्यानि सैनिकैर्वादितानि ॥ ३३ ॥

## युद्धारम्भः

अपि विस्तृतरङ्गस्थलमवाप्य । नवनान्दीरीतिं परिसमाप्य ॥
वरवीरभुजाऽऽलम्बं दधार । असिलतानटी नृत्यं चकार ॥३४॥

मर्दलो वाद्यविशेषः॥ २८ ॥ वक्रशृङ्गरणशृङ्गे क्रमशो 'बांकडा–रणसीगा' इति प्रसिद्धे। हेतीः आयुधानि, नियम्य बद्ध्वा ॥ २९ ॥ रणतूर्यका 'रणतुरुही'। चर्मभस्त्रिकावाद्यानि 'मसकके बाजे' ॥ ३० ॥ 'कांस्यतालादिक घनम्।' आतोद्यं वाद्यम्। रवीति ध्वनति। सहनायिका 'सहनाई', द्वे सह वाद्येते इति। हृदयम् अवपूरयति तादृशं कौतुकम्॥ ३१ ॥ गीतवाद्यादिद्वारा पूर्वं नान्दी जाता। असिलतारूपाया नट्या नृत्यमिदानीं रूपकरूपेण वर्ण्यते–विस्तृतं रङ्गस्थलं युद्धस्य नाट्यस्य चोभयमपि। नटी

नवकोष—निकायाद्बहिरुपेत्य । वीरोग्रबाहुसख्या समेत्य ॥
निजचमत्कारकृतमीलनानि । परिमुष्णन्ती जनलोचनानि ३५
पटुझणत्कारमुखरिततमानि । बत कुर्वतीह रङ्गे पदानि ॥
निजधारा—गतिपरिशीलनेन । विशदीकृतमार्गोऽसौ जवेन॥३६॥
बहुभूषणोग्ररुचिबन्धुरासु । श्यामा ननर्त रिपुकन्धरासु ॥
यत एषा सरभसमुज्जगाम । तत एव धरणितलमाननाम ॥३७॥
बत यस्यैषा कण्ठे ससञ्ज । स हि चिरकालार्थं संममज्ज ॥
निजगतिमात्राद्रक्तं चकार । चपलक्रमेण सेयं चचार ॥ ३८ ॥

यथा आरम्भे अपरस्याः हस्तं गृहीत्वा विलासान् दर्शयति, एवं असिलतारूपा नटी, श्रेष्ठवीराणां भुजस्याऽऽलम्बं दधार ॥३४॥ नवीनकोष-(म्यान-) रूपात् निकायाद् गृहाद् । वीराणाम् उग्र-बाहुरूपया सख्या समेत्य मिलित्वा । निजेन चमत्कारेण 'चमक,' निमीलितानि, जनानां लोचनानि शीघ्रतावशाद्बञ्चयन्ती । नटी यथा भूषणचमत्कृत्या लोकानां लोचनानि हरति एवमियमपि ॥ ३५ ॥ नटी भूषणझणत्कारमुखराणि पदानि (पादन्यासान्) रङ्गे करोति, एवं खड्गलतानटी झणत्कार'झनझनाहट' मुखराणि पदानि युद्धरङ्गे कुर्वती सती । नृत्ये यथा धारागत्याः (इतस्ततः अगत्वा, संमुखं गमनस्य) परिशीलनेन शीघ्रं नृत्योपयुक्तं मार्गं नटी करोति, एवं निरन्तरपरिचलनरूपया गत्या इयं (खड्गनटी) वेगेन विशदीकृतमार्गोऽभवत् । अर्थात् संमुखमस्यां परिचलन्त्यां युद्धस्थलं विविक्तमिवाभवदित्यर्थः ॥ ३६ ॥ श्यामा षोडशवार्षिकी यथा नटी नृत्यति । एवं वीरोचितभूषणानाम् उग्रया रुच्या सुन्दरासु, वैरिणां ग्रीवासु, श्यामवर्णा असिलतानटी ननर्त । यत्र इयं खड्गनटी त्वरितं जगाम, तत्रैव भूतलं भयेन आनतमिवाभवत् ॥ ३७ ॥ नटी कस्यचित्कण्ठेऽनुरागादाश्लिष्यति चेत्स चिरं प्रेममग्नो भवति । एवं यस्य कण्ठे इयं (खड्गनटी) ससज्ज, स एव० । नटी यथा निजगतिमात्रेण जनं रक्तम् (अनुरक्तम्) करोति, एवं इयं निजगत्या रक्तं चकार, रुधिरं प्रवाहयामास ॥ ३८ ॥

## शतघ्नीचलनम्

### छप्पय

तडिदिव तीव्रं त्वरितमेव तेजस्त्वरयन्ती
    धूमधोरणीधारणेन धाराधरयन्ती ।
घोरघोरनिर्घोषभरैः कर्णौ विधमन्ती
    कटुकरका इव घोरलोहगोलकान्वमन्ती ।
धुंधुंधमाकधाराखैरन्धकारसन्धायिनी
व्योम धरणिमन्तर्दधेऽधृष्य'तोप' कादम्बिनी ॥ ३९ ॥

कादम्बिन्यां (मेघमालायाम्) व्याप्तायाम् तडिद् यथा तीव्रं तेजः त्वरयति, एवमग्नियोजनसमकालम् तीव्रं तेजः, गमनाय त्वरायुक्तं कुर्वती । धूमसमूहधारणेन धाराधरमुत्पादयन्ती, तत्करोतीति णिच् । कठिनाः करकाः (वृष्टिपाषाणान्) इव घोरान् लोहगोलकान् वमन्ती । 'धुम् धुम् धमाक्' इत्याकारैः धाराबद्धैः शब्दैः (उपलक्षिता), धूमद्वारा अन्धकारकारिणी । अधर्षणीया 'तोप' रूपा मेघमाला गगनं च भूमिं च तिरोदधौ ॥ ३९ ॥

### सवैया

इन्द्रधनुःप्रतिमां कलयन्
    ध्वजयष्टिमिमां कृतवैरिनिधर्षाम्
व्याकुलतामसृजद्द्विषता—
    मुपयातवतामयमुद्यदमर्षाम् ।
मञ्जुलनाथ नरेन्द्रमणि—
    र्दधदद्य सुरेन्द्ररुचं धृतहर्षो
मत्तगजेन्द्रगतोयमधत्त
    वियत्तलतो विशिखाशनिवर्षाम् ॥ ४० ॥

मत्तकुञ्जरस्थो मानसिंहनरेन्द्रः इन्द्रस्येव रुचं कान्तिं हर्षयुक्ताम् दधत् धारयन्, अत एव वियत्तलतः आकाशात् (उन्नततमहस्तिपृष्ठावस्थानात्), विशिख-(बाण-) रूपाणां अशनीनां वर्षाम् अधत्त अकरोत् । इन्द्रसाम्याय आह—इन्द्रस्य सविधे पञ्चरङ्गविशिष्टमिन्द्रधनुर्भवति । अयं मानभूपस्तु पञ्चरङ्गत्वादिन्द्रधनुःसदृशीं वैरिलोकधर्षिणीं इमां ध्वजयष्टिं (पँचरंगध्वजम्) कलयन् स्वहस्त्याधोरणहस्ते नयन् । अयं माननरेन्द्रः उपयातवतां द्विषतां (वैरिणाम्), उद्यत्कोपां व्याकुलतामुत्पादयामास । ते व्याकुलाः सन्तो मनसि महान्तं कोपं चक्रुरित्याशयः । छन्दोपीदं 'मत्तगयन्द' नामकमिति मुद्रा ॥ ४० ॥

क०—धुन्वन्तो धनूंषि विधमन्ति भूतधात्रीतलं
रुन्धन्तोऽन्तरिक्षतलं जहति शरोत्करम्
पट्टिश–परिघ–पाश–परशु–प्रचण्डप्रास–
परुषपतत्रिभरैः प्रोन्मथ्नन्ति निर्भरम् ।
भिन्दन्तो भुशुण्डी–भूरिभिन्दिपाल–भल्ल–भरैः
कुन्त–करवालकुलैराघ्नते निरन्तरं
क्रुद्धयोधमण्डलविबुद्धरणदीप्तिधरं
धरणिमरुद्ध युद्धमखिलभयङ्करम् ॥ ४१ ॥

धुन्वन्तः टङ्कारयन्तः । भूतधात्रीतलं भूतलं विधमन्ति कम्पयन्ति । शरसमूहं जहति मुञ्चन्ति । प्रासो भल्लः । पतत्रिभरैः बाणसमूहैः । निरन्तरम् आघ्नते आघातं कुर्वन्ति । आङो यमहनेत्यात्मनेपदम् । क्रुद्धे योधमण्डले योद्धृसमूहे विबुद्धा या रणार्थं दीप्तिः (उत्तेजना) तद्धारकम् । अखिलभयङ्कर युद्धं धरणिं रुरोध । योद्धॄणां परस्परसंघर्षेण पृथिवीमाच्छादयामासेत्याशयः । वीरानुकूला धकारभकारादिबहुला संयुक्ताक्षरदीर्घसमासयुक्ता संघटना ॥ ४१ ॥

वीरः



" धरणिमरुद्ध युद्धमखिलभयंकरम् ॥ "

Lakshmi Art, Bombay, 8.

## दोहा

रणोन्मादमत्ता यतो यवनभटाः प्रसरन्ति ।
राजपुत्रशूरास्ततो विशिखानभिवर्षन्ति ॥ ४२ ॥
शरवर्ष शरवर्षणैः खड्गमपि च खड्गेन ।
उभयभटाः प्रतिकुर्वते निजभुजभूरिबलेन ॥ ४३ ॥

राजपुत्राः यवनाश्चेत्युभये भटाः, निजभुजबलेन शरवर्षां शरवर्षणैः, खड्गं च खड्गेन प्रतिकुर्वते रुन्धन्तीत्याशयः ॥ ४३ ॥

## तोमरच्छन्दः

खड्गाश्चिराय चलन्ति । चटुलोचने चलयन्ति ॥
चर्मणि परे रुन्धन्ति । प्रतिघातमावध्नन्ति ॥ ४४ ॥
कवचे शराः प्रपतन्ति । कटुशब्दमारचयन्ति ॥
अर्चिः स्फुटं घटयन्ति । चक्षुःप्रभां स्थगयन्ति ॥ ४५ ॥
अपि भिन्दिपालमुदस्य । प्रहरन्ति सपदि परस्य ॥
अतियाति सोपि समीक्ष्य । पुनराहते तमुदीक्ष्य ॥४६॥
खड्गेन कश्चन हन्ति । अन्योपि तं प्रतिहन्ति ॥
खड्गध्वनिः समुदेति । अर्चिश्चमत्कृतिरेति ॥ ४७ ॥
पुनरेव खड्गमपास्य । बाहू पटादुपवास्य ॥
प्रहतो मिथो मुष्ट्यैव । दहतो द्रुतं दृष्ट्यैव ॥ ४८ ॥
कूर्चेषु चटुलमुदस्य । द्यति मस्तकं यवनस्य ॥
अपरोऽसिधेनुमुदस्य । हृदये निहन्ति परस्य ॥ ४९ ॥

चटु चञ्चलं यथा स्यात्तथा लोचने चलयन्ति (चमत्कृत्या चञ्चले कुर्वन्तीत्यर्थः)। चर्मणि ('ढाल') रुद्ध्वा प्रतिघातं प्रत्युत्तरे आवातं कुर्वन्ति ॥४४॥

अर्चिः (प्रकाशं) प्रकटं कुर्वन्ति ॥ ४५ ॥ अतियाति भिन्दिपालगोलकमायान्तं दृष्ट्वा तं वञ्चयतीत्यर्थः । तं दृष्ट्वा पुनः आहते, आघातं करोति । आङो यमहनेत्यात्मनेपदम् ॥४६॥ अर्चिश्चमत्कृतिः उभयखड्गयोगेन ध्वनिः, अर्चिषः चमत्कारश्चोदेति ॥ ४७ ॥ खड्गम् अपास्य क्षिप्त्वा । भुजौ पटात् उपवास्य बहिर्निष्कास्य । प्रहतः आघातं कुरुतः । हन्तेः लट्प्रथमपुरुषस्य द्विवचनम् ॥ ४८ ॥ चटुलं यथा स्यात्तथा कूर्चेषु ('दाढी') उत्क्षिप्य, मस्तकं द्यति छिनत्ति । असिधेनुः 'छुरिका' ॥ ४९ ॥

विसृजन्ति भल्लान्केपि । रुन्धन्ति तानन्येऽपि ॥
पुनरुन्नदन्ति बलेन । अन्ये क्षिपन्ति जवेन ॥ ५० ॥
नलिकास्त्रनिर्दलितानि । लोठन्ति संहननानि ॥
धूमो नभः पिदधाति । चक्षुश्चलं विदधाति ॥ ५१ ॥
वीरा धनुर्धुन्वन्ति । शरवर्षणं तन्वन्ति ॥
भटजलधिरुन्मदमेति । रणभूमितलमत्येति ॥ ५२ ॥
कुन्ता वपुः कृन्तन्ति । तांश्चर्मणा रुन्धन्ति ॥
परिघैः परे प्रघ्नन्ति । अन्ये शरानुज्झन्ति ॥ ५३ ॥
चञ्चन्ति चलचक्राणि । भिन्दन्ति रिपुचक्राणि ॥
घनमुद्गराः प्रसरन्ति । धंधमिति वपुषि लगन्ति ॥५४॥
नलिकास्त्रधूम उदेति । घनडम्बरत्वमुपैति ॥
तोमरविभा परिभाति । चपलेव रुचिमुपयाति ॥ ५५ ॥

नलिकास्त्रैः ('बन्दूक' इति ख्यातैः) निर्दलितानि आहतानि । संहननानि, 'गात्रं वपुः संहननम्' ॥ ५१ ॥ भटरूपो जलधिः, उन्मदं रणोन्मत्तताम् एति । समुद्रो यथा उन्मदो भूमिमुल्लङ्घयति, एवं भटजलधिः रणभूमिमुल्लङ्घयति ॥ ५२ ॥ चलानि चक्राणि (आयुधानि) चलन्ति । रिपुव्यूहान् भिन्दन्ति । घनाः मुद्गराः (आयुधानि) ॥ ५४ ॥ घनडम्बरत्वं मेघाड-

स्वरतां धारयति । तोमराणाम् (आयुधानाम्) विभा दीप्तिः । चपला इव विद्युदिव । किञ्च तोमराणां छन्दोविशेषाणां विभा शोभा, इति मुद्रा ॥५५॥

—⊱ छप्पय ⊰—

कुपितचण्डवेतण्डमण्डलान्यरिदलमचलन् ।
शुण्डादण्डवितण्डनेन शात्रवदलमदलन्
त्वरिततुरङ्गस्थितास्तरुणवीरा द्रुतमविशन् ।
तरलतुरुष्कान्कुन्ततोमराद्यैर्भृशमपिषन् ।
क्रुध्यद्धयगजधावनैर्धूलिधराधर उद्बभौ ।
द्विषद्धाम धूसरविभं रणधरणौ नु तिरोदधौ ॥ ५६ ॥

कुपितानि चण्डानि च वेतण्डमण्डलानि (हस्तिसमूहाः) अरिदलं शत्रुव्यूहम् अगच्छन् । शुण्डादण्डद्वारा वितण्डनेन ताडनेन । 'तडि ताडने' भ्वादिः । शत्रुदलम् अदलन् अचूर्णयन् । दलिरत्र अन्तर्भावितण्यर्थः । तरुणाः राजपुत्रवीराः, अविशन् शत्रुव्यूहे प्राविशन् । भयेन तरलान् चञ्चलान् तुरुष्कान् यवनान्, अपिषन् अचूर्णयन् । क्रुध्यतां हयानां गजानां च धावनैः पलायनैः । धूलिपर्वतः उद्बभौ दृश्यते स्म । अत एव धूसरकान्ति द्विषतां (शत्रूणाम्) धाम तेजः, तिरोदधौ तिरोहितमभवत् । शत्रूणां तेजः शाम्यति स्म, ते पराजयोन्मुखा अभवन्नित्याशयः ॥ ५६ ॥

—⊱ घोरयुद्धम् ⊰—

क०—धावद्धय-सिन्धुर-पदातिपदविद्धा बृह-
द्धूलिरुपविद्धा मुहुर्व्यवदधते भुवम्
क्रुध्यद्योधमण्डलविसर्पद्धेतिरुद्धा क्षणं
वेगतः समिद्धा पुनर्धावति मदोद्भवम् ।

ऋध्यद्ध्वान्तधूसरनिरुद्धहरिद्धामधरा
पवनैः प्रवृद्धाऽम्बरमेति तद्ब्रुवे ध्रुवं
बद्धा घोरघोरतरयुद्धारम्भदम्भैर्धरा
वेधसे निवेदयितुं क्रुद्धा प्लवते दिवम् ॥ ५७ ॥

धावतां हयानां सिन्धुराणाम् (गजानाम्)पदातीनां च, पदैः विद्धा क्षुण्णा, उपविद्धा राशीभूता, बृहती धूलिः भूमिम् व्यवदधते आच्छादयति । 'दध धारणे' भ्वादिः । क्रुध्यतां योधमण्डलानां विसर्पन्तीभिः हेतिभिः (आयुधैः) क्षणं रुद्धा, पुनः वेगात् समिद्धा वर्धमाना, सा (धूलिः) मदोत्कटं धावति। क्षणमायुधेषु रुद्धापि धूलिः पुनः सर्वतः प्रसरतीत्याशयः। ऋध्यता (वर्धमानेन) ध्वान्तेन (अन्धकारेण) धूसराणि, अत एव निरुद्धानि (विलोकने अदृश्यानि), यानि हरिद्धामानि (दिगन्तरालानि) तद्धरा तद्व्यासा। पवनैः प्रवृद्धा (धूलिः) आकाशम् एति । तद् अहं ब्रुवे कथयामि—अतिघोरैः युद्धारम्भाडम्बरैः बद्धा, अत एव पीडया क्रुद्धा सती धरा (पृथिवी) ब्रह्मणे स्वपीडां निवेदयितुं दिवम् (आकाशम् स्वर्गं वा) प्लवते गच्छति । आकाशं गच्छन्ती धूलिं दृष्ट्वा 'ध्रुवम्' इति पदेन कविरुत्प्रेक्षते यत् युद्धोपद्रवेण क्रुद्धा इयं धरा विधातारं प्रति स्वोपरोधं वक्तुम् अन्तरिक्षं गच्छतीत्याशयः। पृथिवीत्वोत्प्रेक्षया धूलिस्तरस्य घनत्वम्, तेन च युद्धस्य घोरत्वं ध्वन्यते । विद्धा-रुद्धा—इत्यादि सर्वपादगाः प्रासाः। महाप्राणाक्षरसंयोगबाहुल्येन वीरोचिता संघटना ॥ ५७ ॥

छप्पय

खजति खड्गखडखडारवैः क्षितिखण्डमखण्डम्
पट्टपट्टिशपटपटारवैर्ध्वनितं बहुचण्डम् ।
खणिति खणिति कङ्कटकरवाः कटु कर्णमुपेयुः
कुहचन कठिनकुठारघोरघाताः श्रुतिमीयुः ।
भिन्दिपालतोमर—भरैर्भूरि भयङ्करनादिनी
क्ष्वेडाभिर्ध्वनयति धरामम्बरेशरणवाहिनी ॥ ५८ ॥

अम्बरेशस्य रणवाहिनी (सेना), खड्गानां परस्परसंघर्षादिना 'खड् खड्' इत्यारवैः (शब्दैः) संपूर्णं क्षितिखण्डं (भूभागम्) खजति मथ्नाति। 'खज मन्थे' भ्वादिः। कीदृशं भूखण्डं तदाह—पट्टिशानाम् (आयुधानाम्) 'पट्ट पट्' इत्यारवैर्ध्वनितम्, बहुभयङ्करं च। कङ्कटकानां कवचानां रवाः। कटु यथा स्यात्तथा, श्रुतिमीयुः श्रूयन्ते स्म। क्ष्वेडाभिः वीराणां सिंहनादैः। 'क्ष्वेडा तु सिंहनादः स्यात्' अमरः॥ ५८॥

क०—भीषणमनृत्यद्रणमत्ता योगिनीनां घटा
पदपरिलोठन्नरमुण्डचयचालिका
रक्तपानमाद्यन्महाभैरवः प्रहृष्टोऽभ्रम-
भ्रूरिभूतमण्डली ननर्त दत्ततालिका।
मञ्जुनाथ मन्ये महाकालेनाद्य मूर्तिरियं
धारितास्ति वक्षोलुठन्मर्त्यमुण्डमालिका
तिग्मकरवालेन प्रलूय गलद्रक्तमुखी
शात्रवान् कपालेऽकृत कुप्यद्रणकालिका॥ ५९॥

पदेषु (चरणेषु) परिलोठन्तो ये नरमुण्डचयास्तेषां चालिका प्रेरयित्री योगिनीनां घटा (समूहः)। रक्तपानेन माद्यन् उन्मत्तो भवन्। रणे मुण्डानि लुठन्ति दृष्ट्वा आह—इयं महाकालेन (शिवेन, अथवा अन्तकरेण कालभगवता) अद्य, वक्षसि लुठन्ती मर्त्यमुण्डानां मालिका यस्याम् ईदृशी भयङ्करी मूर्तिर्धारितास्ति। गलत् क्षरत् रक्तं मुखाद् यस्याः ईदृशी रणकालिका। शात्रवान् शत्रून् तिग्मेन करवालेन (खड्गेन) छित्वा, निजकपाले अकृत अकार्षीत्। सर्वेऽपि शत्रवो रणचण्ड्याः कपालपात्रेऽगच्छन्, समाप्ता अभवन्नित्याशयः॥ ५९॥

## विजयपञ्चरङ्गध्वजः, आशीश्च

चञ्चद्घनमण्डले प्रवीक्ष्य पञ्चरङ्गच्छटा-
मिन्द्रधनुरञ्चले प्रयाति मनो मानिनाम्

दर्पमादधाना, द्योतमाना दूरदेशेऽप्यपि,
संमर्दितमाना भूरि-भूरि-भूपमानिनाम् ।
सूरिगणगीर्भिरभिगीतगुणगाथ विभो
हंहो नरनाथ! मन्थिनीयं मदमन्थिनां
संमदमयन्ती दमयन्ती दिक्षु संस्फुरता-
त्सेयं वैजयन्ती वै जयन्ती परिपन्थिनाम् ॥ ६० ॥

आम्बेरराज्यस्य पञ्चरङ्गध्वजं वर्णयति—शोभमाने मेघमण्डले (आकाशे इति यावत्)। अस्याः वैजयन्त्याः पञ्चानां रङ्गाणां शोभां वीक्ष्य मानिनां मनः, इन्द्रधनुःप्रान्ते याति । 'पञ्चरङ्गं' दृष्ट्वा इन्द्रचापं लोकाः स्मरन्तीत्याशयः। दर्पम् स्थापयन्ती, दूरदूरतोपि शोभमाना । बहूनां राजमानिनां लोकानां मर्दितमाना । लोकमदमन्थिनामपि राज्ञां मन्थिनी दर्पनाशिनी । संमदम् अयन्ती प्राप्नुवती, सर्वदा हृष्टेत्यर्थः । दमयन्ती शत्रुलोकानां दमनं कुर्वती । वै निश्चयेन परिपन्थिनां (शत्रून्) जयन्ती वशीकुर्वती । कर्मणः शेषत्वे षष्ठी। अत एव 'न लोकेति' षष्ठीनिषेधोपि न । 'सर्वोयं कारकषष्ठ्या. प्रतिषेधः' इत्याद्युक्तत्वात्। सेयं वैजयन्ती (पताका) पण्डितैर्गीतगुणगाथ हे नरेन्द्र! सर्वासु दिक्षु स्फुरतात्। सर्वत्र ते विजयोस्तु इत्याशयः। मर्दितमाना, दमयन्तीत्यादिषु सर्वत्र पताकापदेन तत्स्वामित्वसंबन्धादम्बरनरेन्द्रो लक्ष्यते। तथा च 'त्वं किम्, तव पताकापि यत्र गच्छति, तत्र तत्रैव लोकानां मानमर्दनम्, शत्रूणां च दमनं भवतीत्याद्यतिशयो व्यज्यते । प्रथमे चञ्च-पञ्च-रञ्च, द्वितीये धाना मानेत्यादि, तृतीये गाथ नाथ इति प्रासाः । चतुर्थे दमयन्ती दमयन्ती वैजयन्ती वैजयन्तीति यमकः ॥ ६० ॥

* * * * *

## मृगया

तत्र पूर्वम्

### सिंहावलोकने सिंहावलोकनम्

### सवैया (उपजातिः)

क्रियतां किल केलीमृगैर्गमनं
　विपिनं वृकवृन्दैरिहाऽऽव्रियताम्
व्रियतां शरणं नु करेणुकुलै-
　र्विकलैर्गवयैर्गतिरुद्ध्रियताम् ।
ध्रियतां धृतिराशु नरेन्द्रचरै-
　र्नरवीरैः रसो हृदि संभ्रियतां
भ्रियतां गहनं गजबृंहाऽऽरवै-
　रिह सिंहावलोकनमाः क्रियताम् ॥ ६१ ॥

सिंहावलोकने कृते सति, मृगैर्गमनं क्रियताम् । वृकसमूहैर्वनमाव्रियताम् । भयेन वृकाः वनस्यैकस्मिन् स्थाने आवृता भवन्त्वित्याशय. । गजस्त्रीसमूहैर्भयाकुलत्वात् शरणं रक्षावलम्बनम् व्रियतां आश्रीयताम् । गतिः (मार्गः उपायो वा) उद्ध्रियताम् अन्विष्यताम् । नरेन्द्रस्य चरैः दूतैः (सिंहान्वेषणार्थमागतैः) आशु शीघ्रं धैर्यं ध्रियताम् । सिंह. संमुखे दृश्यते इति अन्वेषणक्लेशस्तेषां न भविष्यतीत्याशयः । नरवीरैः मृगयाविलासिभिः वीरैः हृदि रसः (मृगयाकौतुकं वीररसो वा) संभ्रियताम् आपूर्यताम् । गजानां बृंहाऽऽरवैः गहनं वनं भ्रियतां पूर्यताम् । आः! (सरभससंबोधने) सिंहस्याऽवलोकनं क्रियताम् । चित्रे सिंहावलोकनम् वर्ण्ये च सिंहावलोकनम्, अलंकारश्च सिंहावलोकनमित्यहो त्रिधा सिंहावलोकनम् ॥ ६१ ॥

## सिंहस्योच्छलनं मृगया च

क०—निविडवनेऽस्मिन् दृप्तसिंहो राजसिंहं वीक्ष्य
वाहं चोपलक्ष्य घोरघर्घररवोऽनदत्
निष्कोपितखड्गे स्फुरत्स्तब्धपुच्छगुच्छो
ज्वलच्छोण-पिङ्ग-चक्षुर्निजवासाद्विद्रुतोऽद्रवत् ।
घोरतरदंष्ट्राजालविकट-करालमुखो
निशितनखोऽसौ द्रुतमस्य संमुखोऽभवत्
केसरसटाभिर्व्याप्तविक्रमोत्कटांसतटो
विकटां विधाय वीरझम्पां कुपितोऽपतत् ॥ ६२ ॥

दृप्तः सिंहः । राजसु सिंहम् (श्रेष्ठम्) । द्वयोः सिंहयोरेकत्र समागमे युद्धसंरम्भः सूचितः । वाहं घोटकं च लक्षयित्वा । घोरः घर्घराकारश्च रवो यस्य सः (सिंहः) । कंचित्पशुं दृष्ट्वा घर्घरनादः ('गुर्राना') सिंहस्य प्रसिद्धः । नादं श्रुत्वा कोषान्निष्कासितः खड्गो येन ईदृशे राजनि जाते, स्फुरन् स्तब्धे पुच्छे लोमगुच्छो यस्य ईदृशः, ज्वलन्ती शोणे पिङ्गे च चक्षुषी यस्य ईदृशः, निजनिवासस्थानात्पलायितः सन् राजानं प्रति अद्रवत् अधावत् । केसरसटाभिः स्कन्धस्थदीर्घलोमभिर्व्याप्तः, पराक्रमसुदृढः, स्कन्धतटो यस्य सः । वीरझम्पाम् वीरस्येव उत्फालम् । अस्य राज्ञ उपरि अपतत् । स्फुरत्पुच्छरवादिना सिंहस्वभावो मृगयाकालिकोऽविकलं वर्णितः ॥ ६२ ॥



मृगया



'विकटां विधाय वीरझम्पां कुपितोऽपतत् ॥'

Lakshmi Art, Bombay, 8




[लोकान्तरमुपगतस्य मित्रस्य वियोगदुःखं (पूर्वानुभूतम्) वर्णयति कश्चित्।]

कण्ठविनिरुद्धैरश्रुपूरैर्विनिरुध्यतेऽसौ
वाणी, कथमुद्गिरामि दुःखं यन्ममाभवत्
करुणविलापानवधार्य गतधैर्यगुणः
पाषाणोपि तस्मिन्दुःखसमये ममाद्रवत्।
हन्त हन्त! दुःखकथामेतां हा निशम्य तदा
कठिनतमानामपि केषामश्रु नास्रवत्
"शय्यातः शशाक नैकपदमपि गन्तुं यो हि
लोकान्तरमेष उपगन्तुं कथं प्राभवत्" ॥ १ ॥

इयं मम वाणी अश्रुपूरैः रुध्यते, अत एव मित्रमरणसमये यद्दुःखं ममाऽभवत् तत्कथ कथयामि? मम करुणविलापान् श्रुत्वा। पाषाणोपि अद्रवत्, अतिक्रूरोपि दयार्द्रोऽभवदित्याशयः। एतां (वक्ष्यमाणाम्) कथां श्रुत्वा-का सा तदाह—"यो जनो व्याधिदशायां शय्यातः०"। सर्वत्रास्मिन्प्रकरणे प्रसादः, अतिविरलसमासा वृत्तिश्च ॥ १ ॥

अन्तरनिलीनगुरुसन्तापैः प्रमाथिनी सा
चिन्ता हृदयेन या स्वहस्तेनोपपादिता
तामेतां निरन्तरहृदयरसशोषकरीं
कथमिव पश्येज्जनो गूढं या समाहिता।

मञ्जुनाथ को वा दग्धहृदयरहस्यसखो
यो वा पुटपाकमेतमान्तरमवेक्षिता
वेदनां मदीयामविलोकितविरामामये
जानीते त्रियामा दीर्घयामा याऽतिवाहिता ॥ २ ॥

अन्तरनिलीनैः सन्तापैः प्रमाथिनी ( निरन्तरव्यथाकारिणी ) या चिन्ता हृदयेन, स्वहस्तेन ( निरन्तरभावनां कृत्वा स्वत एव ) उत्पादिता। स्वहस्तेनेति लोकोक्तेरनुकरणम् । हृदयरसस्य शोषिणीं तामेतां चिन्तां जनः कथं पश्येत्? आन्तरम् (अन्तः एव जायमानम्) पुटपाकम् [ बहिरप्रकाश्य अन्तरेव जायमानो दाहः पुटपाको यथा वैद्यके ] यः अवेक्षिता अवेक्षिष्यते, 'लुट्'। ईदृशः को वा हृदयस्य सखा? न विलोकितो विरामः (अवसानम्) यस्याः । अये इति संबोधनम् । शोकवशात् दीर्घाः यामाः ( प्रहराः ) यस्याः सा ॥ २ ॥

जाने तव दारुणा हृदयरक्तशोषिणीयं
वेदना, ययाऽद्य तव हृदयं विभिद्यते
करुणकथाऽपि तव तादृशी सुदैन्यभृता
यामेतां विशृण्वतोऽपि चेतः परिखिद्यते ।
मञ्जुनाथ किन्तु विनिरुन्धि हृदयस्य मुखं
किं वा सकलाभिमुखं दैन्यादुपपद्यते
चिन्ताघोरसन्तापः सखेदमपि सह्यः सखे!
यो वै विनिगूढस्तव हृदयेऽद्य विद्यते ॥ ३ ॥

यया तव हृदयं भिद्यते, सा ते वेदना दारुणा इति जाने। हृदयस्य मुखं रुन्धि, हृदयकथां मा प्रकाशयेत्याशयः। दैन्यात् किम् उपपद्यते प्राप्यते? चिन्तायाः घोरः सन्तापः ॥ ३ ॥

कोमल–ललित–पल्लवाग्रैर्वीजयन्ती स्वय–
मातपं सहन्ती त्वं सिषेविषे ह्युदञ्च्य माम्
साधुसुधाशीतैर्मृदुस्पर्शैः सुखयन्ती सदा
पुष्पैर्मोदमावहन्ती पर्यचरः किं च माम् ।
हन्त हन्त दारुण–दुरन्त–दवदग्धास्यद्य
लतिकेऽभिरक्षन्ती निजाङ्गेष्ववकुञ्च्य माम्
अमुना नृशंसेनैव नीतास्ययि दीनां दशा-
मधुना दुरन्तमेतमपि नाम मुञ्च माम् ॥ ४ ॥

माम् उदञ्च्य ( संमान्य ) त्वं सिषेविषे सेवितवती । 'लिटो' मध्यमपुरुषैकवचनम् । माम् पर्यचरः मम परिचर्यां कृतवतीत्यर्थः । निजाङ्गेषु अवकुञ्च्य ( आच्छाद्य ) माम् रक्षन्ती त्वम् हे लतिके ! दारुण–दुरन्तेन दवेन ( वनवह्निना ) अद्य दग्धाऽसि । अयि ( लतिके ! ) अमुना नृशंसेनैव ( मया इत्यर्थः ) दीनां दशां ( दाहरूपाम् ) नीतासि । अधुनाऽपि दुरन्तम् ( अतिनृशंसम् ) माम् मुञ्च । अन्योक्तिविधया, पतिसेवायामेव प्राणविसर्जनं कृतवती काचिदेवमनुशोच्यते । चतुर्थे अमुना–अधुना–अपिना–प्रासाः ॥ ४ ॥

## कस्यचिद्राज्ञो मरणम्

रात्रिंदिवमासीद्यस्य मौलौ कनकातपत्र-
मधिकमिहासीद्यस्य शौर्यं मत्तकुञ्जरात्
दृश्यतां स एव गलत्फेनं व्याददानो मुखं
लोठतीह मञ्चे व्यथमानो यमसंज्वरात् ।

दीनं विलपन्त्यो हन्त लोठन्ते समन्तादिमा
महिला विलग्ना यस्य देहान्मृत्युपिञ्जरात्
कीलितकुबेरोपि प्रसार्यमाणरिक्तकरो
हन्त हन्त सोयं नरो निष्क्रामति पञ्जरात् ॥ ५ ॥

यस्य शौर्यं मत्तकुञ्जरादपि अधिकमासीत् । यमसंज्वरात् (अन्तकाल-पीडातः) व्यथमानः मञ्चे लोठति इतस्ततः परिवर्तते । मृत्युना पिञ्जरात् पिङ्गलवर्णीकृताद् यस्य देहात् विलग्नाः । निजवैभवात् कीलितः स्तब्धीकृतः कुबेरोपि येन सोपि, प्रसार्यमाणौ रिक्तौ करौ यस्य ईदृशः सन् । पञ्जरात् (देहात्) निर्गच्छति । धनकुबेरतायामपि अन्ते रिक्तकर एव परलोकं प्रतिष्ठत इति प्रत्यक्षमवलोक्यतामित्याशयः ॥ ५ ॥

कथमिव धैर्यादहं हृदयं निरुन्धे सखे !
सर्वे प्रतीकारा मम निष्फला निवर्तन्ते
सह्यते कथञ्चिद्यदि घोरा वेदनापि हृदः,
कष्टमवरुद्धा अपि निःश्वासा विवर्धन्ते ।
मञ्जुनाथ केषां पुरो वाच्या दयनीया दशा
के वा हृदयस्य मर्मबोद्धारोऽत्र वर्तन्ते
विकलदशां मे वीक्ष्य दययाऽधिबाष्पा इव
लोचनयोर्बाष्पा अपि संकुलं प्रवर्तन्ते ॥ ६ ॥

निरुन्धे रुणध्मि । लट आत्मनेपदोत्तमपुरुषस्यैकवचनम् । प्रतीकाराः हृदयदार्ढ्यस्योपायाः । हृदः हृदयस्य घोरापि वेदना यदि कथंचित्सह्यते, तदा धैर्येण अवरुद्धा अपि निःश्वासा विवर्धन्ते । हन्त कष्टम् ! दयावशेन अधिगतबाष्पा इव बाष्पा अपि लोचनयोर्मध्ये संकुलं यथा स्यात्तथा प्रवर्तन्ते । नेत्रयोर्बाष्पस्याधिक्यं वीक्ष्य उत्प्रेक्षते यत् दयावशेन बाष्पाणामपि बाष्पा उत्पन्नाः, अतएव एते बाष्पा नेत्रयोर्मध्ये न मान्तीत्याशयः । एवंविधेषु पूर्वोक्तपद्येषु अनुभावव्यभिचारिभ्यां विभावादेराक्षेपेण प्रतीतिर्बोद्धव्या ॥ ६ ॥

करुण:



" कीलितकुवेरोपि प्रसार्यमाणरिक्तकरो
हन्त हन्त सोय नरो निर्गच्छति पञ्जरात् ॥ "

Lakshmi Art, Bombay, 8




दिल्लीपतिरेकदा ददर्श वल्लभार्यविभुं
  यमुनातटे स यत्र सन्ध्यामुपसंदधे
हीरकममूल्यमेकमुपहृतं नु सम्राजा,
  वल्लभविभुस्तज्जलमध्ये सहसा दधे ।
मञ्जुनाथ सम्राजं विषण्णमिव वीक्ष्य हसन्
  यमुनाजलान्तर्निजमञ्जलिं समादधे
हीरकनिकरपूर्णमञ्जलिमुदीक्ष्य ततो
  रोधसि गतोऽसौ चित्रलेखस्थितिमादधे ॥ १ ॥

यमुनातटे यत्र (यस्मिन् स्थाने) सन्ध्याम् उपसंदधे चकार, तत्रैव दिल्लीपति. (अकबरसम्राट्) एकदा श्रीवल्लभाचार्यमहाप्रभुं ददर्श (तस्य दर्शनार्थं गतवान्)। आचार्यस्य महाप्रभावत्व श्रुतवता सम्राजा, अमूल्यम् (अत्यन्तबहुमूल्यमिति भावः) एकं हीरकमाचार्याय उपहृतम् ('नजर' स्वरूपेण दत्तम्)। आचार्यस्तत् (हीरकम्) यमुनाया जलमध्ये सहसा निर्विचारमेव दधे पातयामास। महामूल्यहीरकस्य एवं जलक्षेपेण सम्राजं विषण्णमिव दृष्ट्वा, हसन् (आचार्यः) यमुनाजलान्तः स्वस्याञ्जलिं चिक्षेप। जलाद्बहिर्निष्कासने, तद्विधैरेव अमूल्यैर्हीरकनिकरैः पूर्णम् आचार्यप्रभोरञ्जलिं दृष्ट्वा, यमुनाया रोधसि (तटे) गतोऽसौ (सम्राट्) चित्रलिखितोऽभवदित्याशयः ॥ १ ॥

कस्यांचित्पुराणवापिकायामवमग्नः कोपि
वीचिवेगलग्नः प्रतियातो गह्वरान्तरे
सोपानं विलोक्य तत्र कौतुकयुतोऽयं गतो
नीचैर्हर्म्यमालां वीक्षतेसौ निष्कुटान्तरे ।
आरामे विहारगृहान् पश्यन् भूरिशोभावहान्
स्वच्छजलं चैकं सरोऽपश्यत्पादपान्तरे
स्नानेच्छया सरसि निमज्य वेगलग्नः पुन-
स्तस्यामेव वापिकायामुन्मग्नः क्षणान्तरे ॥ २ ॥

पुरातनस्य कस्यचिन्नगरस्य प्राचीनायां कस्यांचिद्वापिकायां (तस्या जल-मध्ये) स्नानार्थमवमग्नः, ततश्च तरङ्गवेगलग्नः कोपि जनस्तस्या वापिकायाः एकस्मिन् गह्वरे (भित्तिगर्ते) प्रतियातः। तत्र (गह्वरे) सोपानं विलोक्य, सोपानेन नीचैर्गतस्तत्र निष्कुटस्य गृहारामस्य मध्ये हर्म्यमालां ददर्श। आरामे पादपानां मध्यभागे स्वच्छजलयुक्तं सरोऽपश्यत्। तस्यामेव (यस्यां निमज्य गह्वरं दृष्टवान्) वापिकायाम्, क्षणान्तर एव उन्मग्नः बहिर्निष्क्रान्तः ॥ २ ॥





# हास्यः

[ अस्मिन् प्रकरणे किञ्चिदश्लीलार्थं क्षमां याचे । अस्ति साहित्यनिबन्धेषु हास्यार्थं प्रायः क्षमा । ]

## मिश्रः

अपकारककुक्कुरनियन्त्रणाय यन्त्रयुतं
मिश्रः प्रविवेश गृहं तद्वृत्तेऽवधीयतां
यावत्पदं भूमौ निदधाति तावदेष द्रुतं
शून्ये लम्बितोऽभूल्लम्बशिखामवनीय ताम् ।
मञ्जुनाथ चर्मपाशबन्धान्नद्धकण्ठतटोऽ-
प्युच्चैर्यजमानमाजुहाव–"अये नीयतां
त्वरितं प्रधाव्य गलपाशमेव मोचय मे
प्राणानेव देहि तात ! दक्षिणा न दीयताम्" ॥ १ ॥

प्रतिदिनं गेहे क्षतिकारकस्य एकस्य कुक्कुरस्य दण्डनाय, अङ्गणमृत्तिकायां गोपितेन एकेन यन्त्रेण युक्त यजमानगृहं दक्षिणालोलुपो मिश्रः सहसा प्रविवेश, तद्वृत्तान्तेऽवधीयताम् । यावदय भूमौ (अङ्गणमृत्तिकायाम्) पदं स्थापयति, तावदेव एषः (मिश्रः) लम्बां (दीर्घाम्) शिखामवनीय (शिखायामाकृष्येत्यर्थः) शून्ये गगने लम्बितः अभूत् । [ यन्त्रे आसीदेवं युक्तिर्यया हि तत्र किञ्चिद्भरे दत्ते एव, यन्त्रविलग्नो भारः उपरि उत्तोल्यते स्म । ] यन्त्रस्य चर्मनिर्मितपाशात् बद्धकण्ठोऽपि वेदनावशादुच्चैराचक्रन्द— "अये इदं यन्त्रं निगृह्यताम् । इत्यादि" ॥ १ ॥

## —भक्तवरः—

धर्मव्यवसाये लाभमधिकमुदीक्ष्य कोपि
चतुरो बभूव भक्तियज्ञे निपुणो होता
शीर्षे बर्हिपिच्छं चारुचन्दनं ललाटे वहन्
पीताम्बरधारी हरिरासीद्रूपसंस्तोता ।
मञ्जुनाथ स्वप्नं वीक्षतेऽसौ—"विष्णुरसि, करे
चक्रं भ्रमयन्वै भूवतीर्णः क्रीडनं सोता"
प्रातः प्रतिबुध्य चकितोऽसौ किन्तु पश्यति यद्
"भूमौ पतितोसि, पुनरङ्गुलिर्गुदप्रोता" ॥ २ ॥

कोपि चतुरो जनो भक्तिरूपे यज्ञे होताऽभवत्, अर्थाद् भक्तिमार्गे प्रसिद्धिप्राप्तये प्रविष्टः । रूपसंस्तोता, रूपं प्रस्तुतं करोति, रूपधारक इत्यर्थः । बर्हिपिच्छादिकं धारयित्वा भक्तानां व्यामोहनार्थम् 'भावनावशाद् अहमेव हरिर्जातोऽस्मि' इति हरिर्बभूव । शनैः शनैः, नित्यं भक्तवृन्दानां संघटने तेषाम् "भवान् साक्षाद् हरिः" इत्यादरश्लाघया दृप्तः सोऽपि (चतुरः) रात्रौ स्वप्नं वीक्षते । कीदृशं स्वप्नं तदाह—"अहं साक्षाद्विष्णुरस्मि । करे (हस्तेनेति यावत्) चक्रं भ्रामयन्, क्रीडनं सोता (कर्ता) अर्थात् भक्तेषु क्रीडार्थमेव भूवतीर्णः, भुवि अवतीर्णः अस्मि" [अव उपसर्गाकारस्य भागुरेर्मते लोपः] । गुदप्रोता निजस्य गुदे प्रविष्टा । यदा भूमौ अवतारस्य अध्यासो बभूव, तदैव स्वप्ने खट्वातो भूमौ पातो बभूव, अङ्गुलिप्रवेशानन्तरं यो हि चक्रभ्रमणस्याध्यासो बभूव स चाप्यनुमीयेतैव ॥ २ ॥

## —जैण्टिलमैनमहाभागः—

गौराङ्गानुकारी मञ्जु'मिस्टरचपेटामैन'
आखेटाय पक्षिणां स्थितोऽभूत्तरुसंहतौ
तावत्पैण्टलूनविवरेण कृकलासः कोपि
रिङ्गन् रिङ्गन् निभृतमयासीत्कटिपद्धतौ ।

'अरेरे किमेतदिति' यावद्वीक्षतेऽधो बला-
तावत्कलामुण्डीं प्राप्य पादावूर्ध्वमुत्थितौ
'वैंट वैंट' जल्पन् पैण्टलूनपरतन्त्रपदो
जैनटिलमैनमहाभागः पतितः क्षितौ ॥ ३ ॥

गौराङ्गाणाम् अंग्रेजानाम् (वेषाचरणादिषु) अनुकरणं कुर्वन्। तरुस-मूहे, गुलिकासन्धानार्थं तरोः शाखायां स्थितोऽभूत्। रिङ्गन् शनैर्गच्छन्। पैण्टलून इति प्रथितस्य अधोवस्त्रस्य छिद्रेण। कृकलासस्पर्शविकलोऽन्वेषणार्थं यावन्नीचैः पश्यति, तावत् पैण्टलूनस्य अतिनिबिडत्वात् उपरितनस्य शरीर-भागस्य आनमन्तं भारं यथावदधारयन्तौ संभ्रमात् द्वौ अपि पादौ, अधो-मुखपतनानन्तरम् उपरि उत्थितौ। पतने विचित्र-कलायुक्तं मुण्डं यस्यां सा पतनक्रिया कलामुण्डी। Went 'हस्तात् पक्षी गतः', अथवा 'अहमेव गतः' इति अधःपातेपि इंग्लिशमेव जल्पन् क्षितौ (भूमौ) पतितः ॥ ३ ॥

## 'चौबे'महाशयः

भुक्त्वा यजमानगृहे कुम्भसमतुन्दवाही
भङ्गास्खलन्मन्दयायी चौबे गृहशोचनः
प्रापतन्मदातिरेकतोऽसौ वीथिनालिकायां
पतितोऽभूत्तत्र खरोऽप्येकः प्राणमोचनः।
फुल्लोदरमस्य करेणामृशन्नुवाच—"सखे!
भुक्तं भूरि, धन्योसी" त्यथाग्रे कृतालोचनः
आहृतं च मोदकयुगलमिति सोच्चघोष-
मण्डकोपमाकर्षति चौबे लुप्तलोचनः ॥ ४ ॥

भङ्गापानेन स्खलत् मन्दं च यथा स्यात्तथा याति, तच्छीलः। फुल्लम् उदरं तुन्दः, 'तौंद'। गृहशोचनः गृहं गन्तव्यमिति अनुशोचनयुक्तः, अन्यथा भङ्गापानेन गमनस्येच्छापि नासीदिति भावः। मदातिरेकतः भङ्गामदाधिक्यात् रथ्याया जलनालिकायां प्रापतत् पतितोऽभूत्। तत्र (नालिकायाम्) प्राणं मुञ्चति, गतप्राणः एको रासभोपि पतितः आसीत्। भङ्गोष्मणा विकलो निमीलितलोचनः शीतस्पर्शायां नालिकायां पाते किञ्चित्सुखित इव, समीपपतितस्य अस्य (गर्दभस्य) मरणानन्तरं फुल्लम् उदरं करेण परामृशन्नेव निमीलितनेत्रोयम् उवाच—"त्वमपि भोजनार्थं गतोऽभूः? उदरं बहु फुल्लमिति मन्ये भूरि भुक्तम्।" अथ उदरस्य अग्रेपि कृतम् आलोचनं येन [अर्थात् उदरस्य निम्नभागेपि हस्तं परामृशन्] असौ "भूरिभोजनातिरिक्तं गृहार्थं मोदकद्वयमपि आहृतम्" इति उच्चघोषेण वदन् भङ्गामदमीलितलोचनः चौबेमहाशयः अण्डकोषद्वयम् आकर्षति ॥ ४ ॥



# भयानकः

—रूपकघनाक्षरी—

घोरतरारण्ये पथिश्रान्तो दीनपान्थो जातु
भृशभयभीतो निषसाद दृषद्देहोपरि
तावत्तरुगह्वरान्निरागाल्लोलजिह्वो भृशं
व्यात्तमुखः सिंहो भूरिलुब्धो रक्तलेहोपरि ।
वह्निज्वलन्नेत्रं वीक्ष्य तं प्रोन्नतपुच्छं रयाद्
यावद्वेपमानः प्ररुरोह तरुगेहोपरि
श्मश्रुभरभैरवमुखाग्रो घोरफुङ्कृतिकृद्
भीषणभुजङ्गोऽपतत्तावदस्य देहोपरि ॥ १ ॥

पथिश्रान्तः मार्गश्रमे पतितः । दृषदः शिलायाः देहोपरि, अर्थात् एकस्याः शिलाया उपरि निषसाद तस्थौ । तावत् रक्तलेहनोपरि लुब्धः, मांसलोहितपानाऽऽस्वादः सिंहस्तरुगुल्मात् निरागात् निष्क्रान्तः । वह्निवत् ज्वलन्ती नेत्रे यस्य, प्रोन्नतं पुच्छं यस्य तादृशं तं ( सिंहम् ) वीक्ष्य तरुगेहोपरि अतिगहनत्वाद् गेहाकारस्य तरोरुपरि रयाद् आरुरोह । श्मश्रुभरेण मुखरोमसमूहेन भीषणमुखाग्रः ॥ १ ॥





# रौद्रः

[ महाराष्ट्रकेसरी श्रीमान् शिवाजीवीरो म्लेच्छानामुपद्रवैरतिक्रुद्धः संमुखयुद्धे आह— ]

आर्यजातिदीनानद्य भूरिपराधीनान्वीक्ष्य
  ये विक्रमहीना हन्त हिंसां विदधुः परां
देवमन्दिराणि पुनः पूज्यतमपुस्तकानि
  निर्हेतुकमेव वह्निसाद्येऽरचयंस्तराम् ।
खड्गेन प्रचण्डबाहुदण्डविधृतेनैवाऽद्य
  तेषामेष युद्धे क्रियां कुर्वे कदनोत्तरां
छिन्नदेहनिष्कोषितमांसवसापृक्तां भूरि
  कृत्तकण्ठनिर्यद्रक्तरक्तां विदधे धराम् ॥ १ ॥

आर्यजातेः दीनान् लोकान् अद्य अतिपराधीनान् वीक्ष्य पौरुषहीनाः [ यदि पौरुषमभविष्यत्तर्हि वीरैः साकमयोत्स्यन्त, न तु दीनानमारयिष्यन् । ] ये म्लेच्छाः परां हिंसां विदधुः ( चक्रुः )। अग्निसाद् अरचयन् तराम्। अतिशयेन दग्धवन्तः। एषोहम् तेषाम् ( यवनानाम् ) प्रचण्डबाहुधृतेन खड्गेन कदनप्रधानां क्रियां कुर्वे, मारयित्वा तेषां कदर्थनां कुर्वे इत्याशयः। धरां छिन्नात् देहात् निष्कोषिताभ्याम् निष्पीडिताभ्याम् मांसवसाभ्या पृक्तां व्याप्ताम्। कृत्तेभ्यः कण्ठेभ्यो निर्गच्छता रक्तेन रञ्जितां कुर्वे। निष्कोषितेत्यत्र 'कुष निष्कर्षे' क्र्यादिः। अत्र दीनानां देवमन्दिर-पुस्तकानां च कथने तत्पूज्यतया मृदुला वृत्तिः । तेषां वह्निसात्करणादारभ्यैव क्रमशः उद्दीप्ता भवन्ती, अन्ते तु अतिपरुषा संघटना जातेत्यालोच्यम् ॥ १ ॥

### म्लेच्छसेनापतिं प्रत्युक्तिः

पातिव्रत्यमूर्तिं वेपमानां तव क्रौर्यभया-
दीनं याचमानां हंसि नारीं परिवेष्ठ्य ताम्
सर्वलोककल्याणार्थमाहितप्रयासान्पुन-
स्तापसान्निहंसि हन्त कोपादुपचेष्य तान् ।
हंहो स्वप्रभुत्वशौर्यदर्पित ! कृपाणमुखे
प्राप्तः संमुखेऽसि, सर्वसैन्यैः परिवेष्ठ्यतां
रे रे म्लेच्छबन्धो ! तव कर्तितकबन्धोपरि
बध्यतेऽद्य वामपदबन्धो भूरि चेष्ट्यताम् ॥ २ ॥

दीनं यथा स्यात्तथा प्राणभिक्षां याचमानां ताम् (तत्समये म्लेच्छैर्हताम्) नारीं परिवेष्ठ्य परितः आवृत्य हंसि नाशयसि । सर्वेषां जनानां कल्याणार्थमेव, आहितः स्वीकृतः प्रयासः तपःपरिश्रमो यैस्तान् तापसान् कोपवशात् उपचेष्य संप्रेर्य, हन्त हन्त निहंसि पशुमारं मारयसि । हंहो दर्पित ! संमुखे, त्वं मम कृपाणस्य मुखे प्राप्तोसि ! इदानीं तव सर्वसैन्यैः, कामम् अस्य स्थानस्य परिवेष्टनं क्रियतां नाम । भावे प्रत्ययः । परं रे म्लेच्छबन्धो ! म्लेच्छाधम ! कृपाणेन छिन्नस्य तव कबन्धस्य (मस्तकशून्यदेहस्य) उपरि मया वामपदस्य वीरो बन्धः बध्यते । अहं वामपादं स्थापयामीत्याशयः । त्वया यावद्बलं भूरि चेष्ट्यताम्, तन्निवारणाय उद्योगः क्रियताम् । अत्रापि पतिव्रताया दैन्यस्मरणान्मृदुला वृत्तिः, पुनस्तापसानां हिंसायां किञ्चिदुग्रा, ततोग्रे च क्रमशः परुषा वृत्तिरिति समीक्ष्यम् ॥ २ ॥





# बीभत्सः

पीत्वा हन्त दूरतोपि दुःसहविगर्ह्यगन्धि
मद्यं मदमत्तो बत वीक्षते न तत्क्षणम्
क्लिद्यत्क्रिमिलालाकफविष्ठापङ्किलासु मुहु-
र्लुठति विसंज्ञो विशिखासु कलितक्वणम् ।
यत्किञ्चिन्मुखागतं प्रभक्ष्य विस्रगन्धभृतं
गाढमलग्रन्थियुतं वमति विषोल्बणं
भ्राम्यद्भूरिमक्षिकाभिभरितं नितान्तमेव
पूतिगन्धि खादति स वान्तमेव तत्क्षणम् ॥ १ ॥

दुःसहो विगर्ह्यश्च ( निकृष्टः ) गन्धो यस्य तत् । मद्यं पीत्वा । क्लिद्यन्तः क्रिमयो ( मलकीटाः ) यासु ताः, लाला-( मुखक्लेदः ) कफ-विष्ठाभिः पङ्किलाश्चेति द्वयोः कर्मधारयः । तासु विशिखासु कलितक्वणं यथा तथा किञ्चन शब्दं कुर्वन्, चेतनारहितो लुठति । 'क्वण' पदेन अव्यक्तता सूचिता । कफ-विष्ठादिभृतासु विशिखासु 'गली' । मुखे आगतं यत्किञ्चित् ( अविष्ठा-वमनादिकम् ) भक्षयित्वा, आमगन्धभृतं गाढाभिर्मलग्रंथिभिर्युतं विषवत् उल्बणं स ( मद्यपः ) वमति । अग्रे च मक्षिकाभरितं दुर्गन्धि तद् वान्तमेव खादति । चतुर्थ नितान्त वान्त ग्रासः ॥ १ ॥

प्रत्नमृतमार्जारस्य चर्म परिपाट्य क्षुरैः
पाषाणैः प्रकुट्य मांसमस्य विनिधीयते
तस्मिन्मिश्रयित्वा वसां मृद्भाण्डे निधत्ते क्षितौ
कतिपयमासान्तेऽवघाट्य समानीयते ।
पूतिगन्धजुष्टं क्रिमिपुञ्जपरिपुष्टं भूरि-
मादकं विशिष्टं चीनदेशीयैर्विधीयते
सद्योजातमूषकार्भकाणामुपदंशं कृत्वा
सत्पानकमेतत्सप्रशंसं परिपीयते ॥ २ ॥

प्रत्नस्य पुरातनस्य । क्षुर 'छुरा' द्वारा चर्म उत्पाट्य । अस्य ( विडालस्य ) मांसं पाषाणै. कुट्टयित्वा स्थाप्यते । तस्मिन् ( मांसे ) वसां 'चर्बी' मिश्रयित्वा, मृत्तिकाभाजनान्तः भूम्यां ( निखाय ) निधत्ते ( स्थापयति ) । अवघाट्य भूमिम् उत्खाय । क्रिमिपुञ्जैः परिपुष्टं बहुलीकृतम् । विशिष्टं ( तेषां मतानुसारमत्युत्तमम् ) एतद्भूरिमादकं मदकारकम् । चीनदेशीयैर्निर्मीयते । सद्योजाताना मूषकशिशूनाम् उपदंशम् ( मध्ये मध्ये भक्ष्यम् ) कृत्वा, एतत् सत् ( उत्तमम् ) पानकं प्रशंसापूर्वकं बाढं पीयते ॥ २ ॥






## —⁂ पूर्वं वैराग्यम् ⁂—

आसँस्तेपि पार्थिवाः पृथिव्यां बलभारभृतो
  व्याप्नुते स्म येषामनुभावतो भयं न किम् ?
श्रेष्ठिनो वदान्या भूरि जाता लोकमान्याः पुन-
  र्याता रूपशालिनो धरायामुदयं न किम् ? ।
मञ्जुनाथ पुंसां हन्त कोऽयमभिमानोऽधुना
  नश्वरे शरीरे, वेत्सि विधिसमयं न किम् ?
आयाता धरायामद्ययावद्भूरिसंख्या नरा-
  स्ते किल धरायामेव याता विलयं न किम् ? ॥१॥

येषां (पार्थिवानाम्) अनुभावतः प्रभावात् भयं किं न व्याप्नुते स्म ? अपि तु व्याप्तमभूत्। बलभारभृतः (बलभरं बिभ्रति, क्विप्, महाबलिनः) ते पार्थिवाः (राजानः) अपि पृथिव्यामासन् उत्पद्यन्ते स्म। वदान्याः (दानवीराः) श्रेष्ठिनः 'सेठ'। लोकैर्मान्याः (विद्वज्जनाः)। रूपशालिनश्च (सुरूपाः) जनाः, धरायाम् किम् उदयं न याताः ? अपि तु उत्पन्ना एव। हन्त ! नश्वरे (नाशशीले) शरीरे पुंसां अधुना एषु दिनेषु कोऽयम् अभिमानः। हे मञ्जुनाथ ! विधेः (नियतेः 'दैवस्य') समयं मर्यादां किं न वेत्सि ? 'सर्वेषामपि शरीराणि नियतसमये प्राप्ते, गच्छन्तीति विधिनियमं न

जानासि किम्' इति भावः। अद्ययावत् अद्यपर्यन्तं ये भूरिसंख्या नराः धरायाम् आगताः, ते किल धरायामेव (पृथिव्यामेव) किं विलयं न याताः? अपि तु अस्यां पृथिव्यामेव निलीनाः इत्याशयः। प्रथमे भृतो वतो, वदान्या मान्या, जाता याता, आया राया, धरा नरा, याता याता प्रासाः॥१॥

बाल्यादेव विषयमरीचिकासु संरमसे
पाल्याऽभूत्प्रणाली कर्मगहनाऽप्यमुष्य ते
दारा धन–धाम–परिवारास्तव बन्धकरा
हन्त तदमीभिस्तव समयो विमुष्यते।
मञ्जुनाथ मन्ये उपदेशास्तव सर्वे वृथा
यद्वै कामलाभलवलेशात्परितुष्यते
कामनामजस्रमयि! धेहि सखे! तावत्सुखं
'रामनाम सत्य'मिति यावन्न विघुष्यते ॥ २ ॥

बाल्यकालादारभ्यैव विषयाणां मरीचिकासु (मृगतृष्णासु) रमसे। नानाविधकर्मभिः गहना (बन्धनकारिणी) प्रणाली अपि अमुष्य (अस्य) ते पालनीयाऽभूत्। पूर्वं विषयासक्तः आसीरेव तदुपरि (विषयासक्तस्याप्यस्य ते) कर्मभिर्बन्धकः प्रवृत्तिमार्गः सेवनीयोऽभूदित्याशयः। दाराः पत्नी। समयो विमुष्यते वञ्च्यते (याप्यते इति यावत्)। कामनालाभस्य लवलेशात् (लवस्यापि लेशात्) अतिसूक्ष्मकामलाभादपि यत्त्वया परितुष्यते प्रीयते, तस्मात् हे मञ्जुनाथ! तुभ्यं सर्वे उपदेशाः वृथा इति मन्ये। 'रामनाम सत्यम्' इति यावत् शववाहिभिर्न विघुष्यते तावत्पर्यन्तं हे सखे! सुखम्, अजस्रम् (निरन्तरम्) कामनाम् (विषयेच्छाम्) धेहि धारय। यदा प्राणापगमो भविष्यति तदा, ते कामना किंप्रयोजना भविष्यति? ततश्च स्वल्पसमयार्थं किमिति कामनाभिः कदर्थितो भवसीति ध्वन्यते। चतुर्थे कामनाम रामनाम इति प्रासः॥ २ ॥

## वैराग्यार्थमुत्तेजना

दृष्ट्वा भूमिदेवान्मुखमेष परावर्तयसे
देवानभिनन्दति न जिह्वा नटिता स्फुटम्
स्वल्पमधिकारं प्राप्य दृप्यसि बुधेषु वृथा
तृप्यति मनीषाऽनृतजालैर्जटिता स्फुटम् ।
मञ्जुनाथ गर्वोच्छूनवदनो विभासि सदा
वेधसा कदाऽसौ तव मूर्तिर्घटिता स्फुटं ?
वायुन्यूढघोटकनिषण्णो दलयाऽद्य जना-
नायुःपरिशेषे तव पायुः स्फुटिता स्फुटम् ॥ ३ ॥

एष त्वं भूमिदेवान् (ब्राह्मणान्) दृष्ट्वा गर्वात् मुखं परावर्तयसे । स्फुटं यथा स्यात्तथा नटिता नटायिता, 'नटी' इत्याशयः । नट इवाचरति नटति, ततः क्तप्रत्ययेन नटिता । नटवन्नानारूपेण विचरन्ती ते जिह्वा, देवानपि न अभिनन्दति अनुमोदयति । देवेष्वपि ते श्रद्धा नास्ति, यतस्ते जिह्वा तानपि निन्दतीत्याशयः । दृप्यसि गर्वं करोषि । स्फुटं मिथ्याजालैर्जटिता (व्याप्ता) ते मनीषा (बुद्धिः) तृप्यति तुष्यति । मिथ्याव्यवहारं विना ते बुद्धेः संतोषो न भवतीत्याशयः । गर्वेण उत्फुल्लमुखः सदा विभासि । तवाऽसौ (अलौकिकी) मूर्तिः ब्रह्मणा कदा घटिता ? अदृष्टपूर्वा इयं मूर्तिरित्याक्षेपः । अस्तु, अद्य वायुरूपे व्यूढे (दृढे) घोटके निषण्णः ('हवाई घोडेपर सवार' इति भावः) त्वं जनान् दलय पीडय । आयुःपरिशेषे (मरणोत्तरम्) तव पायुः (गुदम्) स्फुटिता विकसिष्यति 'लुप्त' । लोकोक्तेरनुकरणम् । परलोके अस्य गर्वस्य ते प्रतिफलं मिलिष्यतीत्याशयः । सर्वत्र प्रासाः, विशेषतश्चतुर्थे वायु आयु पायु इति ॥ ३ ॥

## लोभार्थं धिक्कारः

सकृदुपमन्त्रितो गृहाय झम्पामारभसे
किम्पाकः प्रयासि गृहादारामं हि यत्सखे
गुल्फदघ्नपङ्कं मार्गमुल्लङ्घ्यापि पादचरो
गेहं पुनरारामादुपैषि धिगियत्सखे ।
मञ्जुनाथ शून्यं तव यातायातमालोक्यैव
गर्जनमिषेण घोरं हसति वियत्सखे
हन्त मनःक्षोभादपि नासि यन्निरस्तो मना-
गन्नलवलोभादहो धावसि कियत्सखे ? ॥ ४ ॥

एकवारमात्रं निमन्त्रितो यजमानस्य गृहार्थं झम्पां (उत्फालम्) करोषि। ततश्च 'अत्र निमन्त्रणं नास्ति, आरामे भोजनं भविष्यति' इति किंपाकः (किंपचानः दरिद्रः) त्वं यजमानस्य गृहात् यत् हे सखे! आरामं प्रयासि। पादचरः त्वं गुल्फपर्यन्तकर्दमयुक्तं मार्गमुल्लङ्घ्यापि 'अत्र भोजनं न, गृहे एव भोजनं भविष्यति' इति आरामात्पुनः यजमानगृहम् उपैषि। सखे! इयत् ते भोजनलौल्यं धिक्। तव निरर्थकं यातायातं दृष्ट्वैव मेघगर्जनमिषेण वियत् (आकाशम्) घोरं हसति। तस्मिन् समये मेघगर्जनाप्यासीदिति तत्रोत्प्रेक्षा। हन्त त्वं मनःक्षोभादपि निरस्तो नासि। भोजनविडम्बनया मनःक्षोभं प्राप्यापि ते वैराग्यं न भवतीत्याशयः। हन्त! अन्नलवस्य लोभात् हे सखे! कियद्धावसि ॥ ४ ॥

## शनैः शनैर्भगवति रतिः

कुटिलकुतर्कभरकर्कशनिशितशरै-
र्निर्दय भवसि यदि हृदयविदारी मे
दुर्भरकुटुम्बभरजर्जरशरीरभृतो-
प्यहह निरर्थमसि तात! तापकारी मे ।

मञ्जुनाथ नापरो विलोक्यते नृलोकतले
ताप यो विलोपयन् भवेद्धि भयहारी मे
केवलमखिललोकचित्तान्तरचारी सैष
बर्हिपक्षधारी ननु तर्हि पक्षधारी मे ॥ ५ ॥

अयि निर्दय ! कुटिलकुतर्कसमूहरूपैः कर्कशैः निशितैः (तीक्ष्णैः) शरैः, यदि मे हृदयविदारको भवसि । दुर्भरेण कुटुम्बभारेण जर्जरशरीरयुक्तस्यापि [ शरीरं बिभर्तीति क्विप् ] मे निरर्थकं तापकारकोऽसि । तदा तापं लोपयन् यो मे भयहारको भवेदीदृशो नृलोकतले (मर्त्यलोके) अपरो नालोक्यते । तर्हि (किन्तु) अखिललोकहृदयस्थः, स एष बर्हिपक्षधारी (शिखिपिच्छावतंसः श्रीकृष्णः) केवलं मे पक्षधारी पक्षपोषकः अस्ति । 'सोचि लोप' इति पादपूरणसुलोपात् 'सैष' इति । सर्वत्र प्रासोऽनुपमः ॥ ५ ॥

सेवसे रसेन किमु सम्पदभिमानिनोऽमून्
स्वामी किल निखिलनृलोकभयहारी मे
भ्रमसि विलासिनीविलासरसलालसया
नन्दति हृदन्तरेऽत्र नन्दधेनुचारी मे ।
मञ्जुनाथ नाथसि किमन्यमयि! दीनगिरा
सकलसुराधिपतिरस्ति सुखकारी मे
शरणमुपैषि यदि धरणिधुरीणमये
बर्हिपक्षधारी ननु तर्हि पक्षधारी मे ॥ ६ ॥

संपत्तेः अभिमानयुक्तान् अमून् (लोकान्) प्रेम्णा किं सेवसे ? सकलमर्त्यलोकभयहारकः (हरिः) मे स्वामी । त्वं विलासरसलालसया (इच्छया) भ्रमसि । परं मे अत्र (अस्मिन्) हृदन्तरे हृदयमध्यभागे नन्दराजस्य धेनूश्चारयति सः (कृष्णः) नन्दति क्रीडति । मम हृदये भगव-

इतिजातेत्याशयः । अयि मञ्जुनाथ! अन्यं जनं दीनवाण्या किं नाथसि (याचसि), सकलदेवेशः (भगवान्) मे सुखकारकोस्ति। यदि त्वं शरणौ धुरीणं श्रेष्ठं (राजादिकम्) शरणं यासि तर्हि० ॥ ६ ॥

## भावः

### देवविषयकरतिभावः

### श्रीकृष्णः

मुक्ता-मणि-मण्डितमुकुटमधिमौलि भाति
श्रियमुपयाति कर्णकुण्डलमनायतं
कण्ठे हीरहारावलिराविन्दति शोभामहो
सुषमाऽऽवहोऽयं भाति पीतपटोऽव्याहतम् ।
मञ्जुनाथ मञ्जुमिमां मूर्तिमवलोकयतो
हृदि समुदेति परितोषः कोप्यनाहतं
मन्देतरशोभाशालि-सुखद-पदारविन्दे
राधिकागोविन्दे मनो रमतामनारतम् ॥ ७ ॥

मुक्ता-मणिभिर्मण्डितं मुकुटम् । मौलौ भाति । अनायतं नातिदीर्घम् कर्णविघृतं कुण्डलं शोभां गच्छति । सुषमाऽऽवहः (शोभाकारकः) अयं पीतपटः अव्याहतं [अवारितं यथा स्यात्तथा बाढमिति यावत्] भाति । इमां मूर्तिम् अवलोकयतो (मम) परितोषः अनाहतं [निरन्तरम् यथा स्यात्तथा] उदेति । अमन्दशोभाशालिनी सुखदे पदारविन्दे यस्य तस्मिन् । श्रीराधिकायुक्ते गोविन्दे मे मनः अनारतम् अजस्रं रमताम् ॥ ७ ॥

### श्रीशिवः

अयि भुवनानां सकलानामभयङ्कर हे
करुणां कुरुष्व मयि शङ्कर जगत्पते

नानाविधतापपरितापितं नु दीनतमं
विभवविहीनमिममुद्धर जगत्पते ।
वैभवं ते मञ्जुनाथ वाचामपि दूरे भवं
नश्वरं न याचाम्यविनश्वर जगत्पते
विषमयमेतद्दुरिताऽऽमयमखिलमेव
शमय शशाङ्कशोभिशेखर जगत्पते ॥ ८ ॥

हे समस्तानां भुवनानाम् अभयं करोति तच्छील ! इमं दीनतमम् (माम्) । हे मञ्जुनाथ (शिव !) ते वैभवम् (महिमा) वाचामपि दूरेभवम्, वागपि तत्र गन्तुं न प्रभवतीत्याशयः । मञ्जुनाथस्य वाचां दूरगतम् । अयं मञ्जुनाथस्ते महिमानं वक्तुं न शक्नोतीत्यपि अर्थः । अविनश्वर [ अव्यय शाश्वत ! ] अहं त्वत्तो नश्वरं न याचामि, सांसारिकं पुत्रकलत्रादिकं नाभ्यर्थये इत्याशयः । किं याचामि ? तदाह—" हे चन्द्रशेखर ! विषवदतिभयङ्करम्, एतं दुरितरूपम् ( विषयेभ्यो जातं कश्मलरूपम् ) आमयं रोगम् अखिलमेव शमय ! विषमय-आमय-शमय-इति त्रिर्मय-मय इति प्रासः चतुर्थे । अन्यत्र प्रतिचरणं प्रासाः ॥ ८ ॥

—॥ शङ्करात्कारुण्यप्रार्थना ॥—

केन पथा यामि तद्धि जाने बत नाद्यावधि
हे गिरिजाजाने ! सानुकम्पमुपयाहि माम्
त्वयि दयमाने दीनलोकोपि प्रयाति सुख-
मेतावता ज्ञानेनैव हृष्टमवयाहि माम् ।
किं मे विनिवेदयाम्यवस्थां त्रिपुरान्तक ते
तापयते दुःखं हन्त गुरुपरिणाहि मां
विषयविलासरसरङ्गाकुलं नित्यमेव
दुरितानुषङ्गादयि गङ्गाधर पाहि माम् ॥ ९ ॥

'केन मार्गेण अहं गच्छामि' तद्धि अद्यावधि न जाने। हे गिरिजापते! मां सदयम् उपयाहि, मम कारुण्यार्थमागच्छेत्याशयः। अवयाहि जानीहि। गुरु गभीरं परिणाहि विशालम् दुःखं मां तापयते। 'परिणाहो विशालता'। नित्यमेव विषयाणां विलासरसरङ्गैराकुलं माम् दुरितस्य अनुषङ्गात् (पापसंबन्धात्) पाहि। सर्वत्र प्रासाः॥ ९॥

श्रीकृष्णात्कारुण्यप्रार्थना

विषयविलासलवलालसमिदं मे मनो
मीलति प्रमोदं नाथ नैतन्नयसे न किम्?
दारुणदुरन्ता पश्य चिन्ता परिपीडयते
सन्तापितमेनं दीनमलमवसे न किम्?।
मञ्जुनाथ किं वा बहुविकलविलापशतै-
र्मञ्जुना दृगन्तेनानुकम्पामयसे न किं?
गिरिवरधारण समस्तसुखकारण हे
दीनदुःखदारण दयालो! दयसे न किम्?॥ १०॥

विषयविलासानां लवेपि (लेशेपि) लालसा यस्य तत् इदं मे मनः मीलति सम्प्रति खेदान्मुकुलितं भवति। हे नाथ एतत् (मे चित्तम्) प्रमोदं किं न नयसे? एतदित्यनभिहितं कर्म। एतस्मै चित्ताय आनन्दं किं न ददासीत्याशयः। संतापितम् एनं दीनम् (माम्) अलं यथा स्यात्तथा किं न अवसे (रक्षसि)। हे मञ्जुनाथ! बहुविकलैः विलापशतैः किं वा (किं फलम्)? मञ्जुना तव दृगन्तेन (नेत्रप्रान्तेन) अनुकम्पां किं न अयसे? नेत्रप्रान्तेन पश्यन् मयि कृपां किं न करोषीत्याशयः। समस्तसुखानां कारण! (हेतुभूत)। दीनानां दुःखानि दारयति तच्छील! किं न दयसे? दयां करोषि॥ १०॥

लोकाः कलयन्ति वैरमनिशमहेतु मया
शोकाकुलमेतं मुधा रुजसि दयानिधे

रोगदिग्धदेहो नाहमाविन्दामि विषयसुखं
मुक्त्वा दुःखगेहोषितं व्रजसि दयानिधे।
पश्यसि न मञ्जुनाथ किं वा मम दीनदशाम्
मादृशां सुखाशां बत भजसि दयानिधे
चिन्ता-व्याधि-वेदनाः समन्ताद्व्यथयन्ति विभो!
किं तावद्दयार्हमिमं त्यजसि दयानिधे॥ ११॥

लोकाः मया सह अनिशम् अहेतु (निष्कारणम्) वैरं कुर्वन्ति। शोकाकुलम् एतं (माम्) मुधा रुजसि पीडयसि। ममोपरि कृपाकटाक्षस्याऽकरणाद्व्यर्थमेव मां तापयसीत्याशयः। विषयाणां सुखमपि रोगाणां कारणात् नाहं विन्दामि। दुःखरूपे गेहे (स्थाने) उषितं पतितं मां त्यक्त्वा, हे दयानिधे! व्रजसि? यदा त्वं दयाया निधानमसि, तदा दुःखितस्य मम परित्यागः किं ते उचितः? अपि तु नेति काक्वा आह। मादृशाम् मादृशानाम् लोकानाम् (क्विप्), सुखानामाशां हे दयानिधे! त्वं भजसि। मत्सदृशलोकानां सुखस्याशा त्वदधीनैवास्तीत्याशयः। दयानिधे! इत्यामन्त्रणेन पापिनो मम रक्षामन्यो देवः कः कुर्यात्। किं तु दयासागरत्वात्त्वमेव रक्षितुं प्रभुरित्यभिव्यज्यते। चिन्तादयो मां सर्वतः पीडयन्ति, अत एव दयापात्रं मां किं त्यजसि? दयानिधे! इत्यनेन 'दयार्णवस्य, दयनीयजनस्य परित्यागो नोचितः' इति सूच्यते। चिन्ता-व्याधि-वेदनाः येन क्रमेण चतुर्थचरणे वर्णितास्तेन क्रमेणैव प्रत्येकचरणे तासां वर्णनम्। लोकाः वैरं कलयन्तीति प्रथमे चिन्ता। रोगकारणात्सुखं नाप्नोमीति व्याधिः। मम दीनदशां किं न पश्यसीत्यादिना वेदना। इति यथासंख्यमपि सूचितम्। सर्वत्र मनोज्ञाः प्रासाः। लोकाः शोकाः, देहो गेहो, दशां दशाम्, चिन्ता, मन्ता किं ता, ॥ ११॥

## —※ अन्तसमये भगवतः प्रार्थना ※—

लीना देहशक्तिरपि हीना सुखवासना मे
तनुरनधीना पश्य कियदिव नीयतां

चक्षुषोरुपैति घनतिमिरमिवाऽद्य नाथ
श्रवसोरपैति शक्तिरलमवधीयताम् ।
मञ्जुना त्वदङ्घ्रिकञ्जलम्बनेन मञ्जुनाथ
धृतिरुपयाति हृदि, करुणा विधीयताम्
एतस्मिन्नमन्द-पुण्यसमयेऽरविन्दसम-
लोचन! मुकुन्द! नेत्रगोचरमुदीयताम् ॥ १२ ॥

अस्मिन् समये मम देहशक्तिः लीना (नष्टा)। मम सुखवाञ्छापि हीना (नष्टा)। मम सुखेष्वपि मनो न गच्छति। साम्प्रतम् एषा तनुः (शरीरम्) अनधीना मम वशे नास्ति। यथाहं वाञ्छामि तथा ममाङ्गानि कार्यं न कुर्वन्तीत्याशयः। अतएव एषा तनुः कियत्पर्यन्तं नीयताम् आकृष्यताम्? नाधुना शरीरस्थितिः, साम्प्रतं शरीरपरित्यागस्य समय इत्याशयः। तदेवाह—चक्षुषोः (नेत्रयोर्मध्ये) घनं तिमिरमिव (अन्धकारः) उपैति। श्रवसोः श्रवणयोः शक्तिः अपैति (गच्छति)। अलं यथा स्यात्तथा अवधीयताम्, इदानीं मम गमने विलम्बो नास्ति। अत एव सावधानं स्थीयतामित्याशयः। हे मञ्जुनाथ! मञ्जुना (सर्वेभ्यः उत्कृष्टेन) त्वच्चरणारविन्दाश्रयणेन हृदि धृतिः (धैर्यम्) उपयाति। सुखादीनां वाञ्छा गता। शरीरशक्तिरपि क्रमशो मां त्यजति। इदानीं केवलं त्वच्चरणध्यानेनैव हृदये शान्तिर्भवतीत्याशयः। अत एव दया क्रियताम्। का सा दया, तदाह—"हे अरविन्दसमलोचन मुकुन्द! एतस्मिन् अमन्दे पुण्यसमये मम नेत्रयोः समक्षे उदीयताम् आगम्यताम्!" 'त्वया आगम्यताम्' इत्यनेन 'अहं तु उत्क्रमणसमयस्य निकटत्वाल्लुप्तदृष्टिशक्तिर्न सम्यग् द्रष्टुं शक्नोमि। अत एव त्वयैव यथाहं पश्यामि तथा मद्दृशोर्गोचरे आगम्यताम्। इति आत्मव्यापारं त्यक्त्वा भगवदालम्बनमात्रमभिव्यज्यते। पुण्यसमयोऽप्यस्मादधिकः कीदृशो भविष्यति, यन्मम आत्मन उत्क्रमणं भवति। अहं च त्वां दिदृक्षुः सम्बन्धिभिर्भूमाववतारितः निःस्पन्दं पतितोऽस्मि। इदानीं

केवलं त्वद्दर्शनमात्रादेव मम उद्धारः । एवंविधादपि अनुग्रहसमयादन्यः कश्चन समयः पुण्यो भवेत्? यत्र भवद्दर्शनस्य बलवत्युत्कण्ठा भवेदीदृशः उत्क्रमणसमयः 'काहू पुन्यन पाइये बैससन्धिसंक्रौन' इति विहारिवत् अतिपुण्यैः कस्यचिदेवोदेति । अरविन्दलोचनेति विशेषणेन 'मम दृष्टिशक्तिर्नास्ति तथापि त्वं तु कमलवदायतलोचनत्वादवश्यं दीनं मां द्रक्ष्यसीति ध्वन्यते । सर्वत्र सुमधुराः प्रासाः । चतुर्थे मन्द-विन्द-कुन्द-इति, लोचगोच इति च प्रासो दयां मूर्तिमतीमिवोपस्थापयति ॥ १२ ॥

सवैया (दुर्मिल)

जननावधिलौकिकसंघटना-
गतचित्तमनामयहीनमिमम्
सदनावनि-वित्त-यशो-ललना-
दिसमानयनाऽनिशलीनमिमम् ।
अयि मञ्जुलनाथ दयाविधिना
कुरु ते चरणाभिमुखीनमिमम्
अधुना दवदुःखघनाऽऽकुलितं
यदुनाथ सनाथय दीनमिमम् ॥ १३ ॥

जननावधि जन्मन आरभ्यैव । लौकिकसंघटनासु गतं चित्तं यस्य तम् । अत एव अनामयहीनम्, आमयाभावेन (रोगाद्युपद्रवाभावेन) रहितम्, आमयसहितमिति यावत् । इमम् (माम्) । गृहम्-भूमिः,धनम्-कीर्तिः स्त्री-एतत्प्रभृतीनां समानयने (संग्रहे) अनिशं लीनम् । इमं (माम्) हे मञ्जुनाथ! दयाविधानेन तव चरणयोरभिमुखं कुरु । हे यदुनाथ! वनवह्निवत् यद् दुःखघनं (दुःखसंभारः) तेनाकुलितं दीनम् इमम् (माम्) सनाथय । सर्वापद्भ्यो रक्षेति यावत् । जनना-घटना-इत्यादिसर्वपादगताः प्रासाः ॥ १३ ॥

## शान्तः



" निर्भरप्रमोदानात्मजन्याननुशीलयतो
ध्यानधियाऽनन्ता यान्तु धन्या मम वासरा ॥ "

Lakshmi Art, Bombay, 8

## —शान्तः—

भूमिः स्रस्तरोऽस्ति, महदम्बरं वितानमिद-
मेता मदयन्ति दिशा नन्दितनिशाकराः
पर इव कोपि न प्रतीयतेऽद्य पर्यन्तेपि
दृश्यन्ते प्रमोदकराः सकलचराचराः ।
मञ्जुनाथ चित्तमपि प्रीयते प्रसादोदया-
दन्तः प्रवहन्ति पुनरात्मरसनिर्झराः
निर्भरप्रमोदानात्मजन्याननुशीलयतो
ध्यानधियाऽनन्या यान्तु धन्या मम वासराः ॥१४॥

स्रस्तरः आस्तरणम् । इदम् अम्बरम् ( आकाशम् ) महद् वितानम् 'चँदोवा' । नन्दितः [ पूर्ण इति यावत् ] निशाकरः चन्द्रो यासु ताः । सूर्यस्याप्युपलक्षणमेतत् । एता दिशो मदयन्ति हर्षयन्ति । कोऽपि जनः पर इव न प्रतीयते, सर्वेष्वात्मबुद्धिर्जातेत्याशयः । प्रसादस्य ( नैर्मल्यस्य, प्रसन्नताया वा ) उदयात् । अन्तः ( हृदये ) आत्मनो रसस्य ( आनन्दस्य ) निर्झराः प्रवहन्ति । अत एव, आत्मजन्यान् ( आत्मनि उद्भूतान् ) निर्भरप्रमोदान् अनिर्वचनीयानन्दान् अनुशीलयतः ( अनुभवतः ) मम । प्रतिबन्धकोपशमेन 'सत्त्वप्रकाशानन्दचिन्मयम्' आत्मनः स्वाभाविकं रसमनुभवत इत्याशयः । ध्यानधिया अनन्याः ( नास्ति कोप्यन्यो येषु ते ) । परमार्थविचारेण द्वैतबुद्धिर्यत्र तिरोधीयते तादृशाः । अतएव धन्याः मम दिवसा गच्छन्तु । पूर्णचन्द्रप्रकाशे प्राकृतिकदृश्यावलोकनेनात्मानन्दमग्नस्य योगिनः कस्यचिदुक्तिः । शान्तानुकूला प्रसन्ना मृदुलवर्णमयी अत्यन्तविरलसमासा वृत्तिः । स्वयमुपस्थिताः सर्वत्र प्रासाः ॥ १४ ॥



# नीति-वीथी

—⊰ मङ्गलसोरठच्छन्दः ⊱—

त्रिभुवनमन्दिरकारु, वन्दितमिन्दिरयाऽसमम् ।
दलदिन्दीवरचारु, चरणं संदधतां सुखम् ॥ १ ॥

त्रिभुवनरूपमन्दिरस्य कारु । इन्दिरया लक्ष्म्या शोभया वा वन्दितम् । अन्यत्किल चरणं लक्ष्म्या शोभया वा सह वर्णनीयं भवति, इदं तु स्वयं वराक्या इन्दिरया नमस्कृतमस्ति । अत एव अनुपमं चरणं सुखं वितरतु ॥ १ ॥

तत्र पूर्वम्—



## कुण्डलियाचत्वरः

कविसूक्तिं नवनिर्गतां श्रवसि कुरुत कुतुकेन ।
कवितारसविज्ञान् विना साऽऽद्रियतां किल केन ? ॥
साद्रियतां किल केन, येन विज्ञो गुणवेदी
अपटुजनः कुटिलाशयेन कविमानसभेदी ।
भवदभिमुखमुपढौकितां नु परिमृशत मदुक्तिम्
नूनं क्षणमवधाय बुधाः शृणुयुः कविसूक्तिम् ॥ २ ॥

श्रवसि कर्णे कुरुत। सा (सूक्तिः) केन वाऽन्येन आद्रियताम्; कवि मानसस्य भेदी विदारकः। भिद् धातुना 'दिल तोडना' नुकूलो भावोऽभीष्टः। उपढौकिताम् उपस्थापिताम्। परिमृशत विचारयत। (अनेन सूक्ष्मविचारपूर्वकमेतस्या आकलनमभ्यर्थ्यते, न हठात्) ॥ २ ॥

## माया

माया मित्रमहीपयतिगुरुजनगुरुवनितासु।
भिषगनुगतभृत्येषु न हि कार्या शिष्यसभासु ॥
कार्या शिष्यसभासु नैव मायाऽतिथिलोके।
विश्वस्ते पुरुषे च मायया क्षयमवलोके ॥
कवयो हृदयमयन्ति तेषु माया विच्छाया।
मञ्जुनाथ तदमीषु मित्र! न विधेया माया ॥ ३ ॥

माया कपटव्यवहारः। यतयः संसारत्यागिनः संन्यासिप्रभृतयः। अनुगते स्वोपजीविनि, अनुगतभृत्ये वा। शिष्येषु शिक्षणीयेषु छात्रादिषु, सभासु चेति द्वन्द्वः। सभायामनेकविधलोकसत्तया कः कीदृग्भवेदिति तत्र कपटाचरणं स्पष्टं दृष्टहानिकारकम्। अवलोके पश्यामि। अयन्ति जानन्ति, 'कटीति' प्रश्लिष्टस्य। विच्छाया अशोभना। कृतापि माया तेषां चातुर्यवशात् स्फुटमसुभगा प्रतीयत इति भावः। तस्मात्कारणात् अमीषु मित्र-महीपप्रभृतिषु ॥ ३ ॥

## परसेवा

सेवा सहजमनस्विनामपि मौलिं नमयेत।
निर्वेदं ददती कञ्चिन्मानसमुपरमयेत ॥
मानसमुपरमयेत लोककार्येभ्यो नूनम्।
परवशतामानीय, रचयते चेतो दूनम् ॥
सेवां रचयन्तोऽपि हन्त निःशङ्काः के वा?
असिधारातुलितैव सखे कष्टा परसेवा ॥ ४ ॥

निसर्गतो मानशालिनाम् । क्वचित् कस्मिन्नपि विषये । निर्वेदं विरागतां दिशन्ती, सांसारिककार्येभ्यो मानसम् व्यावर्तयेत् । उभयत्र णिचश्चेत्यात्मनेपदम् । दूनं दुःखितम् । सेवोपजीविनः के वा निःशङ्काः ? न केपीत्यर्थः ॥४॥

## विगुणं दैवम्

वामे बत विलसति विधौ वामं सर्वमुदेति ।
सुखमयमपि साधनमखिलमिह संकटमयमेति ॥
इह संकटमयमेति, जनो जनयति विपरीतम् ।
मधुरमुक्तमपि सृजति जनं बत कोपपरीतम् ॥
सरलमनुष्ठितमपि हि भवति वामं परिणामे ।
धैर्यमेव बलमादधाति दैवे किल वामे ॥ ५ ॥

विधौ दैवे, वामे प्रतिकूले सति । सर्वं वामम् उदेति, आरम्भत एव वामं प्राप्यत इति भावः । अखिलं साधनम् उपकरणम् । संकटमयं विपद्ग्रस्तम् सत् एति संमुखमागच्छति । मधुरं भाषितमपि, लोकं क्रुद्धं जनयति । सरलमनुष्ठितम्, अनुकूलमाचरितमपि । वामं प्रतिकूलम् ॥ ५ ॥

## मुद्रा (धनम्)

मुद्रा यदि करगा भवेन्नर! गाहस्व मुदैव ।
संसारम्, यदि न करगा, हर गार्हस्थ्यमिहैव ॥
हर गार्हस्थ्यमिहैव, कैव लोके तव गणना ?
गुणशतगुर्वी भाति रजतमुद्राणां रणना ॥
मञ्जुनाथ! निश्चितं सर्वसामग्री क्षुद्रा ।
दूरे सकलमपास्य मित्र! सम्पाद्या मुद्रा ॥ ६ ॥

मुद्रा (रूप्यकम्) यदि हस्तगता भवेत्तर्हि आनन्देन संसारं गाहस्व, सुखं संसारे व्यवहरेति भावः । यदि च मुद्रा करगता न, तर्हि इहैव (अस्मिन् अभावपरिज्ञानक्षणे एव) गृहस्थभावं त्यज । तव लोके कः संमानः ?

शतेभ्यो गुणेभ्योपि गुर्वी (आदरणीया)। रणना झणत्कारः। अपास्य त्यक्त्वा। दोहान्तः, करगा-नरगा-हरगादयः प्रासाः प्रेक्षणीयाः ॥ ६ ॥

## नानाविधा मुद्रा

मुद्रामधिगत्यैव, कवि-वणिजो नृप-यतयोपि।
प्रणयी देवगणोपि मुदमेति, न कुप्यति कोपि ॥
मेति न कुप्यति कोपि, कविः काव्येष्वादत्ते।
वैश्यो वर्द्धयतेऽथ, नृपः पत्रे विनिधत्ते ॥
यतयः कर्णे दधति, कामिनो भजते निद्रा।
देवाः सेवां मानयन्ति, धन्यैषा मुद्रा!! ॥ ७ ॥

कवयः, वणिजः, नृपाः, यतयः (योगिनः), प्रणयी (प्रेमिकः), देवतासमूहश्च मुद्राम् प्राप्यैव आनन्दं लभते। मा इति (न दीयतामित्युक्त्वा) कोपि अप्रसन्नो न भवति। इदानीं मुद्राशब्दार्थः प्रत्येकं भिन्न इत्याह कविः—काव्येषु मुद्राम् (अलङ्कारम्) निबध्नाति—"सूच्यार्थसूचनं मुद्रा प्रकृतार्थपरैः पदैः। नितम्बगुर्वी तरुणी दृग्युग्मविपुला च सा।" (कुवलयानन्दः)। वैश्यो व्यापारद्वारा मुद्राम् (रूप्यकम्) वर्द्धयति। नृपः शासनपत्रे मुद्राम् (राजमुहर) अङ्कयति। योगिनः (पाशुपताः) कर्णे मुद्राम् (गुरुदत्तं काचवलयम्) धारयन्ति। मुद्रां (मुद्रिकाम्-प्रेमिकस्याङ्गुलीयाद्यभिज्ञानम्) प्राप्य निद्रा कामुकान् भजते (आश्रयति), प्रेमी प्रेमिकस्याङ्गुलीयकं प्राप्य सुखेन निद्रातीत्यर्थः। देवाः मुद्रया (धेनुप्रभृतिकया) उपासनां स्वीकुर्वन्ति। अहो! एषा मुद्राऽद्भुता स्पृहणीयास्ति!! ॥ ७ ॥

## सज्जनमैत्री

सज्जनमैत्री सन्ततं स्नेहभरं पुष्णाति।
क्रमशो वृद्धिमुपागता दोषानपि मुष्णाति ॥

निसर्गतो मानशालिनाम् । क्वचित् कस्मिन्नपि विषये । निर्वेदं विरागतां दिशन्ती, सांसारिककार्येभ्यो मानसम् व्यावर्तयेत् । उभयत्र णिचश्चेत्यात्मनेपदम् । दूनं दुःखितम् । सेवोपजीविनः के वा निःशङ्काः ? न केपीत्यर्थः ॥४॥

## विगुणं दैवम्

वामे बत विलसति विधौ वामं सर्वमुदेति ।
सुखमयमपि साधनमखिलमिह संकटमयमेति ॥
इह संकटमयमेति, जनो जनयति विपरीतम् ।
मधुरमुक्तमपि सृजति जनं बत कोपपरीतम् ॥
सरलमनुष्ठितमपि हि भवति वामं परिणामे ।
धैर्यमेव बलमादधाति दैवे किल वामे ॥ ५ ॥

विधौ दैवे, वामे प्रतिकूले सति । सर्वं वामम् उदेति, आरम्भत एव वामं प्राप्यत इति भावः । अखिलं साधनम् उपकरणम् । संकटमयं विपद्ग्रस्तम् सत् एति संमुखमागच्छति । मधुरं भाषितमपि, लोकं क्रुद्धं जनयति । सरलमनुष्ठितम्, अनुकूलमाचरितमपि । वामं प्रतिकूलम् ॥ ५ ॥

## मुद्रा (धनम्)

मुद्रा यदि करगा भवेन्नर! गाहस्व मुदैव ।
संसारम्, यदि न करगा, हर गार्हस्थ्यमिहैव ॥
हर गार्हस्थ्यमिहैव, क्वैव लोके तव गणना?
गुणशतगुर्वी भाति रजतमुद्राणां रणना ॥
मञ्जुनाथ! निश्चितं सर्वसामग्री क्षुद्रा ।
दूरे सकलमपास्य मित्र! सम्पाद्या मुद्रा ॥ ६ ॥

मुद्रा ( रूप्यकम् ) यदि हस्तगता भवेत्तर्हि आनन्देन संसारं गाहस्व, सुखं संसारे व्यवहरेति भावः । यदि च मुद्रा करगता न, तर्हि इहैव ( अस्मिन् अभावपरिज्ञानक्षणे एव ) गृहस्थभावं त्यज । तव लोके कः संमानः?

शक्तिभृतोऽपि न साधयन्ति यद्बलभृतवाचा ।
तत्कार्यं कलयन्ति पण्डिताः सूनृतवाचा ॥ १० ॥

प्रिययापि, सत्यया वाचा, सुचतुरा लोकस्य चित्तं आनन्दयन्ति । हितपरां मन्त्रणाम् । लोकानां कार्यं साधयित्वा । मधुरवाण्या क्रुद्धस्य कोपं शमयित्वा, तस्योपयुक्तं कार्यं कृत्वा च । शक्तिधारिणो लोकाः बलोद्रिक्तया वाण्या यत्कार्यं न साधयन्ति, तत्कार्यम् ॥ १० ॥

## —॥ साध्वी पत्नी ॥—

नारी निर्धनतादिने निजदयितं प्रीणाति ।
सुखयन्ती निजसेवया पतिहृदयं क्रीणाति ॥
पतिहृदयं क्रीणाति, याति तस्यैव च वचसा ।
गृहसंकटमपनीय रमयति प्रमुदितमनसा ॥
मञ्जुनाऽथ चरितेन भवेत्प्रियसुहृदुपकारी ।
गृह्यार्णवनौकेव भाति बत साध्वी नारी ॥ ११ ॥

निर्धनतायाः समये निजया सेवया सुखयन्ती, नारी निजस्वामिनम् आनन्दयति । तस्य (पत्युः) वचनानुसारमेवाचरति । गृहस्य संकटावस्थां दूरीकृत्य हृष्टेन चित्तेन सर्वान् प्रीणयति । मञ्जुना निर्दोषेण चरितेन, उपकारकः प्रियसुहृत्संपद्यते । गृहस्थाश्रमरूपस्य सागरस्य नौकेव । अपारत्वाद् गभीरत्वाच्च सागरसाम्यम् ॥ ११ ॥

## —॥ लज्जा ॥—

लज्जा कुलललनाजने मण्डनतामुपयाति ।
सैव वारवनिताजने दूषणतामुपयाति ॥
दूषणतामुपयाति बुधानां वादावसरे ।
वणिजां विक्रयणेऽथ नृपाणां युद्धावसरे ॥

दोषानपि मुष्णाति निर्गुणे गुणमाधत्ते ।
निर्वेदं निर्वास्य मनसि संमोदं दत्ते ॥
सत्कार्येषूत्साहवर्द्धिनी जडताजैत्री ।
स्नेहसारविश्रम्भसन्तता सज्जनमैत्री ॥ ८ ॥

मुष्णाति दूरीकरोति । मैत्रीवशाद् गुणशून्यो गुणी भवति । मैत्री विरागं दूरीकृत्य, आनन्दयति । जैत्री (अपनेत्री) 'जैत्रस्तु जेता यो गच्छत्यलं विद्विषतः प्रति ।' स्नेहसारेण विश्रम्भेण (विश्वासेन) च अनुस्यूता ॥ ८ ॥

## दुर्जनमैत्री

दुर्जनमैत्री पूर्वतः प्रीतिं प्रकटयतीव ।
स्वार्थविभङ्गे कुत्रचित्स्नेहं विघटयतीव ॥
स्नेहं विघटयतीव बहिः सद्भावं भजते ।
मुखमात्रे मधुरत्वमेति हृदि कल्मषमयते ॥
असमक्षे मित्रस्य गुप्तमपवादानेत्री ।
स्वार्थमात्रसाराऽस्ति सखेऽसौ दुर्जनमैत्री ॥ ९ ॥

प्रकटयतीवेत्यनेन वास्तवं सा प्रीतिर्नास्ति किन्तु प्रीत्याभास इति सूच्यते। कुत्रचित्स्थले, स्वार्थभङ्गे सति । विघटयति दूरीकरोति । मित्रस्य परोक्षे, गुप्तं यथा स्यात्तथा अपवादस्य आनेत्री, निन्दाप्रचारिणीत्यर्थः । स्वार्थमात्रं सारो यस्यां सा ॥ ९ ॥

## सूनृतवाणी

सूनृतवाचा सुचतुरा मनसि मुदं जनयन्ति ।
दत्त्वा हितपरमन्त्रणां जगदेतद्वशयन्ति ॥
जगदेतद्वशयन्ति लोककार्यं कलयित्वा ।
मधुरगिरा प्रशमय्य कोपमुचितं रचयित्वा ॥

शक्तिभृतोऽपि न साधयन्ति यद्बलभृतवाचा ।
तत्कार्यं कलयन्ति पण्डिताः सूनृतवाचा ॥ १० ॥

प्रिययापि, सत्यया वाचा, सुचतुरा लोकस्य चित्तं आनन्दयन्ति । हितपरां मन्त्रणाम् । लोकानां कार्यं साधयित्वा । मधुरवाण्या क्रुद्धस्य कोपं शमयित्वा, तस्योपयुक्तं कार्यं कृत्वा च । शक्तिधारिणो लोकाः बलोद्रिक्तया वाण्या यत्कार्यं न साधयन्ति, तत्कार्यम् ॥ १० ॥

## साध्वी पत्नी

नारी निर्धनतादिने निजदयितं प्रीणाति ।
सुखयन्ती निजसेवया पतिहृदयं क्रीणाति ॥
पतिहृदयं क्रीणाति, याति तस्यैव च वचसा ।
गृहसंकटमपनीय रमयति प्रमुदितमनसा ॥
मञ्जुनाऽथ चरितेन भवेत्प्रियसुहृदुपकारी ।
गृहार्णवनौकेव भाति बत साध्वी नारी ॥ ११ ॥

निर्धनतायाः समये निजया सेवया सुखयन्ती, नारी निजस्वामिनम् आनन्दयति । तस्य (पत्युः) वचनानुसारमेवाचरति । गृहस्य संकटावस्थां दूरीकृत्य हृष्टेन चित्तेन सर्वान् प्रीणयति । मञ्जुना निर्दोषेण चरितेन, उपकारकः प्रियसुहृत्संपद्यते । गृहस्थाश्रमरूपस्य सागरस्य नौकेव । अपारत्वाद् गभीरत्वाच्च सागरसाम्यम् ॥ ११ ॥

## लज्जा

लज्जा कुलललनाजने मण्डनतामुपयाति ।
सैव वारवनिताजने दूषणतामुपयाति ॥
दूषणतामुपयाति बुधानां वादावसरे ।
वणिजां विक्रयणेऽथ नृपाणां युद्धावसरे ॥

आहारव्यवहारनर्मसुरतं सुरसज्जा ।
मञ्जुनाथ नैतेषु बुधैः श्लाघ्या किल लज्जा ॥ १२ ॥

वादावसरे शास्त्रपरामर्शसमये । आहारव्यवहारनर्मसुरतम् (समाहारद्वन्द्वः) । नर्म (परस्परं परिहासः) तथा सुरसज्जा, देवसाधना देवपूजेत्यर्थः । बहवो हि बहिर्देवप्रणामकीर्तनादिकं कुर्वन्तो लज्जन्ते, विशेषतस्तु कुटुम्बेन सार्द्धम् । एतेषु वादादिषु, लज्जा पण्डितैः श्लाघ्या न ॥ १२ ॥

अभिमानः

विद्युद्विलसितमिव सखे सुखसौभाग्यमवेहि ।
चञ्चलमिदमधिगम्य किल माभिमानमदमेहि ॥
माऽभिमानमदमेहि, देहि दीनेषु हि दृष्टिम् ।
प्रतिदिवसं परिवृत्तिशालिनीं वेत्सि न सृष्टिम्? ॥
क्षणमधुरं परिविद्धि सौख्यसंघटनं यद्यत् ।
सुचिरमवस्थितिमेति किं नु गगने बत विद्युत्? ॥१३॥

सुखं च सौभाग्यं (समृद्धिः) च । चञ्चलं अस्थायि इदं सुखं सौभाग्यं च प्राप्य । अभिमानेन यो मदश्चित्तोद्रेकः तं मा गच्छ । दीनाः कथं क्लेशान् प्राप्नुवन्तीति दृष्टिं देहि, भूतदयामवलम्बस्वेत्यर्थः । ब्रह्मणः सृष्टिं प्रतिदिनपरिवर्तनशालिनीं किं न जानासि? सौख्यसंघटनं सुखप्राप्तिः ॥ १३ ॥

सत्कार्यम्

गन्तारो यौवनभवनजीवनसुजनधनानि ।
जगति चले विचिनुत चिरं सकलान्यपि हि चलानि ॥
सकलान्यपि हि चलानि जगद्व्यवहारः सोयम् ।
भ्रमति मन्दमतिरत्र, नूनमविचारः कोयम्? ॥
सकल एव किल वस्तुचयः परिणतिमनुयन्ता ।
सुकृतमेव परलोकपथे सततं सह गन्ता ॥ १४ ॥

सुजनाः स्वस्य संबन्धिनः प्रियजनाः । गन्तारो गमिष्यन्ति [अनद्यतन-भविष्यत्, लुट्] अस्थिराणीति भावः । अनद्यतनप्रयोगेण 'अद्य न, तर्हि श्वो गमिष्यन्ति, एवंविधैर्यौवनादिभिः को दर्पः' इत्यस्थिरतातिशयो ध्वन्यते । अस्थिरे जगति चिरं नितान्तं विचिनुत (अन्विष्यत!), सकलान्यपि वस्तूनि अस्थिराणि सन्ति । गच्छतीति जगद् इति जगतोऽयं स्वाभाविको धर्मः । अत्र जगति (अस्मिन्विषये वा) मन्दबुद्धिरेव मुह्यति । हन्त! कोयमविचारः (अस्थिराणां कृतेऽभिमानः) । परिणतिमनुयन्ता परिणामं गमिष्यति, अन्तं यास्यतीति भावः । सह गन्ता गमिष्यति । यन्ता, गन्ता, उभयत्र लुट् । अत्राप्यनद्यतनप्रयोगेण-अद्य (संसारलिप्ततादशायाम्) न प्रतीयतां नाम परन्त्वग्रे सुकृतमेव सहगामीति द्योत्यते ॥ १४ ॥

—॥ दानी ॥—

दाता निजधनसंचयं पात्रेषु प्रददाति ।
पश्यन् परकार्यक्षतिं द्रवीभावमुपयाति ॥
द्रवीभावमुपयाति, नम्रतामयमवधरते ।
निजमिव परमनुमाय सौमनस्याद्व्यवहरते ॥
नित्यमुभयभुवनाभिनन्द्ययशसामादाता ।
मञ्जुनाथ विनयेन संनतो धन्यो दाता ॥ १५ ॥

परस्य कार्यहानिं पश्यन्, अतिशयं द्रवभावम् (दयया आर्द्रहृदयताम्) । द्रुतस्य मनुष्यस्य द्रवरूपधर्मत्वारोपेण स्वयं द्रवरूपतां धारयतीत्यतिशयो ध्वन्यते । अयं दाता । नम्रताम् अवधरते, धारयति । अपरं जनम्, आत्मानमिव दृष्ट्वा, सौमनस्याद् सहृदयतया । उभयभुवनयोः एतल्लोकपरलोकयोः प्रशंसनीयानां यशसाम्, आदाता अर्जयिता । मञ्जुना विनयेन नम्रः ॥१५॥

—॥ कृपणः ॥—

कृपणः कपटकथानकैर्हरति दिनानि बहूनि ।
हितकार्यं जानन्नपि हि न दिशति हन्त वसूनि ॥

न दिशति हन्त वसूनि, बहून् संलापान्कुरुते ।
कार्ये त्रुटिमुपदर्श्य मृषा ह्यपलापान्कुरुते ॥
यत्किञ्चित्प्रददाति कृच्छ्रतः कालक्षपणः ।
प्रायः परपरिभोग्यधनोऽयं धन्यः कृपणः ॥ १६ ॥

कपटकथानकैः कपटभृताभिर्लोकोक्तिभिः । वसूनि धनानि । अस्यां संस्थायाम्, अथवा अस्मिन्कार्ये, एषैषा त्रुटिरस्तीति मिथ्या, अपलापान्निह्नवान्। कृच्छ्रतः कालक्षपणः, कष्टात् समययापकः । मरणोत्तरं परैः (जामातृप्रभृतिभिः) परिभोग्यधनः अयमवश्यं धन्यः!! साधारणलोकानां धनं स्वोपभोगे आयाति, अस्य तु परोपभोगे इति ॥ १६ ॥

→☀ परनिन्दा ☀←

निन्दां नीतिविदां पुरः कस्यचिदपि न विधेहि ।
यदपि निन्दनीयो भवेदिह सन्ततमवधेहि ॥
इह सन्ततमवधेहि, देहि कर्णं मम वचने ।
विश्वासः सुजनेषु याति निन्दापरिरचने ॥
ते हृदयं लघु विद्युरपि प्रकृतिं तव मन्दाम् ।
हृदयतुच्छताव्यक्तिकरीं सुजन त्यज निन्दाम् ॥१७॥

नीतिज्ञानामग्रे कस्यचिदपि निन्दां न कुरु । अवधेहि अवहितो भव। सुजनानां मध्ये विश्वासो याति । ते (सुजनाः) तव हृदयं लघु, तथा तव प्रकृतिं च मन्दां विद्युः जानीयुः । हृदयस्य तुच्छतायाः (लघुतायाः) प्रकाशनकरीम् ॥ १७ ॥

→☀ पण्डितैः सह दर्पः ☀←

मिथ्यागर्वभरेण ये वित्सु मानमिच्छन्ति ।
सुहृदः शत्रूकृत्य ते पदमहिते यच्छन्ति ॥

पदमहिते यच्छन्ति सन्ति तुच्छाशयकलुषाः ।
गुणगणमहिता अपि भवन्ति नम्राः सत्पुरुषाः ॥
यैः सुजनैः सह कपटरहितचर्या किल पथ्या ।
तैः सह सहृदय ! गर्वरीतिरतुलं बत मिथ्या ॥१८॥

वित्सु विद्वत्सु । मित्राणि शत्रून् कृत्वा ( च्विः ) अहिते ( अकल्याणे ) पदं यच्छन्ति ( स्थापयन्ति ) । तुच्छाशयाः कलुषाश्च ( कपटिनश्च ) । गुणगणैर्महिताः ( आदृताः ) । पथ्या हितकारिणी । तैः सह अभिमानपद्धतिः ( अभिमानाचरणम् ) अतुलम् अत्यन्तम्, मिथ्या अनुचितेत्यर्थः ॥ १८ ॥

## कलिमाहात्म्यम्

लोके लम्पटलोभिनो विप्रलभ्य लुण्ठन्ति ।
सत्यपराः सरला नराः परिभवमुपगच्छन्ति ॥
परिभवमुपगच्छन्ति पथ्यवचनेपि च गदिते ।
जनविद्वेषमयन्ति हन्त विमलेपि च चरिते ॥
चाटुभिरुपगच्छन्ति खलाः संमानं लोके ।
साधून् सरलतयापि कष्टपतितानवलोके ॥ १९ ॥

लम्पटाः ( पारदारिका. ) लोभिनश्च । विप्रलभ्य लुण्ठन्ति, प्रतारणां कृत्वा धनमपहरन्ति । परिभवम्, अवज्ञाम् । जनानां विद्वेषम् ( लोककृताम्, अरुचिम् ) प्राप्नुवन्ति । चाटुभिः मिथ्याप्रशंसाभिः ( 'खुशामद' ) ॥ १९ ॥

## कवीनामुत्कर्षः

के वा कविचरितानि बत परिचेतुं प्रभवन्ति ?
ये चरितैः साधारणैस्तुलयितुमेव विदन्ति ॥
तुलयितुमेव विदन्ति लोकघटनाभिर्निखिलान् ।
ते बोद्धुं प्रभवन्तु कथं वा लोकान्विरलान् ? ॥

मञ्जुनाथ ! विनिकारवहा धिग् धिक् परसेवा ।
हन्तेतरथा सन्ति कवीनामग्रे के वा ? ॥ २० ॥

ये जनाः, साधारणैः चरितैः, साधारणलोकानामाचरणैः तुलनां कर्तुमेव जानन्ति, तेषां मध्ये के वा कविचरितानि ज्ञातुं प्रभवन्ति ! न केपि । ये साधारणलोकानां घटनाभिर्निखिलांस्तुलयन्ति, ते विरलान् (दुर्लभान्) लोकान् ज्ञातुं कथं शक्नुयुः ? विनिकारवहा तिरस्कारकारिणी । अन्यथा कवीनामग्रे ( कविसमानाः ) हन्त के सन्ति ॥ २० ॥

स्वामी

स्वामी सहृदयसेवके स्वयमभिरुचिमभियाति ।
सावधानसेवासुखी संमानं प्रददाति ॥
संमानं प्रददाति नातिदर्पाद्व्यवहरते ।
अवशतयाऽऽगसि संनतेऽपि मधुरं व्याहरते ॥
सहृदयता-प्रभुताढ्यरम्यरीतेरनुगामी ।
अचलः स्ववचसि, निर्मलस्तु हृदि, विरलः स्वामी २१

सहृदये सेवके । स्वयम् अभिरुचिं ( प्रसन्नताम् ) याति । सावधानया सेवया सुखी संतुष्टः । अवशतया ( पारवश्येन ) आगसि अपराधे संजातेपि । व्याहरते भाषते । मधुरवचनैरुपदिशतीत्यर्थः । सहृदयतया, प्रभुत्वेन चेति प्रायो विसंवादिभ्यां गुणाभ्यामाढ्या, अतएव रम्या या रीतिस्तस्या अनुगामी । विरलो दुर्लभः ॥ २१ ॥

राजा

राजा निजजनरञ्जनाद्वशयति सकलजगन्ति ।
इह नयनानि नवोदिते शशधर इव नन्दन्ति ॥
शशधर इव नन्दन्ति यन्ति शासनमनुरक्ताः ।
प्राणानपि वितरन्ति, विषमसमये नृपभक्ताः ॥

बलतो न नियम्येत प्रजा चिरमपि सम्राजा ।
जाने, निर्मलशासनेन हृदि रमयति राजा ॥ २२ ॥

निजप्रजाजनानामनुरञ्जनात् । इह अस्मिन् राजनि । नवोदिते शशधरे इव, द्वितीयाचन्द्रे इव प्रजानां नयनानि नन्दन्ति हृष्यन्ति । अनुरक्ताः प्रजास्तस्य शासनमनुसरन्ति । विषमे समये [ आपत्काले ] । महता सम्राजा चक्रवर्तिनापि, बलात् प्रजा, चिरकालपर्यन्तं न नियम्येत ( शास्येत ) । रमयति सुखयति ॥ २२ ॥

## राजकर्मचारिणः

भाव्यं भूपतिसेवकैर्दूरदर्शिभिर्भूरि ।
राजप्रजयोर्यद्भवेत्कार्यं सुखभरपूरि ॥
कार्यं सुखभरपूरि भवेदुत्साहो लोके ।
बलमात्रात्प्रभवन्ति दमयितुं लोकमहो के ?
जयपुरदण्डविभागभूतवृत्तं नः श्राव्यम् ।
भूपसेवकैः कार्यविधौ बत भूरि विभाव्यम् ॥ २३ ॥

भूपतिसेवकैः राजकर्मचारिभिः । अतिपरिणामदर्शिभिर्भाव्यम् । भावे प्रत्ययः । राजा च प्रजा च, तयोरुभयोः । यत् यस्मात् । सुखभरम् आनन्दभरं पूरयति, आनन्दसन्दोहकारकं भवेदित्यर्थः । पूरयतेर्णिनिः । बलप्रयोगमात्रेण प्रजाजनं दमयितुम् अहो के प्रभवन्ति ? जयपुरराज्यस्य दण्डविभागे ( कोतवालीविभागे ) संजातं वृत्तम्, अस्माकं श्राव्यं श्रवणीयम् ।

संवत् १९८४ तमस्य वत्सरस्य भाद्रपदशुक्लपञ्चम्यामकस्मात् कंचित् शकटिचालकमवलम्ब्य दण्डविभागीयाः पुरुषा उद्रिक्ता अभवन् । एतस्मिन् विषये पौरैर्व्यापारिभिः सह दण्डविभागीयानां घोरो विसंवादः समघटत । बलप्रयोगेण दण्डविभागीयास्तमिममभियोगं शमयितुमैच्छन् । परं सोयमसह्योऽभूत्प्रजायाः । साधारणोपि विषयोयमेतावतीमतिभूमिं गतो येन हि दण्डविभागान्मध्येराजमार्गं प्रजाजनोपरि नलिकास्त्र( बन्दूक—)प्रयोगोऽभवत् ।

व्यापारिप्रमुखैर्नागरिकैर्नगरस्य सर्वेप्यापणा निबद्धाः। नगरे भयङ्करी अभूतपूर्वा शून्यता, दिनपञ्चकं यावद्विलोक्यते स्म। दीना अन्नाद्यावश्यकवस्तुनिमित्तमितस्ततोऽभ्राम्यन्। दण्डाधिकृता बलप्रयोगेण, कूटनीत्या चापणानुद्घाटयितुं मुहुर्बाध्यानकुर्वँल्लोकान्। अहर्निशं राजमार्गेषु शस्त्रास्त्रसज्जा पदातिसेनाऽश्वारोहसेना च चङ्क्रमणमकरोत्। नानोपायैः प्रजामभीषयच्च। परं सरलापि जयपुरप्रजा आपणोद्घाटने न संमता, अभवत्। अन्ततस्तु जयपुराभिजनैरुच्चैर्न्यायाधिकारिभिः प्रजां सान्त्वैराश्वास्य, तदुक्तीः स्वीकृत्य, आपणा उद्घाटिताः। अत एवोच्यते—"राजकर्मचारिभिः परिणामे दृष्टिर्निधेया। न केवलेन बलेन प्रजा नियन्त्रिता भवतीति।" ॥ २३ ॥

मन्त्री

मन्त्री हितकरमन्त्रणाप्रगुणो निपुणो भाति।
विद्वानपि मन्त्री स किं यो न हितं विदधाति॥
यो न हितं विदधाति प्रजानां दमनाऽऽशंसी।
केवलबलपरवशो निन्दयति नगरध्वंसी॥
यस्य मतिर्जनताहिताय नृपमतानुमन्त्री।
मान्यो मौलिक एव मह्यते स हि नृपमन्त्री॥२४॥

प्रगुणः अनुकूलः। स किं मन्त्री? अपि तु नास्ति। दमनम् आशंसति (कथयति आशास्ते वा)। केवलबलप्रयोगस्य अधीनः। नगरविनाशकस्तादृक् मन्त्री राजानं निन्दयति। प्रजासु राज्ञो निन्दां कारयतीत्यर्थः। जनताया हितार्थं नृपमतं अनुमन्यते या। अर्थात् हितमनुसंधाय राज्ञः प्रजायाश्चोभयोर्मतानुसारिणी। मन्यतेः शतृ ङीप्। मौलिकः परम्परातो राज्ञः सेवकस्तद्देशवासी। मह्यते प्रशस्यते॥ २४ ॥

अन्योक्तिरूपेण नीतिः

चातकः।

चातक चतुरम्भोधयः परितः सरितः सन्ति।
कति कति वा जगतीतले जलाशया न लसन्ति॥

जलाशया न लसन्ति, निःस्पृहो नयसे कालम् ।
हन्त महान्तो ह्रदा अपीमे तृप्त्यै नालम् ॥
मेघमेकमवलम्ब्य दूरिताभ्यर्थनपातक ।
महतामपि शिक्षाप्रदास्ति दृढता तव चातक ॥ २५ ॥

चत्वारः अम्भोधयः (समुद्राः)। कति जलाशया न सन्ति? अपि तु बहवः सन्ति। इमे ह्रदा अपि ते तृप्त्यै अलं न (पर्याप्ताः न)। दूरीकृतम् अभ्यर्थनस्य (याचनस्य) पातकं येन, तत्संबुद्धिः ॥ २५ ॥

## मेघः

जलधर धावसि दूरतो वहसि भूरितरवारि ।
केन नाभिनन्दिष्यते कार्यमेतदुपकारि ॥
कार्यमेतदुपकारि वारि यत्परितो वर्षसि ।
श्राम्यसि लोकहिताय, तेन भूमावुत्कर्षसि ॥
किं बहुना, त्वदधीनमेव जीवनमित्यवधर ।
भूमेर्भर्ता सत्यमेव धन्यस्त्वं जलधर ॥ २६ ॥

भूरितरं (बहुलम्) वारि। इदम् उपकारकं कार्यं केन जनेन न अभिनन्दिष्यते (अनुमोदयिष्यते)। अपि तु सर्वैः। उत्कर्षसि, उत्कृष्टो भवसि। जीवनं, जलं जीवितं च। अवधर, अवधेहि, जानीहीत्यर्थः। सत्यं त्वं भूमेर्भर्ता, (भरणकरः, स्वामी च) ॥ २६ ॥

धाराधर धरणीमिमां वारिभरेण धिनोषि ।
किमत एव गर्जसि सखे? गर्वमितीव तनोषि? ॥
गर्वमितीव तनोषि, मौलिमारूढो दृप्यसि ।
भूमिर्हरितीकृता तावता किं बत तृप्यसि?

दूरे सरितां पूर्तिरस्तु, वापीरपि परिहर ।
चातकशिशुरपि नो ततर्प किं बहु धाराधर ! ॥२७॥

धिनोषि प्रीणयसि । इतीव (अस्मादेव कारणात्) गर्वं करोषि? मस्तकमारुह्य, गर्वं करोषि ('सिर चढा है' भावः)। नदीनां पूर्तिः दूरेऽस्तु, वापीः अपि त्यज, वापीनामपि वार्ता दूरेऽस्तु, इति भावः। बहु किम्, अधिकं किम्! चातकस्य शिशुरपि (न चातकः, अपि तु तस्यापि शिशुः!) न तृप्तोऽभवत् ॥ २७ ॥

वारिद वारि ददासि बत लोकानुत कुश्नासि ।
यत्प्रचण्डधराभरैर्जगदेतन्मश्नासि ॥
जगदेतन्मश्नासि, अलमलं तव वर्षाभिः ।
विरम सखे ! विरमाऽद्य कृतं करकावर्षाभिः ॥
प्रकृतिनिर्दयस्त्वमसि विरहिणीजनतरवारिद ।
सुखकरवर्षणपरो भवेर्भोः प्रियतर वारिद ॥ २८ ॥

बत (अहो!) जलं ददासि । उत (अथवा) लोकान् कुश्नासि चूर्णयसि ('कथल्या निकालना' जयपुरीयभाषा)। प्रचण्डधारासारैः । करकाः वर्षापाषाणाः तेषां वर्षाभिः कृतम् (अलम्)! विरहिणीजने तरवारिं खड्गं ददाति सः। वियोगिनीनां पक्षे घनजलधाराणां विरहोद्दीपनकरत्वात्खड्गसाम्यम्। आदौ–वारिद वारिदेति, अन्ते तरवारिद, तरवारिदेति यमकः। मश्नासि, अलमिति संहिताऽभावोऽविवक्षया ॥ २८ ॥

→ रत्नविक्रेता ←

भ्राम्यति मणिमयमाभरणसमुदयमिह विनिधाय ।
ग्रामीणकबहुले बहिर्ग्रामेऽस्मिन् सुचिराय ॥
ग्रामेऽस्मिन् सुचिराय केनचित्पृष्टो नायम् ।
प्रभाभासुरो रत्नचयोपि च दृष्टो नायम् ॥

काचकण्ठिकाप्रश्नभरैर्भूयः परिताम्यति ।
ग्राहकजनविरहेण रत्नविक्रेता श्राम्यति ॥ २९ ॥

ग्रामीणकाः ( निन्दायां कन् ) बहवो यस्मिन्नीदृशेऽस्मिन् बहिर्ग्रामे ( नगरतोऽतिदूरे, 'बाहरला गाँव' ) मणिमयं भूषणसमूहमिह ( अस्मिन् स्थाने इति अङ्गुल्या निर्देशः ) । विनिधाय स्थापयित्वा सुचिरम्, अतिभारवहनपरिश्रमात् चिरकालपर्यन्तं श्राम्यति खिद्यते । प्रभया भासुरः ( दीप्यमानः ) अयं रत्नसमूहः । भूयः पुनः ( रत्नानामविक्रयणसत्तायामपि ) काचनिर्मितानां कण्ठिकानां कण्ठमालानाम् ( 'जँज़ीरा' 'कण्ठी' भाषा ) प्रश्नसमूहैः परितप्यते ॥ २९ ॥

## सौगन्धिकः

सौगन्धिक ! पामरपुरीमुपगतवानसि केन ?
बकुलकुसुमसारं सखे प्रकटितवानसि केन ?
प्रकटितवानसि केन, केन तव वार्ता पृष्टा ?
सुरभितसकलदिशापि केन सामग्री दृष्टा ?
मञ्जुनाऽथ गन्धेन नेह फलमलमभिसन्धिक ।
व्यर्थं ताम्यसि, विरम सखे हंहो सौगन्धिक ! ॥३०॥

पामराणां हालिकप्रायाणां पुरीम् । केनोपगतवानसि, किमर्थमागतोऽसि ? बकुलस्य ( मौलिश्री— ) कुसुमानां सारम् ( 'इत्र' ) किमिति उद्भावितवानसि, अथवा ग्रामीणानां संमुखे दर्शितवानसि । सुरभिताः सकलाः दिशा यया सा । अलम् अभिसन्धिर्यस्य तत्सम्बुद्धिः । पर्याप्तविचारशालिन्नित्याक्षेपः । अलम् ( न ) अभिसन्धिर्विचारो यस्येति वा । सुमनोहरेण गन्धेन इह न फलम् ॥ ३० ॥

## मालाकारः

मालाकारक हे सखे ! तरुपरिचयचतुरोसि ।
किं त्वामहमवबोधये स्वयमवधानपरोऽसि ॥

स्वयमवधानपरोऽसि, ततः किं मोहं तनुषे ?
बकुलकुन्दकरवीरतरूँस्तुल्यानिव मनुषे ?
आद्यः सौरभभरैर्दिगन्तान् भरिता नायक !
अन्ये दर्शनसुखाः, सखे मे मालाकारक ! ॥३१॥

तरूणां परिचये गुणागुणपरीक्षणे चतुरः । त्वाम्, अहं किम् अवबोधये ! त्वद्बोधनस्यावश्यकता नास्तीत्यर्थः । मोहम् प्रमादम् । आद्यः बकुलः, दिगन्तान् ( दिग्विभागान् ) भरिता पूरयिष्यति । नायकेति आदरार्थं संबोधनम्—( यथा जयपुरे 'पटैल' इति ) । अन्ये कुन्दकरवीरादयो दर्शनमात्रे सुखकारकाः ॥ ३१ ॥

मालाकार ! महीरुहामारोपणचतुरेण ।
ये वृक्षा निचितास्त्वया भृशमभिलाषभरेण ॥
भृशमभिलाषभरेण रोपिता रम्यारामे ।
वृद्धिं नीता यत्नशतैः, फलिताः परिणामे ॥
मूढहस्तमुपगता इदानीमयि सुविचारक !
तरवस्ते म्लायन्ति हन्त हे मालाकारक ॥ ३२ ॥

महीरुहां वृक्षाणाम् । क्विबन्तम् । आरोपणचतुरेण त्वया, भृशम् ( अत्यन्तम् ) अभिलाषभरेण ( पूर्णाभिरुचिपूर्वकम् ) ये वृक्षा निचिताः परीक्षणपूर्वकं स्थानस्थानेभ्यः अवचित्य संगृहीताः । परिणामे अन्ते ( स्वफलोद्गमकाले ) फलिताः । ते वृक्षा मूढहस्तपतिताः सन्तः, इदानीं म्लायन्ति । सुविचारकेत्यनेन त्वं सुविचारकोसि, अतः स्वयं संवर्द्धितानां फलितवृक्षाणामेवमज्ञहस्तादनादरणं नोचितं मंस्यसे इति सूच्यते ॥ ३२ ॥

मालाकारक ! कण्टकैर्मा किल कोपमुपेहि ।
गन्धगुरोः पाटलतरोर्गुणमनु दृष्टिं देहि ॥

गुणमनु दृष्टिं देहि, ते हि दक्षिणता विदिता।
त्यजसि बहु स्वल्पार्थमहो! धन्या ते कृतिता॥
अङ्कगतोपि मृगाङ्कपतेरङ्कः सुविचारक!
किं किरणेषु न लोपमेति भो मालाकारक? ॥२३॥

गन्धेन गुरोः पूजनीयस्य पाटलवृक्षस्य (प्रसिद्ध्यनुसारं 'गुलाब' वृक्षस्य) सुगन्धगुणं प्रति दृष्टिं देहि! ते तव दक्षिणता (चतुरता) सर्वत्र प्रथिता। स्वल्पस्य कृते बहु त्यजसि! अहो ते कृतिता पटुता, धन्या (काका आक्षेपः)! मृगाङ्कपते· चन्द्रस्य अङ्कगतः (मध्यगतः) अपि अङ्कः कलङ्क, किं किरणेषु लोपं न एति? अपि तु लुप्यत एव॥ २३॥

## मधुकरः

मधुकर! मोदय मानसं मधुरमरन्दधरासु।
माधविकाऽऽकलितासु सुखमुपवनसुखदधरासु॥
उपवनसुखदधरासु मालती विकसति कामम्।
मल्ली विलसति, पाटलापि मुदमयति निकामम्॥
मा मा मुद्रितमुखो मुञ्जकान्तारं संचर।
सरसिजगन्धोन्मादमत्त वरबन्धो मधुकर!॥ २४॥

मधुरमकरन्दधारिणीषु, माधविकालताभिः आकलितासु (व्याप्तासु), उपवनस्य सुखदासु धरासु (भूमिषु), सुखं यथा स्यात्तथा मानसं मोदय प्रीणय। निकामं वाढम्। मुदम् अयति, फुल्लतीत्यर्थः। मुद्रितमुखः, निर्वेद-विषादाभ्यामाकुञ्चितवदनः। ('मुंह बांधे हुए' अयं भावः) मुञ्जवने न संचर (भ्रम्य)। निषेधार्थको मा न तु माङ्। कमलगन्धवशाज्जातो यः प्रमोदोन्मादस्तेन मत्त!॥ २४॥

## कोकिलः

कोकिल ! पञ्चममञ्चयेरञ्चितकुसुमभरेषु ।
मधुमकरन्दधरेषु सुखमुपवनतरुनिकरेषु ॥
उपवनतरुनिकरेषु येषु सौरभमुपधत्ते ।
तेषु हि ते कलकूजितं नु शोभामुपदत्ते ॥
कटुकरीरविपिनेऽत्र काककलितेऽयमहो किल ।
को वा कलरवसदवसरो वद वन्धो कोकिल ! ३५

अञ्चिताः ( उत्कृष्टाः ) कुसुमभराः येषु, मधुरमकरन्दधारकेषु, उपवन-तरुसमूहेषु, सुखं यथा स्यात्तथा पञ्चमस्वरम् अञ्चयेः प्रचारयेः, गत्यर्थाण्णि-जन्तादञ्चतेर्लिङ् । कोकिलस्य पञ्चमस्वरेण काकली प्रसिद्धा । उपधत्ते ( संनिधत्ते आश्लिष्यतीत्यर्थः ) । ते तव । अहो ! काकैः कलिते व्याप्ते, कटूनां ( निकृष्टानामित्यर्थः ) करीरवृक्षाणां वनेऽत्र, ( अस्मिन् ) । ते कलरवस्य सन् ( उत्तमः ) अवसरः कः ( कीदृशः ) ? अपि तु नास्तीत्यर्थः । हे कोकिल ! वद ॥ ३५ ॥

## मल्लिकावृक्षश्च वानरश्च

वानर ! या नरमण्डलीमण्डनमवनौ भाति ।
सा खरनखैस्तावकैर्मल्ली क्षयमुपयाति ॥
मल्ली क्षयमुपयाति, याऽतिरम्या रमणीनाम् ।
कुचकलशे द्युतिमेति हन्त नवहारमणीनाम् ॥
सौरभमस्याः सौकुमार्यमविदन् रभसाकर !
पाटितवानसि निर्दयं नु किमु हे हतवानर ? ॥३६॥

या मल्ली ( 'बेला' इति हिन्दी ) अवनौ पृथिव्यां नरमण्डल्याः मनुष्य-समाजस्य, मण्डनं हारादिनिर्माणद्वारा भूषणं भाति, सा तावकैस्त्वदीयैः खरैः

(तीक्ष्णैः) नखरैः क्षयं याति। या मल्ली, रमणीनां स्त्रीणाम् अतिप्रिया। रमणीपदेन, 'याः स्त्रियो रमणचतुरास्ता एव मल्लिकाप्रभृतिपुष्पाणि परिचिन्वत' इति द्योत्यते। या च रमणीनां कुचकलशे, हन्त (प्रमोदे)। नवानां हारमणीनाम् (मौक्तिकनिर्मितहारस्य रत्नानाम्) द्युतिं शोभाम् एति। स्त्रीणां स्तनतटे मौक्तिकमालेव, ग्रथितकलिका या मल्ली शोभत इति भावः। हे रभसस्य आकर! (स्थान!) अविचारितकारक! इत्यर्थः। हे वानर! अस्याः (मल्ल्याः) सौकुमार्यं कोमलतां सौगन्ध्य च, अविदन् अजानन् सन्। निर्दयं यथा स्यात्तथा किमिति पाटितवानसि विलूनवानसि,? एवंविधेषु मृदुलवस्तुषु ये एवमकाण्डवीरायितेन निजदाक्षिण्यं प्रकटयन्ति, तेऽपि वानरसमाना एवेति ध्वनिः स्पष्ट एव सहृदयेषु। वानर यानरेति प्रासः। याति याति, रमणीनां रमणीनामिति यमकश्च॥ ३६॥

## तरुणीवृक्षश्च वानरश्च

उपवनवीथी मुदमयति यत्परागविसरेण।
रूपे गन्धे चाऽसमा याऽखिलकुसुमभरेण॥
याऽखिलकुसुमभरेण नापि वत तुलयितुमुचिता।
यत्कुसुमावलिरखिलसहृदयैर्वक्षसि निहिता॥
सेयं छिन्ना वानरेण तरुणीघनवीथी।
शून्या हन्त विभातु तया कथमुपवनवीथी? ॥३७॥

यस्याः परागपूरेण उपवनवीथी, मोदं प्राप्नोति शोभते इत्यर्थः। रूपे गन्धे च संपूर्णकुसुमसमूहेन असमा असाधारणा (अतुलनीया)। तुलयितुमुचिताऽपि न, अनया सह अन्येषां पुष्पाणां तुलनाकरणमप्यपमानोऽस्या इति भावः। तरुण्याः ('गुलाबस्य') निविडा वीथी (पंक्तिः)। तया शून्या उपवनवीथी कथं विभातु। न शोभेतेत्यर्थः॥ २७॥

## —॥ युवा सिंहः ॥—

एकाकी बत निर्भयं नदति शैलशिखरेषु ।
सिंहयुवा करिशावकेष्वपि चीत्कारपरेषु ॥
अपि चीत्कारपरेषु, नास्य संभ्रममवलोके ।
कः सहेलमवधीरयेत कुपितं किल लोके ? ॥
पञ्चाननसंचारपथे कः शौर्यविपाकी ?
बहुलेष्वपि वल्गत्सु मृगेष्वयमस्त्येकाकी ॥ ३८ ॥

करिकलभेषु चीत्कारं कुर्वत्स्वपि निर्भयं नदति गर्जति । अस्य सिंहस्य संभ्रमम् ( चाकित्यम् 'घबराहट' ) । कुपितमेनं सिंहं लोके कः पुरुषः हेलया अवधीरयेत तिरस्कुर्यात् ? न कोपीत्यर्थः । पञ्चाननस्य सिंहस्य संचारमार्गे को जनः ( शौर्यस्य विपाकः प्रौढिः पूर्णता वा यस्येदृशः ) अस्ति ? न कोपि । बहुषु अपि मृगेषु वल्गत्सु इतस्ततो धावनेन चापल्यं दर्शयत्सु ॥ ३८ ॥

## —॥ जरत्सिंहः ॥—

शेते शैलशिलातले तृप्तस्तरुगहनेषु ।
सिंहयुवा मदमन्थरः पुरा निबिडविपिनेषु ॥
पुरा निबिडविपिनेषु यस्य परितो भयमासीत् ।
मदमलिनापि हि दन्तिघटा सविधे नाऽऽयासीत् ॥
पश्यत ! हन्त स एव जरासमये समुपेते ।
पङ्के नतमुखमेवमद्य हा ! क्षुधितः शेते ॥ ३९ ॥

निबिडविपिनेषु अतिघनानां वनानां मध्ये तरुगहनेषु घनवृक्षेषु ('वृक्षोंका झुरमुट') तृप्तः अतएव मदेन अलसः सन् यो युवसिंहः शैलशिलाफलके पुरा शेते । 'पुरि लुङ् चास्मे' इति लट् । परितो दूरदूरपर्यन्तम् यस्य सिंहस्य भयमासीत् । एकस्य दन्तिनः का कथा हस्तिनां

घटा (समूहोपि) सविधे, तस्य निवासस्य समीपे। नायासीत् नागच्छति स्म। स एव नतमुखं यथा स्यात्तथा (दुःखक्षोभेण मस्तकमवनमय्य) हा हन्त! अद्य क्षुधितः पङ्के (बलाभावेन स्वच्छस्थानपरिवर्तनाभावात्) शेते ॥ ३९ ॥

## तरुवरः

वन्धो तरुवर! तावकान् गुणान् के न जानन्ति?
श्रान्ताः पान्थास्तावकीं छायामुपजीवन्ति ॥
छायामुपजीवन्ति तदपि तव कायं लुनते।
पाषाणैरुपहत्य हन्त पीडां परिसुवते ॥
दिशसि मधुरफलमेव तदपि हंहो गुणसिन्धो!
परहितदत्तशरीर! धन्यधन्यस्त्वं वन्धो! ॥ ४० ॥

हे उत्तमवृक्ष! तावकान् त्वदीयान्। श्रान्ताः मार्गपरिश्रमेण खिन्नाः पान्थाः पथिकाः ते छायामुपजीवन्ति छायामाश्रित्य जीवन्तीत्यर्थः। कायं लुनते, शरीरं पाटयन्ति। लूञ्धातोरात्मनेपदे लट्। पाषाणैस्ताडयित्वा तव पीडामुत्पादयन्ति। पूङ् प्राणिगर्भविमोचने, लटो वहुवचनम्। तदपि (तदापि) मधुरमेव फलं दिशसि। शव्दशक्त्या, अपकृतोपि त्वं तेभ्य उत्तमं परिणाममेव प्रत्यर्पयसीत्यपि ध्वन्यते। परस्य हितार्थं दत्तं शरीरं येन। वन्धो! त्वं धन्येभ्यो धन्यः, अतिधन्योऽसि ॥ ४० ॥

## किंशुकः

किंशुक! किं शुकचञ्चुतः साम्ये मोदमवैषि?
किमु सौरभगुणतः सखे संमानं समुपैषि?
संमानं समुपैषि वन्धुवर! कथमिव लोके?
दर्शनसुखमवमुच्य नापि ते फलमवलोके ॥

रङ्गमात्रमुपदर्श्य दूरतो मोहितबहुशुक !
वक्रो विलससि विटपशिरसि तच्चित्रं किंशुक ॥४१॥

शुकचञ्चुतः ( चञ्च्वा सह ) साम्ये मोदं किमनुभवसि ? न योग्यस्ते हर्ष इत्यर्थः। सौगन्ध्यगुणद्वारा किं संमानं प्राप्नोषि ? अपि तु न। दर्शने सुखमात्र विहाय। नयनविमोहकं वर्णमात्रं दूरतः प्रदर्श्य मोहं प्रापिताः बहवः शुका येन। रङ्गमात्रेत्युक्त्या होलिकादिपूपयुज्यमाने रङ्गमात्रे ते उपयोग इति स्मार्यते। एवं सत्तायामपि—शाखाशिरसि गर्वाद् वक्रो राजसि, तदाश्चर्यमित्यर्थः। पलाशपुष्पाणि स्वभावतो वक्राणि ॥ ४१ ॥

## तरुणी

तरुणीतरुवरमयि सखे सावहेलमवयासि।
कण्टककलित इतीव चेत्सोत्प्रासं विजहासि॥
सोत्प्रासं विजहासि न हानिं तस्य विलोके।
को वा सौरभगुणान्न मुग्धो भविता लोके ?
किं तु सखे तद्गन्धरङ्गरहिता वनधरणी।
कां सुषमामुपयातु ? यदि च्छिन्ना वरतरुणी ॥४२॥

अयि सखे सावहेलं सतिरस्कारम्, अवयासि जानासि। कण्टकैर्निचित इत्येव कृत्वा यदि सोल्लुण्ठनं ( सतिरस्कारम् ) त्यजसि, लोके सुगन्धगुणात्को वा जनो मुग्धो न भविता ? ( भविष्यति )। किं तु तस्याः ( तरुण्याः ) गन्धेन, रागेण ( वर्णेन ) च रहिता वनभूमिः कां शोभां प्राप्नोतु ? न तया विना शोभेत्यर्थः ॥ ४२ ॥

## मयूरः

बर्हीं बर्हभरोन्मदो नन्दति विटपघनेषु।
निजशिखण्डमुल्लासयन् नृत्यति नीपवनेषु॥

नृत्यति नीपवनेषु बहुलमामोदं धत्ते ।
केकाभिर्विपिनानि मुहुर्मुखराणि विधत्ते ॥
चित्ररुचिरसुषमामुदीक्ष्य कः स्याद्गुणगर्ही ?
यदि भुजङ्गभोजी न भवेत्सोयं बत बर्ही ॥ ४३ ॥

पिच्छभारेण उन्मदो बहुलमदो मयूरः । शाखानां घनगुच्छकेषु मोदते नीपवनेषु कदम्बवनेषु । चित्रां रुचिरां च शोभाम्, चित्रे रुचिरां वा, उदीक्ष्य को जनः तस्य चित्रगुणस्य गर्ही निन्दको भवेन्न कोपि । गर्हतेर्णिनिः । सर्पभोक्ता, भुजङ्गानां विटानाम् उपयोक्ता च ॥ ४३ ॥

—कुञ्जरः—

कुञ्जर ! किं जरया कृशः क्लिश्यसि कदर्थनेन ।
पूर्वं तव मानोऽनिशं न कृतः केन जनेन ?
न कृतः केन जनेन विस्मयो वीक्ष्य भवन्तम् ?
समरशिरसि विजयोऽप्यखेलदुपलक्ष्य भवन्तम् ॥
मनसि धैर्यमाधेहि पुरा निर्यन्मदनिर्झर !
दैवदुर्विलासं सहस्व हंहो नृपकुञ्जर ! ॥ ४४ ॥

जरया कृशस्त्वं लोकानां कदर्थनेन 'अशोभनोयमनुपयुक्तोऽयम्' इत्याद्यनादरेण किमिति क्लेशमनुभवसि ? पूर्वं नवयौवने । भवन्तं वीक्ष्य विस्मयः 'अहो कियद्विशालमुत्तुङ्गं चास्य शरीरम्' इत्याश्चर्यम् । समरशिरसि युद्धस्य अतिप्रधानेऽवसरे, भवन्तमुपलक्ष्य भवदुपलक्ष्येणैव (त्वद्बलस्वनेनैवेत्यर्थः) विजयोऽप्यखेलत् । भवदाश्रयेण युद्धे विजयः क्रीडातुल्योऽभवदिति सूच्यते । पुरासमयस्य हे निर्गलन्मदधारक ! (निर्यन्तो मदनिर्झरा यस्य) सम्प्रति दैवस्य दुर्विलासं सहस्व ॥ ४४ ॥

करिणः किल भूपालकुलभवने द्युतिमुपयन्ति ।
तत्र निर्विशङ्कं स्थिताः संमोदं कलयन्ति ॥

संमोदं कलयन्ति, यन्ति कठिने किल कार्ये ।
तत्र हि निजबलमर्पयन्ति नान्यैर्निर्धार्ये ॥
कृतिघटिकागणनापरस्तु कश्चिद्धत कृपणः ।
कथमिव भवने स्थापयेत महतः किल करिणः ॥ ४५ ॥

गजाः राज्ञां पारम्परिकस्थाने, (परम्परातो ये गजान् स्थापितवन्तस्त एव तत्कर्मणि समर्थाः, नाधुनिकाः इति ध्वन्यते) अथवा राजकुलस्य प्रासादे । शोभाम् उपयन्ति लभन्ते । इण् गतौ । अन्यैः निर्धारयितुं विचारयितुमपि दुष्करे, कठिने कार्ये यन्ति (गच्छन्ति) । तत्र निजबलं चार्पयन्ति । कृतिघटिकानाम्, 'अद्य चतुर्घटिकानाम्, अद्य च द्वे घटिके यावदिति' कार्यकालघटिकानां गणनातत्परः कश्चिद्दरिद्रस्तु महतो गजान् भवने कथं स्थापयेत ॥ ४५ ॥

मत्तमतङ्गज! मदभरान्मा फुङ्कृतिमादेहि !
आधोरणपददलनमनु किञ्चिद्दृशमाधेहि ॥
किञ्चिद्दृशमाधेहि, कथं त्वां पद्भ्यां दलयति ।
अङ्कुशसंकषणेन शिरसि, बत विकलं कलयति ॥
गिरिसमानगुरुगात्रतोऽपि फलमीप्ससि किं गज ?
यत्तव खेलति शिरसि खलः किल मत्तमतङ्गज ! ॥४६॥

हे मत्तगज! मदभरात् (मदोद्रेकात्) फूत्कारं मा कुरु! आधोरणस्य (हस्तिपकस्य) पद्भ्यां दलनं प्रति किञ्चित् दृष्टिं स्थापय । शिरसि अङ्कुशद्वारा संकषणेन क्षोदनेन, त्वां विह्वलं करोति । पर्वतसमानेन गुरुणा (दीर्घेण ससारेण च) गात्रेण किं फलं प्राप्तुं वाञ्छसि? आप्नोतेः सन् । यत्तव मस्तके दुर्जनो विजृम्भते खेलतीत्यनेन, दुर्जनोपि न रीत्यनुसारं व्यवहरति, अपि तु सोपि हेलया क्रीडतीति ध्वन्यते ॥ ४६ ॥

## दीपकः

हंहो दीपक ! दीप्यसे कनककृताधारेषु ।
मदालस्यघूर्णिततनुर्नृपशयनागारेषु ॥
नृपशयनागारेषु नीयसे नलिनमुखीभिः ।
पटगुण्ठनमनुरच्य चकितमवनमितमुखीभिः ॥
एवमादृतोऽप्येषि यथोन्नतिमसितसमीपक !
तथा स्नेहमपि समापयसि बत हंहो दीपक ! ॥ ४७ ॥

हे दीपक ! त्वम् नृपाणां शयनागारेषु, (राज्ञां शयनागारमित्युक्त्या स्थानस्य रसपूर्णता, सुरक्षितता च ध्वन्यते ।) कनकरचितेषु दीपाधारेषु ('दीवट'), मदालस्येन घूर्णिततनुः सन् । मन्दवायुना घूर्णमानशिखस्य दीपस्य शिखाकम्पन मदालस्यहेतुकमुत्प्रेक्ष्यते । अतिविलासभोगित्व व्यङ्ग्यम् । वायुतो रक्षार्थं वस्त्रावगुण्ठनं विरच्य, चकितं यथा स्यात्तथा नमितमुखीभिः । उन्मुक्तस्थाने वायुतो दीपकं रक्षन्तीनां अत एव स्वदुकूलाञ्चलेन पटगुण्ठनमारचय्य पदे पदे वायुलहरीभिः कम्पमानशिखस्य दीपस्य रक्षानिमित्तं चकितं यथा तथा दीप प्रति नमितवदनानां नलिनमुखीनां दीपनयनसामयिकः स्वभावः प्रोच्यते । नीयमानस्य दीपस्य महाभाग्य द्योत्यते । एवमादृतः अपि यथा यथा उन्नतिम् (शिखाया उच्चतया प्रचुरप्रकाशत्वम् उत्कर्षञ्च) एषि, हे असितसमीपक ? (असितं कृष्णं समीपं यस्य, स्थानकृष्णीकारक !) तथा तथा त्वं स्नेहम् (तैल प्रेमाणं च) समापयसि । एवं रसिकहृदयैरादृतस्य, रसमये स्थाने निवसतोऽपि तव, कोयं स्वार्थानुगुणः स्वभाव इत्याक्षेपः । विरच्येति तु णिचः पाक्षिकत्वेन बोध्यम् ॥ ४७ ॥

दीपक ! दीपयसे समं राजरङ्कभवनानि ।
न च कञ्चिद्भेदं वहसि, किं त्वामभिनन्दानि ? ॥

किं त्वामभिनन्दानि, निश्चलः पश्यसि सर्वम् ।
लोके सकलविभासकोऽहमिति न वहसि गर्वम् ॥
किं तु वसति तव तले तिमिरमयि तमःप्रतीपक ।
सेयमकीर्तिः केन लङ्घनीया वद दीपक! ॥ ४८ ॥

राज्ञां रङ्कानाम् ( दरिद्राणाम् ) च भवनानि समं तुल्यभावेन दीपयसे प्रकाशयसि । अहं त्वां किम् अभिनन्दानि प्रशंसानि । लोट उत्तमपुरुषः। अयि तमसः प्रतीपक! प्रतिकूल! तमोनाशकेत्यर्थः। 'दीपकस्य तले अन्धकारः' इति प्रसिद्धा लोकोक्तिः । स एवालङ्कारश्च । केनोपायेन लङ्घनीया मार्जनीया ॥ ४८ ॥

## खद्योतः

खद्योतक! विद्योतसे तरुपोतकनिकरेषु ।
दृप्येस्तात ! न तावता तिमिरविनाशकरेषु ॥
तिमिरविनाशकरेषु तेषु का वा गणना ते ?
एतावद्बहु विद्धि ! भवति तिमिरे शोभा ते ॥
यदि तु दर्पितो यासि तपति सूर्ये, प्रद्योतक !
दूरे द्युतिरवहीयसेऽपि वपुषा खद्योतक ! ॥ ४९ ॥

हे खद्योतक! स्वल्पार्थे कन् । तरुपोतकाना लघुवृक्षाणां निकरेषु समूहेषु विद्योतसे प्रकाशसे । पोतकेत्यत्राप्यल्पार्थे कन् । तथा च महत्सु वृक्षेष्वपि ते गन्तुं शक्तिर्नास्ति, अपि तु लघुलघुवृक्षेषु भ्राम्यसीत्यशक्त्यतिशयो द्योत्यते । हे तात! (त्वामहं दयनीयं मत्वा, उपदिशामीति संबोधनेन ध्वन्यते । ) तावन्मात्रेण अन्धकारविनाशकारकेषु सूर्यचन्द्रादिषु न दृप्येः न गर्वं वहेः । तेषु तव का गणना? एतावदेव पर्याप्तं जानीहि, यद् अन्धकारे ते शोभा भवति । हे प्रद्योतक! (अहं प्रद्योतकारकोऽस्मीति भावयित्वा ) दर्पितः सन् सूर्ये तपति सति बहिर्यासि ! तर्हि द्युतिर्दूरे तिष्ठतु

स्ववपुषा (शरीरेण) अपि अवहीयसे वियुज्यसे। सूर्यातपेन शीतस्वभाव-स्त्वमेव प्राणैर्वियुज्यसे इति भावः ॥ ४९ ॥

## —※ लेखिनी ※—

लेखिनि! तव मुखनिःसृता मसीबिन्दवोऽप्यद्य।
दैववशाद्धते द्युतिं मौक्तिकतामवपद्य ॥
मौक्तिकतामवपद्य चकासति चित्रं लोके।
सत्यरुचिं प्रथयन्ति सर्वतो ज्ञानाऽऽलोके ॥
तदिह तथा ह्यवितथा चलेरयि रोचितरेखिनि!
मसिमुखलेपं कोपि नाक्षिपति ते सखि लेखिनि! ॥५०॥

हे लेखनि! दैववशात्, (एषु दिनेषु दैवं तेऽनुकूलं तस्मात्)। अद्य तव मुखनिष्पतिताः मसीबिन्दवोऽपि मौक्तिकतां प्राप्य शोभां दधते। त्वया-लिखितं यत्किञ्चिन्महामूल्यमिव लोकैराद्रियते, सर्वत्र च शोभा प्रसरतीत्या-शय.। यदा तु दैवं प्रतिकूलं भवति, तदा 'यथा लेखन्या आत्मनो मुखं कृष्णीकृतं तथैव लेखकस्याप्याक्षिपतीति अर्थापतितम्। कृष्णाः मसीबिन्दवोऽपि लोके मौक्तिकतां प्राप्य चकासति, दीप्यन्ते, इति चित्रम्। ज्ञानस्य आलोके प्रकाशे (ते मसीबिन्दवः) सत्या रुचिम् कान्तिम्, सत्यस्य रुचिं च। सर्वतः प्रख्यापयन्ति। रोचिता. अभिनन्दिताः प्रदीप्ताश्च रेखाः लेख-पङ्क्तयो यस्यास्तत्सम्बुद्धौ। अयि लेखिनि! इह (जगति) अवितथा सत्या सती, तथा प्रचले., लिङ्। तथाक्षराणि लिखेत्यर्थ.। हे सखि! यथा कोपि ते मस्या मुखलेप नाक्षिपति। मसीलेपेन कृष्णमुखया लेखन्या स्वस्वरूपोचित-मेव लिखितमिति कोपि त्वा नाक्षिपतीत्याशयः। अत एव कुण्डलिया-प्रकरणे इहैव विरता भवेरिति ध्वनिः ॥ ५० ॥



# प्रकीर्णकचत्वरः

→ घनाक्षरीच्छन्दः ←

शास्त्रचयमार्मिकेषु मानमावहन्ते सदा
धार्मिकेषु धारयन्ते गौरवं निरेनसाम्
निश्छलं भजन्ते प्रेम मित्रेष्वथ, दीनेष्वपि
साम्यं दर्शयन्ते, निःस्पृहायन्ते सतेजसाम् ।
स्नेहं स्वजनेषु, दुर्जनेषु मौनमीयन्तेऽथ,
प्रीयन्ते रसज्ञेष्वाश्रवायन्ते सुमेधसां
सकलजनेषु स्नेहसामञ्जस्यजन्या भाति
धन्या चारुचर्या काचिदन्या सा सचेतसाम् ॥५१॥

शास्त्रसमूहे शास्त्रविचये वा मार्मिकेषु (विद्वत्सु) सदा संमानम् आवहन्ते भजन्ते । धर्मानुष्ठानपरेषु लोकेषु निरेनसाम् निष्कल्मषाणां गौरवं संमानं (सुकृतिसमुचितं संमानम्) धारयन्तीत्यर्थः । आत्मापेक्षया दीनेषु लोकेष्वपि समभावं प्रकाशयन्ति । निरभिमानतया तथा व्यवहरन्ति, यथा तेऽपि तेष्वनुरज्यन्तीति भावः । सतेज ाम् धनसम्पत्त्याद्यभिमानेन प्रदीप्तस्वभावानां लोकानां विषये, निःस्पृहव दाचरन्ति । तेषां धनसम्पत्त्याद्यभिमानकृतं गौरवं तृणायाप्यपरिगणय्य, र अन्यलोकवत्प्रेमभावेन व्यवहरन्तीत्याशयः । स्वजनेषु कुटुम्बिबान्धवादि ।षु स्नेहम्, दुर्जनेषु मौनम् ईयन्ते गच्छन्ति । ईङ् गतौ । रसिकेषु प्रीतिं !कुर्वन्ति । सुमेधसाम् विचक्षणबुद्धिमतां लोकानां वशगा भवन्ति । 'वच द स्थित आश्रवः ।' अत एव नाना-

विधलोकेषु, स्नेहस्य यत् सामञ्जस्यम् औचित्यम् तस्मात्प्रमेया। यस्मिन् यादृशः स्नेहः समुचितस्तस्मिन् तादृश एव निबद्ध इति सामञ्जस्यतो जन्या। सचेतसां सहृदयानां धन्या चर्या, काचिदन्यैव भाति। न तां सहृदयेतरे ज्ञातुमपि प्रभवन्तीत्यर्थः॥ ५१॥

## साधुसंगतिः

पूर्वं प्रेमबन्धान्मतिमात्मवशामातनोति
मानसं धिनोति धीरभावाद्भृशमाहिता
तदनु शनैः शनैः प्रदर्श्य हितमार्गं मनाक्
मोहमवमूलयते सेयं स्वयमातता।
मञ्जुनाथ मूढजनसङ्गलवमाविधूय
मङ्गलमिहातनोति मानसमुपागता
तापं व्यपनीय पूर्वपुण्यपरिपूते हृदि
सन्मतिं प्रसूते साधुसंगतिरुपासिता॥ ५२॥

सत्संगतिः केन क्रमेण सद्बुद्धिमुत्पादयति तं यथावदाह—साधुसंगति', प्रेम्णो बन्धात् (प्रेमप्रकाशनात्) पूर्वं बुद्धिमात्मवशगां करोति। प्रेम्णः कारणान्मनुष्यः स्वयमेव तद्वशगो भवतीत्यर्थः। अत एव भृशं यथा स्यात्तथा आहिता स्थिरीकृता सा संगतिः, धीरभावात् धैर्याद्धेतोर्मनुष्यस्य मानसं प्रीणयति। समये समये साधोर्धीरतां विलोक्य स प्रीतो भवतीत्यर्थः। एवमात्मवशगे सति—स्वयमातता विस्तीर्णा (इयं सज्जनमैत्री)। एवमुपायेन मनुष्यस्य वशीकारे कृते, संगतिः स्वयमेव उपचिता भवतीत्याशयः। शनैः शनैर्हितमार्गं सूचयित्वा जनस्य मोहं निर्मूलयति। तदनन्तरम्—पूर्वपरिचितैः मूढैः सह संगतेर्लेशमपि आविधूय दूरीकृत्य, (आ-वि-पूर्वको धू धातुः), मानसं प्राप्ता, मनसि दृढसंस्कारा सा संगतिर्मङ्गलम् इह आतनोति। अत एव तापं मानसिकशरीरादिसंताप व्यपनीय, पूर्व-

क्षौद्र-कदली-पाकारुणाम्र-शर्करा-वनिताधराः, अनन्तेषु वत्सरेषु गतेष्वपि सरसस्य कविकालिदाससुभाषितस्य तुलनां कथम् उपयान्तु? मधुमोचिकादयः किञ्चित्कालानन्तरमेव विरसा भवन्ति। इदं तु वत्सरशते यातेऽपि सरसमस्तीति विशेषः ॥ ३४ ॥

मालती [यमुना]

तदवधि मोदमुपैति मानसं
यदवधि संव्यथते न चिन्तया।
कथमिव फुल्लति मालतीसुमं
दवदहनो यदि दग्धवानिदम् ॥ ३५ ॥

यावत्कालं चिन्तया न पीड्यते तावत् चित्तं, मोदं गच्छति। यदि वनवह्निः इदं (पुष्पम्) दग्धवान्, तर्हि मालतीकुसुमं कथं विकसति? न विकसतीत्यर्थः। कुसुमसमाने कोमले चेतसि, चिन्ता वनाग्निरिव अनर्थं घटयतीत्यभिप्रायः ॥ ३५ ॥

तामरसम्

हृदि यदि वाञ्छसि मोदमनन्तम्
गुणगणमीप्ससि चेद्विलसन्तम्।
मनसि न तर्हि धरेः परनिन्दाम्
अनुसर सज्जनरीतिममन्दाम् ॥ ३६ ॥

हृदये आनन्दं वाञ्छसि, गुणगणं च प्रसरन्तं वाञ्छसि, तर्हि परनिन्दां मनसि न आनयेः। प्रशस्तां सज्जनसरणिं च अनुगच्छ। परनिन्दया वैरोत्पत्त्या आनन्दो लुप्यते, गुणाश्च न प्रसिध्यन्ति। न कस्यचिन्निन्दा कर्तव्येति सन्मार्गः ॥ ३६ ॥

प्रहर्षिणी

सोल्लासप्रसृमरसद्गुणैकसिन्धोः
श्रीश्रीमज्जयनगराधिराजमौलेः।

सोन्नाहामनुदिनमुन्नतिं समन्ता-
दाशास्ते मतिरतुलप्रहर्षिणी नः ॥ ३७ ॥

सोल्लासं प्रसरणशीलानां सद्गुणानामेकमात्रस्य सागरस्य, श्रीजयपुरमहाराजश्रेष्ठस्य सोच्छ्रायां प्रतिदिनम् समन्तात् सर्वेषु विषयेषु उन्नतिम्, अतिहर्षयुक्ता अस्माकं मतिराशास्ते । मुद्रा ॥ ३७ ॥

मत्तमयूरम् [ माया ]

तीव्राघातैर्मौलितटीघट्टनजातै-
र्बद्धामोदं संदिशतोऽनर्घफलानि ।
सत्याशीर्भिर्वर्द्धयतोऽप्याकुलयद्भि-
र्लुब्धैर्लोकैराम्र ! सखे ते तुलना नो ॥ ३८ ॥

मौलितटीदेशे ( मस्तकदेशे ) घट्टनेन संघर्षेण जातैः, तीव्रैर्लोष्टादीनामाघातैः सानन्दम् [ किंच 'बद्धामोदम्' अनेन लोष्टाघातप्रसरन्मकरन्दतया 'विस्तारितसौरभम्' इत्यप्यर्थो भवति ] अनर्घाणि फलानि ददतस्ते, सत्याशीर्वादद्वारा अभिनन्दयतः अपि ( लोकान् ) व्याकुलीकुर्वद्भिर्लुब्धैः जनैः साकम् । हे आम्र ते तुलना नास्ति । लोकाः ईदृशा लुब्धाः सन्ति ये आशीर्वादद्वारा अभिवृद्धिं वाञ्छन्ति तानप्याकुलीकुर्वन्ति । त्वं तु लोष्टानामाघातैः पीडितोपि उत्तमानि फलान्येव ददासि । अत एव तैर्लोकैः साकं तव तुलना नास्तीत्याशयः ॥ ३८ ॥

चन्द्रिका [ उत्पलिनी, विद्युत्, कुटिलगतिः ]

मनसि शुचितया जाह्नवी जीयते
वचसि दृढतयाऽद्रिः पराजीयते ।
भणितिपटुतया पण्डितः प्रीयते
जगति गुणनिधिस्तादृशो गीयते ॥ ३९ ॥

चित्ते निर्मलतया गङ्गापि विजिता भवति। वचने दृढतया पर्वतोपि पराभूयते। अर्थात् पर्वततोप्यचलं यस्य वचनमस्ति। एवंविधो जनः, जगति गुणनिधिरिति प्रख्यातो भवति॥ ३९॥

❀ प्रहरणकलिका [ता] ❀

प्रमदसमुदये सततमविचला
त्रिजगदुपवनीविधुतकलिमला।
मनसि विलसनात्सततसुखकरी
जयति जगति सा सुकविरसझरी॥ ४०॥

आनन्दोदये सदा सुस्थिरा, सदा आनन्ददात्रीति भावः। त्रिभुवनरूपस्योपवनस्य धौतमालिन्या। मनसि विचारणात्सुखकरी सा सुकविसम्बन्धिनी 'रसनिर्झरी जयति। निर्झरी यथा उपवने विलसति तथेयं त्रिभुवनं पुनाति। ब्रह्मादितः समुद्भूतो दिव्यलोकादिष्वपि काव्यरसो प्राचरदिति ज्ञेयम्॥ ४०॥

❀ अलोला [लोला] ❀

धन्यास्ते धनिलोका ये लोकान्सुखयन्ते
मा भूवंस्ते हीना ये दीनान्दलयन्ते।
स्वार्थापूरणसक्ता रक्ताः स्युर्न हि के वा
किन्त्वानन्दितदेवा धन्यासौ परसेवा॥ ४१॥

ये हीना धनिलोका दीनान्दलयन्ति, ते जगति मा उत्पद्यन्ताम्। माङ्योगे लुङ्। स्वार्थस्य आपूरणे लग्नाः के वा सुखिता न स्युः। परं देवानप्यानन्दयन्ती परेषां सेवा धन्या। परोपकारेण देवाः प्रसीदन्तीत्यर्थः॥४१॥

❀ वसन्ततिलका [उद्धर्षिणी, सिंहोद्धता, मधुमाधवी] ❀

भूयासुरद्य कविताः कवितानिकुञ्ज-
गुञ्जन्मधुव्रतकिशोरविरावकल्पाः।

छन्दोऽनुबन्धि-लय-निक्वणितानुनृत्य-
वाग्देवतानिबिडनूपुरनादहृद्याः ॥ ४२ ॥

कवितानिकुञ्जे गुञ्जतां यः किशोरमधुव्रतानां विरावस्तत्सदृश्यः इमा कविताः, अथ नवीनच्छन्दोऽनुगामी यो लयः (स्वरसाम्यम् 'लै' इति भाषा) तन्निक्वणितानुसारं नृत्यन्ती या वाग्देवता तस्या घननूपुरनादवद् मनोहराः भूयासुः। पूर्वं मधुकरगुञ्जनवत्कलमनोहारिण्योपि, अथ उपास्य-देवतानुग्रहेण मम कविता नवीनच्छन्दोलयानुसारं नृत्यन्त्याः सरस्वत्या नूपुरनादवद्दिव्य-मनोहराः भवन्तु इति देवेभ्यः प्रार्थना। आशिषि लिङ् ॥४२॥

❀ स्रक् ❀

[यतिभेदेन, 'शशिकला, मणिगुणः शरभः चन्द्रावती']

छमिति छमिति चलचरणपटुरवे
धगिति धगिति मधुमुरजमनुगते।
सुपटु नटति करकलितनिजकरे
व्रजपतिरिति नवयुवतिपरिकरे ॥ ४३ ॥

श्रीकृष्णस्य रासक्रीडाया वर्णनम्। छम् छम् इति शब्दं कुर्वन्तश्चला ये गोपीनां चरणास्तेषां मधुरे रवे, धग् धग् शब्दं कुर्वन्तं मधुरमृदङ्गमनुगते सति, करे (श्रीकृष्णस्य) समर्पितो निजकरो येन, ईदृशे नवयुवतीनां समूहे व्रजपतिः इत्थं सुनिपुणं नृत्यति। मृदङ्गलयानुसारं चलचरणे हस्त-गृहीतश्रीकृष्णहस्ते गोपीनिकरे, श्रीकृष्णः सुमनोहरमनृत्यदिति भावः ॥४३॥

कामक्रीडा [साङ्गी]

अज्ञाः सन्तो विज्ञानेते साहङ्कारं भाषन्ते
कामं कौटिल्याविष्टानां वक्रे हासा भासन्ते।
उच्चस्थानारूढान्मूढा गत्वा नित्यं सेवन्ते
तेऽमी धन्या विज्ञंमन्या ये पैशुन्यादेधन्ते ॥ ४४ ॥

अज्ञाः सन्तोपि विज्ञलोकान् अहंकारेण सहितं संलपन्ति । हृदये कौटिल्ययुक्तानामपि मुखे हासाः शोभन्ते । किञ्च उच्चाधिकारिजनान् ये उन्नतिलोभेन सेवन्ते । अहो आत्मनो मनसि विज्ञायिताः इमे धन्याः सन्ति, ये सूचकत्वात्, एधन्ते वर्द्धन्ते । उच्चाधिकारिषु परेषां विषये पिशुनत्वं कुर्वन्त इमेऽभिवृद्धिं गच्छन्तीत्यहो इमे धन्याः । धन्या इति विपरीतलक्षणा ॥ ४४ ॥

मालिनी [ मञ्जुमालिनी ]

मनसि सुजनगोष्ठीविभ्रमैर्मोदमेयाः
खलजनपरिहासैर्माऽऽमनस्यं प्रयासीः ।
सततमवदधीथा मञ्जुनाथाऽन्तरे य-
त्पथि पथिकसमानो ह्यञ्जसा नो निवासः ॥ ४५ ॥

सुजनगोष्ठीविलासैर्मनसि आनन्दम् एयाः आगच्छेः । आङ्पूर्वकादेतेर्विधिलिङ् । खलोपहासैरामनस्यम् ( दुःखम् ) मा गच्छेः । हे मञ्जुनाथ ! अन्तरे चेतसि सततम् अवधानं कुर्याः, यन्मार्गे मिलतां पथिकानामिव अस्माकमयं जगति निवासः । अस्थिरप्रायः ॥ ४५ ॥

पञ्चचामरम् [ नाराचम्, नागराजः ]

अहो सलीलमुच्छलद्रसानुबन्धबन्धुरो
जयत्ययत्नसुन्दरो गिरो निगुम्फनिष्कुटः ।
यदत्र मोदनिर्भरं रसानुसारिविस्तरं
निरुत्तरङ्गनूपुरं ननर्त सा सरस्वती ॥ ४६ ॥

उच्छलतः, निर्भरपूरात्सवेगमुद्गच्छतो रसस्य आनन्दस्य ( निष्कुटपक्षे जलस्य ) अनुबन्धेन संबन्धेन सुन्दरः, स्वभावेन मनोहरो वाङ्निगुम्फरूपो निष्कुटः (गृहारामः) जयति । यत्र सरस्वती नृत्यति कथं तदाह-रसानुसारी विस्तरो यस्मिन् यथा भवति, नृत्यस्य तावानेव विस्तरो यावान् यादृशो रस

इत्याशयः । अनेन, काव्ये विस्तरस्तावानेव शोभते यावता सामाजिकानां न विरागो भवतीति सूच्यते। नितरामुत्तरङ्गाश्चञ्चला नूपुरा यत्र। अथवा निस्तरङ्गाः सुस्थिरा नूपुरा यत्र। अतिवेगनृत्ये नूपुराणां स्थैर्यात् ॥ ४६ ॥

शिखरिणी

प्रणामैर्देवानां मुकुटतटकिर्मीरितपदं
गणैर्गन्धर्वाणां प्रतिसवनमुद्वीणितगुणम् ।
स्फुरन्नासारन्ध्रश्वसनमरुदासाद्यनिगमं
चिदानन्दं वन्दे हयमुखममन्देहितधरम् ॥ ४७ ॥

मुकुटकोट्या किर्मीरिते आलिखिते पदे यस्य। प्रतिसन्ध्यम् वीणया उद्गीताः गुणा यस्य तम्। स्फुरतो नासारन्ध्रस्य श्वासपवनात् प्राप्याः निगमाः (वेदा.) यस्य, श्वासमारुतोत्पादितवेदमित्यर्थः । चैतन्यानन्दस्वरूपम्-अमन्दानां भक्तेप्सितानां धारकं श्रीहयग्रीवं वन्दे ॥ ४७ ॥

पृथ्वी

अये कवयसे कवे ! मधुरभावगर्भैः पदै-
रिदं त्वयि निवेदये, यदिह वाङ्गिगुम्फस्तव ।
मिलन्मधुरमालतीकुसुमसारसौभाग्यभाग्
भवेद्धि मदुपास्य-संमुख-हयास्य-दास्याद्ध्रुवम् ॥ ४८ ॥

अये कवे ! त्वं कवितां करोपि परम्, इदं भवति निवेदये, यत् ममोपास्यस्य अनुकूलीभूतस्य हयवन्दनस्य दास्यात् ते वाग्गुम्फः (रचना) मालतीकुसुमसारस्य सौन्दर्यं भजति तादृशो भवेत्। त्वं भावगर्भैः पदैर्मधुरं कवयस्येव परं हयवदनसेवया कवितायां नैसर्गिकं माधुर्यं भवेदिति ध्रुवमित्याशयः ॥ ४८ ॥

हरिणी

इह हि कतिचिद्वर्षाण्यारभ्य भूरिविशङ्कटा
रणघनघटा संनद्धाऽभूद्धुरोपनभस्तले ।

सपदि बृटिशाधीशप्रोद्यज्जयामृतवर्षिणी
तव करुणया सूदर्कासौ बभूव दयानिधे ! ॥ ४९ ॥

(युरोपयुद्धावसाने जयपुरेन्द्रस्याज्ञया श्रीगोविन्दसंमुखे पठिता प्रार्थना) —युरोपरूपे गगने भूरिविशङ्कटा अतिविस्तृता युद्धमेघघटा व्याप्ताभूत्। इदानीं बृटिशाधीशस्य प्रोद्यत् जयामृतं वर्षति तच्छीला साऽसौ घटा, हे गोविन्द! तव करुणया सुन्दरपरिणामाऽभवत्। 'उदर्कः फलमुत्तरम्' ॥४९॥

## मन्दाक्रान्ता

गोपायन्ती निजगुणगणान्बिभ्यती संकुचन्ती
हेलाकृष्टा सदसि रभसात्पश्य दुःशासनेन ।
अब्रह्मण्यं समभिदधती वेपते भूरि, हंहो
मन्दाक्रान्ता द्रवति कविता द्रौपदीवाकुलेयम् ॥५०॥

अनधिकारिणा कविना सभायां पठितां कवितामुद्दिश्योक्तिः—कवितायां ये स्वाभाविका माधुर्यप्रसादादयो गुणाः तान् अतिकष्टेन रक्षन्ती (पक्षान्तरे सौकुमार्य-सौन्दर्यादीन् पुरुषसभायां लज्जावशात् गोपायन्ती), दुर्निर्देशेन मूढकविना हेलया आकृष्टा (पक्षे तन्नाम्ना कौरवेण)। अत एव 'अब्रह्मण्यम्' इति अभिदधती (कथयन्ती) भूरि कम्पते। हंहो मन्देन अभिभूता इयं कविता द्रौपदीवाऽऽकुला द्रवति भयाद्दूरं पलायते। मन्दाक्रान्ता छन्दश्चेति मुद्रा ॥ ५० ॥

## नर्कुटकम् [ यतिनियमेन 'कोकिलकम्' ]

परविभवेन मोदमुपयन्ति नमन्त्यनिशं
हृदि न नयन्ति दोषमवयन्ति गुणान्किल ये ।
निखिलनराभिनन्द्यनयनिर्मलताऽधिजुषां
जयति जगत्सु कोपि महिमातिशयो विदुषाम् ॥५१॥

सदा ये नम्रा भवन्ति । ये हृदि कस्यचित् दोषं न नयन्ति किन्तु गुणान् अवयन्ति जानन्ति । सकलजनैः प्रशस्याम् नीतेर्निर्मलताम् अधिजुषन्ति (सेवन्ते) तादृशानां विदुषाम् अनिर्वचनीयो माहात्म्योत्कर्षो जयति ॥५१॥

### शार्दूलविक्रीडितम्

शीर्षोत्खेलदनिन्द्यनाकतटिनीकल्लोलमालाकुले
यद्भालेऽनललुप्यमानशिशिरो बालः शशी राजते ।
भक्त्यावेशनमत्सुरेशमुकुटप्रोद्घृष्टपादाम्बुजे
तस्मिन् शैलसुताविलासरसिके देवे मनः खेलतु ५२

शिरसि उच्चैः खेलन्त्याः अनिन्द्यायाः सुरनद्याः तरङ्गमालया व्याप्ते। अनलेन नेत्रवह्निना लुप्यमानः शिशिरो गुणः (जाड्यम्) यस्य सः। खेलतु क्रीडतु इति लक्षणया स्वाभाविको मे मनोरागोस्तु, न पुनः शास्त्रशासनेनेति भावातिशयो ध्वन्यते। संस्कृतरत्नाकरे प्रकाशितपूर्वम् ॥ ५२ ॥

### नाराचम् [ महामालिका ]

मनसि कपटभावना बुद्धिपूर्वं धृता चेत्तदा
रचितरुचिरविभ्रमेणाननेनापि किं मञ्जुना ।
बहिरुपहितसद्व्रतं तं तिरस्कुर्वते साधवो
बहिरतिसुखदर्शनं को न निष्ठीवतीन्द्रायणम् ॥५३॥

मनसि यदि कपटविचाराः सन्ति तर्हि, कृतरुचिरविलासेन सुन्दरेणापि मुखेन किं फलम्? बहिः (उपरितः) धारितसद्व्रतं तं कपटहृदयं पुरुषं सज्जनाः, तिरस्कुर्वन्ति। उपरितः अतिमनोहरदर्शनमपि इन्द्रायणस्य फलम् ('गडदूंबा' इति ख्यातम्) को वा न निष्ठीवति? अपि तु अतितिक्तत्वात्सर्वे एव निष्ठीवन्तीत्यर्थः ॥ ५३ ॥

### स्रग्धरा

उन्मीलन्मञ्जुमुक्ताफलनिचयरुचा सन्मनःस्तोमतुम्फा
वाग्गुम्फाः प्राक्कवीनां तुलयितुमधुना भूतले केन शक्याः ।

अस्मद्वंशे प्रसीदद्धयवदनपदाम्भोजलक्ष्मीविलासा—
दासामासाद्य वाचां कमपि गुणगणं किन्तु तुष्यन्तु सन्तः ॥

उन्मीलन्त्या ( परितो विकसन्त्या ) मञ्जुमौक्तिकसमूहस्येव रुचा कान्त्या, सज्जनमनःसमूहसन्तोषकाः ( तुफ तुम्फ तृप्तौ भ्वादिः, ततः कर्मण्यण् )। प्राचीनकवीनां वाग्गुम्फाः भूमौ अधुना केन समीकर्तुं शक्याः। प्राक्कविरचनानां साम्यमधुना दुर्लभमित्यर्थः। किन्तु अस्मद्वंशोपरि प्रसीदतो हयग्रीवदेवस्य पदाम्भोजलक्ष्मीविलासात्, आसाम् ( मद्वाचां ) कमपि ( यदि कश्चन गुणगणः स्यात्तर्हि तम् ) प्राप्य सन्तस्तुष्यन्तु। अत्र यदि कश्चन गुणस्तर्हि भगवत एवानुग्रह इति सूच्यते ॥ ५४ ॥

### भद्रविराट्

सेवेय समूहमर्हितानां
काव्योत्कर्षविमर्शपण्डितानाम्।
संतोषयितुं कथं प्रगल्भे
मूढानेवमकाण्डदुर्दुरूढान् ॥ ५५ ॥

मान्यानां कवितोत्कर्षविचारे चतुराणां समूहमहं सेवितुं प्रभवेयम्, अकाण्डे दुर्दुरूढान् आग्रहिलान् मूढान् संतोषयितुं कथं समर्थः स्याम्? ततश्च ये चतुरास्ते कञ्चनातिशयं वीक्ष्य प्रसीदेयुरिति सूच्यते ॥ ५५ ॥

### द्रुतमध्या

लोकपते! न विदूरय दीनं
चरणतले तव नाथ निलीनम्।
देहि भवच्चरणाम्बुजसङ्गं
मुदमुपयातु ममाकुलमङ्गम् ॥ ५६ ॥

न विदूरय दूरे न कुरु। निलीनं पापसन्तापभयात् तव चरणतले

निलीय स्थितम् । चरणकमलसङ्गेन, मम व्याकुलम् अङ्गम् मुदम् (हर्षम्) उपयातु ॥ ५६ ॥

—⊰ हरिणीप्लुता ⊱—

मधुना विजने विपिने न चे-
इलति सा सरसा नवमालिका ।
अलिनामधुना विमनायितं
हरति कोऽरतिकोरकितं तदा ॥ ५७ ॥

मधुना वसन्तेन । अरत्या विषादेन कोरकितं अधिकीकृतम् अलिनां भ्रमराणां विमनायितम् उन्मनीभावं को हरति ? नवमालिकां विना न कोपि हर्तुं समर्थ इत्यर्थः ॥ ५७ ॥

—⊰ अपरवक्त्रम् ⊱—

अवगतनवमालिकारसे
मधुलिहि किं वहसे मधुद्रवम् ।
फलिनि ! विफलमुद्यमं त्यजेः
सखि विभजेरितरत्र ते रसम् ॥ ५८ ॥

हे फलिनि प्रियङ्गुलते ! ज्ञातनवमालिकाऽऽस्वादे मधुलिहि भ्रमरे स्वीयं मकरन्दद्रवं किं ददासि ? नवमालिकाऽऽसक्तो नायं तव मधुद्रवमभिरोचयेत् । हे सखि ! अन्यत्र ते मकरन्दं विभागेन वितरेः ॥ ५८ ॥

—⊰ पुष्पिताग्रा ⊱—

लवलिनवलतावितानरम्या
यदि भविता कविता प्रयास एव ।
वशितदशदिगन्तराणि तर्हि
स्पृहयतु कुङ्कुमकेसराणि को वा ? ॥ ५९ ॥

साम्प्रतं कविताकरणं प्रयासमात्रमेवेति वदन्तं प्रत्याह—लवली-नवलताप्रतानवत् रम्या कविता यदि प्रयासमात्रं भविता भविष्यति (लुट्), तर्हि वशीकृतानि दश दिगन्तराणि यैस्तादृशानि काश्मीरजस्य (केसर इति ख्यातस्य) केसराणि किञ्जल्कान् कः स्पृहयतु 'किञ्जल्कः केसरोऽस्त्रियाम्।' यदि केसरकेसराणामादरस्तर्हि कवितानामप्यादरः स्वाभाविक इति भावः॥ ५९॥

## —॥ आख्यानिकी ॥—

जाने जगत्यां दुरितं तदेत-
त्परोपकाराद्विमुखं मनो यत्।
पुंसां परोक्षे परिवादरौक्ष्या-
त्परं परं पातकमेव न स्यात्॥ ६०॥

परोपकारात् यत् मनः विमुखं तदेतत् पृथिव्यां पातकमस्तीति जाने। परं पुरुषाणामसमक्षे (पृष्ठतः) परिवादरूपात् निन्दारूपात् रौक्ष्यात् परम् अधिकम् किमपि पातकमेव न स्यात्। पैशुन्यं सर्वतोऽधिकं पापमित्याशयः॥ ६०॥

## —॥ विपरीताख्यानिकी ॥—

अवैमि तान् शूरशिरोमणीन्द्रान्
क्षाम्यन्ति ये दुश्चरितं खलानाम्।
वदामि दीनानिह तान्धनाढ्या-
न्वीक्ष्यातिथीन् ये विमुखा भवन्ति॥ ६१॥

ये दुष्टानां स्वेन साकं दुराचरणं सहन्ते तान् वीरशिरोमणिष्वपि श्रेष्ठान् जानामि। ये धनाढ्याः सन्तोपि आगतान् अतिथीन् दृष्ट्वा पराङ्मुखा भवन्ति तान् दरिद्रान् कथयामि॥ ६१॥

### वियोगिनी

इह शैशवकाललालिता
  बत गूढास्ति वियोगिनी लता
पथिकाः! क्षणमात्रमास्थिताः
  स्मृतिजन्याश्रुजलैर्निषिच्यताम् ॥ ६२ ॥

कस्याश्चन विरहिण्याः समाधिस्थानमुद्दिश्योक्तिः—शैशवकालादेव लालिता वियोगिनी लता, इह गूढास्ति प्रोथितास्ति। अस्मिन् स्थाने विश्राम्यन्तः पथिकाः! अस्या विरहिण्याः स्मरणेनोत्पन्नैरश्रुजलैः सेयं निषिच्यताम्। जलसेकेन यथा लता सुस्थिरा भवति, तथा अस्मिन् स्थाने स्थित्वा स्मृतिजन्यैरश्रुभिः सेयं विश्राम्यतां हृदयेषु पुनः प्ररूढा भवतीत्याशयः ॥६२॥

### मालभारिणी

अपि दीनमिमं निरीक्ष्य नाभू-
  त्तव सा भूतदया, तदेतदास्ताम्।
अमुना किमु नाथ! नासि दूनो
  मयि धूनोति यमो यदेष शस्त्रम् ॥ ६३ ॥

दीनमपि इमं (माम्) निरीक्ष्य तव सा (प्रसिद्धा) प्राणिषु समर्पणीया दया नाभूत्, एतद् आस्तां नाम। परं यद् एष यमो मयि शस्त्रं वधार्थं धूनोति कम्पयति, हे नाथ! किमु एतेनापि न दुःखितोसि? प्रत्यक्षं हन्यमानं जनं वीक्ष्य मार्गं गच्छतस्तटस्थस्यापि दुःखं भवतीत्याशयः ॥६३॥

### अश्वधाटी

किं गाढरागपरिषङ्गादनारतमनङ्गाकुलोऽभिरमसे
  शृङ्गारवीथिनवभृङ्गायितो रतितरङ्गान्तरापतसि किम्?।
गङ्गामवाप्य भृशमङ्गान्युदस्य हृदि रङ्गान्तराहिततमं
  त्वं गाय भूरिभयभङ्गाय तोषिततुरङ्गाननाङ्घ्रिकमलम् ६४॥

हे मनुष्य ! गाढरागस्य संबन्धात् निरन्तरं कामाकुलः सन् किं रमसे? शृङ्गाररसवीथ्याः नवीनभृङ्गवदाचरन् रतेः विलासस्य तरङ्गान्तः तरङ्गाणां मध्ये किं आपतसि ? भृङ्गो यदा कमलसौरभलुब्धो जलतरङ्गेषु निपतति तदा आर्द्रीकृतपक्षपुटो निमज्जतीति सूच्यते । तर्हि विलासं परित्यज्य किं कर्तव्यं तदाह—गङ्गां प्राप्य, अङ्गानि भृशम् उदस्य योगरीत्या उत्क्षिप्य, हृदये रङ्गान्तः, हृदयरूपरङ्गस्थलस्यान्तर्भागे इति व्यस्तरूपकम् । आहिततमं अतिशयेन स्थापितम्, तोषितस्य परिचर्याद्वारानुकूलीकृतस्य हयाननस्याङ्घ्रिकमलम्, सांसारिकभूरिभयस्य नाशाय, त्वं गाय । चरणगुणगानं स्मरणं च कुर्वित्याशयः ॥ ६४ ॥

## दण्डकः ( चण्डवृष्टिप्रपातः )

मनसि रुषमयन्नयं मानयन्नात्मनोऽ-
भ्यर्हणालोपरूपामवज्ञामहो
सुरपतिरभिवर्षति स्मानिशं नाशशङ्कावहा
दुःसहा वारिधाराः सृजन् ।
व्रजधरणिरभूदियं वृष्टितो व्याकुलै-
र्गोपगोपीकुलैराकुला सर्वतः
सपदि गिरिधरो, धिनोति स्म विस्मययं-
श्चण्डवृष्टिप्रपाताकुलं गोकुलम् ॥ ६५ ॥

इन्द्रगर्वशमनमाह—आत्मनः अभ्यर्हणालोपरूपाम् सपर्याविलोपरूपाम्, नन्दादिभिर्व्रजवासिभिः अकृतां वार्षिकीं पूजाम् स्वस्य अवज्ञां मानयन्, अत एव मनसि रोषम् अयन् प्राप्नुवन् अयम् सुरपतिः ( इन्द्रः ), प्रलयशङ्काकारिणीः दुःसहाः जलधाराः सृजन् ( मुञ्चन् ) अहो अनिशं वर्षति स्म । इयं व्रजभूमिः गोपगोपीकुलैः संकुला पर्यन्ततः अभवत् । सपदि शीघ्रमेव गिरिं गोवर्द्धनं धारयति तच्छीलः श्रीकृष्णः, चण्डवृष्टिप्रपातेन

आकुलं गोकुलम्, विस्माययन् सन् 'कथं बालेनानेन गोवर्द्धन उत्क्षिप्त.' इति विस्मितं कुर्वन् सन्। धिनोति स्म प्रीणयति स्म ॥ ६५ ॥

## आर्या

कम्प्रस्विन्नकराङ्गुलिपरिग्रहस्खलितलेखनीमार्गे।
स्वस्त्येव पूर्यते नो प्रियसखि! लेखे लिखामः किम् ॥६६॥

मदनूदित'संस्कृतगाथासप्तशती'स्थानि, इमानि आर्या-गीति-पद्यानि। 'मदनलेखेन प्रियं प्रत्यात्मवेदनां सूचये'ति सख्योक्ता दर्शनश्रवणादिना प्रथममेव प्ररूढनायकरागा काचिदाह—कम्पमानाः स्वेदयुक्ताश्च याः कराङ्गुलयः ताभिः परिग्रहणेन स्खलिता विस्रस्ता या लेखनी तस्या मार्गे। स्वस्तीति प्रारंभिकवर्णद्वयमेव न समाप्यते, आत्मवेदनादिकमन्यत् लेखे किं लिखाम इत्यर्थः। स्मरणमात्रेण कम्पस्वेदादिसात्विकभावोदयान्नायकं प्रति निरतिशयः प्रणयोऽभिव्यज्यते। एतद्व्याख्याने 'स्विन्नाभिरङ्गुलिभिः परिग्रहेण स्खलिते लेखनीमार्गे स्वस्त्येव न पूर्यते' इति गङ्गाधरोक्तिर्विचारणीयैव। स्विन्नाङ्गुलिद्वारा ग्रहणेन लेखनी स्खलति न पुनर्लेखनीमार्गः। प्रोषितभर्तृकाया मदनलेखोपि नवीनः। स हि पूर्वानुराग एवाद्यापि दृष्टः ॥ ६६ ॥

## चपला

मानपरिवर्द्धितस्य हि चिरप्रणय-( वन्ध )-वद्धमूलस्य।
मातुलि रवोपि पततः श्रुतोऽस्य न प्रेमवृक्षस्य ॥ ६७ ॥

अन्यत्रासक्ततया मन्दस्नेहस्य नायकस्य प्रणयभङ्गं सूचयन्ती काचिद्गृहस्यान्तर्भुक्तां मातुलानीमाह—मानेन प्रणयवहुमानेन परिवर्द्धितस्य, चिर-

---

वेविरसिण्णकरङ्गुलिपरिग्गहक्खसिअलेहणीमग्गे।
सोत्थि च्चिअ ण समप्पइ पिअसहि लेहम्मि किं लिहिमो ॥६६॥ [ ३।४४ ]
तह तस्स माणपरिवड्ढिअस्स चिरपणअवद्धमूलस्स।
मामि पडन्तस्स सुओ सद्दो वि ण पेम्मरुक्खस्स ॥६७॥ (४।३१)

प्रणयबन्ध एव बद्धं दृढं मूलं यस्य, ईदृशस्य अस्य पततः प्रेमवृक्षस्य रवोऽपि न श्रुतः। मानेन प्रकाण्डपरिमाणानुसारं वर्द्धितस्य दृढमूलस्य वृक्षस्य प्रायः पतनमेव दुर्घटम्। दैवाद्यदि भवेत्तथापि शब्दस्त्ववश्यं भवेत्सोप्यत्र नास्तीति भावः। तथा च—चिरान्मयि दृढासक्तोपि वल्लभोऽन्यत्रासक्त्या प्रेमभङ्गं कृतवान्। न चैतद्विषयिणी काचिच्चर्चाप्यश्रूयतेति मातुलानीं प्रति सूच्यते ॥ ६७ ॥

## मुखचपला

**अन्यदपि किञ्चिदाप्स्यसि विमूढ मा ताम्य दुःखमात्रेण।**
**हृदय पराधीनजनं तव विमृगयमाण कियदेतत्! ॥ ६८॥**

कस्मिन्नपि रसिके जातानुरागा काचित्तस्य स्वस्त्रीपारतन्त्र्यं सूचयन्ती, स्वहृदयामन्त्रणव्यपदेशेन शृण्वन्तं तं सनिर्वेदं साकूतं चाह—पराधीनं जनं विमृगयमाण अन्विष्यत्! हे हृदय! दुःखमात्रेण मा ताम्य (खिद्यस्व), दुःखातिरिक्तम् अन्यदपि किञ्चित् आप्स्यसि, तव एतन्मात्रं कियत्। त्वं पराधीनं जनं स्वप्रेमसमर्पणाय अन्विष्यसि। अत एव हे मूढ इदानीं लब्धं वियोगदुःखमात्रमेव दृष्ट्वा किं व्यथसे। अग्रे मरणादिकमपि प्राप्स्यसीति स्ववेदनातिशयः सूच्यते। अमङ्गलं मरणसूचनं चातुर्येण 'किञ्चित्'पदेन निर्व्यूढमित्यहो गाथाकर्तुः पाटवम् ॥ ६८ ॥

## जघनचपला

**दुन्वन्ति ददति सौख्यं कुर्वन्त्यनुरागमथ च रमयन्ति।**
**अरतिरतिबान्धवेभ्यो नमो नमो मदनबाणेभ्यः ॥ ६९ ॥**

प्रवासार्थमुद्यतस्य दयितस्य गमननिवारणेच्छया विरहे भाविनं वेदना-

---

अण्णं पि किं पि पाविहिसि मूढ मा तम्म दुक्खमेत्तेण।
हिअअ पराहीणजणं मग्गन्त तुह केत्तिअं एअम् ॥६८॥ (६।९)
दुम्मेन्ति देन्ति सोक्खं कुणन्ति अणुराअअ रमावेन्ति।
अरइरइबन्धवाणं णमो णमो मअणबाणाणम् ॥६९॥ (४।२५)

तिशयं सूचयितुं काचित्कामशरनमस्कारापदेशेनाह—कामबाणा दुन्वन्ति उपतापयन्ति, उत्कण्ठां संवर्ध्य मनोवेदनां जनयन्तीत्यर्थः। नैकमात्रं परिहरणीया एवेत्याह—सौख्यं ददति, दयितसांनिध्ये रतेरभिवर्द्धनेन सुखं परिपोषयन्तीति भावः। ननु शनैरुत्कण्ठाशान्त्या स्यादुपरम इत्याह—अनुरागं कुर्वन्ति, रतेः प्रवर्धनेन प्रेमाणं प्रकर्पयन्तीत्यर्थः। अत एव रमयन्ति सौमनस्यमेव सम्पादयन्ति। तथा च विरहे दुःखदातृत्वात्, संगमे च सुखकारकत्वात् अरतेः (व्याकुलतायाः) रतेः (चित्तरञ्जनस्य) अपि कारकेभ्यो मदनबाणेभ्यो नमः। तथा च तव विरहे कियती मे पीडा भवेदेभिरिति त्वं विचारयन् प्रवासाद्विरमेति प्रियं प्रत्यभिव्यज्यते ॥ ६९ ॥

## पथ्या

सन्ध्यारागस्थगितः प्रतिपच्चन्द्रो हि दृश्यते गगने।
रक्तदुकूलान्तरिता स्तननखलेखेव नववध्वाः ॥ ७० ॥

सन्ध्यारागेण किञ्चिदन्तरितः प्रतिपत्तिथेश्चन्द्रः, रक्तदुकूलेन अन्तरिता नववध्वाः स्तनगतनखलेखेव गगने दृश्यते। रक्ते गगनाभोगे मध्यगतः श्वेतः प्रतिपच्चन्द्रः सूक्ष्मारुणदुकूलेनाच्छादिता नववधूनखक्षतलेखेव विलोक्यत इत्यर्थः। नववधूपदेन लज्जावशात्तस्य गोपनं सूचितम् ॥ ७० ॥

## आदिविपुला

निबिडनिरन्तरयोरुन्नतयोर्व्रणलब्धशोभयोः सरसम्।
कृतकार्ययोः पतनमपि रम्यं भटयोरिव स्तनयोः ॥७१॥

गलितयौवनायाः स्तनाववलोक्य निजवाक्चातुर्यं तां प्रति कौतुकं च प्रकटयितुं सपरिहासवैदग्ध्यं कश्चित्सहचरमाह—निबिडनिरन्तरयोः विशेषेण

---

सञ्झाराओत्थइओ दीसइ गअणम्मि पडिवआचन्दो।
रत्तदुऊलन्तरिओ थणणहलेहो व्व णववहुए ॥ ७० ॥ [ ६।६९ ]
तुङ्गाणँ विसेसनिरन्तराणँ [ सरस ] वणलद्धसोहाणम्।
कअकज्जाणँ भडाणँ व थणाणँ पडणं वि रमणिज्जम् ॥ ७१ [ ५।२७ ]

अन्योन्यलग्नयोः ( पीनत्वात्, ) उन्नतयोरुत्तुङ्गयोः ( काठिन्यात् ), सरसं सुरतकेलौ सप्रमोदं व्रणैर्नखक्षतजातैर्लब्धशोभयोः, अतएव कृतकार्ययोः स्तनयोः—परस्परं बल-वेषादिसाम्यान्निर्विशेषयोः मानोन्नतयोः, अतएव कृतकार्ययोः कृतवैरिपराजययोर्भटयोरिव पतनमपि रम्यं श्रेष्ठम् । त्वया यौवने भूरि सुखान्यनुभूतानि, कृतकार्यासीति गलितयौवनां प्रत्यभिव्यज्यते ॥७१॥

### अन्त्यविपुला

**भवति कृपणपुरुषस्य प्रभवन्त्यपि निष्फलैव धनवृद्धिः ।**
**ग्रीष्मातपसंतप्तस्य निजच्छायेव पथिकस्य ॥ ७२ ॥**

गृहायातं कञ्चन भुजङ्गं बहुधनदानाय प्रोत्साहयन्ती कुट्टनी कृपणनिन्दामुपन्यस्यति—प्रकर्षेण भवन्ती अपि, प्रभूतेत्यर्थः । यथा पथिकस्य स्वीया छाया नात्मनो नापि वा परस्य संतापं हरति तथा कृपणस्य धनमिति भावः । अत्र 'धनऋद्धिः' इति प्राकृतानुसारिणी गङ्गाधरच्छाया तु व्याकरणप्रतीपतया विच्छायेव ॥ ७२ ॥

### गीतिः

**झञ्झावातोत्तृणिते गृहे रुदित्वा हि निःसहनिषण्णाम् ।**
**दर्शयतीव घनेभ्यः प्रोषितपतिकां नु विद्युदुद्द्योतः ॥७३॥**

नायकसमीपगामिनं पान्थं प्रति सखीजनो नायिकाया अवस्थां गृहस्यापि च दुर्दशां सूचयन् तस्य त्वरितागमनार्थं संदिशति—झञ्झावातेन वर्षावायुना उत्तृणिते तृणशून्यीकृते गृहे, प्रियसंस्मरणोत्कण्ठया रुदित्वा निःसहं यथा स्यात्तथा निषण्णां प्रोषितपतिकां विद्युदुद्द्योतो मेघेभ्यो दर्शयतीव । भवतामुदयादियमेतामवस्थां तु प्राप्ता, किमिदानीमबलामधिकं क्लेशयथ, प्रत्युत

---

होन्ती वि णिप्फलच्चिअ धणरिद्धी होइ किविणपुरिसस्स ।
गिह्माअवसंतत्तस्स णिअअछाहि व्व पहिअस्स ॥ ७२ [ २।३६ ]

झञ्झावाउत्तणिए घरम्मि रोऊण णीसहणिसण्णाम् ।
दावेइ व गअवइअं विज्जुज्जोओ जलहराणम् ॥ ७३ [ ४।१५ ]

पत्युरेतस्याः कुरुतोत्कण्ठां येनेमां दशामवाप्ता सेयं जीवितुं शक्नुयादित्याशयेन मेघेभ्यः प्रदर्शयतीति भावः। स्त्रीत्वाद्विद्युतः प्रोषितपतिकां प्रति पक्षपात इति स्त्रीणां मृदुहृदयत्वमभिव्यज्यते। ततश्च दारिद्र्यक्लेशेन पूर्वमेव पीडिता, सांप्रतं त्वद्विरहेण वर्षाकाले नाधिकं जीवेदिति प्रवासिनं प्रति त्वरितागमनमभिव्यज्यते। इतोऽधिको व्यङ्ग्यार्थस्तु मत्कृतायां 'व्यङ्ग्यसर्वङ्कषायां' विलोकनीयः ॥ ७३ ॥

## उपगीतिः

**किं भण्यतां नु वाचा कियदिव वा लिख्यते लेखे ? ।**
**तव विरहे यद्दुःखं त्वमेव तस्यासि विदितार्थः ॥ ७४ ॥**

दुःखानां बहुत्वात्, वाण्या किं वक्तव्यं लेखे च कियल्लेखितव्यमिति भावः। तस्य दुःखस्य त्वमेव विदितार्थः ज्ञाता, असीत्यर्थः। मम हृदये विरहवह्निना कीदृश. सन्ताप इति अनिर्वचनीयमिदमहं वाचा तु किं वदामि। त्वमेव स्वं हृदयं पृच्छ। यावद्दुःखं त्वयाऽनुभूयते तावदेव ममापि स्यात्ततश्च ममैकान्तप्रणयी, दुःखं मम जानन्नपि यदुपेक्षसे तदनुचितमिति नायकं प्रत्यभिव्यज्यते ॥ ७४ ॥

## उद्गीतिः

**मध्यः प्रियः कुटुम्बं पल्लीयुवकाः सपत्न्यश्च ।**
**क्षीयन्ते पञ्च तथा, व्याधगृहिण्याः स्तनौ यथैधेते ॥ ७५ ॥**

व्याधनववध्वाः स्तनौ यथा यथा वृद्धिं गच्छतस्तथा तथा—मध्य. कटिः, (यौवनविकासात्) क्षीयते, प्रियो नवयौवनोद्दीप्तकामतया सततसुरतदौर्बल्यात्) क्षीयते। कुटुम्बं, गृहकर्तुर्व्याधस्य नवयौवनायामस्यामासक्ततया

---

वाआइ कि भणिज्जउ केत्तिअमेत्तं व लिक्खए लेहे ।
तुअ विरहे जं दुक्खं तस्स तुमं च्चेअ गहिअत्थो ॥ ७४ [ ६।७१ ]
मज्झो पिओ कुअण्डो पल्लिजुआणा सवत्तीओ ।
जह जह वट्टन्ति थणा तह तह छिज्झन्ति पञ्च वाहीए ॥ ७५ [ ६।९७ ]

अप्रत्यवेक्षणात् क्षीयते । तस्याः पल्ल्याः (भिल्लावासस्य) युवकाः, तदुत्कण्ठया क्षीयन्ते । सपत्न्यस्तु ईर्ष्यया—किं वा नवयौवनासक्ततया पतिकृतप्रणयाभावात् क्षीयन्ते । नवयौवनायामपि गृहिणीपदेन, नवयौवनवशात्तथाऽऽसक्तोऽस्याः प्रियतमो यथा गृहकर्तृत्वं प्रायस्तस्यामेव तिष्ठतीति स्तनोत्कर्षातिशयो ध्वन्यते ॥ ७५ ॥

### आर्यागीतिः

विविधच्छन्दोबन्धै-
दुर्बलमतिदूरदुष्प्रवेशेऽमुष्मिन् ।
'कवितानिकुञ्ज'कविता-
मार्गे कविताण्डवी न भविता शौण्डः ॥ ७६ ॥

नानाविधच्छन्दोबन्धतया दुर्बलमतिभिः पुरुषैरत्यन्तं दुष्प्रवेशे अस्मिन् कवितानिकुञ्जस्वीकृते कवितामार्गे (रचनायाम्), अहं कविरस्मीति केवलं ताण्डवशीलः (नाटनपटुः) कविनामधारी, शौण्डः (चतुरः सफलो वा) न भविता भविष्यति (लुट्) । अस्यां नानाच्छन्दोबन्धविषमायां रचनायां तथा शक्तेरावश्यकता यथाऽस्यां शक्तिशाली भाषायां कृताधिकारश्च कविरेव प्रभवति, न पुनः कविताण्डवकारीति भावः ॥ ७६ ॥





# हिन्दीभाषाव्यवहृतानि छन्दांसि ।

### सोरठा

निखिलनिगमनिश्रेय,–निरवधिनिरुपाधिकगुणा ।
विमलविवेकविधेय,–विनया वाग्देवी जयति ॥ १ ॥

निखिलनिगमैः निश्रेयाः प्रत्येया, निरवधयो निःसीमाः, निरुपाधिका गुणा यस्याः सा । निर्मलविवेकेन विधेयः संपाद्यो विनयः प्रपत्तिर्यस्याः सा, सरस्वती जयति ॥ १ ॥

### दोहा

साम्यवादनिर्वाहणे पटुरुच्यसे न केन?
सर्वे एव दीना जना भूप! भारते येन ॥ २ ॥

हे भारतशासक भूप! 'जगति सर्वे समानाः' इति योयं साम्यवादः तस्य निर्वाहणे केन वा जनेन त्वं पटुः न उच्यसे? अपि तु सर्वैरेव त्वं पटुः कथ्यसे। येन हि भारते सर्वे एव जना दीना जाताः। ये धनिका आसंस्तेपि दीनाः संजातास्ततः कथं वा त्वया साम्यवादो न निर्वाहितः? ॥ २ ॥

### दोही

पटुपदशय्याशोभामहो सुरगिरि गुम्फोऽभ्येति ।
रसिकमनसि मददोहाऽनुगो मधुदोही समुदेति ॥ ३ ॥

सुरगिरि देववाण्यां गुम्फो रचना, निपुणशब्दनिवेशशोभाम् अभ्येति अभिगच्छति। मददोहानुगः मदपूरणानुसारी (रसिकानां मदयिता स गुम्फः), रसिकमनसि मधुपूरको (मधु दोग्धि तच्छीलः, णिनिः) भवति। संस्कृत-

भाषायां गुम्फः, सुन्दरपदशय्यामनुयाति, रसिकचेतसि मधु स्रवन् स मदकारको भवतीति भावार्थः। 'दोहा' 'दोही' इति छन्दोनामसूचनाद्दलावली ॥ ३ ॥

उल्लाल

रतिमति विनमति दयिते भृशम्, सुन्दरि सदया भूरि भव।
तव चिरविरहोन्माथितमहो, उल्लालसमुन्मदनमव ॥ ४ ॥

मानिनीं प्रति सख्या उक्तिः—रतियुक्ते भृशं प्रणमति दयिते हे सुन्दरि! इदानीं अतिसदया भव। तव चिरविरहपीडितम्, अतएव उच्चैर्लालसा यस्य, उद्दीप्तो मदनश्च यस्य ईदृशम् दयितम् अव रक्ष। 'उल्लाल'समित्यत्र छन्दोनामसूचनान्मुद्रा ॥ ४ ॥

उल्लाला

सकलजगज्जीवननिधे
मयि विधेहि करुणां विधे!।
चरणतले पतितं सुतं
न किमवसे दयया द्रुतम् ॥ ५ ॥

सकलजगतां जीवननिधिरूप! हे विधायक भगवन्! किं न अवसे? अपि द्रुतम् अवेत्यर्थः ॥ ५ ॥

तोमर

बलबहलसंभृतहेति, घनघोरघोष उदेति।
रणभीरुभूरिभयाय, बत तुमुलयुद्धमियाय ॥ ६ ॥

बलेन व्याप्तं च तत् संभृतहेति (राशीकृता हेतयः (आयुधानि) यत्र) च इति बहुव्रीह्युत्तरं कर्मधारयः। ईदृश तुमुलयुद्धं स रणभीरूणां भयाय इयाय प्राप। यत्र युद्धे घनवद् घोरो घोष उदेति। युद्धवीरादिविषये एवास्य संग्रहः। अतएवात्र प्रायो विकटा संघटना ॥ ६ ॥

## कज्जल

कामभीक्ष्यतां किञ्चिदेव,
दीनदुर्गतिं दलय देव।
कज्जलमलिनं कृन्धि कर्म
स्वामिन्! यायां येन शर्म ॥ ७ ॥

हे देव! कामं (यदृच्छाया) किञ्चिदेव ईक्ष्यताम्। कज्जलवत् मलिनं (पापम्) कर्म कृन्धि छिन्धि। येन शर्म (कल्याणम्) यायां गच्छेयम् ॥७॥

## चौबोला

वारितमपि मुहुरेतन्मया
चित्त चरसि बहुवित्ताशया।
किमिति पतसि घोरे संकटे
विहर तात सुरसरितातटे ॥ ८ ॥

हे चित्त! मुहुर्वारितमपि, एतत्त्वं बहुधनाशया पर्यन्ते चरसि। अस्मिन् धनसंग्रहस्य घोरे संकटे किमर्थं पतसि। गङ्गातटे विहर, सर्वं परित्यज्य गङ्गातटे विश्राम्येत्यर्थः। सुरसरिता इति भागुरेराप् ॥ ८ ॥

## चौपई

दलितदीनदमनादुदयन्तु। मनसि मोदमपि काममयन्तु ॥
किन्तु कलुषकुलकीलितकान्ति। नैते शुभपरिणतिमुपयान्ति ९

दीनेषु अन्यायकारिणो दृष्ट्वा आह—एते जाल्माः दलितानां दीनजनानां दमनात् उदयं प्राप्नुवन्तु, तेन च मनसि कामं मोदमपि अयन्तु प्राप्नुवन्तु नाम। किन्तु कलुषकुलेन पापभरेण कीलिता नियन्त्रिता कान्तिः शोभा यस्मिन् यथा भवति तथा, एते दुष्टाः शुभां परिणतिं न उपयान्ति। अग्रे एषां शुभः परिणामो न भविष्यतीति भावः ॥ ९ ॥

### चौपाई

पिशुनवदनवल्मीकनिलीना । खलजिह्वाभुजगीह नवीना ॥
दशति दूरतोपि हि विहरन्ती । चित्रं या सुजनान्विदहन्ती १०

पिशुनवदनमेव वल्मीकं सर्पविलस्तस्मिन् निलीना गुप्ता । अन्या भुजगी बहिर्निःसृत्य दशति, इयं तु वल्मीके गुप्तैवेति व्यतिरेकः । विदहन्ती ज्वलयन्ती पीडयन्तीति यावत् । विहरन्ती विहारं कुर्वती सती दूरतोपि दशति । तस्याः किल विहारोऽन्यस्य तु मरणमिति भावः । सामान्यभुजगीतोयं विशेषश्चित्रपदेन सूच्यते ॥ १० ॥

### अरिल्ल ( पादाकुलकभेदः )

परममधुरपदपुञ्जपवित्रा । निर्भरभावविभूतिविचित्रा ।
सकलसनातनसूरिसनाथा । जयति विबुधवाणीगुणगाथा ॥११॥

अतिमधुरेण पदसमूहेन पवित्रा, पूर्णं यद्भाववैभवं तेनाद्भुता । प्राचीनैः सूरिभिः सनाथीकृता विबुधवाण्याः ( संस्कृतस्य ) गुणगाथा जयति । अन्यासु भाषासु पदमाधुर्यम्, भावगाम्भीर्यम्, अतिप्राचीनत्व च नास्तीति साकूतं सूच्यते ॥ ११ ॥

### पद्धरि

श्रीकृष्णचन्द्र व्रजपतिकिशोर !
राधामुखेन्दुचञ्चलचकोर ।
अयि सकलसूरिगुणनीयगाथ
मम मनसि सर्वदा विहर नाथ ॥ १२ ॥

राधामुखचन्द्रस्य कृते उत्कण्ठितचकोरायित ! सकलकविभिः गुणनीया ( आवर्तनीया ) कथा यस्य तत्सम्बुद्धौ ॥ १२ ॥

### भुजङ्गम

दारुणदुःखैर्देहदशा परिहीयते
चेतसि चिन्ताचिता चटुलमुपचीयते ।

पद्मनाभ पतितोऽसि पदे तव, दृश्यतां
मञ्जुनाथनिगमेऽद्य नाथ न विमृश्यताम् ॥१३॥

हीयते प्रतिदिनं हीना भवति । चेतसि चिन्तारूपा चिता, चञ्चलं यथा स्यात्तथा वर्द्धते, चिन्तासंतापः सततं वर्द्धत इत्यर्थः । हे नाथ मञ्जुनाथस्य निगमे न्याये उद्धार इति यावत् । न विचार्यतां त्वरितमयं जन उद्ध्रियतामित्यर्थः ॥ १३ ॥

रोला

सरससरोजाक्षिप्तमना विहरस्यनुगोदम्
मत्तमधुव्रत! मनसि मुधा बत विन्दसि मोदम् ।
सुभगसरोलावण्यलोलुपो लोठसि सलिले
किन्तु कदाचिन्निगडभयं भविता किल कमले ॥१४॥

हे मधुव्रत! सरोजेन आक्षिप्तम् आहृतं मनो यस्य स त्वम्, गोदाम् (गोदावरीम्) अनु अनुगोदं विहरसि । मनसि मृषा आनन्दं धारयसि । त्वं सुभगस्य सरसः (सरोवरस्य) लावण्यलुब्धः सलिले लोठसि, किन्तु अस्मिन् सरोवरकमले कदाचित् त्वत्कृते निगडनस्य (कमलमुद्रणे सति कारावासस्य) भयं भविता भविष्यति (लुट्) ॥ १४ ॥

दिगपाल

माया हि मोहमूलं मा याहि मानसं मे
मा मा प्रमादमेया धेयाः सुभाषितं मे ।
किन्तु प्रमोदमेया माद्यन्मनोमिलिन्दे
वृन्दावनाधिराज्ञीप्रेयःपदारविन्दे ॥ १५ ॥

माया मोहस्य मूलं कारणमस्ति, मे मानसं त्वं तां प्रति मा याहि मा गच्छ । त्वमस्मिन्विषये प्रमादं भ्रमं मा मा एयाः, मा गच्छेः । मम सुभाषितं हृदये धास्यसीति आशासे । लिङ् । किन्तु—माद्यन् आनन्देन मत्तो भवन्,

मनोमधुपो यस्मिन्, ईदृशे, वृन्दावनाधिराज्ञ्या राधायाः प्रेयसः श्रीकृष्णस्य पदारविन्दे प्रमोदं एयाः प्राप्नुयाः ॥ १५ ॥

### हरिगीतिका ( छन्द )

उत्तुङ्गपुरगोपुरनिवेशविशालवीथिधृतोद्धवा
श्रेणीनिबद्धसुचारुविपणिपथेषु जनकलकलरवा।
नृपवाट-वीथि-विटङ्कचारुचतुष्पटीरचितोत्सवा
जहती तुलां जगतीतले जयतीह जयनगरी नवा १६

उत्तुङ्गानां पुरगोपुराणां नगरद्वाराणां निवेशेन, विशालाभिः वीथिभिः (मार्गैः) च धृतः उद्धवो हर्षो यस्यां सा। श्रेणीनिबद्धेषु सुचारुषु विपणिपथेषु (पण्यवीथीषु) क्रयविक्रयौ कुर्वतां जनानां कलकलरवो यस्याम्। राजमार्गैः, वीथिभिः, विटङ्कैर्हर्म्याणामुन्नतभागैः, चारुभिः चतुष्पटीभिः ('चौपड' इति ख्यातैः राजमार्गचतुष्पथैश्च), रचितः उत्सवो यया सा। अमरेण विटङ्कशब्दः "कपोतपालिकायां तु विटङ्क'मिति कपोतस्थितिस्थाने प्रयुक्तः, परमन्यैर्विटङ्कमिव विटङ्कमिति कृत्वा उन्नतभागार्थः प्रयुज्यत इति महापण्डितैर्न विग्रहीतव्यम्। "समस्तसामन्तकिरीटवेदिकाविटङ्कपीठोल्लुठितारुणाङ्गुलि।" इति बाणः। तुलां साम्यं जहती त्यजन्ती (अनुपमा), अत एव नवा, सर्वाभ्यो नगरीभ्यो नवीना, इयं जयनगरी (जयपुरी) पृथिवीतले जयति॥ प्रायस्तदिदं छन्दः १६–१२ मात्राणां यत्या प्रयुज्यते, परं नात्र यतेरपेक्षेति दर्शितमत्र। प्रमाणमत्र सहृदयानां स्वभावविदग्धौ कर्णावेवेत्यलम्॥ १७॥

### मरहठा

अयि दीनदुःखहर सकलसौख्यकर!
दयया दृशमिह देहि
करुणावरुणालय जनितजनाभय
सपदि सदयमवधेहि।

पदपङ्कजसद्मनि संनतसङ्गिनि
पतितमेतमवयाहि
अयि दीननाथ तव मञ्जुनाथमिम-
मुद्धर न किल जहाहि ॥ १८ ॥

इह अस्मिन्दीने दयया दृष्टिं देहि। जनितं जनानाम् अभयं येन तत्स-म्बुद्धौ। ममोद्धारे सपदि शीघ्रं सदयम् अवधेहि अवहितो भव। सामान्य-पातकिवन्नास्मि, अत एव अवहितो भूत्वा उद्धारे प्रवर्तस्व, महापातकित्वं ध्वन्यते। संनतानाम् (प्रणतानाम्) सङ्गिनि सहायके, तव पदपङ्कजरूपे गृहे पतितम् एतम् (माम्) अवयाहि जानीहि पश्येति यावत्। चरणक-मले गृहत्वरूपणेन, पतितानां निराश्रयाणां च तव चरणमेवाश्रयस्थानमिति ध्वन्यते। तव (तुभ्यमात्मानं समर्पितवन्तमित्यर्थः।) इमं मञ्जुनाथम् उद्धर, न जहाहि न त्यज ॥ १८ ॥

चवपैया

अयि सुखलवलालस प्रियसख मानस
मम मतिरिह यदि नेया
तर्ह्यलमभिरामे कीलितकामे
रामे मतिरुपधेया।
यत्राऽऽहितचापे दनुजदुरापे
देवा दर्पमविन्दन्
ते कुपितकपीशा नद्धनदीशा
रावणविभवमभिन्दन् ॥ १९ ॥

अयि मानस! मम संमतिः, इह अस्मिन्विषये यदि नेतव्या, तर्हि अलं पर्याप्तं यथा स्यात्तथा अभिरामे (सुन्दरे) अतएव कीलितकामे शोभया

नियन्त्रितः कामदेवो येन तस्मिन्, रामचन्द्रे मतिः-उपधातव्या स्थापयितव्येत्यर्थः। गृहीतधन्वनि, दनुजैः दैत्यैः पराक्रमद्वारा दुष्प्रापे यत्र यस्मिन् रामे देवा दर्पमगच्छन्। रामशौर्ये देवानां गर्व आसीदिति भावः। नद्धः सेतुना बद्धः नदीशः समुद्रो यैस्ते, कुपिताः कपीशाः कपिकुञ्जराः रावणोत्कर्षम् अभिन्दन् अचूर्णयन् ॥ १९ ॥

## आल्हा ( वीर )

वीरभूमिभारतबलगाथा-
मवगच्छसि किं पृच्छसि भूरि
भुवि बभूवुरेतादृशवीरा
यश इह येषां भुवनविपूरि।
सुभटभीष्मभीमार्जुनवैभव-
महह भूतले को न वयाति
येषामायतमाल्हगीतिरपि
रसिकमनःप्रमदं विदधाति ॥ २० ॥

वीरभूमेः भारतस्य बलकथाम् त्वम् जानासि पुनः भूरि किं पृच्छसि? येषां वीराणां यशः, भुवनानि विपूरयति व्याप्नोति तादृशम् अस्ति। पूरयतेर्णिनिः। सुभटानाम् भीष्मादीनां वैभवं माहात्म्यं भूतले को वा न अवयाति अवगच्छति? भागुरेर्मते 'अव' घटितस्याकारस्य लोपः। येषां भीष्मादीनाम् आयतं दीर्घं यथा स्यात्तथा गीयमाना, आह्लच्छन्दोबद्धा गीतिरपि रसिकानां मनःप्रमोदं करोति। तेषां प्रत्यक्षशौर्यस्य का कथा, आल्हाच्छन्दोभिर्गीयमाना येषां गीतिरपि सहृदयानुन्मादयतीति भावः। वीरविषये प्रायः प्रायुज्यत ॥ २० ॥

### त्रिभङ्गी

यमुनातटचारी विपिनविहारी
सुरसुखकारी दृशमयताम्
वृन्दावनवासी वेणुविलासी
सुकृतिविकासी संनयताम् ।
यो विभवविधायी रुचिपरिचायी
वाञ्छितदायी स्मृतिमयतां
स हि ललितत्रिभङ्गी निजजनसङ्गी
रतिरसरङ्गी मयि दयताम् ॥ २१ ॥

दृशम् अयताम्, दृष्टिम् आगच्छतु दृग्गोचरो भवत्वित्यर्थः । सुकृतिनः पुण्यवतो लोकान् विकासयति उन्नमयति सः । संनयताम् मयि संनतः अनुकूलो भवतु । रुचि परिचिनोति भक्ति परीक्षते सः । स्मृतिम् अयतां स्मरणं कुर्वताम् इति यावत् । निजजनसङ्गी भक्तसहायकः । रतिरसे शृङ्गाररसे रङ्गोऽनुरागो यस्य सः । ललितत्रिभङ्गी श्रीकृष्णः मयि दयताम् ॥ २१ ॥

### करखा

स्तम्भमवपाट्य, मदजृम्भितनिनादमय-
मुम्भितदिगन्तमवतारमैषीत्
हेलितहिरण्यकशिपूरसि नखैरहह
यो हि निजवीर्यमुत्स्फुटमनैषीत् ।
येन भक्ते हि निरमायि करुणा किमपि
मत्तपितृदत्तपरिपूर्णपीडे
दैत्यदलदारुदववह्निमहमह्नि निशि
दुष्टजनजिह्मनरसिंहमीडे ॥ २२ ॥

नियन्त्रितः कामदेवो येन तस्मिन्, रामचन्द्रे मतिः-उपधातव्या स्थापयितव्येत्यर्थः। गृहीतधन्वनि, दनुजैः दैत्यैः पराक्रमद्वारा दुष्प्रापे यत्र यस्मिन् रामे देवा दर्पमगच्छन्। रामशौर्ये देवानां गर्व आसीदिति भावः। नद्धः सेतुना बद्धः नदीशः समुद्रो यैस्ते, कुपिताः कपीशाः कपिकुञ्जराः रावणोत्कर्षम् अभिन्दन् अचूर्णयन् ॥ १९ ॥

आल्हा ( वीर )

वीरभूमिभारतबलगाथा-
मवगच्छसि किं पृच्छसि भूरि
भुवि बभूवुरेतादृशवीरा
यश इह येषां भुवनविपूरि।
सुभटभीष्मभीमार्जुनवैभव-
महह भूतले को न वयाति
येषामायतमाल्हगीतिरपि
रसिकमनःप्रमदं विदधाति ॥ २० ॥

वीरभूमेः भारतस्य बलकथाम् त्वम् जानासि पुनः भूरि किं पृच्छसि? येषां वीराणां यशः, भुवनानि विपूरयति व्याप्नोति तादृशम् अस्ति। पूरयतेर्णिनिः। सुभटानाम् भीष्मादीनां वैभवं माहात्म्यं भूतले को वा न अवयाति अवगच्छति? भागुरेर्मते 'अव' घटितस्याकारस्य लोपः। येषां भीष्मादीनाम् आयतं दीर्घं यथा स्यात्तथा गीयमाना, आल्हच्छन्दोबद्धा गीतिरपि रसिकानां मनःप्रमोदं करोति। तेषां प्रत्यक्षशौर्यस्य का कथा, आल्हाच्छन्दोभिर्गीयमाना येषां गीतिरपि सहृदयानुन्मादयतीति भावः। वीरविषये प्रायः प्रायुज्यत ॥ २० ॥

### —ऋ त्रिभङ्गी ऋ—

यमुनातटचारी विपिनविहारी
सुरसुखकारी दृशमयताम्
वृन्दावनवासी वेणुविलासी
सुकृतिविकासी संनयताम् ।
यो विभवविधायी रुचिपरिचायी
वाञ्छितदायी स्मृतिमयतां
स हि ललितत्रिभङ्गी निजजनसङ्गी
रतिरसरङ्गी मयि दयताम् ॥ २१ ॥

दृशम् अयताम्, दृष्टिम् आगच्छतु दृग्गोचरो भवत्वित्यर्थः । सुकृतिनः पुण्यवतो लोकान् विकासयति उन्नमयति सः । संनयताम् मयि संनतः अनुकूलो भवतु । रुचि परिचिनोति भक्तिं परीक्षते सः । स्मृतिम् अयतां स्मरणं कुर्वताम् इति यावत् । निजजनसङ्गी भक्तसहायकः । रतिरसे शृङ्गाररसे रङ्गोऽनुरागो यस्य सः । ललितत्रिभङ्गी श्रीकृष्णः मयि दयताम् ॥ २१ ॥

### —ऋ करखा ऋ—

स्तम्भमवपाट्य, मदजृम्भितनिनादमय-
मुम्भितदिगन्तमवतारमैषीत्
हेलितहिरण्यकशिपूरसि नखैरहह
यो हि निजवीर्यमुत्स्फुटमनैषीत् ।
येन भक्ते हि निरमायि करुणा किमपि
मत्तपितृदत्तपरिपूर्णपीडे
दैत्यदलदारुदववह्निमहमह्नि निशि
दुष्टजनजिह्मनरसिंहमीडे ॥ २२ ॥

यः अयं ( नरसिंहः ) स्तम्भम् अवपाट्य विदार्य, मदेन जृम्भितः उपचितः निनादः गर्जना यस्मिन् कर्मणि यथा भवति, उम्भितः पूरितः, ('उभ उम्भ' पूरणे ) दिगन्तो यस्मिन् कर्मणि यथा भवति तथा च, अवतारम् ऐषीत् प्राप। यो ह्येवंप्रकारेण अवततारेत्यर्थः। यः हेलितस्य तिरस्कृतस्य हिरण्यकशिपोः उरसि, नखैः निजवीर्यम् अतिप्रकटं अनैषीत् निनाय। मदमत्तेन पित्रा ( हिरण्यकशिपुना ) दत्ता परिपूर्णा पीडा यस्मै ईदृशे, भक्ते ( प्रह्लादे ) येन नरसिंहेन, अनिर्वचनीयं यथा स्यात्तथा करुणा निरमायि अक्रियत। दैत्यसमूहरूपस्य दारुणः ( काष्ठस्य ) कृते दववह्नि दावानलसदृशम्, दुष्टजनानां कृते जिह्मं वक्रम्, ईदृशं नरसिंहम् अहम् अह्नि दिने निशि च ईडे स्तवीमि। पूर्वोक्तप्रभावं नृसिंहदेवमहमहर्निशं ध्यायामीति भावः ॥२२

## झूलना

लोकललितोदया देवदलकृतदया
दनुजदलनाय या जगति जाता
या तु परितोषिता दिशति गुणपोषिता-
मिह हि किल रोषिता को विधाता।
भक्तिभरनिर्भरे चरणयुगपरिचरे
मञ्जुनाथान्तरे याऽनुयाता
जगति जनजयकरी नियतिनवलिपिकरी
जयति वागीश्वरी लोकमाता ॥ २३ ॥

लोकेभ्यो ललितः आनन्दकरः उदयः ( जन्म ) यस्याः सा। देवसमूहे कृता दया यया। दैत्यानां दलनाय या जाता अवतीर्णा। परितोषिता प्रसादिता या, गुणपोषिताम् ( गुणान् पुष्णाति वर्द्धयति ताम् ) ददाति। यत्र परितुष्टा भवति, इह ( अस्मिन् मनुष्ये ) रोषिता रोषकारको विधाता कः? तद्भक्तस्य ब्रह्मापि अनिष्टं कर्तुं न समर्थ इति भावः। भक्तिपूर्णे चरणयुगसेवके मञ्जुनाथस्य हृदये या सदास्थायिनी। जगति जनानाम् ( निजभक्तानाम् )

जयकरी। नियतेः विधेरपेक्षया नवां लिपिं करोति तादृशी। विधाता यादृशीं भाग्यलिपिं लिखति ततो विलक्षणां लिपिं लिखति। अयोग्यमपि सुयोग्यं कर्तुं समर्थेत्याशयः ॥ २३ ॥

### वरवै

सदसि सुमनसां मा व्रज तात।
व्रज वा हयमुखदयया ऽनया ऽनुयात! ॥ २४ ॥

हे तात! पण्डितानां सभायां मा गच्छ। (पुनः स्मरणं कृत्वा) अथवा अनया हयग्रीवस्य कृपया अनुयात! त्वं व्रज! तवोपरि भगवतो हयग्रीवस्यानुग्रहोऽस्ति, अतएव पण्डितानां सभायां निःशङ्कं त्वं व्रजेत्याशयः। हयवदनानुग्रहेण समग्रां सभामपि विजेतुं जनः समर्थो भवतीति ध्वन्यते ॥२४॥

### अतिवरवै

निखिलनिगमनिष्णाते ननु किमनुगृणामि?।
परमिह हरिपरिचर्यामयि भूरि भणामि ॥ २५ ॥

निखिलशास्त्रपण्डिते त्वयि किं वा कथयामि? परम् इह (जगति) अयि! (पण्डित!) अहं हरिपरिचर्यां अधिकां कथयामि। सर्वशास्त्रपण्डितेऽपि एतावन्मात्रं सारभूतं निवेदयामि यद् भगवद्भक्तिः सर्वतः श्रेयसी अस्तीत्याशयः ॥ २५ ॥

### कुण्डलिया

चन्दन! नन्दयसे सदा सुखसौरभविसरेण।
शीतलयसि लोकानहो निजनिरुपमविभवेन ॥
निजनिरुपमविभवेन लोकनिटिलानारोहसि।
हृदयदेशमधिगम्य हन्त सन्तापमपोहसि ॥
तदपि तात घनघर्षणानि सहसे जननन्दन!
धन्यधन्यमिह लोकहितं चरितं तव चन्दन ॥ २६ ॥

हे चन्दन! सुखकारकेण सौरभपूरेण सर्वदा लोकान् आनन्दयसि। निजेन असामान्येन विभवेन (माहात्म्येन) च लोकान् शीतलान् करोषि। तत्करोतीति णिच्। लोकानां निटिलान् ललाटान् आरोहसि। जनस्य हृदयदेशम् अधिकृत्य सन्तापं (ग्रीष्मभवं तापम्) दूरीकरोषि। निजोत्कर्षेण लोकानां शिरसि, हृदये च त्वमधिकारं करोषीत्यर्थः। चन्दनं हि ललाटे हृदये च धार्यत इत्याशयः। तदपि (एवम् उत्कर्षशालित्वेपि) जनानाम् आनन्दनोपि त्वम्, पाषाणफलके घनानि घर्षणानि मर्षयसि। अतएव हे चन्दन! लोकेभ्यो हितं तव चरितं अतिधन्यम्। स्वयं कष्टान्यपि सहमानस्त्वं लोकहितमाचरसीत्याशयः ॥ २६ ॥

## —॥ अमृतध्वनिः ॥—

भास्वत्कुलधर-धरणिपतिमण्डन माधवभूप!
जय जयपुरपालनचतुर उद्यद्दिनमणिरूप ॥
उद्यद्दिनमनुयुध्यद्रिपुदलबुध्यद्बलभर!
तिर्यग्भ्रकुटिविनिर्यद्विशिखविजीर्यद्रिपुहर ॥
भ्राजद्विभवविराजज्जयपुरराजद्द्युतिकर।
शश्वद्रुचिरविवस्वद्रुचिकरभास्वत्कुलधर! ॥ २७ ॥

भास्वतः सूर्यस्य वंशधराः ये धरणिपतयस्तेषां मण्डन! श्रेष्ठत्वादलङ्कारभूत! हे माधवसिंह भूप! त्वं जय ॥ अग्रे माधवेन्द्रस्य संबोधनानि। उद्यन् उद्गच्छन् यो दिनमणिः (सूर्यः) तस्य रूपमिव रूपं यस्य तत्सम्बुद्धौ। उद्यत् दिनम् अनु, दिनोदयम् अनुलक्ष्य, युध्यत् यत् रिपुदलम् (सैन्यम्) तस्मिन् रिपुदले प्रबुध्यन् (उद्दीप्यमानः) बलभरो यस्य तत्सम्बु०। सायंकाले युद्धसमाप्त्यवसरे, परिश्रान्ते शत्रुदले, सर्वस्यैव पराक्रमः संभवेत्, परं तव दिनारम्भे एव अभिनवोत्साहे रिपुदले बलभरः प्रबुध्यते इति शौर्यातिशयो द्योत्यते। युद्ध्यत् इति, युधमात्मन इच्छतीति क्यचा, बुध्यत् इति तु अनुदात्तेत्त्वलक्षणस्य आत्मनेपदस्यानित्यतया वोध्यं महापण्डितैः। तिर्यग्-

भ्रुकुटिरेव विनिर्गच्छन् विशिखः ( बाणः ), तद्द्वारा विजीर्यतां जीर्णत्वं प्राप्नुवतां रिपूणां हर ( नाशक! ) । यदा त्वं समरे किञ्चिन्मात्रक्रोधात् भ्रुकुटिलतां वक्रां करोषि, सैव बाणरूपा भूत्वा रिपून् हरति—इत्याशयः । भ्राजन् सर्वोत्कर्षेण विद्यमानो विभवः ( राजसम्पत्तिः ) येषाम् ईदृशाः ये जयपुरराजाः ( पूर्वं सिंहासनारूढा जयपुरनरेशाः ), तेषां राज्ञां द्युतिकर! निजदयादाक्षिण्यगुणैः शोभाकारक! शश्वद् रुचिरम् सदामनोहरम्, विवस्वद्वत् ( सूर्यवत् ) कान्तिकरम्, यद् भास्वत्कुलम् ( सूर्यवंशः ) तस्य धर! धारक!! इदं प्रायो वीरवर्णनास्वेव कविभिरादीयत इति सूचितम् ॥ २७ ॥

## छप्पय

विशदमौलितलविलसदिन्दुखण्डामलमण्डित!
प्रचितचण्डपाखण्डखण्डखण्डनवरपण्डित ।
पीवरशुण्डाचण्डदण्डदण्डितदुरिताकर!
पाण्डुरकुण्डलिकलितललितयज्ञोपवीतधर!
जय एकदन्त विपदन्तकर लम्बोदर गिरिजातनय!
सिन्दूरशोणरुचिशुचिवदन मदनमथनतनुजात जय ॥ २८ ॥

सुन्दरमौलितले विलसता इन्दुखण्डेन अमलं यथा स्यात्तथा मण्डित! इति लम्बोदरस्य सम्बोधनम् । प्रचितः सङ्घीभूतो यः पाखण्डसमूहस्तस्य खण्डने वरपण्डित! पीवरशुण्डारूपेण प्रचण्डदण्डेन दण्डिताः दुरितसमूहाः येन तत्सम्बो० । पाण्डुरकुण्डलिना श्वेतसर्पेण कलितस्य निर्मितस्य ललितस्य यज्ञोपवीतस्य धर धारक! विपदाम् अन्तकर नाशक! सिन्दूरेण शोणा रक्ता या कान्तिस्तया शुचिवदन सुन्दरमुख! हे मदनमथनतनुजात! हे शिवपुत्र जय । पाखण्डखण्डन—विपदन्तकरादिविशेषणैः अखिलविघ्नविध्वंसकतया वीरायितानुभावस्य श्रीगणेशस्य तादृशैरोजोव्यञ्जकैरक्षरैरेव वर्णनम् । प्रसिद्धं च छप्पयच्छन्दसस्तादृगेवोपनिबन्धनम् । अत एव पाखण्ड—दुरित—निग्रह-प्रकरणे, ओजोऽनुकूलैरक्षरैः समासैश्चोपनिबन्धनम् । भगवतः श्रीगणेशस्य

स्मरणे तु देवतानुभावस्यैवोदयात् मृदुलो गुम्फ इति बोध्यम्। विघ्नविध्वंसने साभिप्रायाद्द्विपदन्तकरपदात् प्रतीतेन परिकरालङ्कारेणालङ्कृतो देवविषयको रतिभावो व्यङ्ग्यः ॥ २८ ॥

—❀ मोतियदाम ❀—

विनन्दतु नीलसरोरुहचारु
पदद्वयमुक्तिविकासनकारु।
यतः किल कीलितकुण्डलिधाम
व्यभादिव मञ्जुलमौक्तिकदाम ॥ २९ ॥

नीलसरोरुहवत् चारु (मनोहरम्), उक्तीनां विकासने (अधिकाधिकसमुल्लासे) कारु शिल्पि, पदद्वयम् श्रीभगवत्याश्चरणयुगलम्, विनन्दतु समृद्ध्यतु जयत्विति यावत्। यतः यस्मिन् चरणद्वये (सार्वविभक्तिकस्तसिः) कीलितं नूपुरभावेन योजितं कुण्डलिनां सर्पाणां धाम तेजः। मञ्जुलं मौक्तिकदाम इव मुक्तास्रगिव व्यभात् अशोभत। यस्मिन् चरणयुगले सर्पाणामाभूषणानि सन्ति, कवितासमुल्लासे च यत् शिल्पि, सुदक्षमिति यावत्। तत् विजयतामित्याशयः। छन्दसोपि नामसूचनान्मुद्रा ॥ नूपुरधारणस्य आद्यं कालं विवक्षित्वा भूतकालनिर्देशः ॥ २९ ॥

॥ अथ सवैयास्तबकः ॥

तत्र पूर्वं

—❀ मदिरा [ मालिनी, उमा, दिवा ] ❀—

वाचमुदीरयते विकलां,
न किलाङ्घ्रिबलेन गतिर्गदिता
कार्यमकार्यमवैति न वै,
मुखवैकृतरीतिरसौ विदिता।

स्पष्टमवैषि हि मञ्जुलनाथ !
निजोदितविस्मृतिरुत्स्फुटिता
नेयमहो मदिरा मदिरा,
मदिरा धनदर्पिततता कथिता ॥ ३० ॥

यस्या दर्पमदिरायाः पानात्—जनः विकलां मध्ये मध्ये स्खलितां वाचं कथयति । अङ्घ्रिबलेन निजचरणबलेन, गतिः न किल कथिता । मद्यपायिनश्चरणौ विस्खलत इति चरणबलेन गमनं नास्ति । धनदर्पमदिरातोपि निजचरणबलेन गमन न भवति, सर्वदा अश्व-शकट्याद्यारोहणात् । कार्यम् अकार्यं च न जानाति । असौ मुखविकारस्य रीतिः विदिता । सर्वदा नानाविधान् मुखविकारान् करोतीत्याशयः । द्वयोरेव मदिरयोर्मध्ये नानाविधमुखचेष्टाः प्रसिद्धाः । हे मञ्जुलनाथ ! त्वं स्पष्टम् अवैषि ( जानासि ) यत् निजोदितस्य स्वयं कथितस्य वृत्तान्तस्य विस्मृतिः उत्स्फुटिता संजाता । स्वयं कथितमपि उभयमदिरामत्तौ विस्मरतः । अतएव, इयं प्रसिद्धा मदिरा मदिरा नास्ति, किन्तु धनदर्पिततता मदिराऽस्ति । ( धनदर्पोऽस्यास्तीति धनदर्पितः तद्भावः ) । पर्यस्तापह्नुतिः ॥ ३० ॥

## सुमुखी [ मानिनी, मल्लिका ]

सहासमुखीं सुमुखीमुपलभ्य
मुधैव दधौ विजनप्रियताम्
हृदीच्छति तन्मधुपानसुखं
भजतेऽभिमुखं तु मृषाऽक्रियताम् ।
अये मम मञ्जुलनाथ सखे !
भिमुखेपि विलोचनमुच्छ्रियतां
इहालिनि मानिनि मल्लिकया हि
कया विधया रतिराद्रियताम् ॥ ३१ ॥

मल्लिकायां वर्तमानस्य मधुपस्य वृत्तं वर्णयति—सहासं मुखं यस्याः, हसन्तीं सुमुखीम् ( एनाम् मल्लिकाम् ) प्राप्य, मुधैव विजनप्रियतां दधौ। विकसितामपि मल्लिकां संमुखे प्राप्य, मानवशात् स्वस्य एकान्तप्रियतां दर्शयति। तस्याः सकाशाद्विजने गच्छतीत्याशयः। हृदि तस्याः मधुपानसुखम् इच्छति, प्रकाशं तु मृषैव अक्रियतां क्रियाशून्यतां भजते। मकरन्दपानं वाञ्छन्नपि उपरितो निश्चेष्टतामभिनयतीत्याशयः। हेम ञ्जुनाथ! संमुखेपि नेत्रम् उच्छ्रियताम् उन्मील्यताम्। संमुखस्थं मधुप–मल्लिकावृत्तं दृश्यतामित्यर्थः। किं तदाह—मल्लिकया, मानिनि मानयुक्ते अलिनि, कया विधया केन वा प्रकारेण रतिः ( प्रेम ) आद्रियताम् स्वीक्रियताम्? मल्लिकया बहुधा प्रसाद्यमानोपि नायमनुनयं गृह्णातीत्यर्थः ॥ २१ ॥

मत्तगयन्द [ मालती, इन्दव ]

जन्मनि नेह कृतं सुकृतं
दुरितानि तु दीनमिमं दमयन्ते
दुर्गुणदुर्गमवेत्य हि मां
परिवृत्तधियः सुधियस्तृणयन्ते।
नाथ न पश्यसि किं नु? जना
बत मञ्जुलनाथमनाथमयन्ते
देहि सशोकशिशोरवने
व्रजराजकिशोर! कटाक्षकणं ते ॥ २२ ॥

मया इह ( अस्मिन् ) जन्मनि सुकृतं न कृतम्। दीनम् इमम् ( माम् ) दुरितानि अभिभवन्ति। मां दुर्गुणानां दुर्गम् ( दृढं रक्षास्थानम् ) अवेत्य ज्ञात्वा, परिवृत्ता मत्तः परावृत्ता धीर्येषां ते सुधियः सज्जना मां तृणवत् ( तिरस्कारयोग्यं ) कुर्वन्ति। तत्करोतीति णिच्। दुर्गपदेन दुर्गे यथा निर्भयं निवसन्ति तथा मयि पातकानि निवसन्तीत्यात्मनः सदोषत्वातिशयो ध्वन्यते। हे नाथ त्वं किं न पश्यसि? जना मञ्जुलनाथम् ( माम् ) अनाथं

अयन्ते जानन्ति । तव गृहीताश्रयमपि मां लोका अनाथं ज्ञात्वा खेदयन्तीत्याशयः । सशोकस्य अस्य शिशोः (मम) अवने रक्षणे तव कटाक्षलवमपि देहि । चतुर्थे शिशोर किशोर इति प्रासचमत्कारः ॥ ३२ ॥

चकोर

दुर्भरदम्भभृतं सुतमां
वत मामिह सूरिषु को न निनिन्द ?
भूरि भयेन विरौमि तमा-
मयि मञ्जुलनाथ दयां मयि विन्द ।
दुर्भग-दीन-दरिद्र-कृते
प्रथिता तव वत्सलता यदुनन्द !
निन्दसि किं ननु नन्दय मां
मतिमन्दमिमं दययैव मुकुन्द ॥ ३३ ॥

सुतमाम् अत्यन्तम् ( सु इत्यव्ययात्तमप् ) दुर्भरेण दंभेन भृतम् माम्, विद्वत्सु को न निनिन्द ? अपि तु सर्वे एव निन्दन्तीत्यर्थः । अहं भयेन अत्यन्तं रोदिमि, अत एव हे मञ्जुलनाथ (हरे) मयि दयां भज । दुर्भगानां दीनानां दरिद्राणाम् ( द्रव्यरहितानाम् ) कृते । यदून् नन्दयतीति तत्सम्बुद्धौ । हे मुकुन्द ! मां किं निन्दसि, मतिमन्दम् इमं माम् तव दययैव नन्दय सुखितं कुरु । मत्सविधे पुण्यबलं तु नास्ति । तव दयामेवालम्ब्य आनन्दितो भवितुमिच्छामीति निःसाधनतां सूचयित्वा भगवदनुग्रहः प्रार्थ्यते ॥ ३३ ॥

दुर्मिल [ चन्द्रकला ]

घनसारसुधासितयद्यशसा
वसुधा परितो भरितातिमदा
अपि भानुकुलोज्ज्वलकल्पलता
भरिता यमवाप्य न माति कदा ?

वत मञ्जुलनाथमनोघटना
प्रमना यमवेक्ष्य न माति मुदा
मतिमानवनीन्द्रगुणैर्द्युतिमा-
निह माननृपः परिभाति सदा ॥ ३४ ॥

घनसारः कर्पूरः, सुधा पीयूषं तद्वत् सितेन यस्य यशसा, वसुधा समन्ततः। भरितः अतिमदः ( अत्यानन्दः ) यस्याः सा। अतिसुखितासीत्याशयः। भानुकुलरूपा उज्ज्वला कल्पलतापि यं माननरेन्द्रं प्राप्य भरिता ( फलपुष्पादिपूर्णा ) सती कदा वा न भाति? अपि तु सर्वदा भातीत्यर्थः। मञ्जुलनाथस्य ( कवेः ) मनोरचनाऽपि यं मानभूपालमवेक्ष्य प्रमनाः उत्कण्ठिता सती मुदा हर्षेण स्वात्मनि न माति। रचना शतमुखी भूत्वा प्रवर्तेत इत्याशयः। मतिमान्, अवनीन्द्रोचितैः गुणैः द्युतिमान्, माननृपः इह जयपुरराजसिंहासने सर्वदा शोभते ॥ ३४ ॥

❀ मुक्तहरा ❀

दृशोरुपगच्छति मे तिमिरं
बधिरं श्रुतियुग्ममिहायसि नैव
शनैरपगच्छति चेतनता
भवतारण! सम्प्रति धावसि नैव?
क्षणादयि देव तनुर्निपते-
दधुना तु विहातुमिहार्हसि नैव
अये मम संविरतेः समयेऽपि हि
नाथ! नयेन निभालसि नैव ॥ ३५ ॥

अन्तसमये भगवतः प्रार्थना—मम दृशोः ( नेत्रयोः ) तिमिरम् ( अन्धकारः ) आगच्छति। हे भगवन्! त्वं मम बधिरं श्रुतियुग्मं ( कर्णद्वयम् ) न अयसि जानासि। अहं श्रोतुमपि न पारयामीति त्वं न जानासि। कटीति

प्रश्लिष्टस्य रूपम् । मम चेतनता क्रमक्रमेण अपगच्छति । हे भवतारण? इदानीमपि नैव धावसि ? अस्मिन् करुणसमये तु अवश्यं मम रक्षणार्थं तव धावनं योग्यमस्तीत्याशयः । अधुना तु मां विहातुम् नैव अर्हसि । अये नाथ मम संविरतेः (उपरामस्य, लोकान्तरगमनस्येत्यर्थः) समयेऽपि, नयेन दयानुकूलेन न्यायेन, माम् न निभालसि न पश्यसि ? इदानीं तु दयामार्गमवलम्ब्याहं विलोकनीय इत्याशयः । भ्वादेराकृतिगणत्वाद् 'भाल' धातुः संग्राह्यो महापण्डितैः । चुरादिरप्ययं प्रयुज्यते ॥ ३५ ॥

वाम [ मञ्जरी, मकरन्द, माधवी ]

नदन्ति गृहे मददन्तिघटा
विसृजन्ति जनोपरि दानपयोदम्
भरन्ति गुणैर्भुवनानि मना-
ग्विहरन्ति मनोज्ञवनेष्वनुगोदम् ।
वहन्ति मनोरमकाव्यकलां
तव दासजना जनयन्ति विनोदं
त्वदन्तिकतो हि जयन्ति ! शिवे
घटयन्ति समस्तमियन्ति समोदम् ॥ ३६ ॥

गृहे मदयुक्तानां दन्तिनां घटा नदन्ति । जनोपरि दानरूपं मेघं विसृजन्ति वर्षन्ति । निजगुणैर्भुवनानि पूरयन्ति । गोदाम् अनु ( गोदावरीनदीतटे ) मनोज्ञेषु वनेषु विहरन्ति । गोदावरीतटं प्राकृतिकसौन्दर्यार्थं प्रसिद्धम् । तव दासजनाः मनोरमां काव्यरचनारूपां कलां वहन्ति, अत एव आत्मनः अन्येषां च मनोविनोदं जनयन्ति । हे जयन्ति शिवे ! ( तव दासजनाः ) त्वदन्तिकात् समस्तं समोदं च यथा स्यात्तथा इयन्ति एतावन्ति ( पूर्वोक्तानि राजत्व–कवित्व–रसिकत्वादीनि ) घटयन्ति सम्पाद-

यन्ति । त्वत्कृपावशादेव सर्वं सांसारिकं वैभवं साधकैः प्राप्यत इत्याशयः ॥ ३६ ॥

अरसात

पातकपुञ्जमपोहयितुं, भुवि
याऽभिययौ व्यपदिश्य भगीरथम्
खेलदवारितवीचिघटा च
जटासु जगाम निमीलितमन्मथम् ।
मञ्जुलनाथ न शोच मना-
गधुनापि पुनाति भवादृशमुद्व्यथं
देवधुनी तव सा विधुनीत
मनोमधुनीतमलीकमनोरथम् ॥ ३७ ॥

गङ्गाया माहात्म्यवर्णनम्—लोकानां पातकपुञ्जमपोहयितुं भगीरथं व्यपदिश्य निमित्तीकृत्य या भुवि अभिययौ आजगाम । भगीरथस्तु व्यपदेशमात्रमासीत् किन्तु लोकानां पातकनिवारणार्थं गङ्गाया भूमावागमनमित्याशयः । खेलन्ती अवारिता ( अप्रतिरुद्धा ) तरङ्गघटा यस्याः ईदृशी या गङ्गा निमीलितमन्मथं समापितकामं शिवं जटासु ( विषये ) जगाम प्राप । हे मञ्जुलनाथ! त्वं मनागपि न चिन्तय, अधुनापि सा गङ्गा भवादृशम् उद्व्यथम् ( उत् उच्चैः व्यथा यस्य तम् ) पुनाति । अतएव सा देवधुनी, मनोमधुना नीतम् ( मनःकल्पितं मधु, मनोमोदकमितिवत् ) तव अलीकं मनोरथं विधुनीत अपनयेत् । त्वया मनःकल्पितसांसारिकमधुवशात् नानाविधो मिथ्या मनोरथः ( विषयवासनारूपः ) प्रसारितोऽस्ति, यद्वशात्त्वं विषयेषु बध्यसे । तथा च गङ्गा तमेव ते विषयाभिषङ्गं दूरीकुर्यादित्याशयः ॥ ३७ ॥

## किरीट

जन्मनि जातु कृतं न हितं, मम
  देवगणो दुरितं किमपोहतु
जाह्नवि ! कं शरणं परियामि
  ममोद्धरणं किल कः परिशोचतु ।
दीनमुपायविहीनमिमं
  दयया परिगृह्य गिरं मम बोधतु
देहविमोकदिने भुवनेश्वरि !
  गात्रमिदं पुलिने तव लोठतु ॥ ३८ ॥

मया अस्मिन् जन्मनि आत्मनः परेषां च हितं न कृतम् । अत एव अकृतहितसाधनस्य मम, देवगणः पातकं कस्माद्दूरीकरोतु ? अपि तु न कुर्यादित्यर्थः । अहं कं देवं शरणत्वेन अभिगच्छामि ? मम उद्धारं को वा देवः परिशोचतु विचारयतु । ममोद्धारस्य कस्यापि देवस्य हृदये शोको नास्तीत्याशयः । इमम् ( माम् ) दयया परिगृह्य स्वीकृत्य, मम गिरं बोधतु शृणोत्विति यावत् । का सा प्रार्थनावाणी तामाह—हे भुवनेश्वरि गङ्गे ! देहत्यागदिने इदं मम गात्रं तव पुलिने लोठतु । तव तीर एव मे प्राणविमोको भवत्विति भावः ॥ ३८ ॥

## सुन्दरी [ मल्ली सुखदानी ]

निजनिर्भरणे निरतः सकलो
  विकलोपरि केन दयाऽऽचरणीया ?
न च धर्ममधर्ममवैति जनो
  धनिलोकमनोऽनुगता धरणीया ।

न सनातनरीतिषु रज्यति कोपि
कथं नु जनैर्द्विजताऽऽदरणीया
अधुना बत मञ्जुलनाथहिते
भवता यदुनाथ कृपा करणीया ॥ ३९ ॥

निजस्य निर्भरणे पूरणे (स्वार्थपूरणे इति यावत्) सकलो जनो निरतस्तत्परः। विकलस्य जनस्योपरि केन दया कर्तव्या? न केनापि दया क्रियत इत्यर्थः। धर्ममधर्मं च कोपि न जानाति। केवलं धनिलोकानां मनसः अनुगता अनुगामिता धरणीया। धनिलोकानां मनसोनुगामित्वं सर्वैराश्रियत इत्यर्थः। यदा प्राचीनरीतिषु कस्यापि अनुरागो नास्ति, तर्हि मम द्विजता (ब्राह्मणता) कैर्जनैः आदरणीया। मां द्विजं ज्ञात्वा क आदरं कुर्यात्। अधुना मञ्जुनाथस्य हिते भवता कृपा कर्तव्या ॥ ३९ ॥

## अरविन्द

अयि देव विलोकय दीनदशां
विवशां विवहामि तनूमवधेहि
तव दर्शनलालसया ह्यनया
हृदि धैर्यमुदेति सुधालवलेहि।
भवदागमनोत्कलिकासु मनो
वितनोति मनोरथकोटिमवेहि
अरविन्दविलोचन नाथ मुकुन्द!
विनन्दय मानसमाकुलमेहि ॥ ४० ॥

आकुलस्य भक्तस्य भगवन्तं प्रति आगमनप्रार्थना—अहम् अवशां तनूं वहामि, इति त्वम अवधेहि। मम तनुरवशा जाता, अतएव अवधानपुर:

स्सरं त्वरितमागच्छेत्याशयः । सुधालेशचुम्बि धैर्यं हृदये उदेति । तव दर्शनलालसामात्रेण हृदये अमृतवन्मधुरं धैर्यं भवति । तव आगमनस्य उत्कण्ठासु मे मनः मनोरथकोटिं वितनोति, त्वं जानीहि । त्वमागमिष्यसीति उत्कण्ठामात्रेण मनसि नानामनोरथाः (एवं प्रणंस्यामि, एवमात्मनो मौलिं चरणे धास्यामि, एवं प्रार्थयिष्ये इत्याद्याः) जायन्ते, त्वल्लाभे तु का दशा स्यादित्युत्कण्ठातिशयो ध्वन्यते । आकुलं मानसं विनन्दय आनन्दय । एहि आगच्छ ॥ ४० ॥

## लवङ्गलता

विहायसि निर्मलरोचिरुदेति,
निरेति तमः, प्रशमः पदमृच्छति
पुरन्दरदिक्प्रमदावदनं
नवरागघनं सुषमामभिगच्छति ।
जगत्स्वपि जागृतिरेति मनागपि
मञ्जुलनाथमनो मुदमिच्छति
उषा भुवनेश्वरभाव-पुषा
वपुषा प्रमदं विदुषामभियच्छति ॥ ४१ ॥

आकाशे स्वच्छं रोचिः (तेजः) उदेति । तमः निर्गच्छति । प्रशमः (शान्तिः) पदं स्थानम् ऋच्छति प्राप्नोति । प्रातःकाले स्वभावतो मनसि शान्तिः पदं करोतीत्याशयः । पूर्वदिग्वधूवदनं उषारागेण नवरागयुक्तं सत् शोभां गच्छति । जगत्सु जागृतिः (जागरणम् उत्थानम्) आगच्छति । 'जागृति.' इति साम्प्रतिकप्रसिद्ध्यनुसारम् । अन्यथा 'जागर्तिः' इति स्यात् । मञ्जुलनाथस्यापि मनः मोदं वाञ्छति । तदपि प्रातःकाले हर्षानुगं भवतीत्यर्थः । उषा प्रातःकालः भुवनेश्वरस्य जगदीश्वरस्य भावं (भक्तिम्)

पुष्णाति (पुष्णातेः क्विप्) तादृशेन, वपुषा स्वशरीरेण, विदुषां (जगदीश्वरमाहात्म्यं विदितवताम्) प्रमदं अभियच्छति ददाति । प्रातःकाले प्रसादेन, स्वत एव जगदीश्वरमहिमानुगतं मनो भवति, आनन्दश्चोदेतीत्याशयः। 'उषा' इति वैदिकः शब्दोपि साम्प्रतं नवशिक्षितैः संस्कृते व्यवहर्तुमारब्धः। दत्ता चेयं विषयसमस्या 'गुरुकुलकाङ्गडीस्थाने' जायमानस्य संस्कृतसाहित्यसंमेलनस्यावसरे गुरुकुलीयैर्विद्वद्भिः ॥ ४१ ॥

## —॥ सुख [ किशोर, कुन्दलता ] ॥—

परिकर्षति कामकषायभरो
विकरोति मदो, मयि मानसमीरय
सुखवासनया ह्यनया परितो-
ऽधरितोस्मि, न नाथ मनागवधीरय ।
वद केन पथा परियामि विभो ?
भवभोगतृषं तरसा बत तीरय
अयि भो भवतारण दुःखविदारण !
जीवितधारणरीतिमुदीरय ॥ ४२ ॥

कामकषायभरः कामवासनासमूहो मां कर्षति, स्वानुकूलं गमयति । मदो विकरोति, मयि विकारमुत्पादयति । हे विभो ! मयि मद्विषये मानसं तव चित्तं प्रेरय । अनया सुखप्राप्तेर्वासना समन्ततः अधरीकृतोस्मि । अतएव अधरितं मां त्वम् न अवधीरय न तिरस्कुरु । शीघ्रं मम भवभोगतृष्णां तीरय समापय । 'पार तीर कर्मसमाप्तौ' । अतएव हे भवसागरात् तारक ! त्वमेव जीवितधारणस्य रीतिम् उदीरय । अहं तु कामवासनादिनानाविधैः शत्रुभिर्व्याकुलीकृतोस्मि, अतएव त्वमेव 'कथमहं जीवितं धारयामी'ति रीतिमुपदिशेत्यर्थः ॥ ४२ ॥

### दण्डकेषु

### नवनीलचक्रम्

प्रत्यहं विदेशिभाववैभवेन संदधाति
हन्त हन्त दोलनं नु धर्मलेशोऽधुना
'हैट-कोट-पैन्टलून-नैकटाइ-' संगमेन
लोपमेव संप्रयाति पूर्ववेषोधुना ।
दृश्यते समन्ततोपि नूतनी प्रवृत्तिरेव
भारतीयभाव एष नामशेषोधुना
संगताः समस्तमान्यपण्डिता विचारयन्तु-
मेष केन वाऽध्वना प्रयातु देशोऽधुना ॥ ४२ ॥

वैदेशिकभावानां प्रभावेण धर्मलेशोऽधुना दोलनं संदधाति । वैदेशिकभावप्रभावात् साम्प्रतं लेशतोपि वर्तमानो धर्मश्चलविचलतां दधातीत्यर्थः । हैटादयो वैदेशिकवस्त्राणि । धर्मश्चंचलो जातः । वेषभूषादयो वैदेशिका जाताः । सर्वतो नवीनरीतिमनुगच्छन्ती जनानां प्रवृत्तिः (व्यवहारः) दृश्यते । एवं च सोयमस्माकं 'वयं भारतीयाः स्मः' इति भावः साम्प्रतं नाममात्रशेषो जातः । अतएव सभासु संमिलिताः मान्याः पण्डिता विचारयन्तु यत् एष देशः (भारतम्) अधुना केन वा मार्गेण प्रयातु? संवत् १९८२ वैशाखे संघटिते 'संस्कृतसाहित्यसंमेलनस्य' कानपुरीयेऽधिवेशने समस्यापूर्तिषु पठितमिदम् । नवीनं 'नीलचक्रं' छन्दः । नीलचक्रे एको गुरुस्तत एको लघुरिति क्रमेण त्रिंशद्वर्णाः । अस्मिंस्तु अन्ते जगणो भवति । अर्थात् गुरुलघुरिति क्रमेण २७ वर्णाः अन्ते जगण इति ॥ ४२ ॥

### अनङ्गशेखर

उमेश्वरे उमामयी, रमेश्वरे रमामयी,
गिरीश्वरे प्रमामयी, क्षमामयी क्षमावताम्,

सुधाकरे सुधामयी, चराचरे विधामयी,
क्रियासु संविधामयी, स्वधामयी स्वधावताम् ।
जगत्सु चेतनामयी, मनःसु वासनामयी,
कवीन्द्रभावनामयी, प्रभामयी प्रभावतां,
घनेषु चञ्चलामयी, कलावतां कलामयी,
शरीरिणामिलामयी शिलामयी सदाऽवताम् ॥४४॥

सवाईमानसिंहदेवेन ( पूर्वजातेन ) आम्बेरराजहर्म्येषु प्रतिष्ठापितायाः 'शिलामयी' देव्याः स्तवः—या भगवती उमेश्वरे शिवे उमामयी उमारूपेण वर्तते । गिराम् ईश्वरे ( वागधीश्वरे ) प्रमामयी यथार्थज्ञानरूपा वर्तते । वाचि या प्रमा ( यथार्थज्ञानम् ) तद् भगवत्या रूपमित्याशयः। क्षमावतां तितिक्षाशालिनां मध्ये, सा क्षमारूपा । सुधाकरे ( चन्द्रे ) या सुधा, सा भगवत्याः शक्तिः । चराचरे, चरे जङ्गमे, अचरे स्थावरे प्रपञ्चे सा भगवती विधामयी प्रकाररूपा । स्थावरजङ्गमात्मिकापि सैव भगवती सर्वत्र व्याप्ता, केवलमिदं स्थावरमिदं जङ्गममिति प्रकार एव भेदक इत्याशयः। क्रियासु संविधा ( संविधानम्, योजनम् ) तद्रूपा । स्वधावतां पितृणां मध्ये, स्वधारूपा । जगत्सु या चेतना सा भगवत्याः शक्तिः । वासना कर्मादिभिर्जातो मनसि संस्कारः । कवीन्द्रेषु भावनामयी, कविषु या भावनाशक्तिः सा भगवत्याः प्रभाव इत्यर्थः । प्रभावतां प्रकाशशालिनां सूर्यादिपदार्थानां मध्ये प्रभारूपा । मेघेषु विद्युद्रूपा । कलावतां नृत्य-गीतादिचतुःषष्टिकलाशालिनां मध्ये, या कला सा भगवत्याः शक्तिः । शरीरिणां देहधारिणां मध्ये, इलामयी पृथिवीरूपा । जीवस्य योऽयं देहः, स किल प्राधान्येन पार्थिवः । सा च भगवती पृथिवीरूपेण तं देहमवष्टम्भयतीति, शरीरिषु सा इलामयीत्याशयः । एवंविधा सा शिलामयी सदा रक्षतु । जगति या शक्तिः सा सर्वा भगवत्या एव विभूतिः, शक्तिं विना अपरत्र शक्तिलाभ एव कथम्? शक्तिं विना च पदार्थस्य सत्तैव दुरुपपादेति सर्वत्र सा शक्तिरेव विलसतीति सर्वस्याशयः। प्रतिचरणं नवनवः प्रासः।

प्रथमे 'मा' कारस्य, द्वितीये 'धा' इत्यस्य, तृतीये 'ना' इत्यस्य, चतुर्थे च 'ला' इत्यस्येति समीक्षणीयं सहृदयैः ॥ ४४ ॥

### घनाक्षरी [ मनहर, कवित्त ]

भारतविभासमान-श्रीमन्मानभूमिभुजा
कीर्तिवल्लरीयं परिगोपिता निषिच्य ताम्
विद्यास्वनुरागवता तदनु विवर्द्धिताऽसौ
जयसिंहभूमिभृता पुष्यन्तीं विविच्य ताम् ।
गुणिजनतोषकेण श्रीमद्रामभूमिपेन
मञ्जुनाऽथ माधवेन पुष्टासौ विविच्यतां
भानुवंश्यभूमिपतिकुञ्जर महीप मान !
सेयं भवताऽद्य दानवारिणा निषिच्यताम् ॥ ४५ ॥

भारतवर्षे सर्वत्र विभासमानेन ( प्रख्यातेन ), श्रीमता मानसिंहभूपालेन ( प्रथमेन ) तां ( मानसिंहकालिककीर्तिवल्लर्याः हृदये स्मरणेन परोक्ष-निर्देशः ) अथवा तां मूलकन्दलीं ( जड ) निषिच्य, इयं ( अस्मिन् समये वर्तमानेति समक्षनिर्देशः ) कीर्तिरूपा वल्ली परिगोपिता रक्षिता । तदनु तदनन्तरम् । विद्यासु अनुरागवता सवाईजयसिंहदेवेन ( द्वितीयेन ) तां पूर्वोक्तां कीर्तिवल्लरीं पुष्यन्तीं विकसन्तीं विविच्य ज्ञात्वा असौ कीर्तिवल्लरी वर्द्धिता । श्रीमज्जयसिंहदेवस्य प्रख्यातो विद्यानुरागः । अनेनैव हि स्थाने स्थाने ज्यौतिषयन्त्रशाला. स्थापिताः सन्ति, या विस्मापयन्ते दर्शकान्विदुषः । तदनन्तरम्-गुणिजनानां सन्तोषकेण श्रीमद्रामसिंहदेवेन ( अर्वाचीनेन ) । अथ पित्रा प्रतिष्ठापितायाः राजपद्धतेः, गुणिजनजीविकायाश्च यथावन्निर्वाहणात् मञ्जुना अभिरूपेण ( प्रशस्तेन ) श्रीमन्माधवसिंहदेवेन ( अर्वाचीनेन ) च असौ कीर्तिवल्ली पुष्टा ( सुतरां संवर्द्धिता ) इति विविच्यतां विचार्यताम् । तस्मात्—भानुवंश्यानां भूमिपतीनां मध्ये कुञ्जर श्रेष्ठ ! हे मानमहीप ! सा-

इयं कीर्तिवल्ली अद्य भवता दानवारिणा मदजलेन निषिच्यताम्। कुञ्जरो मदजलेन निषिच्य स्वाभीष्टां वल्लीं यथा वर्द्धयति, तथा भवता दानसा-मयिकेन अर्घ्यजलेन निषिच्य इयं कीर्तिवल्ली वर्ध्यतामिति माननरेन्द्रं प्रति दानौदार्यं प्रार्थ्यते। किञ्च शब्दशक्तिमहिम्ना—"भवता दानवारिणा दान-वानां दैत्यानाम् अरिणा विष्णुरूपेण सता निषिच्यतामयमर्थोपि ध्वन्यते। समये समये आविर्भूय यथा हरिर्दुष्टान् दमयित्वा त्रिभुवनीरूपां कीर्तिलतां गोपायति, तथा दानवानामरिणा दुष्टदण्डकेन सता भवता, इयं कीर्तिवल्ली निषिच्यताम्।" तथा च नरेन्द्रस्य विष्णुसमानत्वं ध्वन्यते ॥ ४५ ॥

रूपकघनाक्षरी

लन्दननगर्यामुपगच्छन् धर्मधुर्यो यो हि
मृत्तिकामपि स निजदेशादेव संहिनोति
इङ्गलेण्डमण्डलेप्यखण्डनियमस्य यस्य
सर्वतः प्रशस्यधर्मदुन्दुभिर्दिवं धिनोति।
जर्मनैर्निबद्धे बत यूरोपीययुद्धे धनं
दत्वा निजागारात्प्रजासंकटं स यो धुनोति
सोयं धर्म-धैर्य-दया-दाक्षिण्यातिपुण्यमना
मान्यजनाधीशो माधवेशो मे मुदं तनोति ॥ ४६ ॥

यः किल श्रीमान् माधवसिंहदेवो लन्दननगरे गच्छन्, निजव्यवहारार्थं मृत्तिकामपि स्वदेशादेव संहिनोति (प्रेषयति) स्म, भोज्यपेयादीनां तु कथैव का। अखण्डितधार्मिकनियमस्य यस्य (माधवेशस्य), प्रशस्तो धर्म-दुन्दुभिः स्वर्गं प्रीणयति। धार्मिकनियमपालनेन देवान् प्रीणयामासेत्यर्थः। अथवा, म्लेच्छदेशेपि अखण्डितधार्मिकनियमस्य यस्य, धार्मिको विजय-दुन्दुभिः दिवम् अन्तरिक्षं धिनोति सुखयति। यस्य विजयदुन्दुभिः सर्वतो व्याप्त इत्यर्थः। जर्मनदेशीयैः प्रारब्धे, वर्तमाने युरोपयुद्धे, निजागारात् निजकोषात् धनं दत्वा, सेनायां समावेशार्थं मनुष्यसंग्रहरूपं प्रजानां संकटं

यो धुनोति स्म निवर्तयामास। भारतेशेन याचितो युद्धे सहायतार्थं सैनिकानदत्वा अपरिमितं धनमेव निजकोषाद्ददौ, न पुनर्दयावशो निजप्रजालोकान्प्रेरयामासेति भावः। धर्मधुरन्धरत्वात् मान्यः, जनाधीशो राजा श्रीमान् माधवसिंहदेवः ॥ ४६ ॥

देवघनाक्षरी

वनविटपेषु भूरि शोभते कुसुमघटा
रोचते सरोजखण्डसुषमा सरसि सरसि
भाति सहकारे कलकोकिलकुहूनां रवो
मधुकरयूनां स्वनः सरसां पयसि पयसि।
मञ्जुनाथ रसिकमनःसु मदलक्ष्मीर्भाति
दशमुपयाति कामचर्चाऽसौ रहसि रहसि
मन्ये मधुपर्वणि मनोभूर्मदजन्मोन्माद-
मङ्कते विशङ्कं निजमुद्रया मनसि मनसि ॥ ४७ ॥

वसन्तवर्णनम्—कुसुमघटा पुष्पोत्करः। सरसि सरसि प्रत्येकसरोवरे, कमलखण्डस्य शोभा राजते। सरसि सरसीति द्विरुक्त्या 'यावत्सरोवरेषु कमलानि सन्तीति' विस्तारातिशयो ध्वन्यते। एवमग्रेपि द्विरुक्तौ बोद्धव्यम्। सहकारे आम्रे। कलानां (मनोहराणाम्) कोकिलकुहूशब्दानाम्। मधुकरयूनां युवकमधुकराणाम्, अनेन वसन्ते उन्मादातिशयो ध्वन्यते। यूनां विशेषोन्मादात्। मदस्य लक्ष्मीः समृद्धिः। रहसि रहसि (सर्वत्र एकान्ते) कामचर्चा दशम् उपयाति। सर्वत्र एकान्ते स्थितानां जनानां कामकथैव श्रूयते इति वसन्तप्रभावातिशयः सूच्यते। अत्रोत्प्रेक्षते—मनोभूः कामः, मधुपर्वणि वसन्तरूपे पर्वसमये। पर्वपदेन समयस्य पुण्यत्वं दुर्लभत्वं च सूच्यते। निजमुद्राद्वारा निःशङ्कं प्रत्येकजनस्य चित्ते मदजन्मानम् उन्मादम् अङ्कते लिखति। कामकृतमुद्राङ्कनेन सर्वेषां चित्ते, मदजन्मा उन्मादः संजात इत्युत्प्रेक्षाशयः ४७

# उर्दूभाषाप्रचलितानि छन्दांसि

## सूचना



उर्दूभाषायां संस्कृत हिन्दी-वत् न परःसहस्राणि छन्दांसि । अधिकाधिकमुपचत्वारिंशानि भवेयुरस्याश्छन्दांसि । तान्यपि नास्याः संपत्तिः । पारसीकभाषाया एवैतानि च्छन्दांसि व्यवह्रियन्त उर्दूभाषारसिकैरपि । छन्दःशास्त्रमप्यस्याः पारस्यभाषोद्गीर्णम् । अत्र हि संस्कृतहिन्दीभाषावदक्षराणां मात्राणां वा नास्ति गणना । छन्दोध्वनिसूचकाश्चत्वारः पञ्च वा शब्दाः सन्ति, येषामितस्ततः परिवर्तनेन साध्यन्ते विविधच्छन्दांसि । उर्दूभाषायां छन्दसो नाम 'बहर' इति । प्रसिद्धानि च्छन्दांसि केवलमेकोनविंशतिः । तेषु छन्दःपञ्चकं केवलमारव्यभाषायामेवोपयुज्यते ।

उर्दूभाषायाः प्राक्तनाः कवयः कठिनेष्वपि च्छन्दःसु कवितां कर्तुमशकन्, परमिदानीं प्रसिद्धेष्वेव च्छन्दःसु कवयन्ति कवयितारः । कठिनच्छन्दसां व्यवहार एव निरुद्धः । साम्प्रतिका हि सुबोधभाषया सह सरलान्येव च्छन्दांसि प्रयोक्तुमभिलषन्ति । एवं सत्यपि छन्दसां लेखने पठने च योऽयं दोषः स त्विदानीमपि तदवस्थ एव ।

उर्दूभाषायां लिख्यते दीर्घः परं छन्दोलयानुसारं दीर्घोपि लघुः पठ्यते । अतएव, अपरिचितपठनप्रकारः पुरुषो न सम्यगुर्दूभाषायाश्छन्दांसि पठितुं पारयेत् । यथा—

> ''गुलिस्तां में जाकर हरेक गुलको देखा ।
> न तेरी सी रंगत न तेरी सी बू है ॥''

इति लिखितमपि पठनध्वनेरनुसारमेवं लेखनीयं भवेत्—

"गुलिस्तां म जाकर हरिक गुलकु देखा।
न तेरी सि रंगत न तेरी सि बू है॥"

अस्तु. उर्दूभाषायाश्छन्दांसि मात्राक्रमनियामकध्वनिसहितानि संस्कृतभाषायामधस्तादवतार्यन्ते। सौकर्यार्थमधस्ताद् उर्दूभाषामयान्युदाहरणान्यप्युद्ध्रियन्ते। एतद्विषये विशेषस्तु गीति–वीथ्याम् पूर्वभागभूमिकायां च विवेच्येत। छन्दःस्वरूपसूचनार्थमस्मिन्प्रकरणे विस्तृतानां छन्दसां कानिचित्खण्डान्येव (शेर) दीयेरन्, तदवशिष्टभागस्तु गीतिवीथ्यामवलोकनीयः।

## १–बहरे हज़ज मुसद्दस महज़ूफ़

[मफाईलुन मफाईलुन फऊलुन]

### भवाटवी

अहो कं वा श्रयेयं दीनबन्धो।
स्वदुःखं कं वदेयं दीनबन्धो॥ १॥
वनाग्निः सर्वतो मे संवृतोयम्।
अहो कुत्र द्रवेयं दीनबन्धो॥ २॥
विहाय त्वां कमन्यं मञ्जुनाथम्।
वटेऽस्मिन्नारटेयं दीनबन्धो॥ ३॥

अस्मिन् वटे मञ्जुनाथं (श्रेष्ठं स्वामिनम्) त्वां विहाय अन्यं कम् आरटेयम् (आह्वयेयम्) इति योजना॥ ३॥

---

१ 'कहा हो ऐ हमारे राम प्यारे।
मुझे तुम छोड़कर बन को सिधारे॥'

## २-बहरे रमल मुसम्मन महज़ूफ़[1]

[ फ़ायलातुन फ़ायलातुन फ़ायलातुन फ़ायलुन ]

हे गणेयगुणावधे करुणानिधे! ह्यवधीयताम् ।
दृष्टिरुज्ज्वलभारते तव भारते विनिधीयताम् ॥ १ ॥
निर्मले यमुनातटे निकटे कदम्बमहीरुहाम् ।
अत्र वै विहरन् भवान्विदधे महाकमनीयताम् ॥ २ ॥
यत्र कुङ्कुमकेसराः कलयन्ति कामपि सुच्छविम् ।
देश ईदृश ईक्ष्यते किमिहापरोपि? विचीयताम् ॥ ३ ॥
गीयते निगमागमैर्गुणगौरवं तव सर्वदा ।
नाथ संप्रति मञ्जुनाथगिरा कियद्भुत गीयताम् ॥ ४ ॥

गणनीयानां गुणानाम् अवधिसदृश! 'गणनीयं तु गणेय'मित्यमरः। उज्ज्वलायां भार्यां कान्तौ रते, सत्कार्यकरणेन कीर्तिसम्पादके इत्याशयः। तव भारते भवदीये भारते, दृष्टिर्निधीयताम् । कुङ्कुमस्य काश्मीरजस्य केसराः किंजल्काः ॥ ४ ॥

## ३-बहरे हज़ज मुसम्मन कुश्तुर[2]

[ फ़ायलुन मफ़ाईलुन फ़ायलुन मफाईलुन ]

भो विभो दयादृगियं दीनदुर्बले देया ।
वेदना ममाद्य घना देव दूरमाधेया ॥ १ ॥

---

१ 'दिल इबादतसे चुराना और जन्नत की तलब ।
कामचोर इस काम पर किस मुंहसे उजरत की तलब ॥'

२ 'इश्क़ से तबीअतने ज़ीस्त का मज़ा पाया ।
दर्द की दवा पाई दर्द बे दवा पाया ॥'

साम्प्रतं विधौ वामे, रक्षकोस्ति को वा मे ?
याचना मदीयेयं मानसे न किं नेया ? ॥ २ ॥
आमयेदजस्रमियं सर्वतोद्य संसारे ।
दैवदुर्लिपिर्निहिता मामकीनभाले या ॥ ३ ॥
कर्ममोहितोद्य भृशं कीदृशं विनृत्यामि ।
मञ्जुनाथनाट्येऽस्मिन् दीननाथ दृग् देया ॥ ४ ॥

दयादृक् दयादृष्टिः । हे देव घना (निविडा) मे वेदना दूरमाधेया दूरीकर्तव्या ॥ १ ॥ विधौ विधातरि वामे प्रतिकूले । मानसे याचना किं-न नेया ? अपि त्ववश्यं नेतव्येत्याशयः ॥ २ ॥ मञ्जुनाथस्य नाट्ये (नृत्ये) दृष्टिर्देया ॥ ४ ॥

## ४-बहरे हज़ज मुसम्मन अख़रब[1]

[ मफ़ऊल मफ़ाईलुन मफ़ऊल मफ़ाईलुन ]

अयि नाथ दयादृष्टिं तव देहि दयालो ! मे ।
विदधासि तिरस्कारं किल केन कृपालो ! मे ॥ १ ॥
लोठामि भृशं भूमौ दीनोऽयमहं त्वग्रे ।
निद्रासि कथङ्कारं वद शेषशयालो मे ॥ २ ॥

---

१ ' ख़ुरशेद *जो निकला है इस वक़्त य लरज़ा है ।
कोठे प खड़ा शायद वह माहेलक़ा होगा ॥ '

* उर्दूपाठकाश्छन्दोनुरोधेन दीर्घमपि ह्रस्ववत्पठन्ति । तदर्थमत्र वैदिकानुदात्तचिह्नवत् दीर्घवर्णस्याधस्तात् (–) ईदृशं चिह्नं दत्तमस्ति ।

अयि नाथ न नाथेन्यत्, परमस्तु भवच्चित्ते ।
बत मञ्जुलनाथोयं चपलोपि च बालो मे ॥ ३ ॥

शेषशयालो शेषशायिन्! ॥ २ ॥ नाथे आशासे । मञ्जुनाथश्चपलोपि मे बाल इति भवच्चित्तेऽस्त्विति संबन्धः ॥ ३ ॥

### ५-बहरे हज़ज मुसम्मन सालिम[1]

[ मफाईलुन मफाईलुन मफाईलुन मफ़ाईलुन ]

अहो श्रीभारताभिख्योऽतिमुख्यो दिव्यदेशोयम् ।
अपि ध्यायेत्सुरेशो यं स भूमेः संनिवेशोयम् ॥ १ ॥
जगज्जीवातवे जाताऽनुयाता जाह्नवी यस्मिन् ।
प्रसर्पत्पुण्यपीयूषप्रवेशो भूप्रदेशोऽयम् ॥ २ ॥
अमुष्मिन्वर्द्धितानन्दो मुकुन्दो मोदमातेने ।
तदीयाऽलक्ष्यलीलाभिर्विलीनाऽलीकक्लेशोऽयम् ॥ ३ ॥
सखे मे मञ्जुनाथाऽलं मुधा मा यापयेः कालम् ।
अहो ते संस्कृतोपेतो न रोचेतोपदेशोयम् ॥ ४ ॥

जगज्जीवनौषधाय जाता जाह्नवी, यस्मिन् देशेऽनुयाता । प्रसर्पतः पुण्यरूपस्य पीयूषस्य प्रवेशो यस्मिन् ॥ २ ॥ संस्कृतोपेतः संस्कृतभाषानिबद्धस्ते उपदेशो लोकानां न रोचेत ॥ ४ ॥

---

१ 'अगर हम बाग़वाँ होते तो गुलशन को लुटा देते ।
पकड़कर दस्त बुलबुल का चमनसे जा मिला देते ॥'

## ६-बहरे हज़ज़मुसम्मन अखरब मक़फ़ूफ़ मक़सूर

[ मफऊल मफ़ाईल मफाईल मफाईल ]

भूतेश ! भवत्पादयुगं भूरि भजेयम् ।
हे भर्ग ! भवन्मूर्तिमबन्धाय यजेयम् ॥ १ ॥
त्वन्मौलिगता देवधुनी पापमपोहेत् ।
चेतःपरितापं व्यपनीयान्नगजेयम् ॥ २ ॥
त्वं देहि दयादृष्टिमये मञ्जुलनाथे ।
वाञ्छाऽद्य महेशान मनाङ् मानसजेयम् ॥ ३ ॥

अबन्धाय मोक्षाय भवन्मूर्तिं यजेयं पूजयेयम् ॥ १ ॥ इयं नगजा पार्वती चेतःपरितापं व्यपनीयात् दूरीक्रियात् ॥ २ ॥ अये दयादृष्टिं देहि, इति मानसजा इयं वाञ्छा ॥ ३ ॥

## ७-बहरे हज़ज मुसद्दस मक़सूर

[ मफाईलुन मफ़ाईलुन मफाईल ]

अये पद्मेऽङ्घ्रिपद्मे मे मनः स्यात् ।
भवत्पादाग्रलग्नोयं जनः स्यात् ॥ १ ॥
कृपादृक्कोणतस्तुष्येन्मनो मे ।
न किं वा चातकप्रीत्यै घनः स्यात् ॥ २ ॥
कथं वा मञ्जुनाथं नेक्षसे त्वम् ।
दयादृष्टिं विना सिद्धिर्न नः स्यात् ॥ ३ ॥

---

१ 'जिसको तेरी आँखों से सरोकार रहैगा ।
बिल्फ़र्ज़ जिया भी तो वो बीमार रहैगा ॥'

२ 'मुहब्बत कोडियोंके हो अगर मोल ।
बनी आदम न ले यह दर्दे सर मोल ॥'

हे पद्मे ! ( लक्ष्मि ) ते चरणकमले । अयं जनः, अहमित्याशयः ॥ १ ॥ कृपादृक्कोणतः कृपाकटाक्षात् ॥ २ ॥

८–बहरे खफ़ीफ़ मुसद्दस मखबून महज़ूफ़[१]

[ फ़ायलातुन मफायलुन फ़ेलुन ]

भारती मे भवाय बोभूयात् ।
मानसे मे सुखानि सा सूयात् ॥ १ ॥
शारदासौ सरोजपीठस्था ।
मानसं मे प्रमादमाधूयात् ॥ २ ॥
मौनमेया न मञ्जुनाथेऽस्मिन्
गीतिभिस्त्वां परस्तु कः स्तूयात् ॥ ३ ॥

भारती सरस्वती । भवाय कल्याणाय ॥ १ ॥ मानसं मनःसंबन्धिनं प्रमादम् आधूयात् दूरीक्रियात् ॥ २ ॥ मौनं न एयाः ( आ–इयाः ) मा गच्छेः । मञ्जुनाथं विना नवीनगीतिभिः परः कः स्तूयात् ॥ ३ ॥

९–बहरे मुज़ारे मुसम्मन अखरब मक़फ़ूफ़ महज़ूफ़[२]

[ मफऊल फायलात मफाईल फ़ायलुन ]

वन्दामहे महेशपदाम्भोजमुज्ज्वलम् ।
सेवामहे महेशपदाम्भोजमुज्ज्वलम् ॥ १ ॥

---

१ 'शाम से कुछ बुझा सा रहता है ।
दिल हुआ है चिराग़ मुफ़लिस का ॥'

२ 'पानी तबीब दे है हमें क्या बुझा हुआ ।
है दिल ही ज़िन्दगीसे हमारा बुझा हुआ ॥'

लीयेत लाभलोभलवोऽप्यान्तरस्य, चेत् ।
विन्दामहे महेशपदाम्भोजमुज्ज्वलम् ॥ २ ॥
काव्येषु मञ्जुनाथ न नः स्पर्द्धया फलम् ।
वीक्षामहे महेशपदाम्भोजमुज्ज्वलम् ॥ ३ ॥

आन्तरस्य ( मनसः ) लाभलोभस्य लेशोपि लीयेत, यदि शिवपदकमलं विन्दामहे ॥ २ ॥

## १०–वहरे रमल मुसद्दस महज़ूफ़

[ फ़ायलातुन फ़ायलातुन फ़ायलुन ]

कीर्तये कालिन्दि मातस्त्वामहम् ।
शङ्कितः शरणं पुरः प्रायामहम् ॥ १ ॥
निर्मलं यदि ते जलं मौलौ वहे ।
संतरेय त्वत्पतेर्मायामहम् ॥ २ ॥
माऽज्ञुमासीर्मञ्जुनाथं निर्बलम् ।
त्वत्तटे प्रायां तरुच्छायामहम् ॥ ३ ॥

शङ्कितः सन् त्वां शरणं प्रायाम् आयासिषम् ॥ १ ॥ त्वत्पतेः श्रीकृष्णस्य मायाम् ॥ २ ॥ माज्ञुमासीः मा जानीहि । त्वत्तटे तरुच्छायामहं प्रायाम् ( आगतोऽस्मि ), त्वत्तीरतरुच्छायाश्रयेण अहं निर्बलो नास्मीत्यनेन तीरागमनमात्रेण जनो मुक्तेरधिकारी भवतीति महिमातिशयो ध्वन्यते ॥ ३ ॥

---

१ 'नाल ओ फ़रियादकी ताक़त कहाँ ।
बात करता हूं कलेजा थामके ॥'

## ११—बहरे मुतक़ारिब मुसम्मन सालिम

[ फ़ऊलुन फ़ऊलुन फ़ऊलुन फ़ऊलुन ]

हरे ! संतरेद्भाग्यनौका ममेयम् ।
क्षणं क्षेपणी स्याद्दया चेत्तवेयम् ॥ १ ॥
भवाब्धिस्तु कल्लोलमालाकुलोयम् ।
महाजर्जरा नाथ नौका ममेयम् ॥ २ ॥
ततोप्यद्य विद्योतते नैव भास्वान् ।
घटा चोत्कटा व्योम्नि विस्फूर्जितेयम् ॥ ३ ॥
क्षणं मङ्क्तुनाथं दृशापि स्पृशेश्चेत् ।
निमग्नोपि कामं हरे संतरेयम् ॥ ४ ॥

भाग्यरूपा नौका । तव दया, क्षणार्धं चेत् क्षेपणी ( नौकादण्डः 'बल्ली' ) स्यात् ॥ १ ॥ त्वं दृष्ट्यापि चेत्स्पृशसि तर्हि भवाब्धौ निमग्नोपि तरेयम् । त्वद्दयादृष्टिलाभे सति, मम मज्जनमप्युद्धारादुत्कृष्टम् इत्यर्थः ॥ ४ ॥

## १२—बहरे मुतक़ारिब मुसम्मन मक़बूज़ असलम मुज़ाइफ़

[ फ़ऊल फ़ेलुन फ़ऊल फ़ेलुन फ़ऊल फ़ेलुन फ़ऊल फ़ेलुन ]

न याहि लावण्यगर्वितानामुपान्तदेशं सखे मनो मे ।
अयेऽवधानेन पालयेथा इमं निदेशं सखे मनो मे ॥ १ ॥

---

१ 'न छेड़ो हमें हम सताये हुए हैं ।
जुदाईके सदमे उठाये हुए हैं ॥'
'कहां हैं हम मेंऽव ऐसे सालिक कि राह ढूंढी क़दम उठाया ।
जो हैं तो ऐसे हि रहगये हैं किताब देखी क़लम उठाया ॥'

न पूर्वमेषा दशा तवासीन्न नाम सेयं विषण्णतासीत् ।
दिनेषु यातेषु ते विलोके व्यथाविशेषं सखे मनो मे ॥२॥
विघूर्णसेऽहो निरन्तरं त्वं विमुञ्चसे नावलोकलोभम् ।
निरर्थकं हन्त तर्कयेहं तवोपदेशं सखे मनो मे ॥ ३ ॥
न चेत्प्ररोचेत सूक्तिरेषा न मञ्जुनाथोपि निर्मिमीत ।
अवेहि सूक्ष्मं तु सूक्तिवामानवीनवेषं सखे मनो मे ॥ ४ ॥

रूपगर्वितानां लोकानामुपान्तदेशं समीपदेशम् ॥ १ ॥ कतिषुचिद्दिनेषु व्यतीतेषु ते पीडाविशेषं विलोके ॥ २ ॥ विघूर्णसे भ्रमसि ॥ ३ ॥ एषा सूक्तिः (ग़ज़लगीतिमयी) चेन्न रोचेत, तर्हि मञ्जुनाथोपि न निर्मिमीत (रचयेत्), परं सूक्तिरूपाया वामायाः (स्त्रियाः) नवीनं वेषं सूक्ष्मं यथा स्यात्तथा विचारय। इयं नवीनगीतिपद्धतिः सूक्तिवध्वा नववेषधारणवद्- स्तीत्याशयः ॥ ४ ॥

## १३-बहरे कामिल मुसम्मन सालिम

[ मुतफ़ायलुन मुतफ़ायलुन मुतफ़ायलुन मुतफ़ायलुन ]

विरहापगातटमुत्तरं पुनरागमिष्यति वा न वा ।
अपि मानसी मम वेदना विषमा गमिष्यति वा न वा ॥१॥
विलिखामि मानसवेदनां विसृजामि हन्त तदन्तिके ।
परमन्तरं परिशङ्कते स विलोकयिष्यति वा न वा ॥ २ ॥
नवपल्लवा विलसन्ति, संविकसन्ति ते कुसुमोत्कराः ।
मम भागधेयतरुः सखे सरसं फलिष्यति वा न वा ॥ ३ ॥

---

१ 'वो जो तुमसे हमसे करार था तुम्हें याद हो कि न याद हो।'

अयि मञ्जुनाथ मनो विनोदय संगमेन सचेतसाम् ।
अपि नीरसेषु जनेषु ते प्रणयो भविष्यति वा न वा ॥ ४ ॥

विरहापगायाः ( विरहनद्याः ) उत्तरं तटम् ( अपरपारः ) ॥ १ ॥ परम्—अन्तरं चित्तम् ॥ २ ॥ पल्लवाः, विकसन्तः कुसुमसमूहाश्च जाताः, परमितोऽग्रे मम भाग्यतरुः सरसं यथा तथा फलानि दर्शयिष्यति न वा इति विरही भाग्यं शोचत इत्याशयः ॥ ३ ॥ सहृदयानां सङ्गेन मनो विनोदय । न जाने, नीरसेषु जनेषु ते प्रणयो भवेन्न वेत्याशयः ॥ ४ ॥

## १४–बहरे रमल मुसद्दस मक़्सूर

[ फायलातुन फायलातुन फ़ायलात ]

नन्दसूनो ! किं विधूनोष्यद्य माम् ।
दीनमेनं मुञ्चसे हा किंतमाम् ? ॥ १ ॥
श्रीपतेस्ते का भवेद्दीने दया ।
सर्वदोत्सङ्गे निधत्से यद्रमाम् ॥ २ ॥
त्वन्मुखाग्रे दृश्यते दीनः शशी ।
चेतसा कश्चिन्तयेच्चन्द्रोपमाम् ॥ ३ ॥
मञ्जुनाथप्रार्थने चेन्नेक्षसे ।
निःस्पृहो याचामि कस्माद्वा क्षमाम् ॥ ४ ॥

विधूनोषि दुःखं ददासीत्याशयः । किंतमाम् किमर्थम् ॥ १ ॥ चन्द्रस्य उपमां कश्चिन्तयेत् ॥ ३ ॥ मञ्जुनाथप्रार्थनायां त्वं न पश्यसि, तर्हि अहमपि निःस्पृहोस्मि । कस्मात्कारणात्त्वत्तः क्षमां याचे ॥ ४ ॥

---

१ 'पूछते हैं वह कि ग़ालिब कौन है ।
कोई बतलाओ कि हम बतलायें क्या ॥'

## १५-बहरे मुज़ारे मुसम्मन अखरब-

[ मफऊल फ़ायलातुन मफऊल फ़ायलातुन ]

भगवन् दयादृगेषा मयि दीयतां दयालो ।
अधुनाऽवहेलना मे न विधीयतां दयालो ॥ १ ॥
करितो न पीनकायो गिरितो गुरुर्न चाहम् ।
दुरितोपरोधतो मे न निलीयतां दयालो ॥ २ ॥
अहमस्मि सार्वभौमो निखिलाऽघकारकाणाम् ।
भवताऽद्य भूरि भूमन्नवधीयतां दयालो ॥ ३ ॥
निगमैस्तवाऽवबोधे कियदङ्ग गीयते स्म ।
अयि मञ्जुनाथवाचा कति गीयतां दयालो ॥ ४ ॥

एषा दयादृक् ॥ १ ॥ करितः गजेन्द्रात् पुष्टः, गिरितः पर्वतात् गुरुर्नास्मि, मम पापानुरोधात् न निलीयताम् ॥ २ ॥ भूमन् पृथिवीनाथ ! सार्वभौमत्वान्ममोद्धारे अत्यन्तमवधीयताम् ॥ ३ ॥

## १६-बहरे मुतक़ारिब मुसम्मन मेंहज़ूफ़

[ फ़ऊलन फ़ऊलन फ़ऊलन फ़अल ]

दयालो किमालोकसे निःस्पृहम् ।
चिरं व्याकुलो हन्त लोठाम्यहम् ॥ १ ॥

---

१ 'सारे जहांसे अच्छा हिन्दोसतॉं हमारा ।
हम बुलबुलें हैं इसकी यह है चमन हमारा ॥'

२ 'कहै एक जब सुन ले इन्सान दो ।
कि हक़ने ज़ुबॉं एक दी कान दो ॥'

सुहृत्स्वनुसंबन्धिनोऽप्यद्य माम् ।
विमुञ्चन्ति भूमौ गतं निःसहम् ॥ २ ॥
कथं पुण्यमन्वेषये जीवने ।
इदं दुष्कृताऽनन्तदावेऽदहम् ॥ ३ ॥
इदानीं प्रभो मञ्जुनाथोद्धृतिम् ।
दयालोस्तवैवाद्य हस्तेऽवहम् ॥ ४ ॥

मम जीवने पुण्यं कथमन्विष्यामि, इदं (पुण्यम्) दुष्कृतरूपे अनन्ते दावे (वनाग्नौ) अदहम्। मम पुण्यस्य लवोपि नास्तीत्याशयः॥ ३॥ मञ्जुनाथस्य उद्धारं दयालोस्तव हस्ते अवहम् अदाम्॥ ४॥

### १७—बहरे हज़ज मुसद्दस अखरब मक़बूज़ महज़ूफ़

[ मफ़ऊल मफ़ायलुन फ़ऊलन ]

अयि देवि दयां विधेहि गङ्गे ।
मम देहि वपुर्विरामभङ्गे ॥ १ ॥
तव वीक्ष्य विलोलवीचिनृत्यम् ।
मम मानसमुत्प्लवेत रङ्गे ॥ २ ॥
तव कः कलयेत कूलशोभाम् ।
रविरश्मिरुचा लसत्तरङ्गे ॥ ३ ॥
त्वमुदेषि गिरीशमञ्जुमौलौ ।
अविघाटिजटाभ्रमद्भुजङ्गे ॥ ४ ॥

---

१ 'हर शाख मे है शिगूफ़ाकारी ।
समरः है क़लम का हम्देबारी ॥'

त्वयि मञ्जय मञ्जुनाथमेनम् ।
अयि पारितपापपुञ्जभङ्गे! ॥ ५ ॥

तव भङ्गे मम वपुर्विराममम् देहावसानं देहि ॥ १ ॥ नृत्यं दृष्ट्वा मम मानसमपि नाट्यरङ्गे उत्प्लवेत कूर्देत । नटोपि अन्यस्य नृत्यं दृष्ट्वा ईर्ष्यावशाद्रङ्गेऽवतरति ॥ २ ॥ अविघाटिन्यः दृढसंलग्नाः या जटास्तासु भ्रमन्तो भुजङ्गा यस्मिन् ॥ ४ ॥ पारितः समापितः पापपुञ्जस्य भङ्गो यया तत्संबुद्धौ ॥ ५ ॥

## १८–बहरे हज़ज मुसम्मन मक़बूज़

[ मफ़ायलुन मफ़ायलुन मफायलुन मफ़ायलुन ]

दया तवेह मामये मुकुन्द! नन्दयेन्न किम् ।
पदारविन्दमेतकन्मनो मिलिन्दयेन्न किम् ॥ १ ॥
भृशं भ्रमामि वसनावशोऽविशोच्य दुर्नयम् ।
भवद्दया तु दुर्गतेर्गतिं विमन्दयेन्न किम् ॥ २ ॥
कथं तरामि यन्त्रणां दुरन्तचिन्तयाऽनया ।
निपीडितस्य मोहनो मनोऽभिनन्दयेन्न किम् ॥ ३ ॥
वचोऽथ मञ्जुनाथ ते न चेत्प्ररोचते विदाम् ।
चराचरेशचेतसोपि चारु चन्दयेन्न किम् ॥ ४ ॥

अये मुकुन्द तव दया मामिह किं न नन्दयेत् ?, अपि त्ववश्यं नन्दयेत् । एतकत् (एतत्) ते पदारविन्दं किं मां मिलिन्दं भ्रमरं न कुर्यात् ? तत्करोतीति णिच् ॥ १ ॥ दुर्नयम् दुर्नीतिमविचार्य ॥ २ ॥ चिन्तया पीडितस्य (मे) मनः किं मोहनः (हरिः) नाभिनन्दयेत् ? ॥ ३ ॥ ते वचनं यदि

---

१ 'य थोड़ि थोड़ि मै न दे कलाइ मोड़ मोड़ कर ।
भला हो तेरा साक़िया पिलादे ख़ुम निचोड़ कर ॥' [पञ्चचामरम्]

विदुषां न रोचते, तर्हि चराचरनायकस्य चेतसोपि ( चित्तमपि, कर्मत्वेनाविवक्षया षष्ठी ) किं न चन्दयेत् प्रमोदयेत् ? अपि त्ववश्यं प्रमोदयेत् ॥ ४ ॥

१९–बहरे तवील अथवा बहरे मुतदारिक मखबून मुज़ाइफ़

[फ़एलुन फ़एलुन फ़एलुन फ़एलुन फ़एलुन फ़एलुन फ़एलुन फ़एलुन]

अयि चित्त चिरेण विचिन्तयतोपि च चञ्चलता न गता न गता ।
अपि नाम निरन्तरयत्नशतैस्तव निष्ठुरता न गता न गता ॥१॥
क्षणमेव विमुह्यसि वामदृशा न फलं परिपश्यसि दूरदृशा ।
विमृशामि सखे यदि तत्त्वदृशा, तव कामुकता न गता न गता २
न हि दीनजनान्परितोषयसे बहु घोषयसे निजदानरुचिम् ।
अयि चित्त सखे तव लोलुपताऽनृतकीर्तिवितानगता न गता ३
तव विस्वरगीतिमिहार्पयसे न विलोकयसे विविधान्विबुधान् ।
अधुनापि च मञ्जुलनाथ मनाक्तव दुर्मुखता न गता न गता ४

चिरकालाद्विचारं कुर्वतोपि तव ॥ १ ॥ बहु घोषयसे, लोकेषु दानरुचिं प्रख्यापयसे । अत एव हे चित्त ! अनृतकीर्तेः मिथ्यायशसो वितानसंबन्धिनी तव लोलुपता ( लालसा ) न गता न गता । अतियत्नेपि तव कृत्रिमकीर्तिलालसा न यातेत्याशयः । न गता न गतेत्याम्रेडनस्य, यत्ने कृतेपि गमनाभावः फलम् ॥ ३ ॥



१ 'दिया अपनि ख़ुदी को जो हमने उठा वो जो परदासा बीचमें था न रहा ।
रहा परदेमें अब वहि परदानशीं कोइ दूसरा उसके सिवा न रहा ॥'



# गीतिवीथी

[ सेयं संस्कृतभाषैव संगीतस्यादिजननी। एतस्यामेव संस्कृतसरस्वत्यां संगीतरूपा सुरसरित्सर्वतः प्रथममवततार। यो हि वेदभगवान् भावुकैरनादिः स्वीक्रियते स एव सामरूपेण सुपरिष्कृतकण्ठैर्महर्षिभिर्गीयते स्म। किमितोऽप्यधिकं किञ्चित्प्रमाणमावश्यकं स्यात्? यावत्किल षड्ज–ऋषभ–गन्धारेति सप्त स्वराणां संगीतेन सम्बन्धस्तावत्कः खलु पुरुषपुङ्गवः संगीतं संस्कृतात्पृथक्कर्तुं पारयेत्? महर्षयो हि संगीतद्वारा मुक्तेरप्यधिकारिणो बभूवुः। अस्तु. ऋषिपरिष्कृतानि हनूमन्नारदभरतप्रभृतीनां मतानि संगीतशास्त्रे पृथक् पृथक् पद्धतिं प्रचारयामासुः। अत एव विद्वद्गोष्ठ्यां भूयसी समभूत्संगीतशास्त्रस्य मीमांसा। नियतवर्ण–मात्रा–बद्धानि नानाविधच्छन्दांस्येव संस्कृतभाषायाः संगीतेन साकं सम्बन्धं सूचयन्ति। वाल्मीकिरामायणं कुशलवाभ्यां गीयते स्मेति को न जानाति? अत एव गायकानां कुशीलवेति नामैव निष्पन्नमिति बहवो वदन्ति।

मध्ययुगे वादमात्रमण्डितानां शुष्कपण्डितानां कृपावशात् संगीतशास्त्रमिदं संस्कृतविदुषां हस्तात्प्रच्युतप्रायमभवत्। यानि ध्रुवपदानि संस्कृतपण्डितैः प्रचारितानि तानि किल बैजूबावरे–हरिदास–सूरदास–कुम्भनदास–प्रभृतीनां समये बहुतरमुन्मेषमलभन्त। यस्मिन्समये एकैकशास्त्रमात्रपाण्डित्ये व्यस्ताः संस्कृतपण्डिताः संगीतशास्त्रं परिहृत्य वादप्रथायाः सूत्रपातं कुर्वन्ति स्म, तस्मिन्नेव समये व्रजभाषाकोविदैः संगीताय सादरं निजसाहित्ये स्थानमदीयत।

एतदनन्तरं मोगलसम्राजां समये संगीतसागरे शृङ्गारमयी नवीना लहरिः प्रावहत् । ठुमरी—टप्पादीनां संगीते समादरः समभवत् । तस्मिन्समये ये केचन संस्कृतज्ञाः संगीतमशीलयंस्तेपि हिन्दीगीतिभिरेव निजमनोविनोदमकुर्वन् । संस्कृतगीतिग्रन्थास्तु गीतगोविन्दप्रभृतयो विरलतमा आसन् ।

वर्तमानसमयस्तु संगीतशास्त्रानुसारिणीनां रागानुगानां प्राक्तनगीतीनां पक्षे प्रतिकूल इव । संगीतव्यवसायिनोऽन्यांश्च कांश्चिद्विरलान्विहाय साधारणजनतायां गीतिलहरिरेवाऽन्यादृशी । नाटकीयध्वनिभिर्गजलैश्च सर्वे संतुष्यन्ति । कुतो वा न स्यात्, समय एव सर्वस्य कृते उत्थानपतनयोः प्रवर्तकः । लोकानामेवंविधं प्रवाहमवलोक्य हिन्दीसंगीतसाहित्यसर्जकैरपि निजपद्धतिस्तदनुकूला समपाद्यत । समन्तात्तादृशान्येव गीतिग्रथनान्यवलोक्यन्ते । उचितमप्येतत् । भाषा हि समयमनुसृत्य लोकानां मनोरञ्जनसाधनानि संघटयत्येव । परं संस्कृतज्ञाः, संगीतप्रणयिनोऽस्मिन्पक्षे पश्चात्पदाः सन्ति । छिद्रान्वेषिभिः संस्कृतभाषाया अपाटवं प्रथयितुमेकोऽन्योऽवकाश उपलब्धो यदियं भाषा सामयिकीर्गीतीर्ग्रथयितुमनुपयुक्तेति । एतमभावमंशतो निरसितुम्, अस्मिन्विषयेपि संस्कृतसरस्वत्या अक्षुण्णं पाटवं सूचयितुं च संस्कृतगीतिग्रथने यत्नोऽकारि । व्रजभाषासंगीतमनुहरन्तो गीतगोविन्द—मुकुन्दमालादयः सन्त्येव केचिद् ग्रन्थाः । ध्रुवपदानि 'कवित्त' तो नाधिकं भिन्नानि । ततश्च ध्रुवपदस्थाने ग्रन्थेऽस्मिन्निबद्धानि घनाक्षरीपद्यानि गातुं शक्यान्येव । अत एव नास्मिन्विषयेऽधिकं यत्नोऽक्रियत । किन्तु उर्दूभाषानिबद्धासु गजलगीतिषु लोकानां परमादरं चानुरागं चावलोक्य संस्कृतमयीनां तासामत्र विशेषतः संघटनाऽकारि ।

## उर्दूभाषा

उर्दूकवितायां भाषाया लालित्यमात्रमाकर्षकम् । यतो ह्यस्यां शैलीनां (महावरा) यथावन्निर्वाहः, लोकोक्तीनां स्थानस्थानेषूपयोग एतावन्मात्रमेव कवितां परिष्कर्तुमलम् । भावास्तु भाषाया जन्मन आरभ्याद्यावधि त

एव नियताः । वर्ण्यविपर्योऽप्यतीव विरलः ! प्रेमी, प्रेमपात्रम्, विरहः, उपवनम्, अरण्यम्, नदी, मद्यगोष्ठी (महफ़िल), अवान्तरविषयसहितैरेतैरेव सर्वं वर्ण्यं परिसमाप्यते । विशेषस्तु वियोगवेदनावर्णनमेव उर्दूकवीनां सर्वस्वम् । एतेषां प्रेमपात्रमतिनृशंसः । स हि निजप्रेमिकमसिना आहन्ति । तमर्द्धविद्धं परिहाय प्रतिनायकैः संगच्छते । एतेषां शृङ्गारगोष्ठ्यां स्थाने स्थाने खड्गाघातः, रुधिरम्, इतस्ततो भूमौ लोठनम्, करुणाक्रन्दनमेतावन्मात्रमवलोक्यते, यद्धि शृङ्गारं वीभत्से परिणमयति । अत्र हि प्रेमी मृत्युं सर्वदा सहैव नीत्वा भ्रमति । किमधिकम्, मृत्यावेव अस्यानन्दः । यथा ह्युच्यते—

"मज़े जो मौतके आशिक़ बयां कभू करते ।
मसीहो ख़िज़्र भी मरनेकी आरज़ू करते ॥" (ज़ौक़)

एवंप्रायमुर्दूभाषायाः शृङ्गारवर्णनसमालोचनपरा 'अये भोः प्रिये ते प्रतीतिर्न वे'त्यादिगीतिः सोदाहरणमग्रे प्रदास्यते । अनया हि उर्दूभाषायाः शृङ्गारवर्णनपद्धतिर्बहुतरमभिज्ञाता भवेत् ।

उर्दूकवितायां हि अलङ्काराणां मध्ये अत्युक्तिरेव सर्वत्र खेलति । अस्याः संघटने उर्दूकवीनामधिकतरमवलोक्यते पाटवम् । अनयैव हि प्रायः सेयं कविता मनोहारिणी संपद्यत इत्युक्तिर्नाऽस्थाने । परं क्वचित्क्वचित्सेयमौचित्यसीमानमपि लङ्घयति । अस्तु. उर्दूभाषायाः सेयं साहित्यशैली बहोः कालादेतादृश्येव । परमिदानीं समयानुसारमस्यामपि शोधनान्यारब्धानि । 'गुल-बुलबुल' मात्रमयैर्गीतैर्लोकाः साम्प्रतं विरज्यन्ति । दृश्यतां किमाह उर्दूविद्वान् मौलाना हालीमहोदयः—

"बुरा शेर कहनेकी गर कुछ सज़ा है ।
अबस झूठ बकना अगर नारवा है ॥
तो वह महकमा जिसका क़ाज़ी ख़ुदा है ।
मुक़र्रर जहां नेको बदकी जज़ा है ॥

गुनहगार वाँ छूट जायेंगे सारे !
जहन्नुमको भरदेंगे शायर हमारे ॥"

[ भवतु, उर्दूकवितायाः समालोचनेन नेह प्रयोजनम् । सत्यावश्यकत्वे पूर्व-भागभूमिकायां तदुपादीयेत । इह त्वेतदेव वक्तव्यं यदुर्दूभाषायास्तामेव वर्णनपद्धतिमङ्गीकृत्य, अत्रापि गज़लगीतयः प्रत्ताः सन्ति । व्रजभाषायाः शैलीं नीत्वा यथा तद्भाषायाश्छदांसि कवित्तप्रभृतीन्यारचितानि तथा उर्दू-भाषाया वर्णनपद्धतिमुपादाय गज़लगीतयो गुम्फनीया येन तद्भाषाच्छन्दसां स्वारस्यं संस्कृतेपि सिध्येत् । अत एव संस्कृतसाहित्यमात्ररसिकैः शृङ्गारेपि शर-खड्गादीनां संनाहमवलोक्य न विमनायितव्यम् । संस्कृतसाहित्यगत-मौचित्यमपरिहाय, उर्दूभाषाया विरहवर्णनं येन प्रकारेण समञ्जसमा-भाति तथैव यथाबलमिहाऽऽचेष्टितम् । सदसत्परिचये तु सहृदयानां हृदयान्येव निकषः । न तत्र वाचिकं प्रमाणं प्रभवति ।

उर्दूछन्दसां नामानि, मात्राक्रमनियमश्च छन्दोवीथ्यामवलोक्य, तदनु-सारेण इहाप्यनुसंधातव्य इति नात्र पृथग् दीयते । ]



# व्रजभाषाचत्वरः

१-देशमल्लारारागेण

जय जय गणनायक ! वरदायक ।
जय जय० ॥
दुःखहरण सुखकरण गणाधिप
जय जय सिद्धिविधायक ॥ जय जय गण० ॥ १ ॥
प्रथमनमस्कृत सकलसुरैरपि
शरणापन्नसहायक ॥ जय जय० ॥ २ ॥
लम्बोदर शिखिवाहनसोदर
निजजनशुभपरिचायक ॥ जय० ॥ ३ ॥
सिन्धुरवदन सदन सम्पत्तेः
सिद्ध्यधरामृतपायक ॥ जय० ॥ ४ ॥
एकदन्त विपदन्तविधायक
विघ्नविहिंसनसायक ॥ जय० ॥ ५ ॥
मञ्जुनाथमिममाशु सनाथय
सकरुण सिद्धविनायक ॥ जय जय० ॥ ६ ॥

विघ्नानां विहिंसने सायक ! ( बाणसदृश ) ! ॥ ५ ॥

२—मरुप्रसिद्धमांढरागेण

जय जय राधिकापते !
जय नटनागर सौभगसागर हे रमापते ! ॥
दो०—योजितयोगसमाधयो मुनयो यामुपयान्ति ।
त्वद्भक्तास्त्वत्सेवया तां पदवीमनुयान्ति ॥ जय० ॥१॥
कण्टकसंकुलमपि यदा काननमिदमुपयासि ।
मम हृदयावनिमिह पुनर्नागर[1] किमिति जहासि ॥जय०॥२
दृप्यत्सुरपतिमदभरं हृतवानसि रभसेन ।
त्वं शरणं करुणानिधे कलितोऽनेन जनेन ॥ जय० ॥३॥
कालियफणधरशिरसि यद्वितरसि लयसंचारि ।
तदिह चरणसरसीरुहं शरणं दुरितनिवारि ॥ जय० ॥४॥

यदा कण्टकाकीर्णं वनमेवाटसि तदा कोमलां हृदयभूमिं किमिति त्यजसि, इति नागरपदेनाक्षिप्यते ॥ २ ॥ लयः स्वरसाम्यं तेन संचरति तच्छीलम् । दुरितं निवारयति तच्छीलं च ॥ ४ ॥

३—सिन्धुकाफ़ीरागेण

सेयं नन्दसुते वामा प्रीतिं तनुते । सेयम्० ।
हंहो लोकवचनमपि नैषा मनुते । सेयं नन्द० ॥ १ ॥
मञ्जुनिकुञ्जगतापि न मुञ्चति, चञ्चति कंचन तापम् ।
कामं मनोभवबाधामञ्चति, तापवशा सैषा धैर्यं धुनुते ॥सेयम्०॥२
याति निरन्तरमन्तिकदेशं रचयति कामुकवेषम् ।
सा संकेतगता परिमुह्यति कुञ्जमियं वारं वारं चिनुते ॥ सेयम्० ॥३

१ 'मोपै डारगयो सारी रंगकी गागर' इतिवत् ।

मानय मे वचनं सखि संप्रति, मा नय कामममर्षम् ।
मञ्जुनाथविनयं परिशीलय, गोपसुते किं वा को वा वनुते ? सेयम्॥

यो नन्दसुतो रमणीनां विप्रलम्भने प्रसिद्धस्तस्मिन्नेव इय प्रीतिं करोति, अत एव सेयं वामा (प्रतिकूलाचरणा, स्त्री च)। निकुञ्जगतापि तापं न मुञ्चति, किन्तु कञ्चित् (अनिर्वचनीयम्) तापं चञ्चति प्राप्नोति । अञ्चति गच्छति । तापपरवशा धैर्यं कम्पयति, अधीरा भवतीत्याशयः ॥ २ ॥ संकेतगता सेयं परिमुह्य वारं वारं संकेतकुञ्जं चिनुते, त्वद्भावनया अन्विष्यति ॥ ३ ॥ कामदेवम् अमर्षं मा नय, मा कोपयेत्यर्थः । गोपस्य पुत्रे को जनः किं वनुते (याचते) गोपालनमात्रकर्मठात्तस्मात्किं वा प्राप्यम्? न किमपीत्याशयः ॥ ४ ॥

## ४-पुनस्तथा

मानं मा मा समानय ते दयिते । मानम्० ॥
हंहो सपदि वशे स हि ते दयिते । मानम्० १
सरसवसन्तसमागमसुन्दरनवरजनी किल सेयम् ।
केयं प्रिये तव निष्ठुरता सखि! तुष्यसि किं न हि चिन्ताऽऽकुलिते २
शपथशतानि निवेदितवानपि नो लभते करुणां ते ।
किं ते प्रियो दयितो ह्युत मानो नो दयसे किं वा कठिनमते! ३
कुसुमशरासनसंततशासनविवशीकृतहृदयोऽयम् ।
मञ्जुनाथविनयं ननु मानय, कुप्यसि किं वा तव पदपतिते४ मानम्

तव दयिते प्रिये, मानं मा समानय मा कुरु । हे दयिते ! स ते वशे वर्तते ॥ १ ॥ चिन्तया आकुलिते प्रिये किं न तुष्यसि प्रसीदसि ॥ २ ॥ दयितः (प्रियतमः) तव प्रियः अभीष्टः ? उत मानः अभीष्टः ? हे कठिनमते ! किं न दयसे ॥ ३ ॥

## ५–'ठुमरी'

कुञ्जे कुञ्जे मां विहारी सखि रुन्धे मनोहारी । कुञ्जे कुञ्जे० ॥ १ ॥
शपथशतैरपि मुञ्चति नायम्
यमुनातटमनु चञ्चति सायम्
कपटवचनविश्वासवशादय-
मनुनयते नुतिकारी ॥ कुञ्जे कुञ्जे माम्० ॥ २ ॥
उचितमये ! कलये कमुपायम्
कस्य वचनमनुगच्छति वाऽयम्
मञ्जुनाथ बत दुर्ललितोयं
न विनयते गिरिधारी ॥ कुञ्जे कुञ्जे० ॥ ३ ॥

मनोहारकः विहारी ( कृष्णः ) प्रतिकुञ्जं मां रुन्धे रुणद्धि । लट आत्मनेपदे प्रथमपुरुषैकवचनम् ॥ १ ॥ शपथशतैरपि मां न त्यजति । सायं नित्यं यमुनातटम् अनुगच्छति । कपटवचनानां विश्वासं दत्वा अयं स्तुतिं कुर्वन् अनुनयते । कपटप्रतिज्ञां विधाय, चाटूनि च कृत्वायं स्त्रीरनुनयतीत्यर्थः ॥ २ ॥ अये ! ( सखि ! ) उचितं कम् उपायं कलये । अयं गिरिधारी दुर्ललितः, अत एव न विनयते, न विनयं गृह्णाति ॥ ३ ॥

## ६–दादरा

मम दैन्यं न जानासि नाथ किमु मुहुरावेदये ।
पराधीन्यं न जानासि नाथ किमु मुहुरावेदये ॥ १ ॥

---

१ 'मानो मानो ना बिहारी तोरे पांय पर हारी' इति बिन्दादीनठुमरीवत् ।
२ करहैंया न दूटे हमार बेदरदी हो बालमा । इतिवत्

भवत्पदाब्जमुपादेयमस्ति भक्तानाम्
न किञ्चिदन्यदितो रोचतेऽनुरक्तानाम् ।
क्षयिष्णु नाकसुखं भाति बुद्धिरिक्तानाम्
त्वमेव दिव्यनिधिः स्नेहरसाऽऽसिक्तानाम् ॥
अयि कुत्राधुना यासि नाथ ! किमु मुहु० ॥ २ ॥
अजामिलादिमहापापिनो दिवं याताः
त्वया प्रभूतदयासागरेण निध्याताः ।
इतः परेऽपि किमन्ये प्रभो न विख्याताः
तवेह ये करुणापात्रतामुपायाताः ॥
अपि मामेव हातासि नाथ ! किमु मुहु० ॥ ३ ॥
भ्रमामि भूरि भृतो भावनाऽभिमानेहम्
न जातु मोदमये त्वद्गुणानुगानेहम् ।
भवन्तमेव विभो रक्षकं विजानेहम्
ऋते भवन्तमवन्तं परं न जानेहम् ॥
वद किं मे विधातासि नाथ ! किमु मुहु० ॥ ४ ॥
भवन्निकेतमहं नाथ समागच्छामि
पदाम्बुजस्य तले मस्तकं नियच्छामि ।
कृपाकटाक्षलवं नाथ किञ्चिदिच्छामि
कदा लभेय तमित्याकुलं विपृच्छामि ॥
शृणु वाक्यानि मे मञ्जुनाथ ! किमु मुहु० ॥ ५ ॥

परस्य आधीन्यम् ( अधीनताम् ) ॥ १ ॥ निध्याताः विलोकिताः तव ये दयापात्रतामुपयाताः, ईदृशाः किमेभ्योऽन्ये न विख्याताः ? अपि तु वहव

इति भावः ॥ ३ ॥ भावनायाः अभिमाने भृतो भ्रमामि, त्वद्गुणगाने मोदम् न श्रये ( प्राप्नोमि ) । परमेवं मम स्पष्टे दोषेपि भवन्तमेव रक्षकं जानामि । भवन्तम् ऋते ( विना ) कंचिदपि अवन्तं रक्षन्तं न जाने । विधातासि कर्तासि, लुट् ॥ ४ ॥ नियच्छामि स्थापयामि । तम् ( कृपालवम् ) कदा लभेयेति आकुलं यथा तथा पृच्छामि ॥ ५ ॥

## ७-लावनी

### रासलीलायां मदनविजयः

जयति जगदानन्दनकारी । माधवो मनसिजमदहारी ॥ (ध्रु०)
गोपिकाजनजीवनधारी । सकलनिजभक्तभीतिहारी ॥
निखिलजगदालम्बनकारी । जयति हरिरुन्मदपरिहारी १
जयति जगदानन्दकारी । माधवो मनसिजमदहारी ॥
दो०—व्रजवामाकामानसौ पूरयितुं विजहार ।
तदिह दिव्ययमुनातटे रन्तुं मनश्चकार ॥
कारणं विना प्रणयकारी । माधवो मनसिज० ॥ २ ॥
शरदि वियदासीदतिविमलम् । चकाशे शशधररुचिरमलम् ॥
कुमुदकरमुकुलितनवकमलम् । लसति कालिन्दीकूलमलम् ॥
दो०—शशधरकरनिकरैरियं रजनी शुशुभे भूरि ।
परितः प्रमदभरैरिदं सकलं भुवनमपूरि ॥
पूरितः प्रमदैर्गिरिधारी । माधवो० ॥ ३ ॥
गोपिकाकामान्पूरयितुम् । मनोभवदर्पं दूरयितुम् ॥
रसे हृदयानि विनोदयितुम् । वेणुमारेभे वादयितुम् ॥

दो०—मञ्जुमुरलिकानादमिममुपगतमात्मगृहेषु ।
संनिशम्य गोपीगणो गतवान् वनकुञ्जेषु ॥
येषु रेमे स मनोहारी । माधवो० ॥ ४ ॥
इह हि गोपीषु सपरिहासम् । ततो व्यातेने स हि रासम् ॥
विदित्वा मनसिजमदवासम् । तिरोभूत्सोयं सविलासम् ।
दो०—हरिमवीक्ष्य वामा इमाः कामाकुलमनसो हि ।
तरुवीथीषु विचिन्वते दर्पो दूरमरोहि ॥
मोहितः कुसुमचापधारी । माधवो० ॥ ५ ॥
तदनु हरिविरहाकुलहृदया । दृगम्बुजपूरितबाष्पचया ॥
वधूततिरुज्झितहरिविचया । प्रतेपे निहितहरिप्रणया ॥
दो०—हरिचरितानुकरणपरा भृशमनुरागभरेण ।
व्रजवनिता दयितानुगां जगुः कीर्तिमचिरेण ॥
येन हरिरुदयति भयहारी । माधवो० ॥ ६ ॥
अहह निजभक्तदयाशाली । आविरासीदिह वनमाली ॥
प्रसन्ना रेमे प्रमदाली । पुलककुलकलितगण्डपाली ॥
दो०—मनसिजमदमर्दनमिमं मुररिपुमयसि न केन ?
रात्रिन्दिवमिममुपचरेर्मञ्जुनाथ हृदयेन ॥
येन स हि दुष्कृतविनिवारी । माधवो० ॥ ७ ॥

रासलीलाव्याजेन स्मरगर्वो योऽपहृतस्तत्कथा भागवतस्थाऽनुसंधेया । उन्मदान् जनान् परिहरति दमयति तच्छीलः । अनेन गर्वितस्य कामस्याग्रे भावी विजयः सूच्यते ॥ १ ॥ निष्कारणम् (स्वार्थं विना) प्रणयकारी ॥ २ ॥ रासलीलासमये विरोधिनः कामस्य पूर्णोद्दीपनसामग्री शरदाविर्भावादिकं वर्ण्यते—अमलं यथा तथा शशधरस्य रुचिः कान्तिश्चकाशे । कुमुदस्य

चन्द्रस्य करैर्मुकुलितानि नवकमलानि यस्मिन्नीदृशं कालिन्दीकूलम्, अलं यथा तथा लसति । प्रमदः हर्षः ॥ ३ ॥ रसे आत्मलीलारसे भक्तानां हृदयानि विनोदयितुम् सुखयितुम् । अनेन भगवदवतारस्य भक्तोद्धारः प्रयोजनं सूचितम् ॥ ४ ॥ रासस्मये प्रणयासक्तं हरिमनुमाय मनसिजस्य मदनिवासो गर्वोदयो जातः, तं विदित्वा हरिस्तिरोभूत् । तरुवीथीषु वामाः हरिं विचिन्वते । दर्पः दूरम्, अरोहि स्थापितः, गर्वो दूरीकृत इत्यर्थः । रोहयतेः कर्मणि लुङ् । एतं हरेः प्रभावं दृष्ट्वा कुसुमचापधारी (कामः) मोहितः ॥ ५ ॥ उज्झितः हरेर्विचयः (अन्वेषणम्) यया सा, हरिप्रणयासक्ता वधूततिः (गोपीमण्डली) प्रतेपे, किमित्यस्माभिर्गर्वो विहित इत्यनुतापं चक्रे । दयितस्य श्रीकृष्णस्य अनुगतां (तत्सम्बन्धिनीम्) कीर्तिं जगुः ॥ ६ ॥ प्रमदानाम् आलिः पङ्क्तिः । केन न अयसि (शरणं न गच्छसि) ? ॥ ७ ॥

## ८—नाटकीयठुमरी

नटवर गिरिधर जगदभिराम मामपि तारयस्व हे । (ध्रु०)
शारदशीतकिरणसुन्दरमुख नयनयुगलजनिताऽऽनतजनसुख
चरणशरणगतभक्तदुरितमपवारयस्व हे ॥ १ ॥
प्राणाधार कलिमलहार हृतभूभार मङ्गलकार
गुणकूपार मुनिनुतचार जनिसुखसार
दुरितकृदपि तव सेवक इत्यवधारयस्व हे ॥ २ ॥

नयनयुगलेन जनितम् प्रणतानां जनानां सुखं येन (कृष्णेन) तत्सम्बुद्धौ ॥ १ ॥ गुणानां कूपार (सागर), मुनिभिः नुतः चारः (चरितम्) यस्य तत्सम्बुद्धौ । जनेः (जन्मनः) सुखस्य सारभूत ! ॥ २ ॥

## ९—गालिगीतिः

जयति नवरासविहारी । अहो भक्तजनदुरितनिवारी ॥
असुरनिकरपरिपीड्यमान-वसुधाभरहारी रे । जयति नव० ॥१॥

९ 'हा कृष्णकूं गावैं गारी, सखी वरसानेवारी' इतिवत् ।

बलसूदनमदनिदमनकारी । कालियसर्पदर्पपरिहारी ।
सुरपतिपीडितनिजजनपालनगिरिवरधारी रे । जयति नव० २
सुरभितनववनमालाधारी । ललितलुलितमृदुकुन्तलभारी ।
सरशरपरवशहृदयनवव्रजनार्यभिसारी रे । जयति नव० ॥३॥
यमुनाविपुलपुलिनसंचारी । नानाविधनवकौतुककारी ।
चरणकमलमकरन्दमञ्जु-मथुरावनचारी रे । जयति नव० ॥४॥

बलसूदनस्य इन्द्रस्य मददमनकारी । सुरपतिना पीडितानां निजजनानां पालनार्थं गिरिवरधारी ॥ २ ॥ विलुलितः मृदुः कुन्तलभारोऽस्य ॥ ३ ॥ मकरन्देन मञ्जुनि मथुरावने (मधुवने) चरति । 'मञ्जु–मथुरा' इत्याभ्यां कर्तुर्नाममुद्राऽपि ॥ ४ ॥

### १०–देशमल्लाररागेण

जय जय नन्दतनय करुणामय ।
जय जय० ॥
निजजनदुरितनिकरपरिभञ्जन !
भवभयमाशु विनाशय ॥ जय जय० ॥ १ ॥
यमुनाकूलकदम्बविलम्बित-
हिन्दोलनमुदिताशय । जय जय० ॥ २ ॥
व्रजवनिताऽऽवृतगोपकिशोरी-
भूषितललितलताऽऽलय ! जय जय० ॥ ३ ॥
सरसरसितजलदाऽऽलिगलितजल-
बिन्दुजनितमदनोदय । जय जय० ॥ ४ ॥
चपलाचलितचकितनववनिता-
लिङ्गनसंजनिताऽभय । जय जय० ॥ ५ ॥

तव चरणाऽऽहितनिखिलमनोरथ-
मञ्जुनाथमपि मानय । जय जय० ॥ ६ ॥

कदम्बवृक्षे लम्बितेन हिन्दोलनेन ('हिँडोला') मुदिताऽऽशय ॥ २ ॥ गोपकिशोर्या (राधया) भूषितः लताऽऽलयः (कुञ्जगृहम्) यस्य तत्स-म्बुद्धौ ॥ ३ ॥ सरसं रसितम् (गर्जितम्) यस्याः, ईदृश्याः जलदाल्याः गलितैर्जलबिन्दुभिर्जनितो मदनोदयो यस्य ॥ ४ ॥ चपलायाः (विद्युतः) चलनेन चकितानां वनितानाम् आलिङ्गनेन संजनितम् अभयं येन ॥ ५ ॥

## ११–नाटकीयगीतिः

जय जय जगदीश मुरारे ! जय करुणाकर कंसारे ! ॥
भवता कलिता नरलीला । वसुधाभरविशमनशीला ।
चिरसदय सतामुद्धारे । जय जय० ॥ १ ॥
व्रजगोपवधूष्वविकारम् । रासं कृतवानसि सारम् ।
अयि जितदुर्मद ! दनुजारे ! जय जय० ॥ २ ॥
स्वामिन् न च याचे नाकम् । दिव्याभिस्तनुभिः साकम् ।
भव शरणं मम संसारे । जय जय० ॥ ३ ॥

सताम् उद्धारे चिरकालात्सदय ! ॥ १ ॥ गोपवधूषु अविकारम् (मदन-विकाररहितं यथा तथा) । जिताः दुर्मदाः कंसादयो येन तत्संबुद्धौ ॥ २ ॥

## १२–प्राचीननाटकीयगीतिः

जयति दुरितहारी लसद्गिरिधारी ।
मञ्जुवदन कुञ्जसदन कञ्जचरण रञ्जयन् जनम् ।
जयति दुरितहारी लसद्गिरिधारी ॥ १ ॥

११ 'दो फूल जानीं लेलो' इतिवत् ।

त्वयाऽद्य हर्षिताः स्वसेवकाः कृताः ।
खलास्तु धर्षिता मर्दिताश्च देवताः ॥ २ ॥
जय जय देव ।
लोचनचन्दिर कौशलमन्दिर मन्मथसुन्दर नीतिनिधे !
जय जय भयहर धर्मधुरन्धर करुणाकर कृतविबुधविधे !
विबुधेश ! शुभवेष !! मृदुकेश !!! जयति दुरित० ॥३॥
अयि कंसनिकन्दन निकटमेहि ।
तव करुणादृशमिह मयि निधेहि ॥
गोपवधूचेतोहारी । जयति दुरितहारी लसद्गिरिधारी ॥४॥

कुञ्जः सदनं यस्य तत्सम्बुद्धौ ॥ १ ॥ कृताः विबुधानां विधयः (रक्षाकार्याणि) येन तत्सम्बुद्धौ ॥ ३ ॥



१ "नैनों ने तोरे कटारी मोरे जिया मारी ।" इतिवत् ।



# उर्दूभाषाचत्वरः

—※ ग़ज़ल ※—

[ १ ]

नन्दनन्दन हे मुकुन्द मनोऽरविन्दमुपेहि मे ।
एतदभ्युदिताऽनुरागमिलन्मरन्दमवेहि मे ॥ १ ॥
कण्टकाऽऽकुलितानि यासि वनानि गोपरिचारणे ।
कञ्जलोचन कोमलं क्षणमेव मानसमेहि मे ॥ २ ॥
घूर्णमानमनारतं धनदुर्मदेषु जनेष्वलम् ।
मानसं विमनायते बत लालसालवलेहि मे ॥ ३ ॥
मन्यसे करपल्लवं कमलालयाकरकीलितम् ।
त्वत्पदाम्बुजमेव मौलितटे ततो विनिधेहि मे ॥ ४ ॥
आगमेषु च शासनेषु मतान्तरेषु निरन्तरम् ।
मोहितोसि परिभ्रमन्नधुना समक्षमुदेहि मे ॥ ५ ॥
मायया परिमुह्य सम्प्रति संततं विचराम्यहम् ।
सान्त्वनं तु दयावतार दयादृशैव विधेहि मे ॥ ६ ॥
मञ्जुनाथनिवेदनं क्षणमात्रमेव निशम्यताम् ।
किञ्चिदञ्चितलोचनं करुणादृशं तव देहि मे ॥ ७ ॥

मे मनोरूपम् अरविन्दम् उपेहि, कमलमेतदासनरूपेण ते ददामीत्यर्थः। एतत् (मनःकमलम्) अभ्युदितो योऽनुरागः स एव मिलन् मकरन्दो यस्य तादृशम्, अवेहि। त्वत्प्रेम्णा समकरन्दमिदं जानीहीत्याशयः॥ १॥ लालसालवं लेढि तच्छीलम्, सदा लालसाऽऽकुलमित्यर्थः॥ २॥ करपल्लवं लक्ष्म्याः करेणावरुद्धं मन्यसे ततः (तर्हि) मे मौलौ ते पदाम्बुजं निवेहि॥ ४॥ आगमेषु वेदादिषु, शासनेषु शास्त्रेषु, मतान्तरेषु सम्प्रदायेषु। उद्-आ०इहि॥ ५॥ किञ्चित् अञ्चितलोचनम् (प्रहितनयनं यथा तथा)॥७॥

[२]

भगवन् दयादृगेषा मयि दीयतां दयालो।
अधुनाऽवहेलना मे न विधीयतां दयालो॥ १॥
सुकृतीति को न पायात्पुरुषं सुरोऽपरोपि?
अयमद्य पापकारी परिचीयतां दयालो॥ २॥
करितो न पीनकायो गिरितो गुरुर्न चाऽहम्।
दुरितोपरोधतो मे न निलीयतां दयालो॥ ३॥
कति तारिता भवेयुर्भवताऽपराधिनोऽलम्।
अपि दीनदुष्कृतोयं न विहीयतां दयालो॥ ४॥
विषयाऽटवीषु बाढं भ्रमितोऽतिदुःखितोऽहम्।
अयि नाथ! वेदना मे व्यपनीयतां दयालो॥ ५॥
अहमस्मि सार्वभौमो निखिलाऽघकारकाणाम्।
भवताऽद्य भूरि भूमन्नवधीयतां दयालो॥ ६॥
भ्रमता भृशं भवेस्मिन्नयि नाथ! वीक्षितोऽसि।
अधुना तु मे समीपान्न निलीयतां दयालो॥ ७॥

कृपया ममाऽवनाय व्यवसीयतामुताहो ।
करुणाऽर्णवेति नाम व्यपनीयतां दयालो ॥ ८ ॥
निगमैस्तवाऽवबोधे कियदङ्ग गीयते स ।
अयि मञ्जुनाथवाचा कति गीयतां दयालो[1] ॥ ९ ॥

एषा सुप्रसिद्धा ते दयादृक् मयि दीयताम् ॥ १ ॥ अपरः (त्वदन्यः) कः सुरोऽपि, सुकृती इति विचार्य पुरुषं न पायात्, अपि तु सुकृतिनं सर्व एव देवगणः पायात् । परम्, अयम् (मादृशः) पापकारी अद्य परिचीयताम् ॥ २ ॥ करितः गजेन्द्रात्, पीनशरीरो नास्मि । गिरितः गोवर्द्धनपर्वतात् गुरुश्च नाहम् । अत एव मे पापोपरोधकारणात् न निलीयताम् ॥ ३ ॥ भूमन् पृथिवीनाथ ! ॥ ६ ॥ मम रक्षणाय व्यवसीयताम् निश्चीयताम्, उताहो (आहोस्वित्) करुणार्णवेति नाम दूरीक्रियताम् ॥ ८ ॥

[ ३ ]

व्रजराज गोकुलेन्दो जय कीर्तिजादृगिन्दो ।
परिपाहि दीनलोकानयि सर्वसौख्यसिन्धो ॥ १ ॥
भवदाश्रयं दधाना वयमद्य मोदमानाः ।
करुणाऽवलोकलेशं वितराऽऽशु दीनबन्धो ॥ २ ॥
किमु सर्वसंकटेभ्यो यमुनातटे तदानीम् ।
व्रजवासिनोऽविता नो ? वद दैत्यवृन्दकन्दो ॥ ३ ॥

---

१ 'दयालो !' इति 'तुकान्तम्' (काफ़िया), संस्कृतस्थमपि भङ्गश्लेषविधया उर्दूगतमपि संभवतीति चित्ररूपेण पूरितमधस्ताद्दीयते—

"सब कुछ सहा, सज़ाये बर्दाश्त कर चुका हूं ।
देखो इधर नज़र भर अब तो ज़रा दया लो ॥
दुनिया के झंझटों से बेज़ार होचुका हूं ।
अब हो नज़र इधर भी, इस दीनकी दया लो ॥"

वसुधासुधानिधीशे करुणामहोदधीशे ।
त्वयि को न वाऽनुरज्येद्गुणरम्यरत्नसिन्धो ॥ ४ ॥
तव माययाऽधिरूढो मूढो भ्रमामि कामम् ।
अधरीकरोषि किं मामयि विश्ववृत्तविन्दो ॥ ५ ॥
सुदिनं समीयतां मे, बहुभाग्यमीयतां मे ।
भव लोचनाऽतिथिस्त्वं व्रजभूमिभालबिन्दो ॥ ६ ॥
विजहासि लोकलोभाद्धरिपादपद्मशोभाम् ।
अयि मञ्जुनाथ धिक्त्वामपयाहि ब्रह्मबन्धो ॥ ७ ॥

कीर्तिजायाः राधिकायाः [ राधिकामातुः कीर्तिरिति नाम । ] दृशोः इन्दुरूप ! ॥ १ ॥ व्रजवासिनः न अविताः ? ( रक्षिताः ) इति काकुः । अपि त्ववश्यं रक्षिताः । दैत्यवृन्दानां कन्दो शोषक ! ॥ ३ ॥ वसुधायाः सुधानिधीशे ( चन्द्रे ), करुणायाः महोदधीशे ( महासागरे ) त्वयि ॥ ४ ॥ विश्ववृत्तं विन्दति प्राप्नोति तत्सम्बुद्धौ ॥ ५ ॥ मे सुदिनं समीयताम् प्राप्नोतु, महाभाग्यम् ईयताम् आगच्छतु । हे व्रजभूमेर्भालबिन्दुसदृश ( तिलकायित ! ) त्वं लोचनातिथिर्भव । तव लोचनातिथित्वं मम सुदिनप्राप्तिर्महाभाग्यं चेत्याशयः ॥६॥ हे ब्रह्मबन्धो ब्राह्मणाधम ! अपयाहि दूरं गच्छ ॥७॥

[ ४ ]

नवीना वेदना काचिद्वियोगे हन्त जातेयम् ।
अलं मे वैद्य ! विश्वासैरिहाऽऽयासो वृथा तेऽयम् ॥ १ ॥
मुहुर्मे मानसे सोयं समिन्धे पावको बाढम् ।
हिमानीवारिधाराभिः क्षणं ज्वाला न यातेयम् ॥ २ ॥
अहो मे चापसन्धायिन्मुधा किं वा समाश्वासैः ?
उरो मे पश्य मह्यातीषुकोटिस्ते निखातेयम् ॥ ३ ॥

अहो जाने नवीनेयं प्रथा मे सौख्यजिज्ञासोः ।
वितन्वानेन मे सान्त्वं निशातेषुर्निखातेयम् ॥ ४ ॥
सखे संलापसौख्यं मे विहिंसीर्मा, निशा याता ।
न जाने कुत्र संयाता पुनः पान्थः प्रभातेयम् ॥ ५ ॥
न कम्पं यामि, नो दूये, न रुन्धे, हन्यमानोऽहम् ।
परं निस्त्रिंश निस्त्रिंशस्य नो धारा निशातेयम् ॥ ६ ॥
प्रतप्यन्ते प्रकम्पन्तेऽथ केचिद्दुर्मनायन्ते ।
गता ते चञ्चलाऽपाङ्गे ! यतो दृष्टिर्निशातेयम् ॥ ७ ॥
सखे मे पृच्छ मा तापम्, दुरापं मार्मिकं मन्ये ।
पिशङ्गा श्वासधूमैर्मे कृता रथ्याऽवदातेयम् ॥ ८ ॥
वचोभिर्मञ्जुनाथाऽलम्, मनुष्या मूर्तयो जाताः ।
प्रभावो मानसादस्मान्न निर्याता सदा तेऽयम् ॥ ९ ॥

विरहे काचिन्नवीनेव वेदना जाता । अत एव हे मे वैद्य ! मम विश्वासदानैरलम्, ते अयं चिकित्सायाः आयासो वृथा ॥ १ ॥ समिन्धे समिद्धो भवति । 'ञिइन्धी दीप्तौ' आत्मनेपदे लट् । महतो हिमस्य जलधाराभिः क्षणमपि ज्वाला न गता ॥ २ ॥ अहो मे धनुर्धारिन् ! मुधा आश्वासैः ( सान्त्वनैः ) किम् ? पश्य, ते निखाता ( सबलं प्रोथिता ) इयं इषुकोटिः ( बाणाग्रम् ) मे उरो मथ्नाति । त्वं बाणेन मे हृदयं विध्यसि, उपरितस्तु सान्त्वनं करोषीति मिथ्याऽऽश्वासनैः किं फलमित्यर्थः । नेत्र–भ्रुकुट्यादिरूपकरूपेण उर्दूभाषासाहित्ये एवं वर्ण्यंत इत्यग्रेऽप्यनुसन्धेयम् ॥ ३ ॥ मम सौख्यप्रच्छकस्य इयं नवीनैव प्रथा, यत् उपरितः सान्त्वनं कुर्वता, मे उरसि निशाता इषुः ( तीक्ष्णो बाणः ) निखाता । इषुर्द्वयोरित्यमरः ॥ ४ ॥ हे सखे ! मे संलापसुखं मा विहिंसीः मा नाशय, इयं समागमस्य निशा व्यतीता ॥ ५ ॥ घ्नन्तं त्वां न रुन्धे रुणध्मि, यतः अहं ते हन्यमानः । परं हे निस्त्रिंश

(क्रूर) ते निस्त्रिंशस्य खड्गस्य धारा तीक्ष्णा न। भुग्नधारेण खड्गेन मां विदारयसीत्येव ते निर्दयत्वम् ॥ ६ ॥ हे चञ्चलकटाक्षे ! यतः यस्मिन् मार्गे ते तीक्ष्णदृष्टिर्गता, तत्र केचिज्जनाः तप्यन्ते, केचिद्विरहावेगात्कम्पन्ते, केचिच्च दुर्मनायन्ते उत्कण्ठिता भवन्ति ॥ ७ ॥ मे तापं मा पृच्छ। मत्ताप-मर्मवेदिनं दुर्लभं मन्ये। यतो मे विरहश्वासधूमैः अवदाताऽ (स्वच्छा) पि रथ्या मार्गवीथी पिशङ्गा पिञ्जरा कृता ॥ ८ ॥ हे मञ्जुनाथ वचोभिः ते सूक्तिभिरलम्। मनुष्याः मूर्तयः ('बुत') जाताः। ते प्रभावः अयम्, मानसात् न निर्याता निर्यास्यति, लुट् ॥ ९ ॥

[ ५ ]

हे चित्त चिन्तयैव चिरान्नापचीयताम्।
हंहो सखे सुखेन विलासो विधीयताम् ॥ १ ॥
हंहो दिनं दिनं सखि दैन्यं प्रयासि किम्।
गोष्ठी विलासिनामधुना संनिधीयताम् ॥ २ ॥
अट्टालकेऽद्य साधुसुधासत्रमाहितम्।
भो रागतोऽद्य नेत्रचकोरा निपीयताम् ॥ ३ ॥
गोष्ठीं निरूप्य तुष्यसि किं रूपशालिनाम्।
अस्मिन्विमोहने वने पादो न दीयताम् ॥ ४ ॥
अस्मिन्ननन्तदृष्टयः सक्ताः स्युरुत्कटम्।
वक्त्रावगुण्ठनं तु विदूरे विधीयताम् ॥ ५ ॥
पृष्टं मया "क्व पत्रमिदं मे निधीयताम् ?"
साक्ष्यमुक्तमेतया "नीरे निधीयताम्" ॥ ६ ॥
संकेतमस्य चेत्सखि सत्यं वितर्कसे।
धैर्यं दिनं, प्रतीक्षणे रात्रिर्व्यतीयताम् ॥ ७ ॥

नेत्रेण चञ्चलेन तत्कार्यं समापितम् ।
कोषान्तरेऽद्य ते चिरं खड्गो निलीयताम् ॥ ८ ॥
तत्स्वागतं विधातुमुरः सज्जमस्ति मे ।
चापाद्विशङ्कमेव शरस्ते प्रहीयताम् ॥ ९ ॥
वक्षो न मे परामृशेश्चित्तस्य मार्गणे ।
तस्यैव निष्ठुरस्य गृहे तद्विचीयताम् ॥ १० ॥
रुग्णोऽयमेकमात्रया भूमौ वतार्यते ।
वैद्यस्य हस्तलाघवं मित्राऽनुमीयताम् ॥ ११ ॥
छन्दःप्रबन्धमेनमहो को निरीक्षते ।
हे मञ्जुनाथ ते कृतिर्गेहे निधीयताम् ॥ १२ ॥
जानीम मञ्जुनाथमिमं भूरिभाषिणम् ।
गोष्ठीष्वमुष्य नामनिवेशो न दीयताम् ॥ १३ ॥
भो भो महाशयाऽधुना तूष्णीं निषद्यताम् ।
वाढं श्रुतेयमेव तु गीतिर्न गीयताम् ॥ १४ ॥

चिरात् चिन्तयैव न अपचीयताम् कृशीभूयताम् ॥ १ ॥ सुधायाः सत्रम् (‘सदावर्त’) । काचित्सुन्दरी अट्टालके आगतेत्यर्थः । अतएव हे नेत्रचकोराः रागात् सुधा पीयताम् ॥ ३ ॥ विमोहने दर्शकानां मोहके ॥ ४ ॥ अनन्तानां जनानामनन्ता दृष्टयः अस्मिन्मुखावगुण्ठने लग्नाः स्युः [ यतः इदमेव मुखदर्शनरोधकम् ], अत एवेदं दूरीक्रियताम् । मुखदर्शनेच्छा आकूतम् ॥ ५ ॥ तस्य शरस्य स्वागतं विधातुम् ॥ ९ ॥ चित्तस्य अन्वेषणार्थं वक्षःस्थलं न परामृश ॥ १० ॥ एकया मात्रया ‘खुराक’ । भागुरेरकारलोपोऽवतार्यत इत्यत्र ॥ ११ ॥ निषद्यताम् स्थीयताम् ॥ १४ ॥

[ ६ ]

### उर्दूभाषायाः प्रेमवर्णनसमालोचनपरा ग़ज़लगीतिः

'रुबाई' (चौपदा)

अये भोः प्रिये ! ते प्रतीतिर्न वा ?
तव प्रेमिणां क्वापि रीतिर्नवा ॥ १ ॥
सुराः स्वर्गसौधे पिबेयुः सुधाम् ।
इहाऽप्याहुरापानकेऽन्यां विधाम् ॥
परं तर्पयेद्वापिकाऽश्रूद्भवा ।
अमीषां तु पीयूषपीतिर्नवा ॥ २ ॥
अकारस्थले 'आह' आवेदयन् ।
मृतावेव संमोदमासादयन् ॥
प्रिये ! प्रेमविद्यालये सोत्सवा ।
अहो प्रेमिणां स्यादधीतिर्नवा ॥ ३ ॥
'तबीबोमसीहाः' सहैवाऽऽसते ।
तथाप्यौषधं हन्त नोपासते ॥
मुखे मृत्युचर्चा श्रुतैषां ध्रुवा ।
अहो प्रेमिणां मृत्युभीतिर्नवा ॥ ४ ॥
शवाधारवस्त्रं शिरस्याहितम् ।
प्रियेण प्रियाद्वारि कामात्स्थितम् ॥
अहो श्रूयतां सेयमुर्दूद्भवा ।
प्रिये ! विप्रयोगस्य गीतिर्नवा ॥ ५ ॥

सदा मद्यशालासु बाला वसेत् ।
अहो बिन्दुमाप्यैव दुःखं ह्रसेत् ॥
प्रिये मन्यतां मद्य'कुलकुल'रवा ।
तव प्रेमिणां धर्मनीतिर्नवा ॥ ६ ॥
भवद्वासधूलिं विचिन्वन्ति ते ।
निजं धूलिसादेव तन्वन्ति ते ॥
सदा दैन्य-चिन्ताश्रुलब्धोद्भवा ।
अहो प्रेमिणां ते विनीतिर्नवा ॥ ७ ॥
सुखं क्वापि हिन्दीभवं दीयते ।
क्वचिच्चोक्तिरुर्दूक्रमे नीयते ॥
सखे मञ्जुनाथाऽऽहितोपद्रवा ।
तवाऽऽलक्षिताऽऽयुर्व्यतीतिर्नवा ॥ ८ ॥

अये प्रिये ! तव प्रतीतिर्न वा ? तव विश्वासोऽस्ति, अथवा नेति, आशयः ॥ १ ॥ इह लोकेऽपि आपानके पानगोष्ठ्याम्, अन्यामेव विधाम् (प्रकारम्) आहुः । परं, तव प्रेमिकान् अश्रूद्भवा (अश्रुजनिता) वापी तर्पयेत् । अतः एषाममृतपानं नवीनमेव ॥ २ ॥ यथा ह्युच्यते प्रेमिभिः—

'अश्क खूं पीनेको और लख्ते जिगर खानेको ।
ये गिज़ा मिलती है जानां तेरे दीवानेको ॥'

अक्षरपाठसमये 'अ'कारोच्चारणवेलायाम् हृदयपीडासूचिकाम् 'आह' इत्येव आवेदयन् न्यवेदयन् । यथा ह्युच्यते—

"इश्क़के मकतबमें मेरी आज बिस्मिल्लाह है ।
मुंहसे कहताहूं 'अलिफ़' दिलसे निकलती आह है ॥"

तव प्रेमिणः मृतौ एव (मरण एव) संमोदम् आसादयन् यथा—

'जो मज़े हैं मर्गमें सो हमसे पूछा चाहिये।
कोइ जाने आह! क्या लज्ज़त है मर जाने के वीच॥'(दर्द)
'मज़े जो मौतके आशिक़ बयां कभू करते।
मसीहो ख़िज्र भी मरनेकी आरज़ू करते॥' (ज़ौक़)

अत एव प्रेमविद्यालये तव प्रेमिणां सोत्सवा (सानन्दा) अधीतिः (अध्ययनम्) नवीनैव॥ ३॥ तव प्रेमिणां सन्निधौ 'तबीबोमसीहाः' (वैद्याः) सहैव तिष्ठन्ति, तथापि ते (त्वत्प्रेमिणः) औषधं न सेवन्ते। यथा—

"बोसए ख़ाले ज़नख़दां से शफ़ा होगी हमें।
क्या करेंगे ऐ तबीब इस तेरे बुहदानेको हम॥"
"जुज़ ख़ाक दरे यार दवा दो न तबीबो!
वल्लाह अटक जायगी अकसीर गलेमें॥" (नासिख़)

एषाम् (प्रेमिणाम्) मुखे ध्रुवा मृत्युचर्चैव श्रुता। यथा—

"इश्कमे जांसे गुज़रते है गुज़रने वाले।
मौतकी राह नहीं देखते मरनेवाले॥" (अमीर)
"छुटेंगे ज़ीस्तके फंदेसे कौन दिन 'आतिश'।
जनाज़ा होगा कब अपना रवां नहीं मालूम॥"
"जीने ने यहां के मार डाला 'आसी'।
सुनते हैं फिर हश्रमें जीना होगा॥"

सर्वेषामपि मृत्योर्भयं भवति, परम् ते प्रेमिणां मृत्युभीतिर्नवीनैव, यत् ते सदा मृत्युं वाञ्छन्तीति!॥ ४॥ शवाधारवस्त्रम् (कफ़न) शिरसि बद्धम्। प्रियाया द्वारे प्रियेण कामवशादेवंप्रकारेण स्थितम् (भावे प्रत्ययः)। यथा—

"खड़ा है देरसे आशिक़ कफ़न बांधे हुए सरसे ।
तेरे सिद्के तेरे कुर्बां मेरे क़ातिल निकल घरसे ॥"

अहो सेयम् उर्दूभाषास्था वियोगगीतिर्नवीना श्रूयताम् । शृङ्गारे अमङ्गलचर्चा नवीनैवेत्याशयः ॥ ५ ॥ मद्यबिन्दुमाप्यैव दुःखं दूरीभवेत् । यथा—

"यक क़तरए-मै ले उडी 'सौदा' को जगह से ।
बारूत के तूदे को है बस एक तिल आतिश ॥"

हे प्रिये ! मद्यपातनस्य 'कुलकुल' शब्दो यस्याम् ईदृशी, तव प्रेमिणां धर्मनीतिर्नवीनैव मन्यताम् ॥ ६ ॥ काचकूपिकामध्यात् मद्योद्वर्तनसमये यः शब्दो भवति, पारस्यभाषाकवयस्तमतिप्रेम्णा 'क़ुलक़ुल' रवेण वर्णयन्ति । मद्यं धर्मानुसारं तेषां निषिद्धम्, परं सर्वे तस्यातिप्रशंसां कुर्वन्तीति धर्मनीतेर्नवीनता । यथा—

"ज़ाहिद शराब पीनेसे काफ़िर बना मैं क्यों ?
क्या डेढ़ चुल्लू पानीमें ईमान बह गया ॥" (ज़ौक़)

तव निवासस्थानस्य ते ( प्रेमिणः ) धूलिं विचिन्वन्ति अन्विष्यन्ति । यथा—

"तेरी गलीमें ख़ाक भी छानी कि दिल मिलै ।
ऐसा ही गुम हुआकि न आया नज़र कहीं ॥" (फ़ुग़ाँ)
"क्यों कर गलीसे उसकी उठकर मैं चला जाता ।
याँ ख़ाकमें मिलना था लोहूमें नहाना था ॥" (मीर)

सदा दैन्यम्, चिन्ता, अश्रु, एभिः लब्धः आनन्दो यस्यां सा 'मह उद्धव उत्सवः ॥' ते प्रेमिणां विनीतिः ( विनयः ) नवीनैव ॥ ७ ॥ यथा—

"मजाल क्या कि तेरे घरमें पाँव मैं रक्खूँ ।
ये आरज़ू है मेरा सर हो तेरी चौखट हो ॥" (नासिख़)

क्वापि हिन्दीभवं सुखं दीयते, कवित्त–सवैयादिछन्दःप्रकरणे इत्यर्थः। क्वचिच्च उक्तिः उर्दूभाषाशैल्यां नीयते परिचाल्यते। अत एव हे सखे मञ्जुनाथ! आहिताः उपद्रवाः यस्यामेवंविधा ते आयुर्व्यतीतिः (वयोयापनम्) नवीनैव। त्वमेवंविधैरुपद्रवैरेव निजमायुर्गमयसीत्याशयः॥ ८॥

[७]

मनसो दैववशादद्य दशा दीनेयम्।
कलये किं नु सखे नैव ममाऽधीनेयम्॥ १॥
व्यथया याति दिनं यामिनी विनिद्रतया।
अनया वेदनयाऽकारि दशा हीनेयम्॥ २॥
अरतिरुपैति सखे किन्तु न शालीनेयम्।
न निलीना मयि सा किन्तु निशा लीनेयम्॥ ३॥
किमये विसयसे वैद्य मुधा मुह्यसि किम्।
न विजानासि सखे वेदना नवीनेयम्॥ ४॥
हृदयं ताम्यति मे, मीन इवाम्बूनि विना।
अयि नाऽऽयाति दृशा लज्जमानमीनेयम्॥ ५॥
विधिना सुन्दरता किं न दयायै रचिता।
परिताम्येम वयं हन्त सुखाऽऽसीनेयम्॥ ६॥
कमये चिन्तयसे, केन मनो नीतं ते?
वद ते चित्रपटी कस्य संमुखीनेयम्?॥ ७॥
अपराधोऽस्ति दृशोश्चापलं ययोरासीत्।
विनिबद्धा तु मतिः केन मामकीनेयम्॥ ८॥
अधुना व्याकुलतां मञ्जुनाथ मा यासीः।
रसिकैर्नाद्रियते गीर्न तावकीनेयम्॥ ९॥

दैववशात् अद्य मनसः इयं दीना दशा। इयम् (दशा) ममाऽधीना, न ॥ १ ॥ अरतिः (व्याकुलता) मामुपैति, परं शालीना (विनीता) इयम् (नायिका) न उपैति। मयि (ममाङ्के) सा न निलीना (आश्लिष्टा), किन्तु इयं निशैव, प्रतीक्षमाणस्य मे लीना ॥ ३ ॥ मीनः अम्बूनि (जलानि) विना इव। परम्, दृशा दृष्ट्या लज्जमानाः मीनाः यस्याः सकाशात् सेयं नायिका न आयाति ॥ ४ ॥ सुखेन आसीना स्थिता। इयं किञ्चिदपि दुःखानुभवं न करोतीत्याशयः ॥ ६ ॥ कस्य इयं चित्रपटी (चित्रम्) ते संमुखस्थेति वद ॥ ७ ॥ दर्शनचापल्यं कुर्वतोर्नेत्रयोरपराधे मे मतिः कथं त्वया निबद्धेत्याशयः ॥ ८ ॥ रसिकैः तव गीः (सूक्तिः) न आद्रियते इति न, अपि तु आद्रियते इत्याशयः ॥ ९ ॥

[८]

अये पद्मेऽङ्घ्रिपद्मे मे मनः स्यात्।
भवत्पादाऽग्रलग्नोयं जनः स्यात् ॥ १ ॥
त्वदग्रे दृश्यते देवोऽपि याचन्।
कियत्कीटायितोऽयं निर्धनः स्यात् ॥ २ ॥
कथं विन्देय ते पद्मे! प्रसादम्।
न चन्द्रं लब्धुमीशो वामनः स्यात् ॥ ३ ॥
न वित्तैः शक्नुते शक्रोऽपि लब्धुम्।
कुतस्तोषाय दीनोऽकिञ्चनः स्यात् ॥ ४ ॥
कृपादृक्कोणतस्तुष्येन्मनो मे।
न किं वा चातकप्रीत्यै घनः स्यात् ॥ ५ ॥
भजेद्बीजं स्वहृत्पद्मान्तरे यः।
स वै पद्मालये पद्माऽऽसनः स्यात् ॥ ६ ॥

कथं वा मञ्जुनाथं नेक्षसे त्वम् ?
दयादृष्टिं विना सिद्धिर्न नः स्यात् ॥ ७ ॥

भवदग्रे देवोपि याचमानो दृश्यते तर्हि मादृशः कीटायितः कियत् (क्रियाविशेषणम्) स्यात् ॥ २ ॥ यः जनः भवद्बीजम् (श्रीम्) स्वहृदयकमलान्तरे भजेत्, स पद्मासनः (ब्रह्मा) भवेत् ॥ ६ ॥

[९]

नन्दसूनो ! किं विधूनोष्यद्य माम् ।
दीनमेनं मुञ्चसे हा किंतमाम् ॥ १ ॥
श्रीपतेस्ते का भवेद्दीने दया ।
सर्वदोत्सङ्गे निधत्से यद्रमाम् ॥ २ ॥
राजभोगान् न्यस्य शाकैः प्रीयसे ।
को न विन्ते ते कृपां भिन्नक्रमाम् ॥ ३ ॥
किं विपृच्छस्यद्य मे वाचालताम् ।
कल्पये वाचं विदां वाचंयमाम् ॥ ४ ॥
त्वन्मुखाग्रे दृश्यते दीनः शशी ।
चेतसा कश्चिन्तयेच्चन्द्रोपमाम् ॥ ५ ॥
तावकानां त्वत्स्मृतौ या जायते ।
मूर्च्छनां मन्येय तां संवित्समाम् ॥ ५ ॥
मञ्जुनाथप्रार्थने चेन्नेक्षसे ।
निःस्पृहो याचामि कस्माद्वा क्षमाम् ॥ ७ ॥

विधूनोषि दुःखं ददासीत्याशयः । किंतमाम् किमर्थम् ॥ १ ॥ दुर्योधनस्य राजभोगान् अपास्य विदुरस्य शाकैः प्रीयसे अत एव ते कृपाम् लोकतो

भिन्नक्रमां को न चिन्ते विचारयति ॥ ३ ॥ मम वाचालतां किं पृच्छसि, विदुषां वाचमहं वाचंयमां ( विरताम् ) कुर्वे ॥ ४ ॥ चन्द्रस्योपमाम् ॥ ५ ॥ त्वदीयानां भक्तानां त्वत्स्मरणे या मूर्च्छा भवति, ताम् चेतनासदृशीं जाने ॥ ६ ॥ मञ्जुनाथप्रार्थनायां त्वं न पश्यसि, तर्हि अहमपि निःस्पृहोऽस्मि। कस्मात्कारणात्त्वतः क्षमां याचे ॥ ७ ॥

[ १० ]

भो विभो दयादृगियं दीनदुर्बले देया।
वेदना ममाऽद्य घना देव दूरमाधेया ॥ १ ॥
साम्प्रतं विधौ वामे, रक्षकोऽस्ति को वा मे ?
याचना मदीयेयं मानसे न किं नेया ? ॥ २ ॥
दोषमेक्ष्य देवा मे दूरतोऽद्य धावन्ते।
दीननाथ हन्त दया किं त्वयाऽपि नोपेया ? ॥ ३ ॥
त्वत्कृपामुपाऽऽश्रयतां चेद्गुणा गवेष्यन्ते।
दीनबन्धुता तव किं नाथ मादृशैर्गेया ॥ ४ ॥
शीघ्रता प्रसिद्धा ते दीनदुःखदाहार्थम्।
मन्दता मदर्थमहो नाथ नाऽद्य निर्मेया ॥ ५ ॥
भ्रामयेदजस्रमियं सर्वतोऽद्य संसारे।
दैवदुर्लिपिर्निहिता मामकीनभाले या ॥ ६ ॥
द्रोहमोहमानमदा मामहो विबाधन्ते।
एकतोऽयमेकोऽहम्, सा च वाहिनी जेया ॥ ७ ॥
मायिकप्रपञ्चेऽस्मिन्नाथ नद्धनेत्रोऽहम्।
तावकी कया विधया रूपमाधुरी पेया ? ॥ ८ ॥

दर्श्यते दया यदि नो दीनहीनलोकेऽस्मिन् ।
विश्रुता तदा भवता दीनबन्धुता हेया ॥ ९ ॥
कर्ममोहितोऽद्य भृशं कीदृशं विनृत्यामि ।
मञ्जुनाथनाम्येऽस्मिन् दीननाथ दृग् देया ॥ १० ॥

हे देव घना ( निबिड़ा ) मे वेदना दूरमाधेया दूरीकर्तव्या ॥ १ ॥ विधौ विधातरि वामे प्रतिकूले ॥ २ ॥ मे दोषम् आ–ईक्ष्य किं त्वयाऽपि दया न उपेया, नाऽवलम्बितव्या, अपि त्ववश्यं कर्तव्या ॥ ३ ॥ त्वत्कृपामवलम्बमानानां जनानां यदि गुणा अन्विष्यन्ते, तर्हि तव दीनबन्धुता कस्माद् गेया ॥ ४ ॥ मन्दता न विधेया ॥ ५ ॥ एकस्मिन्पक्षे एकः अहम्, अग्रतस्तु द्रोह–मोह–मान–मदानां सेना जेतव्या ॥ ७ ॥ मायाप्रपञ्चे निरुद्धनेत्रोऽहम् ॥ ८ ॥

[ ११ ]

कीर्तये कालिन्दि मातस्त्वामहम् ।
शङ्कितः शरणं पुरः प्रायामहम् ॥ १ ॥
त्वं हि चेदवधीरयस्ययि देवि माम् ।
कं परं शरणं सुरं यायामहम् ॥ २ ॥
त्वत्तरङ्गैः सङ्गमङ्गे चेद्वहे ।
भूतिमत्त्रिदिवाऽवनौ भायामहम् ॥ ३ ॥
निर्मलं यदि ते जलं मौलौ वहे ।
संतरेयं त्वत्पतेर्मायामहम् ॥ ४ ॥
पातक! प्रोत्सर्प दूरम्, नैषि चेत् ।
मज्जये कालिन्दिधारायामहम् ॥ ५ ॥

गोपने यमुने न मे समुपेक्ष्यताम् ।
पीडितः पतितोऽस्मि मृत्स्नायामहम् ॥ ६ ॥
मानुमासीर्मञ्जुनाथं निर्बलम् ।
त्वत्तटे प्रायां तरुच्छायामहम् ॥ ७ ॥

शङ्कितः सन् त्वां शरणं प्रायाम् आयासिषम् ॥ १ ॥ अयि त्वं चेत् माम् अवधीरयसि तिरस्करोषि ॥ २ ॥ यदि त्वत्तरङ्गैः अङ्गे सङ्गमं प्राप्नोमि, तर्हि वैभववत्याम् देवभूमौ (स्वर्गे) अहं भायाम् शोभितो भवेयम् ॥ ३ ॥ त्वत्पतेः श्रीकृष्णस्य ॥ ४ ॥ हे पातक! मत्तो दूरमपसर्प! यदि दूरं न गच्छसि तर्हि त्वां कालिन्दीधारायां मज्जयामि ब्रोडयामि ॥ ५ ॥ मृत्स्नायाम् मृत्तिकायाम् ॥ ६ ॥ निर्बलं मानुमासीर्मा जानीहि । त्वत्तटे तरुच्छायाम् अहं प्रायाम् आगमम् । त्वत्तटागमनेन मे निर्बलता नष्टेत्याशयः ॥ ७ ॥

[ १२ ]

भूतेश भवत्पादयुगं भूरि भजेयम् ।
हे भर्ग! भवन्मूर्तिमबन्धाय यजेयम् ॥ १ ॥
विन्दामि महादुःखमहं मोहमहाऽब्धौ ।
आख्याहि दयानीरनिधे! कुत्र व्रजेयम् ॥ २ ॥
दीयेत दयादृष्टिलवो मह्यमयं चेत् ।
कुर्वीत कथं नाम मनोमोहमजेयम् ॥ ३ ॥
पुत्रादिपरीवारजनैर्वित्तमुपात्तम् ।
हा हन्त! मनोदुःखमिदं कं विभजेयम्? ॥ ४ ॥
दीनेषु दयावश्यमपश्यं न सुरं तम् ।
हे नाथ भवाऽऽतङ्कविभङ्गाय भजे यम् ॥ ५ ॥

त्वन्मौलिगता देवधुनी पापमपोहेत् ।
चेतःपरितापं व्यपनीयान्नगजेयम् ॥ ६ ॥
विन्दामि पदाऽम्भोजयुगं ते शरणं चेत् ।
मन्ये न तदा देव! मनोमोहमजेयम् ॥ ७ ॥
त्वं देहि दयादृष्टिमये मञ्जुलनाथे ।
वाञ्छाऽद्य महेशान मनाङ् मानसजेयम् ॥ ८ ॥

अबन्धाय मोक्षाय भवन्मूर्त्तिं यजेयं पूजयेयम् ॥ १ ॥ इयं अजा (माया) मनोमोहं कथं कुर्वीत ॥ ३ ॥ तं सुरं न अपश्यम्, यं भवदुःखविमोक्षाय अहं भजे ॥ ५ ॥ इयं नगजा ( पार्वती ) चेतःपरितापं दूरीकुर्यात् ॥ ६ ॥ तदा मनसो मोहम्, अजेयम् (न जेतव्यम्) न मन्ये, अपि तु मया जेयो भवति ॥ ७ ॥ मानसजा इयं वाञ्छा ॥ ८ ॥

[ १२ ]

भारती मे भवाय बोभूयात् ।
मानसे मे सुखानि सा स्रूयात् ॥ १ ॥
शेमुषीं मे विशोध्य विज्ञानैः ।
मानसं मे विमोहमालूयात् ॥ २ ॥
किं विशङ्कां करोषि चेतो मे!
त्वामियं देवता गिरां पूयात् ॥ ३ ॥
लालसाऽसौ ममाद्य चित्तस्था ।
शारदा मे प्रमोदमाहूयात् ॥ ४ ॥
शारदाऽसौ सरोजपीठस्था ।
मानसं मे प्रमादमाधूयात् ॥ ५ ॥

त्वं कृपां चेत्करोषि मातर्मे ।
नो कृतान्ताद्बिभेमि साऽसूयात् ॥ ६ ॥
मौनमेया न मञ्जुनाथेऽस्मिन् ।
गीतिभिस्त्वां परस्तु कः स्तूयात् ॥ ७ ॥

भारती सरस्वती । भवाय कल्याणाय ॥ १ ॥ शेमुषीं बुद्धिम् ॥ २ ॥ गिरां देवता सरस्वती, पूयात् पवित्रं क्रियात् इत्याशीः ॥ ३ ॥ प्रमोदम् आहूयात् (आह्वानं कुर्यात्) प्रमोदमानयेदित्याशयः ॥ ४ ॥ असूयासहितात् यमात् ॥ ६ ॥ मौनम् न आ—इयाः, मा गच्छेः ॥ ७ ॥

[ १४ ]

दया तवेह मामये मुकुन्द ! नन्दयेन्न किम् ? ।
पदाऽरविन्दमेतकन्मनो मिलिन्दयेन्न किम् ॥ १ ॥
कथं तरामि यन्त्रणां दुरन्तचिन्तयाऽनया ।
निपीडितस्य मोहनो मनोऽभिनन्दयेन्न किम् ॥ २ ॥
भुवोऽतिभारमुद्धरन् जहार यः सदापदम् ।
विमोहमेष माययाऽधिकं निकन्दयेन्न किम् ॥ ३ ॥
भृशं भ्रमामि वासनावशोऽविशोच्य दुर्नयम् ।
भवद्दया तु दुर्गतेर्गतिं विमन्दयेन्न किम् ॥ ४ ॥
भवान्हि तापहारको न वारको ममाऽऽपदाम् ।
इयं ममाऽवधीरणा प्रभोऽद्य निन्दयेन्न किम् ॥ ५ ॥
दयालवोपि लीलया त्वया व्यधायि चेद्विभो ।
अखर्वगर्वतत्परैर्नरैः प्रवन्दयेन्न किम् ॥ ६ ॥

वचोऽथ मञ्जुनाथ ते न चेत्प्ररोचते विदाम् ।
चराऽचरेशचेतसोऽपि चारु चन्दयेन्न किम् ॥ ७ ॥

अये मुकुन्द ! तव दया मामिह किं न नन्दयेत्, अपि त्ववश्यं नन्दयेत् । एतकद् ( एतत् ) ते पदारविन्दं किं मां मिलिन्दं भ्रमरं न कुर्यात् ? तत्करोतीति णिच् ॥ १ ॥ 'यन्त्रणां कथं तरामि' इत्यनया दुरन्तया चिन्तया निपीडितस्य मे मनः मोहनः ( श्रीकृष्णः ) किं न अभिनन्दयेत् ॥ २ ॥ सताम् आपदम् । मायया अधिकीभूतं मोहं किं न निकन्दयेत् ( दूरीकुर्यात् ) ॥ ३ ॥ दुर्नयम् ( दुर्नीतिम् ) अविशोच्य ( अविचार्य ) । दुर्गतेर्गतिं किं न विमन्दां कुर्यात् ? ॥ ४ ॥ 'तापहारकोऽपि भवान्, मम आपदां वारको ( अपहारकः ) न जातः,' इति इयं ममावधीरणा ( तिरस्कारः ) किं भवन्तं लोकेषु न निन्दयेत् ? ॥ ५ ॥ लीलयैव चेत्त्वया दयालेशः अकारि, तर्हि गर्वितैर्नरैर्मां किं न अभिवन्दयेत् ॥ ६ ॥ मञ्जुनाथ ! ते वचश्चेत् विदुषां न रोचते, तर्हि चराचरनायकस्य चेतसोऽपि ( चित्तमपि, कर्मत्वेनाऽविवक्षया षष्ठी ) किं न चन्दयेत् आह्लादयेत् ? अपि त्ववश्यं प्रमोदयेत् ॥ ७ ॥

[ १५ ]

अयि चित्त! चिरेण विचिन्तयतोऽपि च चञ्चलता न गता न गता।
अपि नाम निरन्तरयत्नशतैस्तव निष्ठुरता न गता न गता ॥ १ ॥
कियदिच्छसि निर्भरशान्तिसुखं न नियच्छसि पादमथाऽभिमुखम्।
अयि गच्छसि साधुपथाद्विमुखं तव निष्क्रियता न गता न गता ॥२
क्षणमेव विमुह्यसि वामदृशा, न फलं परिपश्यसि दूरदृशा ।
विमृशामि सखे यदि तत्त्वदृशा, तव कामुकता न गता न गता ॥३
न हि साधुजनैः सह संरमसे, न फलं विमलं त्वमिहाऽऽवहसे ।
चपलाय सखे यशसे यतसे, तव दुर्मदता न गता न गता ॥४॥

अभिनन्दसि शास्त्रगतं न मतम् ,न हि विन्दसि सन्ततमात्महितम्।
बत निन्दसि लोकमतं विमतम्, तव मत्सरता न गता न गता ॥५॥
न हि दीनजनान्परितोषयसे, बहु घोषयसे निजदानरुचिम् ।
अयि चित्त सखे तव लोलुपताऽनृतकीर्तिवितानगता न गता ॥६॥
भगवद्गुणगीतिषु नाऽऽद्रियसे, ह्रियसे मधुगायकगीतिगणे ।
जरसा विरसाऽपि तवोत्सुकता मधुरस्वरतानगता न गता ॥७॥
तव विस्वरगीतिमिहाऽर्पयसे, न विलोकयसे विबुधान्विविधान् ।
अधुनाऽपि च मञ्जुलनाथ मनाक्तव दुर्मुखता न गता न गता ॥८॥

अयि चित्त! चिरकालाद्विचारं कुर्वतोपि तव ॥ १ ॥ शान्तेः सुखं तु कियदिच्छसि, परं तदर्थम् अभिमुखं पादं न स्थापयसि । अर्थात् यत्नार्थमग्रे न चलसीत्याशयः । निष्क्रियता अकर्मण्यता ॥ २ ॥ विमतम् तव प्रतिकूलं लोकमतं त्वं निन्दसि । तव मत्सरता मात्सर्यम् ॥५॥ घोषयसे लोकेषु दानरुचिं प्रख्यापयसे । अत एव हे चित्त! अनृतो यः कीर्तिवितानः (यशःकलापः) तत्सम्बन्धिनी ते लोलुपता न गता । अतियत्नेपि तव कृत्रिमकीर्तिलालसा न यातेत्याशयः । न गता न गतेत्याम्रेडनस्य यत्ने कृतेपि गमनाऽभावः प्रयोजनं व्यङ्ग्यम् ॥ ६ ॥ नाद्रियसे नादरं करोषि । मधुरे गायकानां गीतिगणे ह्रियसे आकृष्यसे । वृद्धावस्थया विरसीकृतापि, मधुरो यः स्वरसंतानस्तद्गता तव उत्सुकता (उत्कण्ठा) न गता ॥ ७ ॥ विस्वराम् (विरूपस्वरयुक्ताम् 'बेसुरी') गीतिम् अर्पयसे निवेदयसि ॥ ८ ॥

[ १६ ]

दर्शनीयाऽसि निसर्गेण मुधा वेषैः किम् ।
पश्य पीयूषकरस्याऽपि सुधालेशैः किम् ॥ १ ॥
कं हि नो रञ्जयते मञ्जुरधररागोऽयम् ।
कञ्जसन्मञ्जुमुखे! रञ्जनाविशेषैः किम् ॥ २ ॥

एवमेवेदमुरो विध्यते, किं कज्जलनैः ।
तिग्मबाणस्य सखे शाणसंनिवेशैः किम् ॥ ३ ॥
भ्रूधनुर्युग्ममिदं भूरि किं तरङ्गयसे ।
जिह्मशीलस्य मुहुर्जिह्मतोपदेशैः किम् ॥ ४ ॥
जृम्भते सुन्दरि ते यौवनाऽवनीशोऽयम् ।
हन्त दुर्बलस्य जये सैन्यसंनिवेशैः किम् ॥ ५ ॥
घूर्णयेत्कं न मदोन्मादघनं ते नयनम् ।
एवमुन्मादिनि ते स्वैरितानिदेशैः किम् ॥ ६ ॥
रक्तिमा ते पदयो रक्तमादिशद्यूनाम् ।
चञ्चलाऽपाङ्गि! तयोरीदृशैर्विशेषैः किम् ॥ ७ ॥
नासिकाऽलंकरणं ह्येकमलं संवनने ।
रूपशोभाविवशैर्भूषणैरशेषैः किम् ॥ ८ ॥
मानभूपाऽऽश्रयतो निर्वृतोऽहमामोदे ।
मञ्जुनाथस्य पुनर्भूरिभिर्नरेशैः किम् ॥ ९ ॥

हे सुन्दरि! निसर्गेणैव दर्शनीयाऽसि, मुधा एभिर्वेषैः किं फलम्? स्वभावतोऽवदातस्य चन्द्रस्याऽपि सुधायाः ('कली' 'सफेदी' इतिख्याताया.) लेशैः किम्? न किमपि फलमित्याशयः ॥ १ ॥ एवमेव (विना कज्जलनेव) त्वन्नयनेन इदं मे उरः विध्यते । कज्जलकरणैः किम्? कज्जलयतेर्ल्युट् ॥ ३ ॥ वक्रस्वभावस्य मुहुः वक्रतायाः उपदेशैः किम्? ॥ ४ ॥ यौवनरूपः अवनीशो राजा । दुर्बलस्य मादृशस्य जये सैन्यसंनिवेशैः किम्? ॥ ५ ॥ मदजनितेनोन्मादेन घनं निबिडं, ते नयनं कं न भ्रमयेत्? एव मुन्मादयुक्ते ते नयने स्वतन्त्रताया आज्ञाभिः किम्? उन्मादिनि जने स्वतन्त्रताया आज्ञा न दीयत इत्याशयः ॥ ६ ॥ ते पदयो रक्तिमा यूनां रक्तम् ('खून' हननमित्यर्थः) ।

आदिशत् आज्ञापयत् । तयोरेव पदयोः, ईदृशैः (अलक्तकादिरञ्जनमङ्गुल्या निर्दिश्यते) विशेषैः किम्? ॥ ७ ॥ संवनने वशीकरणे अलं पर्याप्तम् । रूपशोभया विवशैः अशेषैर्भूषणैः पुनः किम्? ॥ ८ ॥ निर्वृतः सुखी अहम् आमोदे प्रसीदामि ("मौज करताहूं" भावः) ॥ ९ ॥

[ १७ ]

न याहि लावण्यगर्वितानामुपान्तदेशं सखे मनो मे ।
अयेऽवधानेन पालयेथा इमं निदेशं सखे मनो मे ॥ १ ॥
अनन्तया याति चिन्तया ते दिवानिशं हन्त तद्वियोगे ।
न तेषु मानोन्नतेषु वीक्षेऽनुरोधलेशं सखे मनो मे ॥ २ ॥
विलासविब्वोकविभ्रमैस्तैः कृतोऽधिकारो मनस्सु तेषाम् ।
असंभवं संनिरूपये तेऽत्र संनिवेशं सखे मनो मे ॥ ३ ॥
न देहलीं पश्य रूपभाजां न चेह लीयस्व लेशतोऽपि ।
इतोऽन्यथागामिनां तु वीक्षेऽद्य नाम शेषं सखे मनो मे ॥ ४ ॥
निरीक्षसे किं न संनिरुद्धं तदङ्गणं भूरिमित्रवर्गैः ।
अनादरेणाऽपि कः प्रयच्छेत्तवोपवेशं सखे मनो मे ॥ ५ ॥
न पूर्वमेषा दशा तवाऽऽसीन्न नाम सेयं विषण्णताऽऽसीत् ।
दिनेषु यातेषु ते विलोके व्यथाविशेषं सखे मनो मे ॥ ६ ॥
न वेदना ते प्रकाशनीया, निवेदना माऽस्तु दीनवाचा ।
तवाऽवमश्नाति हन्त को वा व्यथामशेषं सखे मनो मे ॥ ७ ॥
विघूर्णसेऽहो निरन्तरं त्वं विमुञ्चसे नाऽवलोकलोभम् ।
निरर्थकं हन्त तर्कयेऽहं तवोपदेशं सखे मनो मे ॥ ८ ॥

न चेत्प्ररोचेत सूक्तिरेषा, न मञ्जुनाथोऽपि निर्मिमीत ।
अवेहि सूक्ष्मं तु सूक्तिवामानवीनवेषं सखे मनो मे ॥ ९ ॥

लावण्यगर्वितानां लोकानामुपान्तदेशं समीपदेशम् ॥ १ ॥ तेषां वियोगे तव अनन्तया चिन्तया रात्रिंदिनं व्यत्येति, मानोन्नतेषु अभिमानिषु तेषु (रूपगर्वितेषु) तवानुरोधस्य ('तुमारी परवाह') लेशमपि न वीक्षे ॥ २ ॥ ते संनिवेशं (तेषां मनःसु त्वत्समावेशम्) असंभवं निरूपयामि ॥ ३ ॥ इतः मदुपदिष्टमार्गात् अन्यथागामिनां लोकानां नामैव अवशिष्टं वीक्षे ॥ ४ ॥ अनादरेण उपेक्षयाऽपि, तव उपवेशं स्थितिस्थानं को दद्यात्? ॥५॥ कतिपुचिद्दिनेषु व्यतीतेषु ते पीडाविशेषं विलोके ॥ ६ ॥ तव व्यथाम् अशेषं यथा स्यात्तथा को वा मश्नाति, न कोपीत्यर्थः ॥ ७ ॥ विघूर्णसे भ्रमसि ॥ ८ ॥ एषा सूक्तिः (गजलगीतिमयी) चेन्न रोचेत, तर्हि मञ्जुनाथोऽपि न निर्मिमीत (रचयेत्), परं सूक्तिरूपाया वामायाः (स्त्रियाः) नवीनं वेषं सूक्ष्मं यथा स्यात्तथा अवेहि (विचारय) । इयं नवीनगीतिपद्धतिः सूक्तिवध्वा नववेषधारणवदस्तीत्याशयः ॥ ९ ॥

[ १८ ]

विरहाऽऽपगातटमुत्तरं पुनरागमिष्यति वा न वा ।
अपि मानसी मम वेदना विषमा गमिष्यति वा न वा ॥ १ ॥
मुहुरन्तरं विमनायते बत वेदनाऽपि भृशायते ।
सुचिराय ते किमियं दशा वद निर्गमिष्यति वा न वा ॥ २ ॥
विलिखामि मानसवेदनां विसृजामि हन्त तदन्तिके ।
परमन्तरं परिशङ्कते स विलोकयिष्यति वा न वा ॥ ३ ॥
अयि यासि चित्त तदन्तिके, तव सन्ति के सुहृदः सखे? ।
निखिले स्थले कुटिलाऽऽकुले सरलो मिलिष्यति वा न वा ॥४॥

प्रहितः शरोऽस्ति शरासनान्निहितः स मे हृदये दृढम् ।
अयमाहितं शरमन्तरादपसारयिष्यति वा न वा ॥ ५ ॥
नवपल्लवा विलसन्ति, संविकसन्ति ते कुसुमोत्कराः ।
मम भागधेयतरुः सखे सरसं फलिष्यति वा न वा ॥ ६ ॥
अयि चन्द्रहासमिमं दधासि, जहासि वक्षसि मामके ।
किमवैषि ते निशितोऽप्यसिर्मयि संचलिष्यति वा न वा ॥७॥
इयमेति घोरतमस्विना, समुदेति गाढतमं तमः ।
पुनरेष सौख्यदिवाकरो बत संभविष्यति वा न वा ॥ ८ ॥
अयि मञ्जुनाथ मनो विनोदय संगमेन सचेतसाम् ।
अपि नीरसेषु जनेषु ते प्रणयो भविष्यति वा न वा ॥ ९ ॥

विरहाऽऽपगायाः (विरहनद्याः) उत्तरं तटम् (अपरपारः) ॥ १ ॥ अन्तरं चित्तं विमनायते विषण्णं भवतीति भावः ॥ २ ॥ अयम् (शरप्रेरयिता), आहितं शरम् अन्तरात् हृदयात् ॥ ५ ॥ पल्लवाः शोभन्ते, कुसुमसमूहा अपि विकसन्ति, परमितोऽग्रे मम भाग्यतरुः सरसं यथा तथा फलानि दर्शयिष्यति न वा, इति विरही भाग्यं शोचत इत्याशयः ॥ ३ ॥ इमं चन्द्रहासं (खड्गम्) धारयसि, मम वक्षसि च मुञ्चसि, परं त्वं किं जानासि यन्निशितोपि ते खड्गो मयि चलिष्यति न वा! मम कठोरे हृदये अयमपि न प्रविशेदित्याशयः ॥ ७ ॥ सौख्यरूपो दिवाकरः (सूर्यः) ॥ ८ ॥ न जाने नीरसेषु जनेषु ते प्रणयो भवेन्न वेत्याशयः ॥ ९ ॥

[ १९ ]

शोचनीयाऽद्य सखे पश्य दशा जाता मे ।
विप्रतीकारकथा हन्त मृषा जाता मे ॥ १ ॥
किं न सेवे सदनं किं न विलोके स्वजनम् ।
पश्य पदार्था निखिला हन्त विषा जाता मे ॥ २ ॥

भेषजैरेभिरलं वैद्य सखे याहि गृहम् ।
किं न जानासि रुजा हन्त भृशा जाता मे ॥ ३ ॥

नित्यमन्यस्य गृहे वध्यते गुप्तं गोष्ठी ।
गेहमागन्तुमहो हन्त मिषा जाता मे ॥ ४ ॥

तिग्मकोदण्डशरैरिष्यते केयं मृगया ? ।
रूपमुग्धस्य तु सा पश्य दृशा जाता मे ॥ ५ ॥

वर्णयन्ते कवयो मञ्जुमृदुं तद्वेणीम् ।
पश्य दुर्दैववशात्सैव कशा जाता मे ॥ ६ ॥

पूरये हन्त कथं भूरि मनोऽभीष्टं मे ।
यामशेषैव सखे पश्य निशा जाता मे ॥ ७ ॥

अद्य विश्राम्यतु मा सीधुसुधाधारा ते ।
नाऽधुना शान्ततरा हन्त तृषा जाता मे ॥ ८ ॥

मञ्जुनाथोऽद्य कवित्वेन मनाङ् मोदेत ।
नूतनी रीतिरियं भूरिवशा जाता मे ॥ ९ ॥

विरहान्मे दशा शोचनीया जाता । प्रत्युपायस्य कथा मृषा (विफला) जाता ॥ १ ॥ भृशा अधिका ॥ ३ ॥ अन्यस्य गृहे गुप्तं यथा स्यात्तथा गोष्ठी क्रियते, मे गेहम् आगन्तुं तु मिषाः जाताः ॥ ४ ॥ तीक्ष्णैः चापशरैः केयं मृगया वाञ्छ्यते, रूपमुग्धस्य मे मृगया तु त्वद्दृष्ट्यैव जाता ॥ ५ ॥ कशा ताडनी ॥ ६ ॥ बहुलं मे मनोरथं कथं पूरयामि ? ॥ ७ ॥ सीधुसुधाया धारा अद्य मा विश्राम्यतु । शान्ततरा अत्यन्तं शान्ता ॥ ८ ॥ इयं ग़ज़लनिर्माणस्य नूतनरीतिः मे वशीभूता जाता ॥ ९ ॥

[ २० ]

अयि चित्त चञ्चलं मे किमु मुञ्चसे न चिन्ताम् ।
अपचीयसेऽनुचिन्तन्नवचञ्चलारुचिं ताम् ॥ १ ॥
भवनेऽपि सा वने सा पुरतोऽथ पृष्ठतः सा ।
अयि सर्वतोऽपि पश्यन्न वितृप्यसीह किं ताम्? ॥ २ ॥
तनुता मनोविकारो गहनाऽऽधिवेदनाऽपि ।
इति यत्र मित्रसङ्घो न जहासि किं गतिं ताम् ॥ ३ ॥
कति तप्यसेऽधिगन्तुं तदपाङ्गमोक्षलक्ष्मीम् ।
अधिरूढसौधमौलिं चल पश्य ते गतिं ताम् ॥ ४ ॥
मुकुरे किमीक्षसे ते रमणीयतां नताङ्गि! ।
अपि पृच्छ मानसं मे विहृतिं च तां छविं ताम् ॥ ५ ॥
अपरैः कृतां सपर्यां बहु मन्यसे मृगाक्षि! ।
न ददासि दर्शनं मे किमु वच्मि ते रुचिं ताम् ॥ ६ ॥
अयि कञ्जमञ्जुलाऽऽस्ये! तुलयेत्कथं कविर्वा ।
तव संनतां तनुं तां पटुतां च तां द्युतिं ताम् ॥ ७ ॥
समयेऽन्तिमेपि पृष्टम् 'वद रुग्ण! लिप्ससे किम्?' ।
अवदत्सदैन्यमीक्षे क्षणमङ्गनामणिं ताम् ॥ ८ ॥
कुपिताऽसि कस्य हेतोर्वद वारिजाऽऽयताऽक्षि! ।
रमितो ययाऽसि रात्रौ व्रज रूपिणीं रतिं ताम् ॥ ९ ॥
कविताऽवबोधदक्षा बत सन्ति केचिदेव ।
अयि मञ्जुनाथ यायाः कविपूर्वपद्धतिं ताम् ॥ १० ॥

नवविद्युत्कान्ति तां (नायिकाम्) अनुचिन्तत् स्मरत्, णिजभावे शतृ। अपचीयसे कृशीभवसि ॥ १ ॥ सर्वतोपि तां पश्यत् किं न तृप्यसि ॥ २ ॥ तनुता दुर्बलता, गहना आधिवेदना। इति यस्यां प्रेमपद्धत्यां मित्रगणोऽस्ति तां प्रेमगतिं किं न जहासि ॥ ३ ॥ ते गतिम् (उपायभूताम्) तां नायिकां सौधारूढां पश्य ॥ ४ ॥ ते विहृतिं विभ्रमम् ॥ ५ ॥ अन्यैः कृतां सपर्याम् (उपायनादिकम्)। मह्यं दर्शनमपि न ददासि। एवंभिन्नां ते रुचिं किं वच्मि ॥ ६ ॥ कमलसुन्दरमुखि! कविस्ते तनु-पटुतादिकं कथं तुलयेत्? ॥ ७ ॥ अन्तसमये पृष्टम् 'हे रुग्ण! किं वाञ्छसि?', स सदैन्यमवदत्-"क्षणम् स्त्रीरत्नं ताम् ईक्षे" ॥ ८ ॥ नायिकाऽऽह-'यया रात्रौ रमितोसि, रूपधारिणीं रतिमिव तां सपत्नीं व्रज।' ॥ ९ ॥ कवितामार्मिकाः केचिदेव सन्ति, परं त्वं तु कवीनां पूर्वपद्धतिं यायाः ॥ १० ॥

[२१]

चिन्ता निरन्तरं सखे विनिहन्ति हन्त माम्।
सेयं वियोगवेदना व्याहन्ति हन्त माम् ॥ १ ॥
किं वर्णयामि वेदनां वक्तुं न पारये।
अस्रा हि कण्ठकीलिता रुन्धन्ति हन्त माम् ॥ २ ॥
किं वाऽऽचरामि, कुत्र वा संयामि साम्प्रतम्।
के वा वचोऽनुवर्तिनो विन्दन्ति हन्त माम् ॥ ३ ॥
यन्नास्ति वासना सखे मे दोषदूषिता।
निन्दापरास्तु दुर्जना निन्दन्ति हन्त माम् ॥ ४ ॥
अस्मिन्वियोगकानने कुसुमं न वीक्षितम्।
हा कण्टकाः पदे पदे व्यथयन्ति हन्त माम् ॥ ५ ॥
उत्साहधैर्यसंमदाः संयान्ति नान्तिकम्।
तनुताऽनुतापपाण्डुता वलयन्ति हन्त माम् ॥ ६ ॥

आविर्भवन्त्यथोच्छ्वसन्ति सन्ति विस्तृताः ।
नानाऽद्य वेदनाः सखे दुन्वन्ति हन्त माम् ॥ ७ ॥
अद्यापि पश्य निःश्वसन्विन्दामि जीवनम् ।
ते प्रेमिणो दिवं गता विहसन्ति हन्त माम् ॥ ८ ॥
हे मञ्जुनाथ ते कृतिं कृतिषु प्रकाशयेः ।
सत्सूक्तिसारमार्मिका जानन्ति हन्त माम् ॥ ९ ॥

मम वचनाऽनुवर्तिनः के जना मां विन्दन्ति (आश्रयन्ति)? केपि मत्सहायका न सन्तीत्याशयः ॥ ३ ॥ मे वासना दुष्टा नास्ति ॥ ४ ॥ दुर्बलता, अनुतापः, विरहजनिता पाण्डुता, एते मां परिवारयन्ति ॥ ६ ॥ उच्छ्वसन्ति वर्धन्ते ॥ ७ ॥ अहमद्यापि जीवामीति, विरहप्राप्तावेव दिवं गताः प्रेमपथिका मां हसन्ति ॥ ८ ॥ हे मञ्जुनाथेत्यादि मञ्जुनाथं प्रत्युपदेशः । सत्सूक्तिसारेत्यादि मञ्जुनाथस्योत्तरम् ॥ ९ ॥

[ २२ ]

अयि मे निरन्तरवेदने! परिखेदने विरम क्षणम् ।
बत जन्मतो व्यथितोऽसि तन्मम जीवने विरम क्षणम् ॥१॥
न विसर्जये भवदुद्भवम्, न विवर्जये तव वर्धनम् ।
क्षणमेतदारमतान्मनो मम वेदने! विरम क्षणम् ॥ २ ॥
परिवर्तते दहनोऽन्तरे, बत वर्तते कृशिता तनूः ।
अयि बाधितं बहुधाऽधुना मम मर्दने विरम क्षणम् ॥ ३ ॥
अदयं किमेवमुपैधसे, हृदयं चिरं परिबाधसे ।
अयि सुप्रसीद समूलमेव विमूलने विरम क्षणम् ॥ ४ ॥
क्षणमुन्नयस्व मनोऽस्ति मे सुमनोऽतिकोमलमल्पकम् ।
अयि भो नृशंस! समादधे बत भेदने विरम क्षणम् ॥५॥

तव तिग्ममेतमसिं सखे मयि खेलयैव समुत्क्षिपेः ।
हृदयं पुरस्करवाणि ते, मम सूदने विरम क्षणम् ॥ ६ ॥
न निवर्तयामि तवेप्सितम्, अयि घोरघातक! तुष्यताम् ।
हृदयं स्वयं मम भिद्यते बत भेदने विरम क्षणम् ॥ ७ ॥
कुरुते तु कः श्रवणातिथिं ननु तेऽद्य दैन्यनिवेदनम् ।
अयि दीनतोन्मुख चित्त! मे, विनिवेदने विरम क्षणम् ८
अयि मञ्जुनाथ तवोक्तयो हृदि तर्पयन्त्यपि वा न वा ।
परिपृच्छ, ते रसिकानिमानयि कल्पने! विरम क्षणम् ॥९॥

अये मे अविश्रान्तवेदने! मम खेदप्रदाने क्षणकालार्थं विरम ॥ १ ॥ हे वेदने! भवत्याः उद्भवम् उत्पत्तिम् न वर्जयामि । किन्तु क्षणकालार्थमिदं मे मनः आरमताद् (सुखं लभताम्) ॥ २ ॥ मे मनः सुमनोवत् (पुष्पवत्) अतिकोमलम् अल्पकं चास्ति इति उन्नयस्व विचारयस्व । समादधे, सान्त्वनं लभे ॥ ५ ॥ मम हृदयम् तुभ्यं पुरस्काररूपेण ददामि, मम सूदने विरम ॥ ६ ॥ विनिवेदने तव दीनतानिवेदने ॥ ८ ॥

[२३]

सन्ततं संतापितानां हीयते रजनी न किम्? ।
यापितैर्यामैरपीयं क्षीयते रजनी न किम्? ॥ १ ॥
देहसंतापोष्मणा मे लीयते सैतद्दिनम् ।
श्वासवातैर्मामकैरुड्डीयते रजनी न किम् ॥ २ ॥
हन्त संतापः कियान्मे पश्य मोहो मे कियान् ।
किन्तु कामं कीलितेयं लीयते रजनी न किम् ॥ ३ ॥
स्रंसते मे देहबन्धो जीवितं कण्ठाऽऽगतम् ।
दृश्यतामेतावताऽपि प्रीयते रजनी न किम् ॥ ४ ॥

लुप्यमानाऽऽनन्दतारा भ्राम्यदामीलाऽम्बुदा ।
नाऽवसाना द्यौरिवेयं गीयते रजनी न किम् ॥ ५ ॥
घूर्णयन्ती सा विषाऽऽवेगैर्दहन्ती मे तनुम् ।
लेलिहाना जिह्वया, व्यालीयते रजनी न किम् ॥ ६ ॥
पूरिताऽसौ यातना मे, दूरिताऽऽशा जीविते ।
विप्रयोगे दारुणैषोदीयते रजनी न किम् ॥ ७ ॥
दत्तमेवेदं दिनं मानाय पश्याऽयाचितम् ।
मानिनीयं याचते मे दीयते रजनी न किम् ॥ ८ ॥
कार्यचिन्ताव्यग्रतायां हे सखे नीतं दिनम् ।
मञ्जुनाथोक्तैरिदानीं नीयते रजनी न किम् ॥ ९ ॥

निरन्तरं संतापितानां लोकानां रजनी किं न हीयते ? प्रहरेषु यापितेष्वपि रजनी किं न क्षीणा भवति ॥ १ ॥ देहसन्तापस्य ऊष्मणा, एतद्दिन लीयते स्म ('पिघल गया'), मदीयैः श्वासपवनैरियं रजनी किं नोड्डीयते ? ॥ २ ॥ लुप्यमानाः आनन्दा एव ताराः यस्याम्, भ्राम्यन्ति आमीलान्येव (दुःखान्येव) अम्बुदाः यस्याम्, निरवसाना (अपरिच्छिन्ना), निषेधार्थको न, न तु नञ् । एवं च पूर्वोक्तैर्विशेषणैरियं रजनी द्यौरिव (आकाशमिव) किं न गीयते ? ॥ ५ ॥ पूर्वोक्तैर्विशेषणैः रजनी किं न व्यालीयते ? (व्याली इवाचरति), अपि तु सर्पिणीवाऽऽभाति ॥ ६ ॥ मया जीवनाशा त्यक्ता, अत एवेदानीम् दारुणा एषा रजनी किं न उदीयते ? इदानीं स्वच्छन्दमुदीयतामित्याशयः ॥ ७ ॥ मानिनीं प्रत्युक्तिः—हे मानिनि ! मानाय त्वया अयाचितमेव इदं दिनं दत्तम्, तर्हि याचमानाय मे साम्प्रतं रजनी किं न दीयते ? अहं मानोत्तरं रात्रौ त्वत्समागमं वाञ्छामीत्याशयः ॥ ८ ॥ मञ्जुनाथस्य सूक्तिगानैः रजनी किं न याप्यते ? ॥ ९ ॥

[ २४ ]

अये विश्रम्यतामीषन्नृशंस! स्थीयतामीषत् ।
चिरं खिन्नोऽद्य ते खड्गो विनोदं नीयतामीषत् ॥ १ ॥
सहस्रं खड्गधाराणां प्रहारान्सोढुमीशेऽहम् ।
असिं ते धेहि सानन्दं सखे निश्रीयतामीषत् ॥ २ ॥
रतेः केचिद् गतेः केचिद्रसज्ञाः संगतेः केचित् ।
रसज्ञस्तेऽसिधाराणामसौ संधीयतामीषत् ॥ ३ ॥
विलम्बं मा वहेदानीमहं कण्ठाऽऽगतप्राणः ।
अये मे घातक! क्षिप्रं शरः संधीयतामीषत् ॥ ४ ॥
शरेणैकेन भिन्नोहं विलोठाम्याकुलं भूमौ ।
कृतिं ते पूरयेः पूर्वम्, ततः प्रस्थीयतामीषत् ॥ ५ ॥
निदध्याः खड्गमेतं ते कथाशेषस्य मे स्थाने ।
कृपालुस्ते कृपाणोऽयं जनैर्निश्रीयतामीषत् ॥ ६ ॥
न वीक्षे दूरतः सम्यक्, समायायाः समीपे मे ।
क्षणेऽस्मिन्नन्तिमे हंहो सखे! मे प्रीयतामीषत् ॥ ७ ॥
धनुर्ध्यायाम्यहम्, श्लाघे शरान्, भूरि प्रशंसेऽसिम् ।
परं ते कः प्रियोऽमीषां वचो मे दीयतामीषत् ॥ ८ ॥
रसज्ञानां सुखं सूते न सूक्तिर्मञ्जुनाथीया ।
असौ संगीतगोष्ठीतः सखे मा गीयतामीषत् ॥ ९ ॥

अये घातक! क्षणं विश्रामः क्रियताम्? ते खड्गो हननकर्मणा चिरकालात्परिश्रान्तः, अत एवासौ ईषद् विनोदं नीयताम् ॥ १ ॥ ते असिधाराणां रसज्ञः असौ जनः संधीयताम् (अनेन जनेन सह संधिः क्रियतामित्या-

शयः ) ॥ ३ ॥ कथाशेषस्य, त्वत्खड्गप्रहारेण उपरतस्य मे समाधिस्थाने ते खड्गं स्थापयेः । येन ते कृपाणः कृपालुरिति जनैर्निश्चीयताम्, तव खड्गस्यैव सेयं कृपेति जना निश्चिन्वन्त्वित्याशयः ॥ ६ ॥ असिं भूरि प्रशंसे । आत्मनेपदमप्यस्य प्रयुज्यते कविभिर्यथा "आशंसन्ते समितिषु सुरा बद्धवैरा हि दैत्यैर्यस्याधिज्ये धनुषि विजयं पौरुहूते च वज्रे ।" ( कालिदासः ) । परम्, अमीषां मध्ये ते कः पदार्थः प्रिय इति मे वचनं दीयताम् ॥ ८ ॥ संगीतगोष्ठीतः संगीतगोष्ठ्याम् । सार्वविभक्तिकस्तसिः ॥ ९ ॥

[ २५ ]

## सुबन्ततिङन्तोभयपदानामन्त्यानुप्रासः

न ते जानते नेत्रयोर्वैभवं ते ।
अहो ये पयोजेन साम्यं वहन्ते ॥ १ ॥
कलङ्केन पङ्केरुहं मौनमास्ते ।
भयात्कण्टका मूलदेशे तुदन्ते ॥ २ ॥
अमीषां कवीनां कथा दूरमास्ताम् ।
इमे संभ्रमे भूरिशः कल्पयन्ते ॥ ३ ॥
भवेऽस्मिन् भवेल्लोकसृष्टिर्नवीना ।
चिरादद्य पश्यन्ति यद्दर्पणं ते ॥ ४ ॥
न वातायने लोकयाऽऽताम्रनेत्रे !
बहून् संहरेदद्य दृष्टिर्ध्रुवं ते ॥ ५ ॥
सखे पश्य जीवन्ति के, के म्रियन्ते !
अहो लाक्षया रञ्जयन्ते पदं ते ॥ ६ ॥
अये भो मृतास्तूर्णमुज्जीवताऽद्य ।
करिष्यन्ति संतुष्य किञ्चित्स्मितं ते ॥ ७ ॥

अपूर्वैव सा वैद्यता भाति तेषाम् ।
स्वयं सूदयित्वा स्वयं जीवयन्ते ॥ ८ ॥
सुखेनाऽवकृन्तेर्न खेदः सखे मे ।
कथं कीलये केलिकारं करं ते ॥ ९ ॥
प्रवासं प्रियाऽसंशयं याहि नूनम् ।
प्रतीतं भवेत्ते दुरन्ते वसन्ते ॥ १० ॥
मदात्संलपेयुर्धनाऽऽढ्या न वाऽस्मान् ।
न शष्पं प्रजानन्ति ये तान् वयं ते ॥ ११ ॥
उपेक्षां बुधाः काममद्याऽऽदधीरन् ।
स्मृतिर्मञ्जुनाथस्य न स्यात्किमन्ते ? ॥ १२ ॥

ये कमलेन सह साम्यं कुर्वन्ति ते जनाः ते नेत्रयोर्वैभवं न जानते ॥ १ ॥ त्वन्नेत्रतः पराजितस्य कमलस्य मूलदेशे ( गुदे ) कण्टका व्यथां कुर्वन्ति । कमलनाले कण्टकानां भयहेतुकत्वमुत्प्रेक्ष्यते ॥ २ ॥ अद्य संसारे नवीनैव सृष्टिर्भवेत्, यतः अद्य ते ( नायिका ) चिराद्दर्पणं वीक्षन्ते । चिरं दर्पणवीक्षणेन शृङ्गारे अतिशयः स्यात्तेन च वीक्षकाणां उत्कण्ठा–विरह–वशात्समाप्तिरेव । ततश्च प्रलयोत्तरं नवीनैव सृष्टिः स्यादिति नायिकालावण्यातिशयो ध्वन्यते । नायिकायाः पुंस्त्वेन स्मरणम्–उर्दूभाषावर्णनशैल्यनुरोधात् ॥ ४ ॥ अद्य ते लाक्षया पदं रञ्जयन्ति, ततश्च निश्चयो नास्ति यत्के जीविष्यन्ति के च मरिष्यन्ति ? कृतशृङ्गारायास्तस्याः कृपायां जीवनम्, वैमुख्ये च मरणमिति सौन्दर्यातिशयो ध्वन्यते ॥ ६ ॥ किञ्चित्स्मितेन मृतानामप्युज्जीवनं भवतीति तस्य पीयूषत्वं द्योत्यते, तेन च नायिकालावण्यातिशयो व्यङ्ग्यः ॥ ७ ॥ विरहेण स्वयं मारयन्ति, कृपाकरणेन च स्वयं जीवयन्ति ॥ ८ ॥ केलिकारकं ते करं कथं रुणध्मि, सुखेन मां कृन्त । मत्कर्तनं ते केलिरिति निर्दयत्वं व्यङ्ग्यम् ॥ ९ ॥ हे प्रिय ! निःसंशयं साम्प्रतं प्रवासं गच्छ, अयं

विरहविषादस्ते वसन्ते प्रतीतो भवेत् ॥ १० ॥ ये जना धनाढ्यान् शष्पमात्रमपि न जानन्ति, वयं ते स्मः ॥ ११ ॥ अद्य कामम् उपेक्षाम् आदधीरन् ( कुर्वीरन् ) ॥ १२ ॥

[ २६ ]

सुविलासमये समयेऽप्यधुना
नवनीरजनेत्रि ! न यासि कथम् ?
तव ताम्यति गेहगतो दयितो
ननु नागरि ! नावदधासि कथम् ? ॥ १ ॥
अपि पश्य पुरस्तव दीनतया
विनयाद्विनतिं वितनोति न किम् !
अयि निर्भरनिष्करुणाऽऽचरणे !
चरणे प्रणतं विजहासि कथम् ? ॥ २ ॥
अयि सुन्दरि ! ते पदयोरनयो-
र्मम तिष्ठति रक्तमिदं हृदयम् ।
तदलक्तकसंभ्रमतो धरणौ
घनघर्षणमत्र दधासि कथम् ॥ ३ ॥
बहुलालितमेतदये दयिते !
बत तुभ्यमहं व्यददां हृदयम् ।
अदये ! हृदये तु निबोध मनाक्,
तदिदं विरहाय ददासि कथम् ? ॥ ४ ॥
अयि भामिनि ! निर्भरहीनसुखो
विरही तव लोठति भूमितले ।

बत भूरिदयासमये तदये करुणा-
  वति! निष्करुणाऽसि कथम् ॥ ५ ॥
अपि नाम बलादसिना निहतो
  भवतोऽङ्घ्रितले विलुठत्यसकौ।
अधुनैव हि तिग्ममसिं नु सखे
  ननु कोषमुखे निदधासि कथम्? ॥ ६ ॥
स हि भूरिलुठन्निह भूमितले
  विरही चिरहीनसुखो व्यरमत्।
अधुना भृशमुन्मिषितो विधुना
  ननु दक्षिणवात! न वासि कथम्? ॥ ७ ॥
तव चित्तमिदं रमतां महतां
  विभवेषु, भवेन्मम का गणना?
बत दीनकुटीरतटीषु वसे-
  न्नवहर्म्यनिवासविलासि कथम् ॥ ८ ॥
अयि पश्य! यदीयविलोककृते
  विहितेयमहो मयका स्वदशा।
मिषतापि न तेन मुखादुदितम्
  'अयि दीन! वदेरधुनाऽसि कथम्' ॥ ९ ॥
ननु पश्य पुरः परिलोठति ते,
  व्यथितेपि न तेन दया स्पृहिता।
वद शुभ्रमुखेन सखे ह्यसिना
  बत दीनमिमं विलुनासि कथम्? ॥ १० ॥

अयि मञ्जुलनाथ विना समयं
रचनाव्यसनाद्विरतोऽसि न किम्?
किमु कैरपि नाऽसि बहिः प्रहितो?
ह्यधुनाऽपि सभासु विभासि कथम्? ॥ ११ ॥

विलाससमयेऽपि हे कमलनेत्रि! प्रियसमीपे कथं न यासि? ॥ १ ॥ तव चरणयोः मे रक्तम् (रक्तवर्णम् अनुरक्तं च) हृदयं तिष्ठति, त्वं तु अलक्तकबुद्ध्या, पुना रञ्जनार्थमत्र (पदे) घर्षणं दधासि। तथा च मे हृदयं घृष्टं भवेदित्याशयः ॥ ३ ॥ निर्भरम् हीनम् (नष्टम्) सुखं यस्य सः। भरही–विरहीति प्रासः ॥ ५ ॥ एकाऽऽघातेनैव असौ भूमौ लोठति, अधुनैव खड्गं कोषान्तरे कथं स्थापयसि! समापय इममित्याक्षेपः ॥ ६ ॥ विधुना (चन्द्रेण) उन्मिषितः (उद्दीपनं गतः) त्वं हे दक्षिणाऽनिल! कथं न वासि? विरही विरतः, अत एव सुखं भवान् वात्वित्याशयः ॥ ७ ॥ तव चित्तं महतां लोकानां वैभवेषु रमते। नवहर्म्यनिवासि चित्तं कुटीरे कथं वसेत्? ॥ ८ ॥ यस्य जनस्य विलोकनार्थं मयका (मया) इयं दशा (स्वविरहपीडा अङ्गुल्या निर्दिश्यते) विहिता, मिषतापि (मां पश्यताऽपि) तेन, मुखात् इदमपि न गदितम् 'अयि दीन! इदानीं कथमसि?' ॥ ९ ॥ पश्य स भूमौ लोठति, व्यथितेऽपि (व्यथायां जातायामपि) तेन दया न वाञ्छिता। परं त्वम्, भुग्नमुखेन खड्गेन ('भौंटी तलवारसे') इमं दीनं कथं लुनासि? यदि समापनमेव तेऽभीष्टं तर्हि तीक्ष्णः खड्गोऽपेक्षितोऽभूदित्याक्षेपः ॥ १० ॥ संस्कृतरचनायाः समयं विनैव निजाद्रचनाव्यसनात्कथं न विरतः? सभामध्यात्कैरपि त्वं न निःसारितः? अधुनापि सभासु कथं विभासि? ॥ ११ ॥

[ २७ ]

कञ्जाक्षि! कुर्महेऽथ न किं कामयामहे?।
हंहो विचिन्तयाऽपि विनोदं वहामहे ॥ १ ॥

वल्गद्वियोगवह्निमिहाऽऽधाय मानसे ।
रक्ताऽऽहुतिं निकाममभी संददामहे ॥ २ ॥
हा हन्त संततेन वियोगाऽश्रुणाऽमुना ।
नन्दत्सरोजनेत्रि! न तृप्तिं लभामहे ॥ ३ ॥
प्रायो विविक्तमाप्य तु विन्दामहे सुखम् ।
आरामसौख्यभोगमरण्ये भजामहे ॥ ४ ॥
प्रेमप्रमत्तयोगिगृहं किं गवेष्यते? ।
तस्या निवासवीथिमिमे संश्रयामहे ॥ ५ ॥
कुत्र स्थ धर्मशास्त्रिवराः! किं चिराय्यते? ।
एतत्प्रमोदमद्यमिमे संजुषामहे ॥ ६ ॥
देहाय नाऽङ्गरागमथो वस्त्रमर्थये ।
तस्याः पदाऽङ्कधूलिममी धारयामहे ॥ ७ ॥
मोदस्व मञ्जुनाथ! न मोदस्व मानसे ।
मत्ता वयं विशङ्कतया सङ्कवामहे ॥ ८ ॥

वयं किं न कुर्मः? किं च न कामयामहे? अपि तु सर्वं कुर्मः कांक्षामश्च। या चिन्ता क्लेशवहा, तथापि वयं विनोदं प्राप्नुमः ॥१॥ ददामहे 'दद दाने' ॥ २ ॥ विविक्तं यल्लोकानामुद्वेजकं तत्र सुखं विन्दामः, एवं च अरण्ये आराम-सुखभोगं प्राप्नुमः ॥ ४ ॥ चिरायतेः कर्मणि प्रत्यये चिराय्यते। वयं मद्यं सेवा-महे, अत एव पृथक्करणव्यवस्था दीयतामित्याशयः ॥ ६ ॥ देहार्थम् अङ्ग-रागं वस्त्रं च नार्थयामहे, किं तु तस्याः पदधूलिमेव अङ्गरागत्वेन इमे वयं धारयामः ॥ ७ ॥ त्वं प्रसन्नो भव, अथवा मा भव। वयं तु मत्ताः (मस्त), निःशङ्कं कवितां कुर्मः। 'कुङ् शब्दे' ॥ ८ ॥

[ २८ ]

न विधेहि ते विमुखं मुखम्, ननु संमुखं प्रसमीक्ष्यताम् ।
व्यथते चिराद्विरही स ते, दयिते! क्षणं विनिरीक्ष्यताम् ॥
परिवर्तते पृथिवीतले, शयने न नन्दति शीतले ।
तव दृष्टिमात्रमुदीक्षते दयिते दयावति! वीक्ष्यताम् ॥ २ ॥
अयि सत्यमेव निवेदये, हृदये त्वमेव विराजसे ।
हृदयं विपाट्य विनिर्भयं सदयं प्रियेऽद्य परीक्ष्यताम् ॥ ३ ॥
तव दर्शनाय विनिःश्वसन्, निवसन्प्रयाणदशान्तरे ।
विरही स तेऽद्य समाप्यते, क्षणमात्रमद्य निरीक्ष्यताम् ॥४॥
विरतोऽपि ते प्रणयी चिरान्मदिराक्षि! ते मुखमीक्षते ।
ननु किं न पश्यसि तारकामयि किञ्चिदूर्ध्वमुदीक्ष्यताम् ५
ननु निर्गमाय समीहसे, बत जीव! किं नु चिरायसे? ।
कथमद्य यास्यसि हे सखे! बत संमुखेपि निरीक्ष्यताम् ६
उरदूमुदूढवचश्छटां प्रकटां करिष्यति संमुखे ।
बत मञ्जुनाथवचःक्रमो विषमोऽपि साधु समीक्ष्यताम् ॥७॥

पृथ्वीतले परिवर्तते लोठति ॥ २ ॥ सदयम् (दयां कृत्वा) मम हृदयं विदार्य, परीक्ष्यताम् ॥ ३ ॥ प्रयाणस्य परलोकगमनस्य दशान्तरे निवसन् स विरही समाप्तो भवति, अद्य क्षणमात्रं निरीक्ष्यताम् ॥ ४ ॥ चिरात् विरतः (मृतः) ते प्रणयी ते मुख वीक्षते। आकाशे किं तारकां न पश्यसि? सा तारा नास्ति किं तु विरतस्ते प्रणयी त्वन्मुखं विलोकते। किञ्चिदूर्ध्वं विलोक्यताम् ॥ ५ ॥ निर्गमनाय ईहसे चेष्टसे। तर्हि हे जीवित! विलम्बं किं करोषि? पश्य संमुखम्, तां नायिकां दृष्ट्वा कथं यास्यसीत्याशयः ॥ ६ ॥ मञ्जुनाथवचःक्रमो विषमः (कठिनोऽपि), उदूढवचःशोभाम् उर्दूभाषाम्

संमुखे प्रकटां करिष्यति । अत एव, स साधुतया समालोच्यताम् । मञ्जुनाथवचःक्रमे (ग़ज़लविषये) उर्दूभाषायाश्छटा प्रकटा खेलतीत्याशयः । प्रमाणं तु सहृदयानां हृदयमेव ॥ ७ ॥

[ २९ ]

## तिङन्तपदानामन्त्याऽनुप्रासः

अये लोकयेः किं जनाः कल्पयन्ते ।
तवाऽऽस्ये शशाङ्कोपमामानयन्ते ॥ १ ॥
दिनेऽस्मिन्न दीयेत दृष्टिर्दरिद्रे ।
मुखे ते तु काश्चिद्रुचं लोकयन्ते ॥ २ ॥
त्वदास्यं यदारभ्य दीनेन दृष्टम् ।
मनागिन्दुमेनं घनाश्छादयन्ते ॥ ३ ॥
प्रभावं तवाऽऽलोकनस्याद्य पश्येः ।
करेणाऽपरे मानसं स्तम्भयन्ते ॥ ४ ॥
न चाऽद्यापि दृष्टिः प्रयाता त्वदीया ।
स्ववक्षः किमेते जना गोपयन्ते ? ॥ ५ ॥
न चापेपि शूराः शरं संधरन्ते ।
परं पूर्वमेवाऽपरे संव्यथन्ते ॥ ६ ॥
कृता केन लावण्यचर्चा त्वदीया ? ।
न रम्भां सुराः साधु संभावयन्ते ॥ ७ ॥
न जाने रसज्ञेषु कीदृग् दशा स्यात् ! ।
दृशोरद्य ते कज्जलं सज्जयन्ते ॥ ८ ॥

विजानन्ति तस्याः कटाक्षच्छटां चेत् ।
किमेते जना मां मुधोपालभन्ते ? ॥ ९ ॥
यदोदेति तस्या मुखं रूपगोष्ठ्याम् ।
परेषां मुखाऽब्जानि निद्रामयन्ते ॥ १० ॥
सखे मञ्जुनाथाऽद्य तिष्ठाऽवधाने ।
न जाने कथं ते करं मर्दयन्ते ॥ ११ ॥

अये प्रिये ! पश्य, जनाः किं कल्पयन्ति ! तव मुखे चन्द्रस्योपमामानयन्ति । तव मुखे चन्द्रोपमाऽऽनयनं तेषां स्पष्टमनौचित्यमित्याशयः ॥१॥ दिने अस्मिन्दरिद्रे(चन्द्रे) दृष्टिरपि न दीयते, त्वन्मुखे तु अनिर्वचनीयां रुचिं जनाः पश्यन्ति । जनाः इत्युक्त्या, अहं तु कदाचन पक्षपातादेव पश्येयं परं तटस्था जना अपि काञ्चिद्रुचिं पश्यन्तीति सूच्यते ॥ २ ॥ यतःप्रभृति त्वन्मुखं दृष्टम् ततःप्रभृति लज्जावशाच्चन्द्रो घनाच्छादितो भवति ॥ ३ ॥ तवालोकनेन उद्दीप्तविरहाः, हृदयं करेण स्तम्भयन्ते ॥ ४ ॥ तव दृष्टिर्नेतः प्रयाता, पुनर्जनाः स्वं वक्षः किमित्याच्छादयन्ति । तव दृष्टौ गतायां तु विद्धहृदया आच्छादयेयुरपीत्याशयः ॥ ५ ॥ अपरे शत्रवः ॥ ६ ॥ रम्भातोपि ते सौन्दर्यमुत्कृष्टम्, येन त्वच्चर्चया रम्भामपि देवा न संमानयन्ति ॥ ७ ॥ कज्जलाञ्जनेन विद्धहृदयानां रसिकानां न जाने का दशा स्यादित्याशयः ॥ ८ ॥ तस्याः कटाक्षच्छटां जानन्ति, तर्हि मां जनाः किमित्युपालभन्ते । तत्कटाक्षवशादेवाहं तद्दशो भवामीति न मे दोषः ॥ ९ ॥ अनेन तस्या मुखस्य चन्द्रत्वं ध्वन्यते ॥ १० ॥ अद्य ते, करं मर्दयन्ते परस्परं घर्षयन्ति, न जाने क्रुद्धाः सन्तस्त्वां ताडयेयुरत एवाऽवहितस्तिष्ठ ॥ ११ ॥

[ ३० ]

रतिविगमोऽद्य मानसे कोऽयम् ।
अवमनुते मुधैव लोकोऽयम् ॥ १ ॥

अयि सुहृदो विधीयतां किं वा? ।
मम हृदयं दुनोति शोकोयम् ॥ २ ॥
मतिरयते पलायते धैर्यम् ।
न पुनरपैति हन्त तापोयम् ॥ ३ ॥
हिमसलिलैरथोत्पलैः किं वा ।
शिशिरशतैर्न याति दाहोयम् ॥ ४ ॥
अयि भिषजो मुधा निदानं वः ।
दुरवगमो ममास्ति रोगोयम् ॥ ५ ॥
विरहकृशं विलोक्य मामाह ।
'न परिचिनोमि वर्तते कोयम्?' ॥ ६ ॥
अधिहृदयं निधाय सोऽवादीत् ।
कियदयि भोः प्रयाति खङ्गोयम् ॥ ७ ॥
अद्य विधे! विधेहि मे पीडाम् ।
कठिनतमो ममापि देहोयम् ॥ ८ ॥
अयि जहि मञ्जुनाथ ते मन्युम् ।
त्वयि दयते सुहृत्समाजोयम् ॥ ९ ॥

मानसे अद्य कोयं रतिविगमः (आनन्दाऽभावः'बेचैनी'), लोकस्तु एतदुपर्यपि मां मुधैव तिरस्करोति ॥ १ ॥ मतिः किंकरोमीति बुद्धिः, अयते निवर्तते ॥ ३ ॥ मन्युं शोकम् ॥ ९ ॥

[ ३१ ]

अहो मुष्णासि लोकान्दृग्विलोके ।
कथं स्यात्ते प्रतीतिः पौरलोके? ॥ १ ॥

मया मुग्धेति दत्तं मानसं मे ।
त्वया तन्निह्नुतं जानन्ति नो के? ॥ २ ॥
तथा बध्नास्यहो दृग्दामबन्धे ।
यथा कश्चिन्न शक्तोऽस्माद्विमोके ॥ ३ ॥
तव स्नेहोपलम्भे स्यात्प्रगल्भम् ।
न तादृङ् नैपुणं मे चित्ततोके ॥ ४ ॥
क्षणं ते वीक्षणं विन्दामहे चेत् ।
वयं प्रायः प्रसन्नाः स्याम शोके ॥ ५ ॥
तवाऽस्मिन् केशपाशस्याऽवबन्धे ।
सकृद्बद्धा विमुच्येरन्नहो के? ॥ ६ ॥
अलं ते तिग्मतेजस्तापदानैः ।
त्वया विद्धा विमोदेरन् विधो के? ॥ ७ ॥
प्रिये! किं कञ्चुकीबन्धप्रबन्धैः? ।
अलं बन्धेन वक्षोजाऽऽख्यकोके ॥ ८ ॥
अये नेत्रेण नेत्रं योजयित्वा ।
त्वया मुष्टा न लोके, ते पटो! के? ॥ ९ ॥
वराकः संस्थितोऽसौ ते वियोगे ।
वसेत्किं प्राणपक्षी रुद्धरोके ॥ १० ॥
तदास्ये हन्त दास्येनोपयायाः ।
तदग्रे स्युर्गुणास्ते शीतगो! के ॥ ११ ॥
अये प्रेमाऽपयायास्तापकारिन्! ।
त्वया नो विप्रलभ्येरन् रिपो! के ॥ १२ ॥

वहन्ते प्रेमबन्धान्मोहमन्ते ।
अमुष्मान्मोदमीयन्ते प्रभो! के ॥ १३ ॥
इतोऽग्रे मञ्जुनाथस्योक्तिबन्धे ।
निबन्धारं विलोकेथा न लोके ॥ १४ ॥

मया मुग्धा (छल-कपटरहिता) इति बुद्ध्वा मे मानसं दत्तम्, त्वया तु तत् (मानसम्) निन्हुतम् गोपितम् । अत्र के वा साक्षिणो न सन्ति? सर्वे एव जानन्ति ॥ २ ॥ दृग्रूपे दामबन्धे (रज्जुबन्धे) । विमोके मोक्षे ॥ ३ ॥ तव स्नेहप्राप्तौ निपुणं भवेत्तादृक् नैपुणं मे चित्तरूपे तोके (शिशौ) न ॥ ४ ॥ विरही आह—तव तीक्ष्णतेजसः तापदानैः अलम्! हे विधो! (चन्द्र) त्वया विद्धाः (पीडिताः) के प्रमोदेरन्? ॥ ७ ॥ हे पटो! त्वया नेत्रेण नेत्रं योजयित्वा ये न मुष्टाः, लोके ते के सन्ति? न केपीत्याशयः ॥ ९ ॥ दीनो विरही संस्थितः (मृतः) । हस्तेन रुद्धे रोके (छिद्रे) किं प्राणपक्षी वसेत्? ॥ १० ॥ तस्याः (नायिकायाः) आस्ये दास्येनोपचरेः । तदास्यस्य अग्रे हे शीतगो! (चन्द्र) ते गुणाः के? ॥ ११ ॥ अस्मादग्रे मञ्जुनाथस्य उक्तिबन्धे (अनुप्रासगुम्फे), निबन्धारम् (अनुप्रासपूरकम्) न विलोकेथाः । नाग्रेऽनुप्रास इत्यर्थः ॥ १४ ॥

[ ३२ ]

अये पद्मालये! मातर्दयातः पाहि दीनं माम् ।
क्षणं वीक्षस्व संसारेऽद्य निःसारे निलीनं माम् ॥ १ ॥
तवाऽऽलम्बादहं बालोऽधुना लोकं सुखं मन्ये ।
त्वमेवोपेक्षसे कस्मादकस्माद्धैर्यहीनं माम् ॥ २ ॥
अनन्तैर्दुःखसंवर्तैर्निकामं खिन्नचित्तोऽहम् ।
दृशं सौख्यस्पृशं मातर्दिशन्ती पाह्यधीनं माम् ॥ ३ ॥

न जानन्मार्गमेतं ते दुरन्तेऽस्मिन्भवेऽभ्राम्यम् ।
इदानीं त्वद्दयाऽऽधारे नयाऽऽगारे नवीनं माम् ॥ ४ ॥
भवाऽब्धौ निर्भरासङ्गैस्तरङ्गैर्भ्रान्तवान् बाढम् ।
न जाले पातयेर्मातर्विदित्वा मूढमीनं माम् ॥ ५ ॥
नृपाः प्राप्याऽधिकारं ते निकारं वित्सु विन्दन्ते ।
न कुर्वीथाः कृपाऽम्भोधे! कलौ कस्याऽप्यधीनं माम् ६
सुसूक्ष्मं जीवने मातर्न मे पुण्यं परीक्षेथाः ।
निरीक्षेथाः क्षणं मातः प्रपुष्यत्पापपीनं माम् ॥ ७ ॥
अनन्तेऽस्मिन्विधानेऽहं न जाने तथ्यमीमांसाम् ।
त्वमेवाऽऽख्याहि कर्तव्यं कृपाऽब्धे मामकीनं माम् ८
न लज्जेयं भवेत्किं ते? निमज्जेन्मञ्जुनाथश्चेत् ।
अये मातर्नयेथास्त्वत्पदाऽब्जे तावकीनं माम् ॥ ९ ॥

ते मार्गं न जानन् अस्मिन्भवेऽभ्राम्यम् । इदानीं तव दयाया आधारो यत्र ईदृशे (अर्थात्त्वद्दयया प्राप्ये) आगारे नवीनं मा नय । नवीनो हि मार्गं न जानीयात्, अत एव त्वमेव मां त्वत्कृपालभ्ये स्थाने प्रापयेत्याशयः ॥४॥ निर्भरः आसङ्गः आश्लेषो येषाम् (अर्थात् अतिनिबिडैः) तरङ्गैः । मां मूढं मीनं विदित्वा जाले न पातयेः ॥ ५ ॥ विद्वत्सु निकारम् (तिरस्कारम्) विन्दन्ते दर्शयन्तीत्यर्थः ॥ ६ ॥ मे जीवने अतिसूक्ष्मं पुण्यं न परीक्षेथाः । सूक्ष्मवस्तुनो दर्शने तव क्लेशो भवेत् । अत एव पुष्यद्भिः पापैः पीनं मां निरीक्षेथाः इत्याशयः ॥ ७ ॥ इदं कर्तव्यम् इदं कर्तव्यम्, इति अनन्ते विधिप्रपञ्चे, अहं तथ्यमीमांसां न जाने ॥ ८ ॥ तावकीनो मञ्जुनाथो यदि भवाब्धौ निमज्जेत्तर्हि इयं ते लज्जा किं न भवेत्? ॥ ९ ॥

✧ दोहाच्छन्दोभिरपि सेयं गीतिः प्रसिद्धा ✧

[ ३३ ]

अये पद्मालये ! मातर्दयातः पाहि दीनं माम् ।
क्षणं वीक्षस्व संसारेऽद्य निःसारे निलीनं माम् ॥ १ ॥
मुग्धेन्दीवरसुन्दरे नयने सिन्धुकुमारि !
यदि धत्से, दारिद्र्यमपि तत्र न चाऽन्तिकचारि ॥
गलत्कणयाचनालीनं विजीनं पाहि दीनं माम् ॥ २ ॥
दृप्यद्धनपतिदुर्वचननिचयनचिरनिर्वेदि ।
मम मानसमिदमिन्दिरे ! बत बहुतरपरिखेदि ॥
त्वमेवाऽऽख्याहि पन्थानं भवाऽरण्याध्वनीनं माम् ॥३॥
तव पदसरसिजरजसि यदि मानसमिदमुपयाति ।
सततमितरचिन्तनमपि प्रायः सपदि न भाति ॥
अये मथुरापतेः कान्ते ! त्वमन्ते पाहि दीनं माम् ॥४॥

तत्र दारिद्र्यम् समीपचारि अपि न भवति । विजीनम्, क्षताऽवस्थं वृद्धमिति यावत् ॥ २ ॥ दृप्यन्तो ये धनिकाः तेषां दुर्वचननिचयेन तत्कालं वैराग्ययुक्तम् । नचिरेत्यत्र न, न तु नञ् ॥ ३ ॥ तर्हि इतरेषां देवानां चिन्तनमपि प्रायो न भाति ॥ ४ ॥

[ ३४ ]

भो विभो ! मम मानसे सा मञ्जुमूर्तिरुदेतु ते ।
दीनदुःखनिबर्हणी या सा दया समुदेतु ते ॥ १ ॥
हन्त मे श्रमसंततं हृदयं विषीदति संततम् ।
किञ्चिदञ्चतु लोचनं मयि मीलिताऽखिलहेतु ते ॥ २ ॥

आश्रयोसि निराश्रयाणामुच्छ्रयोसि सुसंपदाम् ।
आलयोसि हि संविदामवदानमन्तरमेतु ते ॥ ३ ॥
दुस्तरं भवसागरं समवाप्य मज्जति मानसम् ।
पारमेतदुपेयतामुपयत्पदाऽम्बुजसेतु ते ॥ ४ ॥
तारिता भवता भवेयुरजामिलप्रमुखाः सुखम् ।
पातकी बत तादृशोहमियं दयाऽपि बिभेतु ते ॥ ५ ॥
ज्ञानमस्ति न मे, समेति च नापि कापि विचारणा ।
संदधामि पदाऽवलम्बनमंहसो जयकेतु ते ॥ ६ ॥
न सरत्यथ, नो नमस्यति, नो गृणाति, न सेवते ।
हे दयाम्बुनिधे ! तदेषा भावना न समेतु ते ॥ ७ ॥
स्थानमेकमुदीर्यसे सुरभारतीसेवाजुषाम् ।
मञ्जुनाथनिवेदितं बत संनिधौ समुदेतु ते ॥ ८ ॥

मम मानसे ते प्रसिद्धा मञ्जुमूर्तिरुदेतु, ते मानसे च दीनदुःखनाशिनी दया उदेतु । निबर्हणीति, लेखनी-रमणीवत् ॥ १ ॥ क्रमेण संततं व्याप्तम् । मीलिताऽखिलहेतु, दूरितसमस्तकारणं हेत्वपेक्षाशून्यं ते लोचनं मयि किञ्चिदुपयातु ॥ २ ॥ संपत्तीनां त्वमुच्छ्रयः (परा काष्ठा) असि । संविदां ज्ञानानाम् । ते अवदानम् (बलम्) मे अन्तरं (मानसम्) प्राप्नोतु ॥ ३ ॥ उपयत् प्राप्नुवत् ते पदाम्बुजमेव सेतुर्यस्मै तत् एतन्मानसं पारमुपगच्छतु ॥४॥ अंहसः पापस्य विजये ध्वजसदृशम् ॥ अयं मञ्जुनाथो मां न स्मरतीत्यादि॥७॥

[ ३५ ]

अयि व्रजराज ! मुञ्चसे किं माम् ? ।
पदपतितं न वीक्षसे किं माम् ॥ १ ॥

अवति शिशुं दयालुरन्योपि ।
भवपतितं निरीक्षसे किं माम् ॥ २ ॥
तव भुवने दयालुता ख्याता ।
अपि दुरितैरुपेक्षसे किं माम् ॥ ३ ॥
सुबहु मयाऽस्ति वेदना सोढा ।
भवगहनैः परीक्षसे किं माम् ॥ ४ ॥
यदि पशवोऽपि तारिता भवता ।
न यदुपतेऽवलम्बसे किं माम् ॥ ५ ॥
प्रकटय मे सुमञ्जुमूर्तिं ते ।
नयनसुखान्निबर्हसे किं माम् ॥ ६ ॥
चरणसरोजमञ्जुलाऽऽमोदैः ।
प्रमदयसे न मानसे किं माम् ॥ ७ ॥
न किमधुना ददासि धैर्यं मे ।
क्षतहृदयं समीहसे किं माम् ॥ ८ ॥
अधमतमोऽपि मञ्जुनाथोऽयम् ।
त्वदनुचरं न मन्यसे किं माम् ॥ ९ ॥

अन्यः मार्गे गच्छंस्तटस्थोपि । मां केवलं निरीक्षसे किम्, त्रायसे किं नेत्याशयः ॥ २ ॥ भवगहनैः संसारजालैः ॥ ४ ॥ पशवः गजेन्द्र-व्रजगवी-प्रभृतयः ॥५॥ निबर्हसे पृथक्करोषि ॥६॥ मानसे मां किं न प्रमोदयसे ॥७॥ मां किं त्वं विदीर्णहृदयं वाञ्छसि ? मम हृदयभेददशा संनिहितेत्याशयः ॥८॥ मञ्जुः (त्वम्) नाथो यस्य, तथा च त्वत्स्वामिकोहं त्वद्दयायोग्य इत्याशयः ॥९॥

[ ३६ ]

## गजेन्द्रमोक्षः

अयि हे गजेन्द्रदयानिधे! गुणवारिधे! द्रुतमीयताम् ।
विजहासि किं करुणाऽम्बुधे! सविधेऽद्य नाथ! समीयताम् ॥१॥
गजराज एष मनोहरे विजहार दिव्यसरोवरे ।
सह संस्फुरत्प्रमदच्छटां करिणीघटामुपनीय ताम् ॥ २ ॥
करकीर्णपङ्कजरेणुभिः स करेणुभिर्विहरंश्चिरम् ।
ह्रदमध्यमेष गतो ह्यभूदनुभूय तद्रमणीयताम् ॥ ३ ॥
पयसीह कोऽपि दुरुद्धरो मकरोऽङ्घ्रिमस्य समाक्षिपत् ।
अथ तौ महामकर—द्विपौ दधतुर्मिथो दमनीयताम् ॥ ४ ॥
मकरो महाप्रबलो जले स बलेन दन्तिनमाहरत् ।
करुणां दशामुपगच्छता करिणाऽथ किं नु विधीयताम्? ॥५॥
सुहृदोऽथ भीतहृदोऽद्रवन्, करिणीषु किंकरणीयता ।
अवशोऽधुना भृशगद्गदो द्विरदो दधौ भवदीयताम् ॥ ६ ॥
हृदि चिन्तयंश्चरणोत्पलम्, कमलं करेण विनिक्षिपन् ।
करुणं जुहाव—"जगत्पते! त्वरितेन नाथ समीयताम् ॥ ७ ॥
अयि नाथ! यामि जलान्तरे मकरेण निर्मथितोऽन्तरे ।
अयि हे परेश! करेण मे ह्यवलम्बनं प्रतिदीयताम् ॥ ८ ॥"
गजपुङ्गवस्य सवेदनं करुणं निशम्य निवेदनम् ।
निजलोकतस्त्वरितोऽभ्यया द्विरदेऽदयान् दयनीयताम् ॥ ९ ॥
अयि नाथ सम्प्रति पश्य मां विषमामवेहि दशामिमाम् ।
पतितस्य किं नु भवाऽर्णवे करलम्बनं न विधीयताम्? ॥ १० ॥

मथितोऽसि वासनयाऽनया, व्यथितोसि नाथ निरन्तरम् ।
अधुना तु कञ्जरुचिस्पृशा करुणादृशा परिचीयताम् ॥ ११ ॥
अपि दीनमेनमवेर्हरे ! वत मञ्जुनाथशिरोऽन्तरे ।
करपल्लवस्तु न चेत्क्षणं पदपल्लवोऽपि निधीयताम् ॥ १२ ॥

गजेन्द्रोपरि दयानिधे ! ॥ १ ॥ संस्फुरन्ती प्रमदच्छटा (हर्षच्छवि·) यस्याः तां करिणीघटाम् (समूहम्) सह उपनीय ॥ २ ॥ करेण (शुण्डया) कीर्णाः पङ्कजपरागा याभिः । तस्य (ह्रदस्य) रमणीयतामनुभूय ॥ ३ ॥ गजस्य दमनीयो मकरः, मकरेण च दमनीयो गज इति मिथो दमनीयतां दधतुः ॥४॥ किंकरणीयता किंकरणीयं यासां तद्भावः (किंकर्तव्यता) । भवदीयताम् त्वद्भक्तताम् ॥ ६ ॥ सवेदनम् वेदनासहितम् । द्विरदे दयनीयताम् अवयान् (जानन्) अभ्ययाः आगतोऽभूः ॥ ९ ॥ कञ्जरुचिस्पृशा कमलशोभाधारिण्या ॥ ११ ॥ दीनम् एनम् (मञ्जुनाथम्) अवेः रक्षेः ॥ १२ ॥

[ ३७ ]

भूयात्प्रभोऽधुना तु दया दीनदुर्जने ।
किं वा विलम्बसे मम सौभाग्यसर्जने ॥ १ ॥
नानाविधैर्न धैर्यमहो तापसंचयैः ।
दह्ये दयानिधान ! भृशं भूरिभर्जने ॥ २ ॥
पश्याऽग्रतोऽयमेति यमो मां विकर्पयन् ।
हा हन्त याति धैर्यमिदं तीव्रतर्जने ॥ ३ ॥
संतोषमाप्य चित्तमिदं शान्तिमेतु मे ।
संतापितो भ्रमामि सदा संपदर्जने ॥ ४ ॥
भ्राम्यामि मूढ एष महाघोरसंकटे ।
कस्मादुपेक्षसेऽद्य ममोन्मार्गवर्जने ॥ ५ ॥

वीक्षस्व दीन एष कियत्क्रन्दते चिरात् ।
कस्माच्छृणोषि नाथ विपद्घोरगर्जने ॥ ६ ॥
संतापितस्य दीनदशां किं न वीक्षसे ।
यातासि किं प्रसादमसूनां विसर्जने ? ॥ ७ ॥
हे नाथ मञ्जुनाथमिमं न्यक्करोषि किम् ।
सैषोस्ति चक्रवर्तिसमो दुष्टदुर्जने ॥ ८ ॥

दीने दुर्जने च (मयि) ॥ १ ॥ सांसारिकेऽस्मिन् संतापकृतभर्जने दह्ये दग्धो भवामि ॥ २ ॥ मम विपत्तीनां घोरं गर्जनं परितो भवति, तस्य कोलाहले मम क्रन्दनं कस्माच्छृणुया इत्याशयः ॥ ६ ॥ मम असूनां (प्राणानाम्) विसर्जने त्वं प्रसादं यातासि (गमिष्यसि) ? ॥ ७ ॥ दुष्टे दुर्जने च लोकेऽयं चक्रवर्तिसदृशोऽस्ति । अत एव चक्रवर्तिनस्तिरस्कारो नोचितः । चक्रवर्तीति जात्यां प्रसिद्धस्य सूचनेति तु लोकानां भ्रम एव ॥ ८ ॥

[ ३८ ]

## —॥ सुबन्तपदस्याऽन्त्यानुप्रासः ॥—

अये कामये नाथ किञ्चिद्दृशं ते ।
क्षणं देहि दीनेऽनुकम्पालवं ते ॥ १ ॥
अहो मे बहोः कालतो लालसेयम् ।
कदाऽऽलोकयेयं पदाऽम्भोरुहं ते ॥ २ ॥
क्षणं वीक्ष्यतां नाथ दीना दशा मे ।
धरायां विलोठामि हा संमुखं ते ॥ ३ ॥
न किं वैद्य ! संवीक्षसे रुग्णमेतम् ।
वराकश्चिरादागतोऽयं गृहं ते ॥ ४ ॥

चिरं चिन्तया किं तयाऽहं न दूये ।
प्रभो ! हन्ति या दीनमेनं जनं ते ॥ ५ ॥
प्रभो भासि सर्वस्य चित्ताऽन्तराले ।
किमालेखये दुःखमेतच्चिरं ते ॥ ६ ॥
बलं धर्मकर्मादि केषांचन स्यात् ।
अलं केवलं मेऽनुकम्पाबलं ते ॥ ७ ॥
यमाद्दुर्यमाद्रक्षणं दूरमास्ताम् ।
प्रभो प्रार्थयेऽहं क्षणं वीक्षणं ते ॥ ८ ॥
कथं वा हरेऽहं हरे ! मन्दकर्मा ।
सरोजप्रभामोचनं लोचनं ते ॥ ९ ॥
लभेताऽञ्जसा मूढचेता नु मादृक् ? ।
लभन्ते बुधाः संविदन्ते पदं ते ॥ १० ॥
अहं पातकी ख्यातकीर्तिर्जनानाम् ।
परं किं दयाब्धेर्दयाऽयाल्लयं ते ॥ ११ ॥
प्रभुः पातकान्येक्ष्य चित्रायितोऽभूत् ।
अये मञ्जुनाथ ! प्रभावो ह्ययं ते ॥ १२ ॥

इयं लालसा ॥ २ ॥ एतद्दुःखं ते किम् आलेखयेयं सूचयेयमित्याशयः ॥६॥ दुष्करो यमः (यमनं दमनम्) यस्य तस्माद्यमात् ॥ ८ ॥ हे हरे! मन्दकर्माऽहं ते लोचनं कथं हरे (मदभिमुखमाकर्षयेयम्) ॥ ९ ॥ मूढो मादृशस्ते पदं लभते नु (किम् ?), नैवेत्यर्थः । बुधाः संविदन्ते (तत्त्वज्ञानस्यान्ते) ते पदं लभन्ते ॥ १० ॥ अहं प्रसिद्धः पातकी अस्मि, परं दयासागरस्य ते किं दया, लयं याता ? न लुप्तेत्याशयः ॥ ११ ॥ प्रभुस्ते पातकानि दृष्ट्वा चकितोऽभूदयं ते प्रभावः! धन्योऽसि !! ॥ १२ ॥

[ ३९ ]

नानुगृह्णासि, न किं पासि विभो दीनं माम्?।
किं न जानन्नपि जानासि विभो दीनं माम् ॥ १ ॥
पश्य मे दीनदशामद्य दयालो! किञ्चित्।
किं प्रगल्भोऽपि न पुष्णासि विभो दीनं माम् ॥ २ ॥
कर्मबन्धेन निबद्धोऽसि महामूढोऽहम्।
किं पुनर्मोहतो बध्नासि विभो दीनं माम् ॥ ३ ॥
नाऽवलम्बं ददसे किं विलम्बेन फलम्?।
किं न कारुण्यतो गृह्णासि विभो दीनं माम् ॥ ४ ॥
हन्त सन्तापपरो भूरि रमे संसारे।
किं मुधा मायया मश्नासि विभो दीनं माम् ॥ ५ ॥
कोसि, कुत्रासि, कथं लभ्यसेऽहं नो जाने।
किं न तत्त्वेन समाख्यासि विभो दीनं माम् ॥ ६ ॥
दर्शनं नो ददसे, वैषयिकैर्मोहयसे।
मूढमालक्ष्य विक्षुण्णासि विभो दीनं माम् ॥ ७ ॥
पादमुद्राऽङ्कनतो मौलिमिमं मुद्रय मे।
किं विमोहेन विमृद्नासि विभो दीनं माम् ॥ ८ ॥
मूर्तिमेतां मधुरां किं न हरे! दर्शयसे?
दीननाथोपि न किं यासि विभो दीनं माम् ॥ ९ ॥
ज्ञानशून्योपि चिरादद्य गुणान् गायति ते।
मञ्जुनाथोपि, न विजहासि विभो दीनं माम् ॥ १० ॥

किं न अनुगृह्णासि (अनुग्रहं करोपि?) ॥१॥ प्रगल्भश्चतुरः ॥ २ ॥ ददसे

'दृद् दाने' ॥ ४ ॥ वैषयिकैः विषयसम्बन्धिभिः प्रपञ्चैः ॥ ७ ॥ तव चरण-चिह्नस्याङ्केन मे मस्तकं चिह्नितं कुरु । विमृद्नासि मर्दयसि ॥ ८ ॥ मां किं न यासि, रक्षणार्थं मां किं नोपगच्छसि ॥ ९ ॥ मञ्जुनाथो ज्ञानशून्योपि ते गुणानद्य गायति, अत एव न विजहासि त्वमपि न त्यजसि ॥ १० ॥

[ ४० ]

अये गिरीन्द्रनन्दिनीश ! नन्दयस्व माम् ।
अये शशाङ्कशोभिभाल ! पालयस्व माम् ॥ १ ॥
जाता नितान्ततान्तता संतापितस्य मे ।
पीयूषपूरपोषतः संतोषयस्व माम् ॥ २ ॥
याचे न चेतसा भवन्तमीहिताऽन्तरम् ।
दृशा दयास्पृशा तु तत्संभावयस्व माम् ॥ ३ ॥
यदा पशुर्विशांपते ! भवताऽधिरुह्यते ।
तदा पदाग्रदानतः संमानयस्व माम् ॥ ४ ॥
भवान् भवाऽनुकीर्तने ख्यातस्त्रिलोचनः ।
एकेन लोचनेन तु प्रनिभालयस्व माम् ॥ ५ ॥
जाने भवन्तमद्रिजाजाने ! ममाऽऽश्रयम् ।
मा मा निराशतां प्रदाः परिवारयस्व माम् ॥ ६ ॥

चित्तेन अहम् ईहितान्तरम् ( अन्यद् वाञ्छितम् ) न याचे ॥ ३ ॥ हे भव ! कीर्तनकथायां भवान् त्रिलोचनः प्रसिद्धः । प्रनिभालयस्व विलोकय ॥५॥ मह्यं निराशतां मा प्रदेहि । मां परिवारयस्व ( निजं परिवारम् 'सेवकम्' कुरु ) ॥ ६ ॥

[ ४१ ]

अहो शम्भो ! भवेत्किं भो ममैवार्थे विलम्बोऽयम् ? ।
समुद्धारेच्छया शीघ्रं पुरारे ! तेऽवलम्बोऽयम् ॥ १ ॥

कियद्भ्राम्यामि भो भूमन्! भवेऽस्मिन्भूरि भीतोहम्।
अहो भूतेश! किं कुर्वे, भवाऽध्वा भूरिलम्बोऽयम् ॥ २ ॥
मनोमोहाय जायन्ते जगद्वस्तूनि पर्यन्ते ?।
अहो मे लोलुपस्याऽग्रे धृतोऽभूत्किं करम्भोऽयम् ? ॥ ३ ॥
बहिर्जानन्ति मां सन्तम्, हृदन्तं केऽपि नेक्षन्ते।
अहो किं दर्शयेदग्रे दुरन्तं दुष्टदम्भोऽयम् ॥ ४ ॥
विभो वीक्षस्व चिन्ताऽसौ न किं तावद्दुरन्ता मे।
अहो लग्नो हृदन्ते मे न कृन्तेत्किं कलम्बोऽयम् ? ॥ ५ ॥
अहो भूतेश भुक्तेभ्यो न भोगेभ्यो विरज्येऽहम्।
कथं मुञ्चेन्मुखाऽऽयातं तृषाऽऽर्तो मिष्टमम्भोऽयम् ॥ ६ ॥
सुखं मोदेत मेदिन्यां सनाथो मञ्जुनाथोऽयम्।
भवेद्भूतेश! भावत्को दयालेशोऽद्य शम्भोऽयम् ॥ ७ ॥

शीघ्रं समुद्धारेच्छया अयं तेऽवलम्बः (अभूत्) ॥ १ ॥ भवमार्गः अतिलम्बः (दीर्घः) ॥२॥ पर्यन्ते परिणामे। करम्भो दधिमिश्रसक्तुः। 'ज्योत्स्नाकरम्भमुदरम्भरयश्चकोराः' मुरारिः ॥३॥ किं दुरन्तम् (दुष्परिणामम्) दर्शयेत् ॥४॥ हृदन्ते लग्नः कलम्बः (बाणः) किं न कृन्तेत्? इयं चिन्ता बाणसदृशीत्याशयः ॥५॥ अयं तृषार्तो मुखागतं मिष्टम् अम्भः कथं मुञ्चेत्? ॥ ६ ॥

[ ४२ ]

वन्दामहे महेशपदाऽम्भोजमुज्ज्वलम्।
सेवामहे महेशपदाम्भोजमुज्ज्वलम् ॥ १ ॥
संतापितस्य तापहरं किञ्चिदस्ति चेत्।
बुध्यामहे महेशपदाम्भोजमुज्ज्वलम् ॥ २ ॥

लीयेत लाभलोभलवोऽप्यान्तरस्य, चेत् ।
विन्दामहे महेशपदाम्भोजमुज्ज्वलम् ॥ ३ ॥
यायाद्यमोऽपि मौनमहो नम्रमौलि, चेत् ।
अर्चामहे महेशपदाम्भोजमुज्ज्वलम् ॥ ४ ॥
संसारसागरस्य महापोतमाततम् ।
श्लाघामहे महेशपदाम्भोजमुज्ज्वलम् ॥ ५ ॥
एतावदेव देव ! सदाऽभ्यर्थयामहे ।
पश्याम हे महेश ! पदाम्भोजमुज्ज्वलम् ॥ ६ ॥
गर्वोद्धुरं कदापि न याचामहे नरम् !
याचामहे महेशपदाम्भोजमुज्ज्वलम् ॥ ७ ॥
काव्येषु मञ्जुनाथ न नः स्पर्द्धया फलम् ।
वीक्षामहे महेशपदाम्भोजमुज्ज्वलम् ॥ ८ ॥

संतापितस्य तापहरं यदि किञ्चिदस्ति, तर्हि तत् शिवपदाम्भोजं बुध्यामहे ॥ २ ॥ यदि शिवचरणं विन्दामहे तर्हि चित्तस्य लोभलेशोपि लुप्येत ॥ ३ ॥ नतमस्तकं यथा स्यात्तथा यमोपि मौनं यायाद्यदि वयं शिवचरणमर्चामः ॥ ४ ॥ आततम् विस्तृतम् ॥ ५ ॥ हे महेश ! ते पदाम्भोजं पश्याम । लोट् ॥ ६ ॥ नरम् (नरात्, अविवक्षायां द्वितीया) न याचामहे अपि तु पदाम्भोजम् (पदाम्बुजात्) अभीष्टं याचामः ॥ ७ ॥

## ॥ भवाऽटवी ॥

[ ४३ ]

अहो कं वाऽऽश्रयेयं दीनबन्धो ? ।
स्वदुःखं कं वदेयं दीनबन्धो ? ॥ १ ॥

महाघोरे घनेऽहं काननेऽस्मिन् ।
वद त्वं कं भजेयं दीनबन्धो ॥ २ ॥
वनाऽग्निः सर्वतो मे संवृतोऽयम् ।
अहो कुत्र द्रवेयं दीनबन्धो ? ॥ ३ ॥
पथि श्रान्तो नितान्तोत्पीडितोहम् ।
कथं शान्तिं वहेयं दीनबन्धो ॥ ४ ॥
प्रभो ! भ्राम्यामि दिङ्मूढोऽतिवेलम् ।
कथं मार्गं जुषेयं दीनबन्धो ॥ ५ ॥
अहो वन्यद्विपो मामेति हन्तुम् ।
वटेऽस्मिन्नापटेयं दीनबन्धो ॥ ६ ॥
द्रुतं शाखां प्रगृह्याऽऽलम्बितोहम् ।
परं कूपस्तलेऽयं दीनबन्धो ॥ ७ ॥
अधः कूपो, द्विपोयं संमुखे मे ।
कथं शाखां त्यजेयं दीनबन्धो ॥ ८ ॥
परं क्षौद्रस्य वृक्षाद्बिन्दवो मे ।
मुखे ह्यायान्त्यमेयं दीनबन्धो ॥ ९ ॥
इमां शाखामपीमौ मूषकौ द्वौ ।
लुनीतः, किं चरेयं दीनबन्धो ? ॥ १० ॥
क भो गच्छामि ? कुर्वे किं प्रभो मे ? ।
त्वमेवाऽऽख्याह्युपेयं दीनबन्धो ! ॥ ११ ॥
विहाय त्वां कमन्यं मञ्जुनाथम् ।
वटेऽस्मिन्नारटेयं दीनबन्धो ! ॥ १२ ॥

पथिश्रान्तः मार्गचलनखिन्नः ॥ ४ ॥ जुषेयं प्राप्नुयाम् ॥ ५ ॥ आपटेयम् आगच्छेयम् ॥ ६ ॥ परं वटवृक्षात् क्षौद्रस्य मधुनो विन्दवो मे मुखे अमेयम् (अपरिमितं यथा तथा) आयान्ति ॥ ९ ॥ उपेयम् उपगन्तव्यम् (शरणम्) त्वमेव आख्याहि ॥ ११ ॥ मत्सुं त्वां नाथं विहाय, अस्मिन् वटवृक्षे, अन्यं कम् आरटेयम् आह्वयेयम् ॥ १२ ॥

[ ४४ ]

भ्रमन्तं भूरि संसारे मुरारे पाहि दीनं माम् ।
पदाब्जे ते विलोठन्तं द्रुतं संयाहि दीनं माम् ॥ १ ॥
मुहुः क्लिश्नाति चिन्ताऽसौ समन्तादाकुलीभूतम् ।
ततोपि व्रीडयत्येषा महत्त्वाऽऽशा हि दीनं माम् ॥ २ ॥
न दूये दुर्जनाऽऽलापैः, पराभूये न संतापैः ।
चिरायोपेक्षणं ते बाधते संदाहि दीनं माम् ॥ ३ ॥
न भाग्यं तादृशं यत्ते विलोके रूपसौभाग्यम् ।
धिनोति ध्यानसौख्यं ते सुधासंवाहि दीनं माम् ॥ ४ ॥
न दैन्याद्दूयते चित्तम्, न वित्तं स्तूयते भूरि ।
अधैर्यं किन्तु संधत्ते सदा संनाहि दीनं माम् ॥ ५ ॥
अविश्रान्तं प्रतीक्षातो नितान्तं श्रान्तचित्तोहम् ।
दयालो दृक्सुधाऽऽसारैर्नवं निर्माहि दीनं माम् ॥ ६ ॥
श्रुतीनां भूरिभूतीनां विकल्पैर्दिग्विमूढोहम् ।
कथंकारं विलोके त्वां मनागाख्याहि दीनं माम् ॥ ७ ॥
कृपापीयूषलेशार्थं प्रयस्यन् दूयमानोऽहम् ।
निलीनं द्वारदेशे ते न प्रत्याख्याहि दीनं माम् ॥ ८ ॥

दयामालम्ब्य ते भूमन्! सनाथो मञ्जुनाथोयम्।
इदानीं त्वद्वशोऽहं पाहि मा वा पाहि दीनं माम्॥ ९॥

सुधासंवाहि अमृतप्रवाहकं ते ध्यानसुखमेव मां धिनोति प्रीणयति॥ ४॥ वित्तम् अधिकं न स्तूयते, वित्तार्थमेव बहुलं प्रयासो न क्रियत इत्याशयः। परम् संनाहि सर्वदा सज्जम् अधैर्यं मां संधत्ते आश्रयति। त्वं मम कामवस्थां करिष्यसीत्यधैर्यं सदा मे तिष्ठतीत्यर्थः॥ ५॥ दृष्टिसुधावर्षणेन दीनं मां नवीनं कुरु, मम संसारपरिश्रमं छिन्धीत्याशयः॥ ६॥ भूरिशाखानां वेदानां विकल्पैः॥ ७॥ प्रयस्यन् प्रयासं कुर्वन्॥ ८॥

[ ४५ ]

दयालो! किमालोकसे निःस्पृहम्।
चिरं व्याकुलो हन्त लोठाम्यहम्॥ १॥
न किं वीक्षसे नाथ दीनाननम्।
चिरं चिन्तया हन्त दैन्याऽऽवहम्॥ २॥
खरैरश्रुपूरैर्निरुद्धे दृशौ।
कथं नाम शोके विलोके त्वहम्?॥ ३॥
सुहृत्सूनुसंबन्धिनोऽप्यद्य माम्।
विमुञ्चन्ति भूमौ गतं निःसहम्॥ ४॥
न कंचित्सहायं विलोके विभो!।
क्व भो दर्शयिष्यामि चित्ताऽऽग्रहम्?॥ ५॥
मतेर्दीनबन्धो! न गन्धोस्ति मे।
सदा मन्दकर्माणि कुर्वेऽन्वहम्॥ ६॥
कथं पुण्यमन्वेषये जीवने।
इदं दुष्कृताऽनन्तदावेऽदहम्॥ ७॥

इदानीं प्रभो मञ्जुनाथोद्धृतिश्च ।
दयालोस्तवैवाऽद्य हस्तेऽवहम् ॥ ८ ॥

यदा कश्चित्सहायक एव नास्ति तर्हि चित्तस्य आग्रहम् (अभिनिवेशम्) कुत्र दर्शयिष्यामि? न कुत्रापीत्यर्थः ॥ ५ ॥ मम बुद्धेर्लेशोपि नास्ति, अत एव बुद्धिशून्यः प्रतिदिन मन्दकर्माणि कुर्वे ॥ ६ ॥ इदं (पुण्यम्) पापरूपे अनन्ते दावे (वनाग्नौ) अदहम् ॥ ७ ॥ मञ्जुनाथोद्धारस्तव हस्त एवास्ति ॥ ८ ॥

[ ४६ ]

हंहो मुकुन्द मामहो दीनं न पासि किम्? ।
दीनं दयानिधे तवाऽधीनं जहासि किम्? ॥ १ ॥
आकण्ठमग्नमेनमहो मोहसागरे ।
हित्वा दयावतार विदूरे प्रयासि किम् ॥ २ ॥
बद्धोऽसि पूर्वमेव पुराकर्मबन्धनैः ।
तस्योपरि प्रभोऽद्य विमोहं ददासि किम्? ॥ ३ ॥
भ्रान्तो भ्रमामि भूरि विभो! कर्मकानने ।
मायामरीचिकां पुनर्मूढे दधासि किम् ॥ ४ ॥
चित्तेन चिन्तयैव चिरादार्त्तिराचिता ।
प्रेमाऽम्मयेन नाथ न चेमां लुनासि किम् ॥ ५ ॥
नेमां रुणत्सि, मोहिनी मायाऽस्ति संमुखे ।
कूपाऽन्तिकेऽन्धमेनमपास्याऽपयासि किम्? ॥ ६ ॥
चित्ताऽन्तरे जनस्य निवासं करोषि चेत् ।
चित्तस्य वेदनां तदा मे नाऽवयासि किम्? ॥ ७ ॥

पश्याऽद्य दयादृष्टये द्वारे लुठामि ते ।
पश्यन्नपि प्रभोऽद्य न पश्यन्निवाऽसि किम् ॥ ८ ॥
तापेन भूरितापितो लोठामि भूतले ।
हंहो दयानिधान ! दयां नोपयासि किम् ? ॥ ९ ॥
दीनोपि तावकोऽस्मि विहीनोपि साधनैः ।
मामद्य मञ्जुनाथ विमोहैः प्रमासि किम् ॥ १० ॥

मोहसागरे आकण्ठमग्नम् एनम् ( माम् ) ॥ २ ॥ पूर्वकृतकर्मणां बन्धनैः ॥ ३ ॥ भ्रान्तो भ्रमामि, कर्तव्येषु असयुक्तोहं कर्मवने भ्राम्यामि ॥ ४ ॥ चित्तेन चिन्ताद्वारा ( चिन्तां कृत्वा कृत्वा ) चिरात् पीडा आचिता ( संचिता ), इमाम् ( पीडाम् ) प्रेमवर्षया किं न लुनासि ॥ ५ ॥ कूपसमीपे अन्धम् एनम् ( माम् ) अपास्य त्यक्त्वा किमर्थं गच्छसि । माया कूपसदृशीत्यर्थः ॥ ६ ॥ विमोहैः मां किं प्रमासि, विमोहानुत्पाद्य तद्द्वारा मां किं परीक्षसे इत्याशयः ॥ १० ॥

[ ४७ ]

दोषं ददासि चेद्विभो ! चित्तं तदा व्यकारि किम् ? ।
पुण्यं परीक्षसे प्रभो ! बुद्धिर्न सा व्यतारि किम् ? ॥ १ ॥
जाने प्रभो त्वदिच्छया लोकोऽखिलं विचेष्टते ।
हंहो दयानिधे तदा दोषो मम व्यचारि किम् ॥ २ ॥
स्वामिन् ! ममैनसामहो संख्यां कथं करिष्यसे ।
सेयं परार्द्धपूरिणी पूर्वं प्रभो ह्यकारि किम् ॥ ३ ॥
पूर्वं त्वजामिलादयस्त्राता त्वया दयावशात् ।
असत्कृते दयानिधे सेयं दया न्यवारि किम् ॥ ४ ॥

पापीति मां कथं त्यजेर्वादं भजे दयानिधे !
पृच्छाम्यहम् 'पुरा त्वया पापी न वोद्धारि किम् ?' ॥ ५ ॥
नाहं विशेषलम्पटो बाढं पटो ! परीक्ष्यताम् ।
किन्तु प्रलोभनैः प्रभो ! ज्ञानं मम त्वहारि किम् ॥ ६ ॥
स्वामी स मञ्जुनाथ ते स्तोकं न दोषमीक्षते ।
पुण्यैः प्रसन्नताऽथ चेद्दानं दयाऽनुसारि किम् ? ॥ ७ ॥

'त्वं पापान्याचरसीति' मह्यं त्वं दोषं ददासि, तर्हि हृदि स्थितेन त्वया मम चित्तं किं व्यकारि ? ( विकृतं कृतम् ? ), सा बुद्धिः ( पुण्यानुसारिणी ) किं न व्यतारि ? ( अदायि ) ॥ १ ॥ एनसां पापानाम् । सेयं ( संख्या ) परार्द्धपूरिणी परार्द्धपर्यन्ता किमित्यकारि ? मम दोषाः परार्द्धसंख्यातोऽप्यधिकाः, अत एव संख्याऽभावात्परिमाणं कथं भवेदित्याशयः ॥ ३ ॥ पापीति कृत्वा मां कथं त्यजसि, हे दयानिधे अहमस्मिन्विषये वादं करोमि ! 'किं त्वया कश्चित्पापी न उद्धारि ( उद्धृतः ) ?' यदि पूर्वं पापी उद्धृतस्तर्हि अहं किमर्थं त्यक्तो भवेयमित्याशयः ॥ ५ ॥ प्रलोभनैर्मम ज्ञानं किमित्यहारि ? ॥ ६ ॥ स स्वामी दोषं स्तोकमपि नेक्षते । यतः—यदि पुण्यैः प्रसन्नता तर्हि दयानुसारि किं दानं जातम् ? यदि पुण्याऽभावेपि कृपा भवेत्तदैव दयाऽनुसारं दानमित्याशयः ॥ ७ ॥

[ ४८ ]

हरे ! संतरेद्भाग्यनौका ममेयम् ।
क्षणं क्षेपणी स्याद्दया चेत्तवेयम् ॥ १ ॥
भवाऽब्धिस्तु कल्लोलमालाऽऽकुलोयम् ।
महाजर्जरा नाथ नौका ममेयम् ॥ २ ॥
ततोऽप्यद्य विद्योतते नैव भास्वान् ।
घटा चोत्कटा व्योम्नि विस्फूर्जितेयम् ॥ ३ ॥

न पश्यामि मार्गं निरुद्धोऽन्धकारे ।
विचारेण हीनाऽतिदीना दशेयम् ॥ ४ ॥
महासागरे दुस्तरे वाति वायौ ।
मिमङ्क्षुस्तरिर्दोलते चञ्चलेयम् ॥ ५ ॥
भ्रमीणां भ्रमिर्भूरि भीतिं विधत्ते ।
न जाने कदाऽनेन लीयेत सेयम् ? ॥ ६ ॥
इदानीं न मे शक्तिरस्याः प्रवाहे ।
क्षणादेव हे देव मग्नो भवेयम् ॥ ७ ॥
न वीक्षेऽधुना त्वां विना रक्षकं मे ।
हृदन्तःस्थितं त्वां किमावेदयेयम् ? ॥ ८ ॥
इदानीं तु हे नाथ नेत्रे निबद्धे ।
निरुद्धेयमत्रैव नौः किं चरेयम् ? ॥ ९ ॥
दृशा मञ्जुनाथं क्षणं वीक्षसे चेत् ।
निमग्नोपि कामं हरे ! संतरेयम् ॥ १० ॥

क्षणार्थं तव दया यदि क्षेपणी ( नौकादण्डः 'बल्ली' ) स्यात्तर्हि मम भाग्यरूपा नौका संतरेत् ॥ १ ॥ मिमंक्षुः मज्जनाऽऽशङ्काग्रस्ता तरिः दोलते आलोडिता भवति । आशङ्कायां सन् ॥ ५ ॥ भ्रमीणाम् ( जलावर्तानाम् ) भ्रमिर्भ्रमणम् । अनेन आवर्तभ्रमणेन ॥ ६ ॥

[ ४९ ]

उपेक्षयाऽलम्, जहासि कालम्, द्रुतं न किं पासि भो विभो माम्? ।
सुधामये ! कामयेऽनुकम्पां मुधाऽवजानासि भो विभो माम् ॥१॥

तवाऽवलम्बेन निर्भयोहम्, न वा विलम्बेन लाभमीक्षे ।
समन्ततो व्याधिसंततोहम्, कुतो न गृह्णासि भो विभो माम्? २
अयेऽवलोकस्व वन्धबाधाम्, ममाऽपराधांस्तु माऽनुमासीः ।
दयाऽब्धिराकर्णितो मया त्वम्, कथं विमृद्नासि भो विभो माम् ३
निरन्तरं बाधते विचिन्ता दुरन्तसंतापसंकुलं माम् ।
किरन्तमश्रूणि दुःखदूनं कथं न पुष्णासि भो विभो माम्? ॥४॥
त्रिलोकलक्ष्मीललाममूर्तिर्विलोकनीयोऽसि लोकपालैः ।
अकिञ्चनं माययाऽनया ते कथं नु मुष्णासि भो विभो माम् ॥५॥
भ्रमन्ननेकासु भूमिकासु श्रमं कियन्नाथ धारयेऽहम् ।
न पारये हन्त पालयेथाः कियद्भिमश्नासि भो विभो माम् ॥ ६ ॥
क्व यामि, किं वाऽऽचरामि, कीदृग्भवामि, कस्मै निवेदयामि ।
कथं विलोठामि ते पदाऽब्जे, नं किं त्वमाख्यासि भो विभो माम् ७
विशीर्यते देहसन्धिबन्धो, न दीनवन्धो! सहे निवोढुम् ।
न चेतना चेष्टतेऽधुना किं न वाऽनुगृह्णासि भो विभो माम् ॥८॥
न कोपि मार्गाऽवबोधको मे, भवन्निकेतं वदेत्तु को मे?
व्यथाशतैराकुलं किलेमं वृथा निगृह्णासि भो विभो माम् ॥ ९ ॥
सुमञ्जुना ते गुणेन भूमन्! स मञ्जुनाथोऽद्य निर्भयोयम् ।
विना भवन्तं न वेद्म्यवन्तं पुनर्न किं पासि भो विभो माम्? ॥१०॥

उपेक्षां मा कुरु, कालं जहासि वृथैव उद्धारकालं मे यापयसि । अये! (हरे) अहम् अनुकम्पां सुधाम् (दयामृतम्, व्यस्तरूपकम्) कामये । अवजानासि तिरस्करोषि ॥ १ ॥ मम सांसारिकवन्धनानां बाधाम् अवलोकस्व ॥ ३ ॥ अकिञ्चनं (दीनम्) मां मायया कथं मुष्णासि प्रतारयसि । लोकपालैरपि दर्शनीयस्य ते इदं नोचितमित्याशयः ॥ ५ ॥ अनेकासु भूमि-

कासु (अनेकेषु जन्मस्वित्याशयः) ॥ ६ ॥ देहसन्धीनां बन्धो विशीर्यते, मम देहो विशीर्णप्राय इत्यर्थः । मम चेतना न चेष्टते, मम चैतन्यं नास्ती-त्याशयः ॥ ८ ॥ निगृह्णासि दमयसि ॥ ९ ॥

[ ५० ]

अयि नाथ दयादृष्टिं तव देहि दयालो! मे ।
विद्धासि तिरस्कारं किल केन कृपालो! मे ॥ १ ॥
भ्रान्तोऽसि भृशं भूमन्! भ्रमभूरिभवाऽरण्ये ।
अधुना तु वनान्तेऽस्मिन् भव नाथ निभालो मे ॥ २ ॥
मम मन्दकृतिस्तोमो बत बीजमभूत्पूर्वम् ।
कृतकर्मतरुः सोयम्, अधुना तु विशालो मे ॥ ३ ॥
अयि नाथ गजेन्द्रेऽभूद्भवदीयदया पूर्वम् ।
अधुना तु दयासिन्धो वद केन करालो मे? ॥ ४ ॥
लोठामि भृशं भूमौ दीनोऽयमहं त्वग्रे ।
निद्रासि कथङ्कारं ननु शेषशयालो! मे ॥ ५ ॥
विद्धासि दयादृष्टिं यदि किञ्चिदपि स्वामिन् ।
न हि नाथ भयं किञ्चित्कलयेदपि कालो मे ॥ ६ ॥
यदि कष्टमये काले न करोषि कराऽऽलम्बम् ।
तव भूरिकृपाऽऽलोकैः किमकारि कपालो मे? ॥ ७ ॥
भृशमन्यजनप्रीत्यै सुरशाखिचयोऽप्यास्ताम् ।
व्रजभूमिभवो भूत्यै भवतात्स तमालो मे ॥ ८ ॥
अयि नाथ न नाथेऽन्यत्, परमस्तु भवच्चित्ते ।
बत मञ्जुलनाथोऽयं चपलोपि च बालो मे ॥ ९ ॥

श्रमबहुले भवाऽरण्ये । हे नाथ मे निभालः ( निभालयतीति निभालः, निरीक्षकः ) भव ॥२॥ मम मन्दकार्यसमूहः पूर्वं वीजरूपेऽभवत् । अधुना मे कृतकर्मरूपः तरुः विशालो जातः, बीजरूपेण स्थितं मन्दकृत्यं विशालतरुरूपे परिणतमित्याशयः ॥ ३ ॥ मे ( मदर्थम् ) केन करालः ( क्रूरः ) असि ॥ ४ ॥ दीनस्य भूमौ लोठनं पश्यन्नपि हे मम शेषशायिन् ! त्वं कथं निद्रासि ? एवं करुणसमये निद्रा नोचितेत्याशयः ॥ ५ ॥ यदि कष्टकालेपि करालम्बनं न ददासि, तर्हि तव कृपाकटाक्षैः किं मे कपालः अकारि ? ('क्या हमारा सिर किया' इति लोकोक्तिः ) ॥ ७ ॥ अपि अन्यजनानां तोषार्थम् कल्पवृक्षसमूहो भृशमस्तु । मम कल्याणाय तु व्रजभूमिजातस्तमालवृक्षः ( श्रीकृष्णः ) अस्तु । रूपकातिशयोक्तिः ॥ ८ ॥ नाथे आशासे ॥ मञ्जुनाथश्चपलोपि मे बालः अस्तीति भवच्चित्तेऽस्तु ॥ ९ ॥

[ ५१ ]

## नवप्रचलितगीतिः

भयभीतमेनमालोक्य स मामविता भविता वनमाली मे ।
भृशमन्धकारिभववीथिपथे सविता भविता वनमाली मे ॥१॥
भ्राम्यामि भूरि संतापभृतो भुवनेषु नेह मिलितो ह्यविता ।
तस्य भूरिकारुण्यसुधास्रविता भविता वनमाली मे ॥ २ ॥
ननु कस्य पुरो वाचाभरेण याचामि दैन्यचिन्ताकरेण ।
संसारघोरसंतापलेशलविता भविता वनमाली मे ॥ ३ ॥
धनगर्वमत्तधनिकाऽऽलयेषु लिप्साभरेण घनपङ्किलोऽसि ।
कारुण्यपूरपीयूषभरात्पविता भविता वनमाली मे ॥ ४ ॥
यदि मञ्जुनाथसूक्तिर्न मता कविताप्रबन्धमाधुर्यविदाम् ।
कीर्तिप्रसारसौभाग्यसारसविता भविता वनमाली मे ॥ ५ ॥

१ "वतला दिया कमलीवालेनै" इतिवत् ।

एवं मां भयभीतमालोक्य स (दयालुत्वेन प्रसिद्धः) वनमाली, मे अविता (रक्षकः) भविता भविष्यति। अन्धकारयुक्ते भववीथेः मार्गे वनमाली मे सविता (सूर्यः) भविष्यति, भवमार्गे श्रीकृष्ण एव मे मार्गदर्शको भविष्यतीत्याशयः ॥ १ ॥ तस्य (मे कृते) कारुण्यसुधायाः स्रविता (स्रावकः) ॥ २ ॥ दैन्यचिन्ताकारकेण वाणीभरेण कस्य जनस्य पुरो याचासि? लविता (छेदकः) ॥ ३ ॥ घनं यथा तथा पङ्किलोऽसि; अतिकलुषोसीत्याशयः। पविता (शोधकः) ॥ ४ ॥ तर्हि वनमाली मे कीर्तिप्रसाररूपस्य सौभाग्यसारस्य सविता (उत्पादकः) भविता ॥ ५ ॥





# स्वदेशगीतयः ।

[ ५२ ]

अहो श्रीभारताऽभिख्योऽतिमुख्यो दिव्यदेशोऽयम् ।
अपि ध्यायेत्सुरेशो यं स भूमेः संनिवेशोऽयम् ॥ १ ॥
जगज्जीवातवे जाताऽनुयाता जाह्नवी यस्मिन् ।
प्रसर्पत्पुण्यपीयूषप्रवेशो भूप्रदेशोऽयम् ॥ २ ॥
त्रिलोकाऽधीश्वरो यस्मिन्हरो वाराणसीवासी ।
प्रहासी स्वर्गसौख्यानाम्, विभासी भूनिवेशोऽयम् ॥३॥
हरिर्यस्मिन् बहून्वारान् समादध्रेऽवतारांस्तान् ।
ध्रुवं मन्ये महिम्ना नाकलोकस्यापदेशोऽयम् ॥ ४ ॥
अमुष्मिन्वर्द्धिताऽऽनन्दो मुकुन्दो मोदमातेने ।
तदीयाऽलङ्घ्यलीलाभिर्विलीनाऽलीकलेशोयम् ॥ ५ ॥
ध्रियन्तेऽस्मिन्निधिप्रख्याः सुविख्याता अमी वेदाः ।
भृशं भूमण्डले ख्यातोऽवदातो यन्निदेशोऽयम् ॥ ६ ॥
अमुष्मिन्नेव सर्वादौ दिदीपे ज्ञानदीपोऽयम् ।
सदा ह्यध्यात्मविद्यायां बुधानां श्मश्रुकेशोऽयम् ॥ ७ ॥

हिमाऽद्रिः प्रोन्नते मौलौ चकासच्चामरं धत्ते ।
उदन्वद्धौतपादाऽग्रो नरेशानां नरेशोऽयम् ॥ ८ ॥
विराजत्कुङ्कुमक्षेत्रो विजेत्रोऽशेषदेशानाम् ।
स वै काश्मीरदेशोऽस्मिन्समिन्धे स्वर्गशेषोऽयम् ॥ ९ ॥
कलाविद्यागृहं यस्मिन् जयाऽऽद्यं तत्पुरं रम्यम् ।
स धीमान्मानसिंहाऽऽख्योऽधितिष्ठत्यम्बरेशोयम् ॥१०॥
अमुष्मिन्नुष्णशीताद्याः प्रतीताः स्युर्यथाकालम् ।
अहो क्रीडास्थलं देव्याः प्रकृत्याः पुण्यवेषोऽयम् ॥११॥
रसालाऽक्षोटनारङ्गाऽम्बुजद्राक्षेक्षुजम्बीरम् ।
फलं यस्मिन्नलं सिध्येत्स कश्चिद्भूविशेषोऽयम् ॥ १२ ॥
भृतो नानाविधैर्धान्यैः किलाऽन्यैर्यानि नीयन्ते ।
अहो सर्वाऽनुजीव्याऽनन्तसंपत्संप्रवेशोयम् ॥ १३ ॥
खनिभ्यो हीरकं सूते प्रभूतेलासनाथोयम् ।
ध्रुवं नानाऽऽकराऽधीशो धनेशानां धनेशोयम् ॥ १४ ॥
हिमाऽद्रिर्मस्तकम्, बाहू इमौ पूर्वाऽपरौ देशौ ।
हृदा ध्येयाऽङ्गसंस्थानं दधानोऽसत्परेशोयम् ॥ १५ ॥
हिमाऽद्रौ मस्तके गङ्गा, भुजङ्गा भूरि जृम्भन्ते ।
सदा धर्माऽनुयातोऽङ्केऽवदातो व्योमकेशोऽयम् ॥१६॥
कियद्गीतानि गायामो न तृप्यामो गुणैः किन्तु ।
करेणाऽऽपाद्यतेदानीं स्वदेशो हा विदेशोयम् ॥ १७ ॥
सखे मे मञ्जुनाथाऽलम् मुधा मा यापयेः कालम् ।
अहो ते संस्कृतोपेतो न रोचेतोपदेशोयम् ॥ १८ ॥

यं ( भूसंनिवेशम् ) इन्द्रोपि ध्यायेत्स भूमेः संनिवेशः अयमस्ति ॥ १ ॥ जगतां जीवनौषधाय जाता, जाह्नवी यस्मिन्देशेऽनुयाता, अत एव प्रसर्पतः पुण्यरूपपीयूषस्य प्रवेशो यस्मिन्नीदृशोयं भूप्रदेशः ॥ २ ॥ तान् ( प्रसिद्धान् ) अवतारान् दध्रे । महिम्ना स्वर्गलोकस्याऽपि अपदेशः विडम्बकः ॥ ४ ॥ निधिसदृशाः । भूमण्डले येषां ( वेदानाम् ) अवदातः पवित्रो निदेशः ( आज्ञा ) ख्यातः ॥ ६ ॥ बुधानां श्मश्रुकेशः ( कीर्तिरक्षणे श्मश्रुसदृशः 'मूछों का बाल' ) ॥ ७ ॥ हिमाद्रिरस्य मौलौ देदीप्यमानं चामरं धारयति । उदन्वता ( समुद्रेण ) धौतं पादाग्रं यस्य, समुद्रपर्यन्तविस्तृत इत्यर्थः । अत एव चामरादिभिश्चिह्नैरयं राज्ञामपि राजा ॥ ८ ॥ विराजन्ति कुङ्कुमस्य ( केसरस्य ) क्षेत्राणि यस्मिन्, अत एव सर्वदेशानां जेता, स्वर्गशेषः ( स्वर्गसदृशः ) काश्मीरदेशः अस्मिन् समिन्धे प्रकाशते ॥ ९ ॥ कलानां विद्यानां च गृहम्, जयाढ्यं पुरं जयपुरम् । यज्जयपुरम् आम्बेरराज्यस्याधीश्वर. श्रीमान्मानसिंहमहाराजोऽधितिष्ठति ॥ १० ॥ रसालाक्षोटेत्यादि समाहारद्वन्द्वः । रसालादिकं फलं यस्याम् पर्याप्तं यथा स्यात्तथा सिध्येत् ( उत्पद्येत ), सा विशिष्टा भूः ॥ १२ ॥ यानि धान्यानि अन्यदेशीयैर्बहिर्नीयन्ते । अत एव सर्वैरनुजीव्यानाम् अनन्तानां संपदां संप्रवेशो यस्मिन्नीदृशोऽयम् ॥ १३ ॥ प्रभूता या इला ( पृथ्वी ) तया सनाथः, विस्तृत इत्यर्थः । नाना आकराणाम् ( स्वर्णहीरकादिखनीनाम् ) स्वामी ॥ १४ ॥ अस्य भारतस्य हिमालयो मस्तकम्, पूर्वपश्चिमप्रदेशौ द्वावपि भुजौ, एवं हृदयेन ध्येयम् अङ्गसंस्थानम् ( अवयवसंनिवेशः ) यस्येदृशः अस्माकमयं परमेश्वरः । अयमुपास्यबुद्ध्या हृदये ध्येय इत्यर्थः ॥ १५ ॥ अयं भारतदेशो व्योमकेशः ( शिवः ) अस्ति, तदेवाह—हिमाद्रिरूपे मस्तके गङ्गा, भुजङ्गाः ( मर्मदंशका वहिर्देशेभ्य आगताः ) जनाः प्रस्फुरन्ति, अयं धर्मेण युक्तः, अङ्गे पवित्रोस्तीति शिवरूपकम् । शिवपक्षे तु—धर्मेण ( वृषेण ) अनुयातः, अङ्गे अवदातः सितः, अन्यत्स्पष्टम् ॥ १६ ॥ स्वकरेण अयं स्वदेशोपि विदेश. आपाद्यत ( अक्रियत ) । वयं तथा परस्परं विशृङ्खलाः स्मो येन स्वदेशोपि विदेशवत्

पारतन्त्र्यदुःखानुभावको जात इत्याशयः ॥ १७ ॥ संस्कृतभाषानिर्मितः भय ते उपदेशः न रोचेत ॥ १८ ॥

[ ५३ ]

कश्चिद्द्विपश्चिदग्रतो नावं न नीतवानहो ।
आलोचनेन केवलं कालो व्यतीतवानहो ॥ १ ॥
सेयं विशृङ्खलायिता जातेरिहैकता स्थिता ।
अस्मद्विचारशूरतां लोकः प्रतीतवानहो ॥ २ ॥
वाणी विवेकवाहिनी, चेष्टा तु स्वार्थसाधिनी ।
को वा पराऽर्थपूरिणीं विद्यामधीतवानहो? ॥ ३ ॥
हंहो महामहोदयाः! देशोदयाभिवर्धने ।
को वा न नीतिकोविदो वीर्यं प्रणीतवानहो? ॥ ४ ॥
स्वार्थप्रमोदसाधनं हा धिङ् मदीयजीवनम् ।
जीवत्यसौ, पराऽवने यो वा प्रभीतवानहो ॥ ५ ॥
लीना विलासवैभवे दीनाऽऽपदं न जानते ।
शीतव्यथां किमीक्षते नित्यं निवीतवानहो ॥ ६ ॥
यैर्वा प्रमादमोहयोर्मद्यं निपीयतेऽनिशम् ।
चित्रं धृतोऽद्य तैर्नले नीरं निपीतवानहो ॥ ७ ॥
भूयान्न मञ्जुनाथ ते कर्णौ निपीड्य पूजनम् ।
सभ्यप्रशंसया भृतां गीतिं न गीतवानहो ॥ ८ ॥
को वाऽद्य मञ्जुनाथ ते जिह्वां जडीकरिष्यते ।
एषोऽर्धचन्द्रदानतो नूनं न भीतवानहो ॥ ९ ॥

कोपि विद्वान् (नेता) नावम् (देशोन्नतिरूपां नौकाम्) अग्रतः न नीतवान्। केवलम् आलोचनेन (एवं भवति एवं भवतीत्यादिभिः समालोचनैः) कालो गतवान् ॥ १ ॥ जातेः एकता विशृङ्खला इव स्थिता, परस्परमैक्यं न जातमित्यर्थः। लोकः अस्माकं विचारमात्रशूरतां ज्ञातवान् ॥ २ ॥ अस्माकं वाणी विवेकप्रवाहवाहिनी, परं चेष्टा स्वार्थमात्रतत्परा। अहो अत्र को वा जनः परार्थसाधिनीं विद्यामधीतवान्, न कोपि परार्थं साधयितुं यतत इत्याशयः ॥ ३ ॥ देशाऽभ्युदयस्य वर्द्धने को वा नीतिपण्डितः वीर्यं न कृतवान्? अपि तु सर्वे एव नीतिज्ञा देशोन्नत्यर्थं पराक्रमं कुर्वन्ति स्म ॥ ४ ॥ स्वार्थे यः प्रमोदस्तस्य साधकं मदीयं जीवितं धिक्। असौ (स एव) जनो जीवति यः परस्य रक्षणे प्रमीतवान् मृतवान् ॥ ५ ॥ नित्यं निवीतयुक्तः (वस्त्रावरणयुक्त) किं शीतव्यथामीक्षते? अपि तु नेत्यर्थः ॥ ६ ॥ ये मद्यं पिबन्ति तेपि नले (जलयन्त्रे) जलं पीतवन्तं दोषीति कृत्वा गृह्णन्तीति चित्रम्। स्वयं महादोषिभिरन्ये न निन्द्या इत्याशयः ॥७॥ त्वं सभ्यानां प्रशंसया पूर्णां गीतिं न गीतवान्, अत एव कर्णमर्दनपूर्वकं तव पूजनम् (ताडनम्!) न भूयादित्येव आशास्यम् ॥ ८ ॥ लोकाः अर्धचन्द्रं प्रदाय मां बहिः करिष्यन्तीति ततोपि त्वं न भीतवान्। अत एव कस्ते जिह्वां रुन्ध्यादित्याशयः ॥ ९ ॥

[ ५४ ]

हे गणेयगुणावधे करुणानिधे ह्यवधीयताम् ।
दृष्टिरुज्ज्वलभा–रते तव भारते विनिधीयताम् ॥ १ ॥
एष भूवलये विशेषविधोऽस्ति देशवरश्चिरात् ।
सर्वसभ्यसमाज एष विभाति यद्रमणीयताम् ॥ २ ॥
किं नु कोपि निदर्शयेद्धत देशमीदृशमुन्नतम् ।
यस्य वाङ्मयमावहेन्निगमागमैस्तुलनीयताम् ॥ ३ ॥

यत्र कुङ्कुमकेसराः कलयन्ति कामपि सुच्छविम् ।
देश ईदृश ईक्ष्यते किमिहाऽपरोपि ? विचीयताम् ॥४॥
रत्नराशिरलुण्ठि लुण्ठनतत्परैर्बहुधा परैः ।
किन्तु साम्प्रतमप्यसौ वहते परं महनीयताम् ॥ ५ ॥
कूटनीतिनियन्त्रणैः परतन्त्रता नाऽभूद्यदा ।
देश एष दधौ तदा तव देव ! दुर्दमनीयताम् ॥ ६ ॥
अस्य खड्गतले बलेन परैः शिरो नमितं पुरा ।
काममद्य कठोरनीतिपरैः परैर्बत जीयताम् ॥ ७ ॥
किन्तु सभ्यवराः समेत्य भवद्भिरेव विचार्यताम् ।
एकतामवलम्ब्य कार्यपथे यथावदुदीयताम् ॥ ८ ॥
वक्तृतां परिहाय सम्प्रति कर्तृतां कलयेम चेत् ।
उन्नतिः स्वयमावृणीत मनागिदं परिचीयताम् ॥ ९ ॥
निर्मले यमुनातटे, निकटे कदम्बमहीरुहाम् ।
अत्र वै विहरन् हरिर्विदधे महाकमनीयताम् ॥ १० ॥
किन्तु सैव विहारभूरपहारभूर्जनिताऽधुना ।
हेलयाऽपि दयानिधान ! दयादृगत्र विधीयताम् ॥११॥
तावकीं करुणामुपेत्य न वेत्त्यसौ हृदि वेदनाम् ।
धार्मिकेषु दयावता भवता द्रुतं समुदीयताम् ॥ १२ ॥
गीयते निगमागमैर्गुणगौरवं तव सर्वदा ।
नाथ ! सम्प्रति मञ्जुनाथगिरा कियद्बत गीयताम् ! १३

गणनीयानां गुणानाम् अवधिसदृश ! 'गणनीयं तु गणेय'मित्यमरः ॥
'उज्ज्वलायां भायां ( कान्तौ ) रते, सत्कार्यकरणेन कीर्तिसंपादके इत्याशयः ।

तव भारते भवदीये भारते दृष्टिर्निधीयताम् ॥ १ ॥ विभाति जानाति ॥ २ ॥ कुङ्कुमस्य काश्मीरजस्य केसराः किञ्जल्काः ॥ ४ ॥ हे देव! तदा एष तव देशः दुर्दमनीयताम् अजेयतां दधौ ॥ ६ ॥ वक्तृतां वचनव्यापारं प्रति कर्तृतां विहाय, कार्यं प्रति कर्तृभावं चेत्कलयामस्तदा उन्नतिः स्वयं वरणं कुर्यादित्याशयः ॥ ९ ॥ अपहारस्य विलुण्ठनस्य भूमिः ॥ ११ ॥ असौ (देशः) तावकीं दयामुपेत्य हृदये वेदनां न वेत्ति (अनुभवति) ॥ १२ ॥

[ ५५ ]

## वेल्लनाटीयसभायां पठिता जातीयगीतिः

माननीयमहोदयाः! शृणुयात मे विनयं न किम्?
संप्रदास्यथ दूनदीननिवेदने समयं न किम्? ॥ १ ॥
श्रीमतामियमेव जातिरुपागता गुरुतां चिरात् ।
यद्बलेन हि धार्मिकी जनता गताऽभ्युदयं न किम्? २
सैव जातिरियं महामहिता सतामुदये हिता ।
ज्ञानगौरवतो जगाम जनेषु या विजयं न किम् ॥ ३ ॥
तामुदग्रतमालतालवनीविनीलतमां भुवम् ।
मद्रदेशभवामपास्य नवा अभूम वयं न किम् ॥ ४ ॥
दक्षिणां दिशमुत्सृजन् दिशमुत्तरामभिमण्डयन् ।
भावयन्तु भवत्समाज उपागतोऽपचयं न किम् ॥ ५ ॥
ज्ञानगौरवमण्डितं बत धर्मगौरवमेव नः ।
देशमुत्तरमीयुषां प्रजुहाव लोकचयं न किम् ॥ ६ ॥
विद्यया सह लोकमानमवेक्ष्य पूर्वजनस्य नः ।
संगतो बहुलः सजातिजनो दिदेश जयं न किम् ॥ ७ ॥

हन्त किन्तु परस्परस्य विवादतोऽद्य निरन्तरम् ।
यात्यसौ जनता नितान्तमहो महाऽपचयं न किम् ॥८॥
वीक्ष्यतां नयनं प्रसार्य समाज एष कियानहो ? ।
एवमेव दशां वहन् बत धास्यते विलयं न किम् ? ॥९॥
अस्तु, सर्वमपैतु, सारमुदेतु नः सारस्वतम् ।
विद्यया तिमिरे प्रयाति वहामहे सुनयं न किम् ॥१०॥
मञ्जुनाथनिवेदनेन भवेदनेन न किं फलम् ? ।
दुन्दुभौ ध्वनितेऽपि याति रवः श्रुतेर्विषयं न किम् ? ११

यद्बलेन ( यस्या जात्याः बलेन ) धार्मिकजनता किम् अभ्युदयं न गता, अपि त्वभ्युदयं गतेत्यर्थः ॥ २ ॥ मद्रदेशभवाम् भुवम् ( मद्राससम्बन्धिनीं भूमिम् ) अपास्य वयं किं नवीना नाऽभूम, अपि तु नवीना जाताः ॥ ४ ॥ उत्तरं देशम् ईयुषाम् ( प्राप्तवताम् ) नः ज्ञानगौरवयुक्तं धर्मगौरवमेव लोकसमूहम् प्रजुहाव ( दक्षिणदेशात् आह्वयति स्म ) ॥ ६ ॥ नः पूर्वजगणस्य विद्यया सहितं लोकमानमवेक्ष्य, दक्षिणदेशात्संगतो बहुतरः सजातिगणः अस्माकं जयं किं न दिदेश ( कृतवान् ) ? बहुलसजातिसमूहबलादेवाऽस्माकं पूर्वं जात्यां गौरवमभूदित्याशयः ॥ ७ ॥ सर्वं गच्छतु, अस्माकं सारस्वतम् (विद्यासम्बन्धि ) सारमुदेतु, अस्माकं विद्यावृद्धिरस्तु इत्याशयः । विद्यया अन्धकारे नष्टे सुनयम् ( उदारां नीतिम् ) किं न वहामः ? ॥१०॥ दुन्दुभौ वादितेपि किं शब्दः श्रुतिविषयं न याति ? कर्णसमीपे भेरीवादनेन तु अवश्यं शब्दः श्रूयेतेत्याशयः ॥ ११ ॥

[ ५६ ]

स्वागतगीतयः

स्वागतं भवतामुदारगुणावदातसचेतसाम् ।
स्वागतं सुरभारतीसेवासमाहितचेतसाम् ॥ १ ॥

दर्शनेन भवादृशामिदमद्य नन्दति मानसम् ।
स्वागतं पुरतः स्वयं बत संदधाति सुमेधसाम् ॥ २ ॥
भास्वतः किरणैरितः प्रविषह्य नीतेयं निशा ।
संप्रकाशमवाप्य सम्प्रति लीयते तिमिरं दिशाम् ॥ ३ ॥
लोकलोचनरोधकं प्रतियातु वैकृतमासुरम् ।
संततं समुदेतु चेतसि भाव एष दिवौकसाम् ॥ ४ ॥
पश्यत क्षणमग्रतोपि, किमङ्ग नः पुरतो धृतम् ।
क्षेत्रमत्र हि कर्मणामिदमस्ति नाम निरेनसाम् ॥ ५ ॥
जातयः सकला अपीह समादृताऽतुलसाहसाः ।
अग्रतः प्रसरन्ति वृत्तिमुदञ्च्य संनतवेतसाम् ॥ ६ ॥
तर्हि किं मुनिवंशजैर्नु भवद्भिरेव उदास्यताम् ? ।
किं चिरेण, विबुध्यताम्, पदमेत संयतरेतसाम् ॥ ७ ॥
हे चराचरनायक! प्रणिदर्शयस्व दिशं कृतौ ।
मञ्जुनाथ निवेदनं शृणु सर्वमान्यसचेतसाम् ॥ ८ ॥

उदारगुणैः, अवदातानाम् (पवित्राणाम्) सचेतसाम् ॥ १ ॥ अत एव सुमेधसाम् (भवताम्) स्वयं स्वागतं विदधाति ॥ २ ॥ आसुरं वैकृतम् आसुरो विकारः (पारस्परिकहिंसादिकम्)। दिवौकसां भावः (दैवभावः प्रेम-परोपकारादिः) ॥ ४ ॥ निरेनसां शुद्धानाम् ॥ ५ ॥ संनतो वेतसः (वेत्रवृक्षः) यस्यामेवंविधां वृत्तिम्, नम्रतामितियावत् ॥ ६ ॥ संयतरेतसाम् (ऊर्ध्वरेतसां वशिनामिति यावत्) पदम् एत (प्राप्नुत) ॥ ७ ॥ कृतौ दिशं दर्शयस्व, कार्यस्य दिग्दर्शनं नः कुरु ॥ ८ ॥

[ ५७ ]

स्वागतं सर्वजगन्मान्यमहाभागानाम् ।
स्वागतं सूक्तिसुधाधन्यमहाभागानाम् ॥ १ ॥
अभिनन्दामि दिनम्, तं क्षणं प्रशंसामि ।
दर्शनं यत्र समासादि भूरिभागानाम् ॥ २ ॥
हर्षसंदोहमयी मोहमयी जातेयम् ।
संगमोऽभूद्यदितो मूर्तिमतां यागानाम् ॥ ३ ॥
सर्वतः संकुचितां जातिशक्तिमूर्जयताम् ।
भेषजं प्रेम-समाजैकताऽनुरागाणाम् ॥ ४ ॥
एत विद्यालयगां पूरयाम मीमांसाम् ।
एष एवाऽवसरः सर्वविधत्यागानाम् ॥ ५ ॥
परितो वातितरामेष एकतावायुः ।
अर्द्धचन्द्रोऽस्तु मिथोगर्वधीविरागाणाम् ॥ ६ ॥
भवतां संमुखतः को विरोधिवर्गोऽयम् ?
द्वीपिनो भीषयते मण्डलं न छागानाम् ॥ ७ ॥
जातिहिन्दोलमिहाऽऽलोचयन्तु देशोत्थम् ।
मूर्च्छनाः सन्तु परं पूरिया-बिहागानाम् ॥ ८ ॥
मोद एवोदयतां मञ्जुनाथगीतेन ।
रोचते सामयिकं सभ्यमहाभागानाम् ॥ ९ ॥

भूरिभागानाम् ( भवताम् ) यस्मिन्दिने क्षणे वा दर्शनं प्रापि ॥ २ ॥
मूर्तिधारिणां यज्ञानामिव ( भवताम् ) इतो ( मोहमय्याम् ) यत् संगमो-

ऽभूत् ॥ ३ ॥ प्रेम-समाजैक्य-स्नेहानां भेषजम् ( औषधम् ) जात्याः शक्तिम् ऊर्जयताम् ( सबलां करोतु ) ॥ ४ ॥ परस्परं गर्वबुद्धि-नि स्नेहतानाम् ॥ ६ ॥ छागानां मण्डलम् ( कर्तृ ), द्वीपिनः ( सिंहान् ) न भीषयति । विरोधिनः सिंहानां भवतां संमुखे छागा इत्यर्थः ॥ ७ ॥ देशे उत्पन्नं जातेः आन्दोलनं पूर्वमालोचयन्तु । परम् ( अग्रे ) पूरिया-बिहागरागाणां मूर्च्छनाः ( 'तानें' ) भवन्तु । हिन्दोल-देश-पूरिया-बिहागा रागा अपि सूचिता भवन्तीति मुद्रा ॥ ८ ॥

[ ५८ ]

अये गुणोदार-दर्शनीयाः सुमेधसः ! स्वागतं तदेतत् ।
सदा सदाचारचारवो वः सचेतसः ! स्वागतं तदेतत् ॥ १ ॥
क्षणं पुरः पश्यताऽवधानादिहाऽस्ति का नाम संस्थितिर्नः ?
परिष्करोतु प्रसह्य चैतां महौजसः स्वागतं तदेतत् ॥ २ ॥
रमापतेः पादपद्मदानात्सुमङ्गलं गोकुलं बतेदम् ।
इतः समाजस्य भाति भूयो महीयसः स्वागतं तदेतत् ॥ ३ ॥
सतां समाजे सभाजितानां बभूव कीर्तिः पुरातनानाम् ।
करोतु तामद्य निर्निरोधां सुवर्चसः ! स्वागतं तदेतत् ॥ ४ ॥
अनाकुलं गोकुलं बतेदम्, गरिष्ठगोस्वामिमण्डलीयम् ।
प्रसेदुषो वाञ्छयैव मन्येऽद्य वेधसः स्वागतं तदेतत् ॥ ५ ॥
अनेकभेदाऽतिपङ्किलाऽसौ विशृङ्खला जातिशक्तिरास्ते ।
करोतु तां संहतां समाजे पुरोधसः स्वागतं तदेतत् ॥ ६ ॥
अये त्रिलोकीललाममूर्तेऽभिलाषपूर्तेः प्रदर्शयाऽऽशाम् ।
शुभं भवेन्मञ्जुनाथ सिद्धेरनेहसः स्वागतं तदेतत् ॥ ७ ॥

...रधाराः दर्शनीयाश्च भोः सुमेधसः! तदेतत् वः स्वागतम् (अस्तु)। ...धारवः सहृदयाः वः स्वागतम् ॥ १ ॥ महौजसः (सभापतेः) ...तत्स्वागतम् एतां (संस्थितिम्) परिष्करोतु ॥ २ ॥ इतः (अस्मिन्पक्षे) महीयसः समाजस्य स्वागतम् ॥ ३ ॥ सुवर्चसः! एतत्स्वागतं तां कीर्तिं निर्निरोधाम् (अप्रतिरुद्धाम्) करोतु ॥ ४ ॥ प्रसेदुषो वेधसः (विधातुः) वाञ्छयैव अद्य एतत्स्वागतं जातमिति मन्ये, यतो गोकुलस्य गोस्वामिनां च समागम इत्याशयः ॥ ५ ॥ अनेकभेदैः अतिपङ्किला (अप्रशस्ता) जातिश-...रस्ति। तां शक्तिम् पुरोधसः (पुरो धातुं योग्यस्य सभापतेः) स्वागतं ...हताम् (एकत्रस्थिताम्) करोतु ॥ ६ ॥ हे त्रिभुवनसुन्दर! मनोरथ-सिद्धेः आशां दर्शय। हे मञ्जुनाथ (हरे!) सिद्धेः अनेहसः (कालस्य)। मनोरथसिद्धिकालस्य इदं स्वागतं शुभं भवतु। इदं सभायाः स्वागतं न, किन्तु तदेतत्, मन्ये सिद्धिसमयस्य स्वागतमस्ति। तथा चेदं शुभं भूयादित्याशयः ॥ ७ ॥






**—॥ मङ्गलसोरठाच्छन्दः ॥—**

कीलितकुण्डलिमालि, मुकुटपालिपिहितं सुरैः ।
नवनवनिर्मितिशालि, प्रणतपालि पदमस्तु मे ॥ १ ॥

कीलिता कुण्डलिमाला अस्ति यस्मिन्, देवैः मुकुटकोट्या आच्छादितम्, प्रणताना पालकम् किञ्चित्पदं मे ( मह्यम् ) नवनवनिर्मितिशालि भवतु ॥१॥

**—॥ कुण्डलिया ॥—**

मानय महिमानं मनसि नूतनविज्ञानस्य ।
चित्रयते चित्रं चिरं कार्यं विज्ञानस्य ॥
कार्यं विज्ञानस्य शस्यतां केन न सम्प्रति ।
व्यवहारेऽत्युपयोगि यद्धि जायेत जनं प्रति ॥
मञ्जुनाथ गुणपक्षपातपरवश ! न विमानय ।
नवविज्ञानविलासि वचो मे श्रुतिपथमानय ॥ २ ॥

दो०—पश्य पुरः परिचयकृते वत ते नूतनवस्तु ।
नवविज्ञानविनिर्मितं ध्रियते तव रतिरस्तु ॥ ३ ॥

अस्य ( विज्ञानस्य ) चित्रं कार्यं विज्ञान् पुरुषान् चिरं चित्रयते विस्मापयते । यद्धि ( विज्ञानकार्यम् ) जनं प्रति प्रतिदिनव्यवहारे अत्युपयोगि

जायेत। न विमानय न तिरस्कुरु॥ २॥ तव परिचयार्थं नवविज्ञानेन विनिर्मितं नवीनं वस्तु तव पुरः ध्रियते। तव रतिः (प्रसन्नता) अस्तु॥३॥

व्योम्नि विहरन्ति वायुयानैर्वीरलोका अमी
वारि बृहन्नौकावृन्दमतुलं निरीक्ष्यताम्
अस्नेहा ज्वलन्ति विरमन्ति दिव्यदीपाः क्षणे
पश्य वियदङ्गणेऽपि भौमादिः परीक्ष्यताम्।
धावन्तेऽद्य नानाविधयानानीह वाहान्विना
किं बहुना भूमावेव विद्युदपि वीक्ष्यताम्
विहितविवेकिजनविस्मये विनोदमये
नव्यवस्तु वैज्ञानिकसमये समीक्ष्यताम्॥ ४॥

वारि जले। बृहन्नौका-('जहाज़'-) वृन्दम्। अस्नेहाः (तैलरहिताः) उत्तमदीपाः क्षणमात्रे एव ज्वलन्ति विरमन्ति (शाम्यन्ति) च। आकाशेपि मङ्गलग्रहादिः पदार्थः परीक्ष्यताम्॥ ४॥

## रेलशकटिः

अञ्जनबलेन दूरदेशानपि दर्शयन्ती
मार्गं लङ्घयन्ती योगमहिममहीयसी
नानाजातिलोकानेकपङ्क्तौ समावेशयन्ती
शंसन्ती सुधारकचरित्रमलघीयसी।
रात्रिन्दिवं यान्त्या अपि शीघ्रगतेर्लेखो नास्ति
चित्रं लोहलेखोपरि गमनाद् गरीयसी
प्रायः प्रकटीकृतजवाऽद्रितटीश्रेण्ष्वपि
जाघटीति जैत्रा धूमशकटी पटीयसी॥ ५॥

योगमहिम्ना महीयसी काचिद्योगिनी यथा नेत्राञ्जनस्य बलेन दूरदेशानपि दर्शयन्ती दूरमार्गं च लङ्घयन्ती भवति, तथा इयं शकटिः एञ्जिनस्य (Engin) बलेन दूरदेशानपि दर्शयति मार्गं च लङ्घयति। स्पृश्याऽस्पृश्यादिनानालोकानेकस्या पङ्क्तौ समावेशयन्ती इयं सुधारकलोकानाम् (रिफार्मर) चरित्रं शंसन्ती, अलघीयसी महीयसी (भाति)। सुधारका अपि स्पृश्याऽस्पृश्यादिनानाजातिलोकान् एकस्यां भोजनपङ्क्तौ समावेशयन्ति। अहर्निशं यान्त्या अपि शीघ्रगतेः लेख' (गणना, 'लेखा हिसाब' इति भाषा) नास्ति। लोहनिर्मितलेखानाम् (Lines) उपरि गमनाद् गरीयसी। अद्रितटी (पर्वतोपत्यका), श्वभ्रम् (गर्तः), एतेष्वपि प्रकटीकृतवेगा अत एव जैत्रा धूमशकटी पटीयसी जाघटीति (अतिशयेन योग्या भाति) ॥ ५ ॥

छप्पय

प्रकटितपुरुतरपुरुषरूपमेकत्र विराजति।<br>
पुनरितरत्र व्यक्तरमणिरूपं विभ्राजति।<br>
कुहचिदश्वधेन्वादिविविधपशुवृन्दसनाथम्।<br>
विविधवस्तुयुतमथ क्वचित्क्रीडन्नरनाथम्।<br>
वरविततविश्वरूपच्छटं वपुर्यस्य कुतुकं स्तुते।<br>
पटुमानवेषु महिमानमिह वाष्पयानमिदमश्नुते ॥ ६ ॥

यस्य वाष्पयानस्य वपुः, वितता सर्वरूपाणाम् (नानाविधजनस्वरूपाणाम्) छटा येन, अत एव लोकानां कौतुकं प्रस्तौति। अत एव चतुरपुरुषेषु इदं यानं महिमानमश्नुते। पक्षान्तरे च—वितता भगवतो विश्वरूपस्य (विराट्स्वरूपस्य) छटा येन तादृशम्। तदेवाह—प्रकटितानि बहुतराणि पुरुषरूपाणि येन तादृशम् कुत्रचिद्भाति। अपरत्र व्यक्तं (प्रकटितम्) रमणीनां रूपम् येन तादृक्। विराड्रूप तु व्यक्तं स्त्रीरूपं येन। वाष्पयानम्—अश्वधेन्वादिपशुवृन्दशकट्या सनाथं भवत्येव। विश्वरूपमपि पशुयोनि-

सहितम्। नानाविधवस्तुजातेन सहितम् (उभयत्र समानम्)। क्रीडन्तो नरनाथाः (राजानो) यत्र। राज्ञां विशिष्टशकट्या (सैलून) सहितमित्यर्थः ॥ ६ ॥

## वायुयानम्

उत्पतत्पतङ्ग इव पारिप्लवपक्षद्वयो
याति निर्भयोऽयमतिवेगं गगनालये
मीनाऽऽकृतिमध्यदेशमारोहन्ति साहसिनो
भ्रमणविलासिनो नियुद्धे निपुणाश्च ये।
मञ्जुनाथ मन्त्रमिव लब्ध्वा बाष्पयन्त्रबलं
घुंकरोति घोरं व्योम्नि गमनजवोदये
वर्तमानवैज्ञानिकलोकस्याऽभिमानभूमि-
माकाशे विमानमयमानमवलोकये ॥ ७ ॥

उड्डीयमानः पक्षीव चञ्चलपक्षतिद्वयो यः (विमानः) व्योमस्थले निर्भयं याति। मत्स्याकारम् मध्यवर्ति स्थितिस्थानं साहसयुक्ता भ्रमणशीला योद्धारश्चारोहन्ति। बाष्पयन्त्रस्य बलं मन्त्रमिव लब्ध्वा यः (विमानः) गमनवेगस्य वृद्धौ आकाशे घोरं घुंकारं करोति। वर्तमानवैज्ञानिकजनानामभिमानकारणम्, आकाशे अयमानम् (गच्छन्तम्) विमानम् अवलोकयामि। आकाशे भूमिमवलोकये इति श्रवणेपि चित्रमेव। उड्डीयमानविमानस्य स्वभाववर्णनम् ॥ ७ ॥

## अब्धियानम् (जहाज)

यस्य पुरुपृष्ठमधिरुह्य शैलशृङ्गायितान्
सागरतरङ्गानिमानभितोऽभिवर्णये
मध्यतले भोजन–शयन–सभा–शाला इमा
विशदविशालाऽऽक्रीडभूमीरपि निर्णये।

नीचैस्तले नाविकनिवासा बाष्पयन्त्रगृहा
वारिप्रवहाणि बहिर्देशेऽस्याऽवकर्णये
संमुखमुपेतं सर्वसामग्रीसमेतं सखे
पारावारपाति–पोतमेतं बहु वर्णये ॥ ८ ॥

यस्य (पोतस्य) विशालं पृष्ठदेशमधिरुह्य। आक्रीडभूमीः ('टेनिसादि' क्रीडाक्षेत्राणि)। अधस्तने तले नौचालकानां गृहाः, बाष्पयन्त्रगृहाश्च भवन्ति। बहिर्देशे (पोतस्य बहिस्तो दृश्यायां भित्तौ) वारिप्रवहाणि लघु-लघुनौकाः मनुष्याणां तरणसाधनानि रबरचक्राणि च भवन्तीति शृणोमि। समुद्रगामिनम् एतं पोतम् बहु वर्णयामि ॥ ८ ॥

—ट्रामवे—

धावति जवेन तडित्तन्त्रीमवलम्ब्य भृशं
गन्त्री मार्गमध्ये लोहनिर्मितसरण्याऽसौ
यस्याः शतमासते तलद्वयेपि यात्रिजनाः,
प्राप्यतेऽथ सर्वदाऽतिसुलभभरण्याऽसौ ।
मञ्जुनाथ मोहमयीमीक्षितुमभीप्ससि चे-
दवधर चेतसा समीहितहिरण्यासौ
क्रामसि किमद्य गिरिग्रामनिकटीकृतये
ट्रामशकटी ते पश्य पुरतः शरण्याऽसौ ॥ ९ ॥

या शकटी राजमार्गस्य मध्ये लोहनिर्मितसरण्या (Line) गन्त्री यायिनी। यस्याः तलद्वयेपि शतं यात्रिणः आसते। भरण्यं मूल्यम्। 'भरण्यं भरणं मूल्य' मित्यमरः। असौ (मोहमयी) समीहितहिरण्या (वाञ्छित-द्रव्या, धनाश्रितेत्यर्थः) इति त्वं चेतसा अवधर। गिरिग्रामस्य (गिरगाम इति मोहमयीरथ्या) निकटीकृतये प्राप्तये पद्भ्यां किं क्रामसि, ते पुरत शरणदायिनी ट्रामशकटिरस्त्येव ॥ ९ ॥

—ॐ मोटरम् ॐ—

रबरविशब्दीकृतं चारु चतुश्चक्रं याति,
वक्रं वल्गनेपि निरुद्‌घातमिदं मान्यताम् ।
क्रोशानतिक्रामति तुरङ्गं विना बाष्पबलात्,
'भोंकु भोंकु' कोलाहलाद्धत्ते प्रणिधान्यताम् ।
मञ्जुनाथ मुद्राणां सहस्राणीह गौराङ्गेषु
सोन्मदं प्रदाय मनाग् दर्शय वदान्यतां
नव्ययुगे जीर्णरथकोटरमपास्य ततो
मोटरमुपास्य मरुन्महिमाऽनुमान्यताम् ॥ १० ॥

रबरावरणेन निःशब्दीकृतम् । चतुर्णां चक्राणां समाहारः, पञ्चपात्रादिवन्डीबभावः । वक्रम् आमोडनेऽपि इदं निरुद्धातम् ('हाल'रहितम्) मान्यताम् । प्रणिधानम् (अवधानम्) अर्हति, 'भोंकु' कोलाहलाल्लोकानामवधानमाकर्षतीत्यर्थः । जीर्णानां प्राचीनानामश्वादिरथानां कोटरं त्यक्त्वा । वायोर्महिमा अनुमान्यताम्, इदं वायुसमानवेगमित्यर्थः ॥ १० ॥

—ॐ वायुशकलम् ॐ—

अग्रमवलम्ब्य लोहचक्रद्वयमारूढैर्हि
शक्रद्वयसोऽपि जनो मनुजैर्विगीयते
चक्रं चालयद्भिः पादचालनेन, चित्रमसौ
टनिति रवेण जनो दूरं व्यपनीयते ।
एतावत्सुलभमहो यन्नीलाऽरुणाग्रकरै-
रङ्गरेजनीत्या रङ्गरेजैरपि नीयते
अकलङ्कमेव यस्य सकलं यथार्थं नाम
शीघ्रगमनार्थं वायुशकलं तदीयते ॥ ११ ॥

अग्रम् ('हैण्डिल्')। इन्द्रपरिमितोपि महान् जनो विगीयते तिरस्क्रियते। एतद्वायुशकलमेतावत्सुलभं यत् वस्त्ररञ्जनेन नीलाऽरुणकराग्रैः रङ्गरेजेतिप्रसिद्धैः रञ्जकैरपि अङ्गरेजानां नीतेः (सर्वत्र वैदेशिकं वस्तु प्रसरेदिति) अनुसारं गृह्यते। 'वायोः शकलम् (खण्डः)' इति यस्य नाम निष्कलङ्कं यथार्थमस्ति, तद्वायुशकलम् ईयते प्राप्यते ॥ ११ ॥

## विद्युत्

### सवैया

इयमेव नियच्छति दीपघटाम्, शकटानियमेव वहेन्नृवहान्
इयमेव विपुष्यति यन्त्रगृहान्वहति व्यजनैरियमेव महान्।
अयि मञ्जुलनाथ कथं न गृणासि युरोपनृणां महिमा सुमहान्
अपलायनमादधती यदियं चपला न पलाय जहाति गृहान् १२

इयं विद्युदेव दीपसमूहं ददाति। नृवहान् मनुष्ययात्रायोग्यान् शकटान् ('ट्रामवे' प्रभृतीन्) इयमेव वहेत्। व्यजनैः इयमेव महान् (उत्सवान्) करोति। पलायनं न कुर्वती चपलाऽपि पलाऽर्थमपि अस्माकं गृहान्न त्यजति ॥ १२ ॥

## विद्युत्तन्त्री

निजवैद्युतशक्तिभरान्न चिराद्धत तन्त्रमुदन्तमिदं नयते
अधुना तु विनापि हि तन्त्रमिदं नवयन्त्रमुदन्तमहो वहते।
ध्वनिरेव न वै, नरकण्ठरवोऽपि भवेत्कुतुकाय नृणां महते
नवनैपुणमाङ्ग्लमहीविदुषां गुणपक्षपुषां मुदमावहते ॥ १३ ॥

इदं तन्त्रम् (तार), वैद्युतशक्तिवलात् न चिरात् (अतिशीघ्रम्) उदन्तं नयते (देशान्तरे प्रापयति)। इदानीं तु तन्त्रं विनापि इदं नवीनं यन्त्रम् (वायरलैस टैलिग्राफी), उदन्तं प्रापयति। 'गिट् गिट्' इत्याद्यव्यक्तशब्द एव न, अविकलं नराणां कण्ठस्वरोपि लोकानां महते कौतुकाय भवति।

साक्षान्मनुष्यकण्ठरव एव गच्छतीत्यर्थः ( टेलिफोन )। गुणपक्षपोषिणाम् आङ्ग्लभूमिविदुषां नैपुणं मुदं तनोति ॥ १३ ॥

### ग्रामोफोन

संचालिते यस्मिन्सकृदेव किञ्चित्कुञ्चिकया
विस्मयाय यस्मान्नरवाणी मोदमानयेत्
गायकगणाऽग्रगणनीयसुप्रसिद्धनृणां
यद्धि मञ्जुमन्द्रस्वरलहरींप्रतानयेत् ।
किं वहुना भूयोगुणवर्णनेन मञ्जुनाथ
मन्ये वक्तृकण्ठस्वरो मञ्जुमूर्तिमानयेत्
एतस्मिन्नवीनयुगे विज्ञो गुणवेदी को न
ग्रामोफोनमेतन्मानवोनमिव मानयेत् ? ॥ १४ ॥

यस्मिन् कुञ्चिकया एकवारमेव किञ्चित्संचालिते सति, यस्मात् ( यत्सकाशात् ) विस्मयार्थी नरस्येव वाणी मोदं आनयेत् ( उत्पादयेत् )। गायकगणे अग्रगणनीयानाम् ( श्रेष्ठानाम् ) मञ्जोः मन्द्रस्य च ( मधुरगभीरस्य ) स्वरस्य लहरीं प्रतानयेत् परितो विस्तारयेत्। मन्ये वक्तुः कण्ठस्वरः एव मञ्जुमूर्तिधारी सन् अयेत् बहिर्निःसरेत्। को वा गुणज्ञः एनत् ग्रामोफोनम् मानवात् ईषदूनं न मानयेत् ? अपि तु सर्वं एव जनो मनुष्यादीषदयूनमेव मानयेत् ॥ १४ ॥

### रेडियो

गेहे यन्निधाय धीरगम्भीरया स्पष्टगिरा
गीतीर्वक्तृताश्च नराः शृण्वन्त्यनियन्त्रकम्
वैज्ञानिकयन्त्रमिदं भारतभूभारे किमु
पारेपारावारेऽप्युक्तनिगदनिमन्त्रकम् ।

मञ्जुनाथ विमृश यदेषा दारुमञ्जूषाऽपि
प्राक्पण्डितपिञ्जूषाऽपनोदे भात्यतन्त्रकं
वायुलहरीषु वहन्निनदनियन्त्रकरं
'रेडियो' नवीनयन्त्रमद्भुतममन्त्रकम् ॥ १५ ॥

गृहे यत् (रेडियोयन्त्रम्) निधाय । अनियन्त्रकं निष्प्रतिबन्धम् । भारत-भूभारे (भारतभूमण्डले) एव किम् समुद्रपारेऽप्युक्तस्य निगदस्य शब्दस्य निमन्त्रकम् आनायकम् । एषा काष्ठनिर्मिता मञ्जूषाऽपि प्राचां पण्डितानां कर्णमलस्याऽपनोदे अतन्त्रकम् (अनर्गलम्) भाति । एनां श्रुत्वा प्राचीनवैज्ञानिकानां कर्णकीटाः पतन्तीति लोकोक्तिः । वायुलहरीषु प्रवहतो निनदस्य शब्दस्य नियन्त्रकरं ग्राहकमेतद्यन्त्रम्, अमन्त्रकम् मन्त्रं विनाप्यद्भुतमस्ति ॥ १५ ॥

## —यन्त्राणि—

नानाविधवस्त्राण्यद्य यन्त्रैर्नित्यमूयन्तेऽथ,
यन्त्रैरेव सीव्यन्तेऽथ सूचीमवमुच्य ताम्
यन्त्रैः पत्रजन्म, पुनर्यन्त्रैर्मुद्रणस्य कला
यन्त्रैरेव वृत्तं तत्तत्स्थानेष्ववमुच्यताम् ।
यन्त्रैरन्नपेषणं, जलैषणं च यन्त्रैरेव,
यन्त्रैर्गृहदीपोऽप्यद्य दीप्यते, न शुच्यतां
सर्वकार्यतन्त्रमिह साध्यतेऽद्य यन्त्रशतै-
र्यन्त्रयुगं तस्मादनियन्त्रमिदमुच्यताम् ॥ १६ ॥

ऊयन्ते निर्मीयन्ते 'वेञ् तन्तुसंताने' । तां प्राचीनां सूचीम् 'सुई' अवमुच्य दूरे विहाय । पत्राणाम् (कागज़) उत्पत्तिः । अवमुच्यतां प्रेष्यताम् । यन्त्रैरेव जलस्य एषणम् (प्राप्ति.), नलयन्त्रैर्जलप्राप्तिरित्यर्थः । न शुच्यताम् न विचारः क्रियताम् ॥ १६ ॥

वह्निवारिवेगाद्वाष्पयानं वहतीह जनान्
व्योम–वारि–याने वह्निवारिवलाज्जन्येते
वह्निवारिवेगाच्छिल्पयन्त्रालयाः संचलन्ति
वह्निवारिवेगादेव खातखनी खन्येते ।
बृटिशनृपस्याऽमुना प्रवलप्रतापेनाऽद्य
कोविदकलापे हर्षविस्मयौ वितन्येते
भग्नीकृतभीति मोदमग्नीकृतलोकचया—
वग्नीवरुणावपि निदेशमस्य मन्येते ॥ १७ ॥

अग्निजलयोर्बलादेव व्योमयानं वारियानं ( जहाज ) च जन्येते उत्पाद्येते । शिल्पयन्त्रालयाः ('कल कारखाने')। खातम् ( खाई Tranch), खनिः ( आकरः 'खान' ) । मोदे मग्नीकृताः ( प्रसन्नीकृताः ) लोकसमूहाः याभ्यां तौ अग्नीवरुणौ देवावपि, भग्नीकृता भीतिः यस्मिन् कर्मणि यथा तथा, अस्य ( बृटिशनरेशस्य ) आज्ञां मन्येते ॥ १७ ॥

## शल्यचिकित्सा

### कुण्डलिया

चतुराणां चेतसि चरति शल्यचिकित्साकर्म ।
यस्य सुभृशमुन्नतिरदादातुरनिकरे शर्म ॥
आतुरनिकरे शर्म दिशेद्व्रणमुखमुम्भित्वा ।
यत्र मुदितमुपयाति चित्रमङ्गान्यपि भित्त्वा ॥
क्षताऽश्मरीप्रभृतिष्वनिशं कृतसुखा नराणाम् ।
शल्यचिकित्सा चित्रयेत चेतश्चतुराणाम् ॥ १८ ॥

शल्यचिकित्साकार्यं चतुराणां चेतसि चरति ( कृतज्ञताबुद्ध्या सर्वदा हृदये वसतीत्यर्थः । ) व्रणमुखं पूरयित्वा । शरीरस्याऽवयवान् छित्वाऽपि मोदः

प्राप्यते इति चित्रम्। शरीरव्रणविदारणेन सुखं भवतीत्याशयः। क्षतं व्रण-रोगः, । अश्मरी ('पथरी'), एतत्प्रभृतिरोगेषु जनितारोग्या ॥ १८ ॥

→※ एक्सकिरणाः, "X-Ray" ※←

दो०–नवविज्ञानमिहोन्नमति शारीरिकविषयेषु ।
एक्सकिरणमुपयुज्य यच्चलति चिकित्सितमेषु ॥ १९ ॥

एषु (शारीरिकचिकित्साविषयेषु) एक्सकिरणेन उपयोगं गृहीत्वा चिकित्सितं चलति। काचविशेषेण शरीरोपरि प्रकाशे पातिते, शरीरान्तः-स्थितो मांसशोणिताद्यतिरिक्त' पदार्थस्तैः चक्षुषा दृश्यते ॥ १९ ॥

→※ चित्रविद्या ※←

क०–मोदमनुयाया वीक्ष्य छायाचित्रचातुरीं तां
धातूपरिगा या चित्रपद्धतिः परीक्ष्याऽसौ
एकदा विलिख्य पुनर्यन्त्रसहकारात्पश्य
बहुलीकृता या चित्रसंहतिः समीक्ष्याऽसौ ।
सूक्ष्मचित्रमालापि च काचबलात्पृथ्वी भाति
चञ्चलाप्रकाशे चलच्चित्रकला वीक्ष्याऽसौ
हंहो मञ्जुनाथ मित्र विद्यारसिकोऽसि यदि
तर्हि चित्रविद्याचयचातुरी निरीक्ष्याऽसौ ॥ २० ॥

छायाचित्रम् (फोटोग्राफ) तस्य चातुरीम् । या ताम्रपित्तलादिधातुप-दार्थानाम् उपरिगा, असौ चित्रपद्धतिः परीक्ष्या। ब्लाकचित्राणि धातुफल-केपूत्कीर्यन्ते। एकवारं चित्रं पत्रपृष्ठे विलिख्य पुनर्यन्त्राणां बलेन बहुसंख्यानि चित्राणि निर्मीयन्ते सा प्रिण्टेडचित्रविद्या परीक्ष्या। सूक्ष्माकाराणाम् अभ्र-कफलकस्थितानां चित्राणां माला, काचप्रभावेण महत्तमा दृश्यते, एवंविधा चलच्चित्रकला (सीनेमेटोग्राफ) विद्युतः प्रकाशे वीक्षणीया ॥ २० ॥

## फ़ोटोग्राफ़ी

प्रमितप्रकाशे पुरो निश्चलं निवेश्यो नरो
निर्यत्प्रतिबिम्बधरो दर्पणोऽनुपाल्यताम्
काचाच्छादितायां चित्रमञ्जूषायामस्य ततो
नीत्वा प्रतिच्छायामियमौषधिभिः क्षाल्यताम् ।
मञ्जुनाथ पश्चात्पत्रपृष्ठे समुपेतां ततः
प्रतिकृतिमेतामेक्ष्य मानसं नु लाल्यताम्
आतुरीकृतोऽसि सखे किं वा तुरीवेमादिकैः ?
फोटोचित्रचातुरीयमधुना निभाल्यताम् ॥ २१ ॥

प्रमिते अनुकूले, प्रकाशे । निर्गच्छतः प्रतिबिम्बस्य धरः (ग्राहकः) दर्पणः अनुपाल्यतां गृह्यताम् । यस्मिन् प्रतिच्छाया उत्कीर्णा भवेदेवंविधः काचः (प्लेट) ग्राह्य इत्याशयः । काचाच्छादिता चित्रमञ्जूषा (फ़ोटो केमेरा) । अस्य (निश्चलं निविष्टस्य नरस्य) प्रतिच्छायां प्रतिबिम्बं गृहीत्वा, इयं (प्रतिच्छाया) औषधिभिः क्षाल्यताम् । ततः पत्रपृष्ठे संक्रान्ताम् इमां मनुष्यस्य प्रतिकृतिम् आ–ईक्ष्य । तुरीवेमादिकैः न्यायादिशास्त्रेषु तुरीवेमादिचर्चाभिः किमिति खिन्नोऽसि ॥ २१ ॥

## सीनेमा

श्वेतपटे विद्युत्किरणाग्रैरवभासितानि
चेष्टमानचित्राण्यपि पश्य तडिदुन्मुखे
सागरतरङ्गानथ धावतस्तुरङ्गान्पश्य
भीषणभुजङ्गांस्तान्विहङ्गान् पततश्च खे ।

लेखैः सूच्यमानाः पश्य नानाविधनाट्यकथाः
किं बहुना मूकमभिनेयं पश्य संमुखे
व्यग्रतां विनेमामवकाशदिने मानस मे
साधय सिनेमा समवेक्षणसुखं सखे ॥ २२ ॥

तडिता उन्मुखे ( उद्भासिते ) श्वेतपटे, विद्युत्किरणाग्रैरवभासितानि चेष्टमानानि चित्राणि पश्य । खे पततः ( उड्डीयमानान् ) विहङ्गान्पश्य । मध्ये मध्ये 'स्लाइट'स्थैः लेखैः सूच्यमानाः नानाविधाः नाट्यानां कथाः पश्य । मूकम् अभिनेयम्, वाणीं विना चेष्टाद्वारा सर्वमपि अभिनेयं कथाभागं पश्येत्यर्थः । इमाम् ( प्रतिदिनकार्यैर्जायमानाम् ) व्यग्रतां विना, व्यग्रतां दूरे कृत्वेत्यर्थ. । अवकाशस्य दिने सीनेमानिरीक्षणसुखं साधय ॥ २२ ॥

## मोहमयीस्था टङ्कशाला ( टकसाल )

कुत्रचन राशीकृत–रूप्यरुचिरीक्ष्यतेऽथ
रूप्यं तद्धि कुत्रचिद्विलापनमभीयते
कुहचन यन्त्रे प्रविधीयन्ते शलाकास्तस्य
कुत्रचित्तु तासां पट्टिकेव प्रविधीयते ।
प्रमितिपुरस्सरं प्रणीयन्तेऽथ खण्डाः क्वचि-
त्कुत्रचित्तु तेषु राजमुद्रा विनिधीयते
वर्तमानकालाऽऽयामयोगियन्त्रजाला धन-
वैभवविशाला टङ्कशाला समुदीयते ॥ २३ ॥

राशीकृतस्य रूप्यस्य ( रजतस्य ) कान्तिः ईक्ष्यते । क्वचित् रूप्यं विलापनं ( द्रवभावम् ) अभीयते नीयते । कुत्रचित्स्थले तस्य ( रजतस्य ) शलाकाः विधीयन्ते । क्वचिद्रजतस्य पट्टिका निर्मीयते । प्रमितिपुरस्सरं तोल-

नेन परिमाणं कृत्वा, रूप्यकानुगुणाः खण्डाः क्रियन्ते । वर्तमानकालस्य य आयामः, तत्सम्बन्धी यन्त्रजालो यस्यां सा । वर्तमानकालोचितैरुत्कृष्टैर्यन्त्रसमूहैर्युक्ता, इत्यर्थः ॥ २३ ॥

## विज्ञान-(साइन्स-) वैभवम्

श्रूयतेऽनुलापो नृणां योजनसहस्रादपि
तुमुलतमिस्राऽन्तरात्तेजो द्युतिं दोहयेत्
एकमेव यानं पुनः सागरजलेऽपि चलेद्
गगनतलेऽपि ततस्तूर्णमधिरोहयेत् ।
याति बाष्पयानं भूमिगर्भे ह्यन्तरिक्षतले,
बुद्धिबलेनाद्भुतानि पुष्पाण्युपरोहयेत्
नित्यनवाऽऽविष्कारस्य विज्ञायेत विज्ञापनै-
रेतद्वस्तुविज्ञानं सुविज्ञानपि मोहयेत् ॥ २४ ॥

नृणाम् अनुलापः ( परस्परं संलापः ) रेडियो–टेलिफोनादिद्वारा । घोरस्य तमिस्रस्य ( अन्धकारस्य ) मध्यादेव तेजः द्युति ( प्रकाशम् ) पूरयेत्, घोरान्धकार एव सहसा प्रकृष्टः प्रकाशो भवतीत्यर्थः । ईदृशमद्भुतं यानमस्ति यदेकमेव जलेपि चलति, ततः शीघ्रमेव आकाशेऽपि जनान् आरोहयति । बाष्पयानम् ( रेलवेट्रेन ) भूगर्भेऽपि चलति, तथा आकाशेपि चलति । लण्डनादिनगरेषु गृहाणामुपरिभागे रेलशकटिर्गच्छति । विज्ञानवेदी जनः बुद्धिबलेन अभूतपूर्वाणि नानाविधानि पुष्पाण्युत्पादयेत् । यथा–पाटलापुष्पस्य नानारङ्गाः, अकण्टकता, वल्लिरूपप्रापणम् एवमन्यान्यदपि । नित्यनवीनस्य आविष्कारस्य विज्ञापनैर्विज्ञायेत यद् एतद्वस्तुविज्ञानम् ( साइन्स ) सुविज्ञानपि नरान् मोहयेत् चकितान्कुर्यात् । आविष्कारास्तु—तृणादि गोभोज्यं यन्त्रे प्रक्षिप्य तद्द्वारा दुग्धनिर्माणम्–वनस्पतिभ्यो घृतनिर्माणम्, काचविशेषेण मञ्जूषादिस्थानां वस्तूनां चक्षुषा दर्शनमित्याद्या अनेके प्रसिद्धाः स्थालीपुलाकन्यायेनावगन्तव्याः ॥ २४ ॥

→⁂ गौराङ्गाणां गौरवम् ⁂←

नोपाश्रयते या जितजातेर्वेष–भाषादिकं
गाढसन्निपातेऽप्यद्य जाते मदमण्डितम्
यज्जातेर्मनुष्यं जितजातेः प्राड्विवाको बत
जातेऽपि च दोषे कर्तुमीष्टे न हि दण्डितम् ।
यज्जातीयलोकेनाऽद्य भारतोपयातेनोच्च–
स्थानमेव नीयते तिरस्कृत्याऽन्यपण्डितम्
सभ्यजनव्रातेष्वनुकार्यं व्यतिभाते मम
गौराङ्गीयजातेरात्मगौरवमखण्डितम् ॥ २५ ॥

या जातिः, अद्य गाढसम्बन्धे जातेपि विजितजातेः (भारतीयादेः) वेष–भाषादिकं मदमण्डितं यथा तथा न स्वीकरोति । अपराधे जातेपि यज्जातेर्मनुष्यं जितजातेः प्राड्विवाकः (न्यायाधीशः 'जज') दण्डितं कर्तुं न ईष्टे । अन्यं (अन्यजातीयम्) पण्डितमपि स्वापेक्षया अधिकविज्ञमपि तिरस्कृत्य, भारते आगतेन यज्जातीयलोकेन उच्चमेव स्थानम् (शासनपदम्) गृह्यते, न स्वल्पवेतनकं पदम् । गौराङ्गजातेः अखण्डितम् आत्मगौरवम् मम बुद्धौ सभ्यसमूहेष्वनुकरणीयं व्यतिभाते । तेषां भातुं योग्यं मम भातीति कर्मव्यतिहारः ॥ २५ ॥

→⁂ गौराङ्गाणां स्वजात्यनुरागः ⁂←

न्यस्यति स्वकीयेष्वेव मान्यमधिकारं काम–
मन्यः कृतिपारङ्गतो भद्रो भुवि भिक्षताम्
वस्तूनि स्वदेशनिर्मितान्येवोपयुङ्क्ते सदा
भुङ्क्ते भोज्यसामग्रीं स्वदेशरीतिरक्षिताम् ।

नानादेशसंगृहीतवित्तेनापि जातिर्या हि
संधत्ते स्वदेशे शिल्पसंपदमविक्षताम्
अङ्गरेजजातेर्निजजातीयाऽनुरक्तिं निज-
जन्मभूमिभक्तिं भुवि कोपि नरः शिक्षताम् ॥२६॥

या जातिः, स्वकीयेष्वेव लोकेषु मान्यम् (उच्चम्) अधिकारं समर्पयति। कार्ये पारं गतः अन्यः (अन्यजातिजनः) भद्रोपि भूमौ भिक्षां करोतु नाम। उपयुङ्क्ते प्रतिदिनोपयोगे आनयति। स्वदेशरीत्या रक्षिताम्, निजपद्धतेरनुसारमेव भोज्यमपि तैर्भुज्यत इत्याशयः। शासनाधिकारकाले नानादेशेभ्यः अर्जितेनापि धनेन, स्वदेशे एव शिल्पसंपदम् अविक्षतां रक्षति। अन्यदेशेभ्यो धनं संगृह्य विश्रमसमये स्वदेशे गत्वा शिल्परक्षार्थं कश्चित् शिल्पकार्यालयम् ('कारखाना') स्थापयति, न तु विदेशीयशिल्परक्षार्थं तत्रोपार्जितं स्वल्पमपि द्रव्यं विनियुङ्क्ते इत्याशयः। अत एव अङ्गरेजजातेः स्वजात्यनुरागं स्वमातृभूमिभक्तिं च भूमौ कोपि नरः शिक्षतां नाम। अयं जात्यनुरागः अन्यैर्लोकैस्तेषां सकाशाच्छिक्षणीय इत्याशयः॥ २६॥

## अङ्गरेजानां नीतिनैपुण्यम्

शनैः शनैर्भूमौ निजधर्मः परिवर्द्धितोऽस्ति
नर्मक्रमेणोक्त्वा भृशमन्यधर्मवैगुणम्
स्वोररीकृतैव शिक्षा सर्वतः प्रचारिताऽस्ति,
पूर्वाऽऽश्रितशिक्षाद्रुमे दत्त्वा बत वै घुणम्।
सर्वथा स्वतन्त्रं बत येषां राजतन्त्रं भाति
मञ्जुनाथ तेषामद्य कस्मान्न स्तवै गुणं
सामोपायसाङ्गीकृतं सभ्यसमाजाऽङ्गीकृतं
गेयमद्य गौराङ्गीयनीतिधृतं नैपुणम्॥ २७॥

अन्येषां धर्माणां नर्मक्रमेण ( परिहासरूपेण ) वैगुणं विगुणताम् उक्त्वा। पूर्वजातैरार्यैः आश्रिते ( स्वीकृते ) शिक्षारूपे वृक्षे घुणं दत्वा, पूर्वां शिक्षामुन्मूल्येत्यर्थः। तेषां गुणं कस्मात् न स्तवै, अपि त्ववश्यं प्रशंसानीत्यर्थः। स्तवै इति स्तौतेरात्मनेपदे लोट उत्तमपुरुषैकवचनम्। सामरूपेण उपायेन साङ्गं विहितम्, ईदृशं गौराङ्गीयनीतौ धृतं नैपुण्यमद्य गेयं प्रशंसनीयमित्यर्थः॥ २७॥

यस्य नीतिनैपुणतो निस्त्रिंशोऽपि नम्रो भाति
शात्रवः प्रयाति यस्य कोपाग्नौ शलभताम्
कामं कीदृशोऽपि शौर्यशाली राष्ट्रनेता भवे-
द्दुर्मदविजेता तं विनेतासौ कलभताम्।
मञ्जुनाथ नानाविधजाति–धर्म–जुष्टे त्वद्य
भारते च नीतिर्यस्य संप्राप्ता सुलभतां
भारतीयभूमौ व्याप्तवेदनीतिजीवी जनो
भेदनीतिनीवीमाङ्ग्लदेशादुपलभताम्॥ २८॥

यस्य ( आङ्ग्लदेशस्य ) नीतिनैपुण्यात् कठोरोऽपि नम्रो भवति। कीदृशोऽपि शूरो राष्ट्रस्य नेता ( संचालकः ) भवेन्नाम, तं ( नेतारम् ) असौ कलभतां (हस्तिन. समीपे हस्तिशावकताम्, दम्यतामित्यर्थः) नेता नेष्यति। नानाविधाभिः ( आर्य–जैन–माहम्मदादिभिः ) जातिभिः, नानाविधैः ( सनातन–जैन–पारस्य–इस्लामादिभिः ) धर्मैश्च युक्ते भारते यस्य नीतिः सुलभतां संप्राप्ता, नानाविधभेदवशात्तस्यां नीत्यां सुकरता स्वतः संजातेत्याशयः। भारतसम्बन्धिन्यां भूमौ व्याप्ता या वेदनीतिः ( वैदिकाऽऽम्नायः ) तदुपजीवी ( सरलः सत्यप्रेमी च ) आर्यजनः भेदनीतेर्मूलधनम् आङ्ग्लदेशात् शिक्षतामित्यर्थः॥ २८॥

### भारताऽर्थं विचारः

दो०–जाति–धर्म–मत–भेदतः प्रतिगृहमहो बिभेद।
खेदमयन्नप्याऽप्ययं भेदनयं न विवेद ॥ २९ ॥

अहो जाति–धर्म–मत–(सम्प्रदाय–) कृतैर्भेदैः प्रतिगृहं बिभेद, प्रत्येकं गृहं मिथो भिन्नमभूत्, अथ खेदम् अयन् प्राप्नुवन्नपि अयं (देशः) भेदनयं (भेदनीतिम्) न विवेद। अनेकविधं भेदं गच्छन्, किञ्च भेदेन क्लेशं प्राप्नुवन्नपि अयं देशो भेदनयं न ज्ञातवानित्याश्चर्यमित्याशयः ॥ २९ ॥

### युद्धसज्जा

क०–खातान्युपखान्य तेषु निह्नूयते सैन्यमिह
लूयते त्वकस्माच्छत्रुसैन्यमित्युपाजानाम्
गोलकान्निपात्य व्योमयानाद्भर्जयन्ति जनान्
तर्जयन्ति पूर्वं सैन्यमल्पबलराजानाम्।
लोकनाशकारी विषधूमः परिसूयतेऽथ
ब्रूमः किं, नयन्ति नाशमेव नृसमाजानां
किं सा भूतिभाजामपि राजामभियुद्धेष्वभूद्
या जाताऽद्य योजना युरोपमहाराजानाम् ॥ ३० ॥

खातानि (खाईं' Tranches) उपखान्य तेषां मध्ये सैन्यं गोप्यते। अकस्मात् शत्रुसैन्यं भिद्यते इत्यहम् उपाजानाम् अज्ञासिपम्। व्योमयानमध्यात् लोहगोलकान् ('बम्') निपात्य जनान् अग्निसात्कुर्वन्ति। अल्पबलानाम् (अल्पं बलं येषाम्) राज्ञां सैन्यं सर्वतः पूर्वं तर्जयन्ति। नृसमाजानाम् मनुष्यसमूहानां नाशमेव नयन्ति कुर्वन्ति। अभियुद्धेषु (अभिमुखयुद्धेषु) युरोपराजानां या योजना (सज्जा) अद्याऽभूत्, सा योजना पूर्वं किं भूतियुक्तानामपि राज्ञामपि युद्धेष्वभूत्? अपि तु नेत्यर्थः। राज्शब्दस्य षष्ठी ॥ ३० ॥

## —॥ अर्थनीतिः ॥—

छप्पय

भूरिभूरिकरमर्जयन्ति, शकटीर्घटयन्ते ।
खानयन्ति खनिमनिशमब्धियानानि नयन्ते ॥
पत्रप्रेषणमधिवहन्ति, मुद्राः कलयन्ते ।
अयन–सदन–धन–करान् राजपुरुषाः प्रथयन्ते ॥
वहिराहिताऽतिशयमार्दवाप्युपहितपुष्कलपाटवा ।
इह भारतेन्द्रभूपतिभवा धनसंग्रहनीतिर्नवा ॥ ३१ ॥

वहुतरं करम् ( शुल्कम् 'टैक्स' ) अर्जयन्ति । धनसंग्रहार्थं रेलादिशकटी-र्विरचयन्ति । पाषाणाङ्गार–लोह–सीसकादीनामाकरं खानयन्ति । नित्यं पोतान् ( जहाज़ ) नयन्ति । पत्रप्रेषणम् ( डाकविभागकार्यम् ) वहन्ति । स्वर्ण-रूप्य–पत्र–( नोट– ) ताम्रादिमुद्राः निर्मान्ति । अयनं मार्गः । तथा च ( 'रोड़सेस' 'हाउसटैक्स' 'इनकमटैक्स' प्रभृतीन् ) करान् राज्ञा प्रेरिताः पुरुषाः प्रथयन्ते प्रचारयन्ति । बहि:प्रकटितात्यन्तकोमलभावाऽपि प्रयोजित-भूरितरचातुर्या इयं भारतेश्वरसम्बन्धिनी धनसंग्रहस्य नीतिर्नवीनैव ॥ ३१ ॥

## —॥ युद्धनीतिः ॥—

क०—युध्यमानराष्ट्रद्वयमेक्ष्य गुप्तमात्मबलं
कामं वर्द्धयद्भिर्यैस्तटस्थैरिव भूयते
प्रबलमुदीक्ष्य तयोरेकं दोषमुद्घोषद्भि-
रन्यराष्ट्रसङ्घैः सह सन्धिः परिस्तूयते ।
युद्धे ह्यन्यराष्ट्राण्यवतार्य तद्बलाऽपगमे
स्वार्थाधिगमे च स हि सन्धिः परिलूयते
भेदनीतिभङ्गिरेखयैव दुर्दुरूढो रिपु-
रङ्गरेजवीरैः सङ्गरेषु परिभूयते ॥ ३२ ॥

परस्परं युध्यमानं राष्ट्रद्वयम् आ–ईक्ष्य, आत्मनः बलं (सैन्यम्) गुप्तं यथा तथा यथेच्छं वर्द्धयद्भिः यैः (अङ्गरेजैः), उपरितस्तटस्थैरिव भूयते। तयोः (युद्ध्यमानराष्ट्रद्वयस्य) मध्ये, एकं राष्ट्रं प्रबलं वीक्ष्य, तस्य राष्ट्रस्य दोषं घोषद्भिः (प्रख्यापयद्भिः) यैः, अन्यैः राष्ट्रसमूहैः सह सन्धिः प्रस्तूयते। प्रबलराष्ट्रस्य परितः परिभवाय अन्यैः राष्ट्रैः सह सन्धिर्दृढीक्रियत इत्याशयः। ततश्च तस्यैकमात्रस्य प्रबलराष्ट्रस्य बलभङ्गार्थम् अन्यराष्ट्राणि युद्धक्षेत्रे अवतार्य समन्ततो युद्धेन तस्य राष्ट्रस्य बलाऽपगमे जाते निजस्य प्रयोजनस्य प्राप्तौ (ईप्सितस्य कस्यचिद्भूभागस्य प्राप्तौ), सर्वैः राष्ट्रैः सह कृतः स सन्धिः किञ्चित्कारणमुद्भाव्य परिलूयते (भज्यते)। भेदनीतिरचनाचातुर्येणैव दुर्दुरूढः (आग्रहिलो दुर्जयश्च) शत्रुः पराजीयते ॥ ३२ ॥

## नवीना शिक्षापरिपाटी

चित्तपरिष्कारे या हि शिक्षा भूरिदक्षाऽभव-
द्वित्तपुरस्कारेणैव साऽद्य सुपटीयसी
पूर्वपुरुषाणां पुरा पद्धतिः प्रकृष्टाऽभव-
न्नव्यपुरुषाणामद्य सरणिर्गरीयसी।
मञ्जुनाथ जानीयाम दूरदूरदेशकथां
'को धर्मोऽथ, के वयम्' कथेयं तु दवीयसी
वर्तमानकाले बत शिक्षावधूभालेऽलेखि
कालेजेन चारुचित्रमालेयं महीयसी ॥ ३३ ॥

चित्तस्य परिष्कारे (शोधने) पूर्वं या शिक्षा अतिनिपुणाऽऽसीत्सा अस्मिन् युगे धनग्राह्यैव साधीयसी (गण्यते)। पूर्वकाले प्राचीनरीतिः उत्कृष्टासीदिदानीं नवीनानां रीतिमेव सर्वे सुरुच्याऽनुसरन्ति। इतिहासाऽध्ययनेन दूरदूराणां देशानां कथां वयं जानीमः परम् 'वयं के? अस्माकं धर्मः कः?' इत्यात्मकथा तु दवीयसी (अतिदूरस्था)। तथा च कालेजेन (अर्थान्नव्यविद्यालयानां प्रबन्धकैः) शिक्षारूपाया वध्वा भाले इयं

पूर्वोक्ता चित्रमाला अलेखि। वधूनां शृङ्गारार्थं भाले पत्ररेखा विरच्यन्ते, एवं दूरदूरकथाबोधेपि आत्मकथाऽनभिज्ञतारूपचित्रस्य (आश्चर्यस्य) माला अलेखि ॥ ३३ ॥

बाल्यादेव भूरिभूरि पुस्तकानि घोषन्तोऽपि
शिक्षायां न सन्तोषं सृजन्ति जना मीयताम्
पूर्वजपरिचयाय पाठ्यमितिहासाद्यपि
देशभाषां त्यक्त्वा हूणभाषया ह्यधीयताम् ।
सर्वमेतत्सोढ्वापि च भ्रम्यतां बुभुक्षावशात्
शिक्षाफलमाध्यात्मिकशान्तिः क्वोपनीयताम्?
मन्दतममाटीकितविद्यावृक्षवाटीसुखा
वर्तमानशिक्षापरिपाटीयं निपीयताम् ॥ ३४ ॥

शिक्षाविषये जनाः सन्तोषं न सृजन्ति (नाधिगच्छन्ति), मीयताम् अनुमीयतामित्यर्थः। पूर्वजानां परिचयार्थं यदितिहास–भूगोलादि पाठ्यं तदपि अंग्रेजीभाषयैवाधीयताम् । एतत्सर्वं सहित्वापि भृतिकार्यस्याऽलाभे बुभुक्षापरवशैर्भृतिकार्यान्वेषणार्थं भ्रम्यताम् । ततश्च शिक्षायाः फलम् या आध्यात्मिकी शान्तिः सा क्व प्राप्यताम्? शिक्षाप्राप्तावपि शिक्षायाः फलभूता आत्मनः शान्तिस्तु न जातेत्याशयः। अत एव अतिमन्दं यथा तथा आटीकितम् (प्राप्तम्) विद्यारूपायाः वृक्षावाट्याः सुखं यया ईदृशी। निपीयताम् अतिशयेन परिशील्यताम्। विद्यारूपायां वृक्षवाटिकायां गत्वा जनैः शान्तिसुखं लभ्यते, परम् अत्र परिपाट्यां तन्न लभ्यते। लभ्यते चेदतिमन्दमित्याशयः ॥ ३४ ॥

वैदेशिकभाषाचाकचक्याऽऽचान्तचित्तस्थले
रोहति, विमोहजलैः सिक्तो यो विधीयते
आत्ममातृभाषात्यागखाद्यपरिपुष्टो यो हि
गौरवगरिष्ठो गर्वशाखाशतैर्गीयते ।

चित्रं बहुकालाज्ञात-'बी. ए.' 'एम्. ए.' पुष्पोदयो,
नेत्रद्युतिमन्दताऽऽमयोपि सह नीयते
भाग्यतोऽभिरूढराजतन्त्रभृतिभिक्षाफला-
द्वर्तमानशिक्षाकुब्जवृक्षात्को महीयते ? ॥ ३५ ॥

वर्तमानशिक्षारूपो यः कुब्जः ( लघुर्वक्रश्च ) वृक्षस्तस्मात् को वा जनः महीयते? महितो भवति? न कोपीत्यर्थः। इदानीं शिक्षायां वृक्षस्य रूपकं साधयति—वैदेशिकभाषायाः चाकचक्यम् ( नेत्रमोहकचमत्कारः 'चमक' ) तेन आचान्ते ( अभिभूते ) चित्तरूपे स्थले ( भूमौ ) रोहति। विमोहः आत्मभाषागुणेष्वगुणदर्शनं स एव जलम्। आत्ममातृभाषाणां त्यागः स एव खाद्यम् ( वृक्षाणां कृते 'खाद' ) तेन परिपुष्टः। वृक्षे यथा शाखाभिर्गौरवं भवति तथा अस्मिन् अभिमानस्य शाखाशतैः गौरवगरिष्ठता भवति। 'बी. ए.' 'एम्. ए.' रूपाणि पुष्पाणि चिरादुत्पद्यन्ते। अनेन सहैव नेत्रद्युतेर्मन्दतारूपः आमयः ( रोगः ) अपि नीयते, येन उपनेत्रस्याऽऽवश्यकता भवति। भाग्यवशात् अभिरूढं राजतन्त्रसकाशात् भृतिभिक्षाप्राप्तिरूपं फलं यस्य तस्माद् वर्तमानशिक्षारूपाद्वृक्षात् ॥ ३५ ॥

## परीक्षायुगम्

छप्पय.

यदि गतिमुरीकरोषि सखे! शिक्षासुखसिन्धौ।
चिरतरममरीकरणगुणाऽमृतझरीसुबन्धौ ॥
तर्हि चपलफलकरी रीतिरुररीकरणीया।
यदिह परीक्षातरी परीक्षणयुगेऽवनीया ॥
अयि मञ्जुनाथ नवयुगपरीवाहविपुलवैभवकरी।
वरविद्यासिन्धुपरिचरी नौरियमधुना जयकरी ॥ ३६ ॥

चिरतरं चिरकालार्थम्, मनुष्यस्य अमरीकरणरूपो यो गुणः स एवाऽमृतम्, तज्झर्याः तत्स्रोतसो मित्रे। शिक्षारूपे सुखकारके सागरे यदि त्वं शमनं स्वीकरोषि, तर्हि चपलं शीघ्रं फलकारिणी इयं रीतिः स्वीकार्या, यत् अस्मिन्परीक्षायुगे परीक्षारूपा तरि (नौका) अवनीया रक्षणीया। यतः वरस्य (श्रेष्ठस्य) विद्यासिन्धो उपरिचरी, नवयुगप्रवाहे विपुलवैभवकारिणी इयं नौकैव अधुना जयकरी। अस्मिन्युगे शिक्षासिन्धोस्तरणार्थं इयं नौकैव लोकेभ्यो विजयदायिनीत्यर्थः। उपरिचरीत्यनेन परीक्षया शास्त्रसिन्धोस्तल-स्पर्शो न भवति, परम् उपरि उपरितो गतिर्भवतीति सूच्यते ॥ ३६ ॥

→ नवीना नेतारः ←

क०–वैदेशिकभाषा–वेष–भूषादिकं बिभ्रतोऽपि
भारतीयभावं धारयन्ति कथमप्यसौ
राष्ट्रसभामञ्चे देशदारिद्र्यं विवृण्वन्तोऽपि
जुह्वतीह सर्वस्वं हि 'फ़ैशन'विभावसौ।
स्वातन्त्र्ये यतन्ते, परं सामाजिकसत्तामपि
स्वेच्छातः समर्पयन्ति शासकविभादसौ
नव्या न्यायविद्या, ननु नव्या नेतृबुद्धिरपि,
नव्या नवशिक्षितनराणां नीतिरप्यसौ ॥ ३७ ॥

वैदेशिकीं भाषाम्, वेषम्, भूषाम्, एतदादिकं धारयन्तोपि भारतीय-भावम् असौ (प्राणे) यथाकथञ्चिद्धारयन्ति। वर्तमाना नेतारो वैदेशिक-रीत्या आचारव्यवहार धारयन्तः कथमिव मनसि भारतीया भवेयुरित्या-शयः। विवृण्वन्तः प्रकाशयन्तः। वैदेशिक–'फैशन' (वेषविन्यास–) रूपे अग्नौ सर्वस्वं जुह्वति (होमं कुर्वन्ति)। सामाजिकीं सत्ताम् (सामाजिक-स्वातन्त्र्यम्) शासकस्य विभाति (चमत्कुर्वति) असौ (खड्गे) समर्पयन्ति। 'विभात्' इति भाधातोः शतृप्रत्यये रूपम्। यदा देशस्य स्वतन्त्रतार्थं यत्नं कुर्वन्ति तदा अवशिष्टां सामाजिकीं स्वतन्त्रतामपि शासकस्य (राज्ञः) खड्गाधीनां किमिति कुर्वन्ति? आधुनिका गौडपटेलादिनेतारो 'विवाहबिल'

'देवसम्पत्तिबिल' इत्यादिद्वारा सामाजिकस्वतन्त्रतामपि राजसात्कर्तुमिच्छन्ति। 'खड्गे समर्पयन्ति' अनेन अयं सामाजिकः प्रबन्धः खड्गे स्थितो यदा आवश्यकता भवेत्तदैव विच्छिन्नः कर्तुं शक्येतेति ध्वन्यते। ततश्च न्यायविद्या ( law ) नव्या, नेतृभावोऽपि नवीनः, नवानां नीतिरपि नवीनैवेत्याशयः ॥ ३७ ॥

### सुधारकः ('रिफ़ार्मर')

स्पृश्याऽस्पृश्यभावं भूतमात्राद्विनिवर्तयसे
भ्रात्रा सह भ्रातृभोजने त्वं पटुरीर्यसे
सौभाग्यं ददासि दयाऽधीनो विधवाभ्यः पुन-
र्भूरिभोजनादीनां तु भञ्जकोऽभिधीयसे।
ग्रहणदिनेष्विव सुहोलिकादिनेषु सखे
रामनामजापसभानेतृत्वेऽधिनीयसे
सकलसमाजरूढरीतिविनिवारक हे
धर्मधुराधारक सुधारक सुगीयसे ॥ ३८ ॥

प्राणिमात्रम् समानम् इति प्राणिमात्रात् अयं स्पृश्यः अयमस्पृश्य इति भावं दूरीकरोषि। विधवानां पुनर्विवाहं कृत्वा दयावशस्त्वं पुनः सौभाग्यं ददासि। श्राद्ध–विवाहादिषु भूरिभोजनादिप्रथायास्त्वं भञ्जकः। होलिकादिनेषु उच्छृङ्खलगानमसभ्यता इति तत्स्थाने रामनाम्नो भजनसभाः क्रियन्ते, तासां च त्वं नेता क्रियसे। सुगीयसे सुष्टुतया सर्वैः प्रशस्यसे ॥ ३८ ॥

### बाबूमण्डली

स्पृश्याऽस्पृश्यताया बत संकीर्णो विचारो भाति
सदृशोऽधिकारो नरनारीभ्यः प्रदीयते
'धर्मस्योपदेशे वृद्धविप्रा एव नाऽधिकृता
योग्यताऽस्मदीयाऽप्यत्र निर्भरमुदीयते।'

उद्वाहं चतुर्दशाद्धि वर्षाद्वनितानां जगुः
प्रामाण्याय चेङ्ग्लिशाऽनुवादः सह नीयते
त्वङ्गति तरीतुं शास्त्रसागरमलाबूबला-
त्सेयं नवबाबूमञ्जुमण्डली महीयते ॥ ३९ ॥

बाबूमहाशयाः कथयन्ति—"धर्मोपदेशे वृद्धानां ब्राह्मणानामेव नाधिकारः, अत्र (उपदेशे) अस्माकमपि योग्यताऽस्ति।" एकविवाहोत्तरं पुनर्विवाहस्य, विद्यालयशिक्षायाश्च नराणां नारीणां च समानः अधिकारोऽस्ति। चतुर्दशाद्वर्षादारभ्य स्त्रीणां विवाहं जगुः (कथयामासुः)। एतस्य प्रामाण्याय स्मृतीनाम् इंग्लिशभाषानुवादः सह सभामध्ये नीयते। ततश्च शास्त्ररूपं गहनं सागरम्, इंग्लिशानुवादरूपायाः अलाब्वाः (तुम्बिकायाः) बलात् तरीतुं त्वङ्गति (गच्छति), सेयं बाबूमण्डली महीयते महिता भवति ॥३९॥

## कालमाहात्म्यम्

पारमुपनीता पूर्वपद्धतिः प्रवीणैरद्य
चलिता चतुर्दिङ् नवशैली निरुपेहितम्
आडम्बरमात्रं वंशमर्यादामवैति जनो
वादायैव संप्रदायवृत्तमधुनेरितम् ।
मञ्जुनाथ मीलति मनस्वी निजमानसेऽद्य
कस्मै कथयेत निजवृत्तमिदमेधितं
खेलत्खलजाले बत वर्तमानकाले कलौ
भद्रजनभाले भूतभर्तः! किमालेखितम् ॥ ४० ॥

चतुरैरपि पुरुषैः पूर्वरीतिः पारं नीता दूरीकृतेत्यर्थः। चतुर्दिक् समन्तात् नवीनशैली निरुपाधि प्रचलिता। ईरितं कथितं वैष्णव-शैवादिसंप्रदायानां वृत्तं विवादायैव। मानी जनः स्वचित्त एव मीलति विषादं गच्छति। एधितम् वृद्धिं गतं दीर्घमिति यावत्। इदम् (आत्मवृत्तम्) कस्मै कथयेत्?

खेलन्तः (मोदमानाः) खलजाला यस्मिन्, हे भूतभर्तः (प्राणिनां भरणकारिन् भगवन्!) भद्रलोकानां ललाटे वेधसो हस्तेन किम् आलेखितम् ॥ ४० ॥

धार्मिका म्रियन्ते, बत वैदिका विलीयन्तेऽथ,
क्रन्दन्ते कुलीनाः क्वचित्कोणे कृतवेपितम्
दातारो दरिद्रा, दुःखदग्धा दयावन्तो जना,
वेपन्ते विनीता, बुधा बध्यन्ते सहेलितम् ।
साधवः सदुःखाः, पुण्यवन्तो दम्भवन्तोऽभवन्,
मञ्जुनाथ मार्मिकाः प्रयान्ति परिदेवितं
खेलत्खलजाले बत वर्तमानकाले कलौ
भद्रजनभाले भूतभर्तः किमालेखितम् ? ॥ ४१ ॥

कस्मिन्नपि कोणे कृतकम्पं यथा स्यात्तथा कुलीनाः क्रन्दन्ते । दयावन्तो दुःखेन दग्धाः क्लिष्टाः । बुधाः पण्डिताः सावहेलनं बध्यन्ते बद्धाः क्रियन्ते । पुण्यं कुर्वन्तो जना दाम्भिकाः परिगण्यन्ते । मर्मवेदिनो विलपन्ति, दुःखं गच्छन्तीति यावत् ॥ ४१ ॥

भूरिधनराशिं विना विद्या दुर्लभैवाऽधुना
तत्रापि च विज्ञानं विनाऽद्य कियच्छिक्षितम् ?
लब्धभूरिविद्योऽपि च विन्दते न सद्यो धनं
यस्माद्धनवद्भिर्लाभवर्त्म समावेष्टितम् ।
एवं भूरिचिन्ताभिर्व्यतीतपुरुषायुषस्य
नूनमस्य भाग्ये सुखं कियदवरेखितम् ?
खेलत्खलजाले बत वर्तमानकाले कलौ
भद्रजनभाले भूतभर्तः ! किमालेखितम् ? ॥ ४२ ॥

बहुतरद्रव्यव्ययं विना वर्तमाना वैदेशिकभाषाशिक्षा दुर्लभैव । तत्रापि विज्ञानं ('साइन्स') विना एषु दिनेषु शिक्षा कियती ? न किमपीत्यर्थः । प्राप्तसाइन्सादिशिक्षोपि च जनः सद्य एव धनं न प्राप्नोति । यतो हि साइन्सादिद्वारा धनप्राप्तेर्मार्गः प्रभूतधनवद्भिर्वैदेशिकैः अवरुद्धः । पूर्वं शिक्षणचिन्ता, तदनन्तरं परीक्षोत्तरणचिन्ता, तदनन्तरं द्रव्यार्जनचिन्ता, इत्यादिभिर्भूरिचिन्ताभिर्व्यतीतसमग्रायुषो जनस्य भाग्ये सुखं कियल्लेखितम् ? न किञ्चिदपीत्यर्थः ॥ ४२ ॥

## भारते गोहिंसा

मुञ्चन्ते स्वशत्रुमपि दन्तेष्वावहन्तं तृण-
मेवं प्रागुदन्तेषु हि रीतिरतिख्याताऽसौ
सैषा पुनः प्राश्य तृणं बाढमृणं धत्ते जने
येन निजवत्सैरपि सूतकृषिखाताऽसौ ।
मञ्जुनाथ नित्यं निजस्तन्यदुग्धदानादहो
अन्यमतमानिनामपीह मान्यमाताऽसौ
त्राता मान्यमोगलमहीपैरुपयाताऽर्चनं
गोमाताऽप्यखण्डखड्गधारामनुयाताऽसौ ॥ ४३ ॥

दन्तेषु तृणं धारयन्तं निजशत्रुमपि जना मुञ्चन्ति, इत्थं प्राक्तनेतिहासेषु असौ रीतिः अतिख्याता । सैषा (गौः) तृणं प्राश्य (भुक्त्वा) लोके लोकानामुपरीत्यर्थः, बाढम् ऋणं स्थापयति, येन कारणेन असौ निजवत्सानां द्वारा सूतमुत्पादितम् कृषेः खातं खननं यया ईदृशी अस्ति । इयं निजवत्सैः (वृषभैः) कृषिकार्ये क्षेत्रविलेखनाद्यपि संपादयतीत्याशयः । असौ निजस्तनभवदुग्धदानात् (हेतोः) खिष्टीय-इसलाम-पारस्य-जैनादिमतमानिनामपि लोकानां मान्या माताऽस्ति । स्तनदुग्धदानाद् या पोषयति सा मातेति नियमादियं विधर्मिणामपि माननीया मातास्तीत्याशयः । अत एव मान्यैः अकबरादिमोगलमहीपालैरपि त्राता रक्षिता । अर्चनम् उपयाता

(भारते सर्वत्र देवबुध्या पूजिता) अपि सेयं गोमाता सांप्रतम् अखण्डाम् (अविरताम्) खड्गस्य धारामुपयाता । अकबरेण गोमातुरार्यैः पूज्यताम् सकललोकानामुपकारकतां चोपलक्ष्य निजराज्ये गोवधो निषिद्ध इति प्रसिद्धम् ॥ ४३ ॥

गोरक्षा

सवैया

न्यायतुलातुलितं किल यस्य हि शासनमुच्चपवित्रमिदम्
यत्र च दीनमदीनजनो न रुजेदिति वित्तचरित्रमिदम् ।
यत्किल भारतराज्यमशेषनृणां मतमाननमित्रमिदम्
तत्र हि भारतगौरवनौरपि गौर्वधमर्हति चित्रमिदम् ४४

यस्य (भारतराज्यस्य) शासनं न्यायस्य तुलया तुलितम्, उदारं पवित्रं च । यत्र (राज्ये) अदीनजनः (प्रबलः) दीनं न रुजेत् (पीडयेत्) इति वित्तं (विख्यातम्) चरित्रं वृत्तमस्ति । यद् भारतराज्यम् सर्वलोकानाम् मतानां (धर्मसंप्रदायानाम्) संमाननस्य मित्रं सहायकम् । कस्यापि लोकस्य धर्मविषये प्रतिबन्धो न देय इति भारतराज्यस्य सिद्धान्तः सुप्रसिद्ध इत्याशयः । तत्र (भारतराज्ये) भारतवर्षस्य गौरवरक्षार्थं नौकाभूता, सेयं गौरपि वधं यातीति इदमाश्चर्यम् । एवमुदारे न्यायपरायणे च राज्ये कामदृष्ट्या, धर्मदृष्ट्या च सेयं गौर्नार्हति वधम् । अस्या रक्षैव कर्तव्या एतस्य शासकेनेति सूच्यते ॥ ४४ ॥

स्त्रीशिक्षा

अन्यदीयदेशनारीशिक्षामनुकृत्य निज-
नारीभ्योऽपि दापयन्ति वैदेशिकशिक्षितम्
शिक्षिताश्च पारितपरीक्षिताश्च नार्य इमाः
सोल्लुण्ठं त्यजन्ति गृहकार्यमसमीक्षितम् ।

पूर्वं किल पारतन्त्र्यमासीत्स्वस्य देश एव
साम्प्रतं स्वगेहेपि च पारतन्त्र्यमीप्सितम्
नूतनयुगेऽस्मिन्नवशिक्षितनराणामद्य
नारीशिक्षणेऽपि ननु नूतनत्वमीक्षितम् ॥ ४५ ॥

इङ्गलेण्डाद्यन्यदेशस्य नारीशिक्षाया अनुकरणेन निजस्त्रीभ्योऽपि आङ्ग्ल-भाषामयीं वैदेशिकीं शिक्षां दापयन्ति । पारितम् समापितं परीक्षितं परीक्षणं याभिस्ताः परीक्षोत्तीर्णा इमा नार्यः, सावहेलनम्, असमीक्षितम् (असमीक्ष्यैव) गृहकार्यं त्यजन्ति । एवं स्थितौ पूर्वं स्वदेशे एवास्माकं परतन्त्रता आसीदिदानीं स्वगृहेपि परतन्त्रता ईप्सिता । स्त्रीभिः स्वगृहकार्ये त्यक्ते वयं कर्मकराणां भृत्यानां वशगा भविष्याम इति भोजनाच्छादनविषयेऽपि स्पष्टं परतन्त्रता भवेदित्याशयः । नूतनं युगम्—नवशिक्षिताश्च नराः, अतः नारीशिक्षायामपि इदं नूतनत्वमद्य वीक्षितम् ॥ ४५ ॥

## नवशिक्षितनारीसमाजः

वेत्रदण्डमादायाऽद्य वाक्कीलत्वमेति वधू
राजकर्मचारितां च सेयमाप्यतेतमाम्
सुन्दरीसमाजेनाऽद्य स्वीयदलं संगृह्याऽथ
राजगृहद्वारे बलात्स्वत्वमीप्स्यतेतमाम् ।
मञ्जुनाथ साम्प्रतं तु सैनिकत्वमाप्य सैव
शस्त्रास्त्रैः सुसज्जा समरार्थं नह्यतेतमाम्
या वै गृहलक्ष्मीः पुरा मामण्डीति गेहमिदं
साम्प्रतं तु सैव रणचण्डी चिन्त्यतेतमाम् ॥

'फ़ैशन'सूचकं वेत्रदण्डं हस्ते गृहीत्वा वधूः (नारी) वाक्कीलत्वम् प्राप्नोति । 'अदालत' प्रभृतिशासनविभागे सेयम् (नारी) राजकर्मचारितां

प्राप्यते । णिजन्तात्कर्मणि प्रत्ययः । स्वीयदलस्य 'संगठनं' कृत्वा स्त्रीसमाजेन राजगृहद्वारे पुरुषवर्गसमानं स्वस्य स्वत्वं याच्यते । 'सफ्रेजिस्ट' संप्रदायस्य 'पार्लिमैण्ट' सकाशाद्बलपूर्वकमुच्चाधिकारप्राप्तेः कथा लण्डनसमाचारपाठकैर्न विस्मृता भवेत् । अस्मिन्युगे तु सैव (नारी) युद्धार्थं नह्यतेतमाम् बद्ध-परिकरा भवति । ततश्च या गृहलक्ष्मीः (नारी) पुरा गेहं मामण्डीति (अतिशयेन मण्डयति स्म), सैव इदानीं रणचण्डीरूपेण जनैश्चिन्त्यते । 'मडि' धातोर्णिज्विकल्पे यङ्लुगन्तस्य रूपम् । 'पुरि लुङ् चाऽस्मे' इति पुरायोगे लट् ॥ ४६ ॥



पत्नी प्रियतममाप्य वन्दनं वचसा कुरुते ।
पतिसुहृत्सु संयत्सु करोन्मर्दनमातनुते ॥
पतिर्व्यलीके कृते क्षमाशब्दं बत वर्हति ।
पतिवस्तुनि दत्ते च धन्यवादानियमर्हति ॥
अर्द्धाङ्गिनीति गौरवपदम्, प्राणसमेति च सम्पदम् ।
युक्त्याऽपहृत्य ददते नराः कृत्रिमोपचाराऽऽपदम् ॥ ४७ ॥

प्रियतमं संमुखे आ—आप्य 'गुडमॉर्निङ्ग' 'नमस्ते' इत्यादिवचनेन वन्दनं करोति । पत्युः सुहृत्सु संमिलत्सु तैः सह करमर्दनम् 'शेकहैण्ड' आतनोति । अप्रिये कृते सति, पतिः 'क्षमस्व' इति क्षमाशब्दं वर्हति उच्चारयति । इयं (पत्नी) भूमौ पतिते पतिवस्तुनि उत्थाप्य समर्पिते सति धन्यवादान् अर्हति । तथा च प्रियतमस्य पत्नी 'अर्धाङ्गिनी' इति गौरवस्य पदम्, दयिता 'प्राणसमा' इति वाञ्छनीयां सम्पत्तिम्, युक्त्या अपहृत्य नराः स्त्रीभ्यः कृत्रिमोपचार–('तकल्लुफ़'–) रूपामापत्तिं ददते समर्पयन्ति । सम्पत्तिम-पहृत्य आपत्तिप्रदानेपि स्त्रीणां प्रसन्नता पुरुषाणां युक्तिकौशलमेवेत्याशयः । परिवृत्तिः ॥ ४७ ॥

## वृन्दावनस्य हिन्दीसाहित्यसंमेलनम्

भारतस्य भूरिभाग्यभूताः समवेता इमे
सज्जनाः समन्ताद्देशसाहित्यस्य संक्रमे
प्रस्फुरत्प्रभावा भवत्प्रस्तावाः पुरस्तादमी,
भावाः सत्कवीनामभिनन्द्याः कविताक्रमे ।
मञ्जुनाथ नानाविधकायकलाकौतूहलैः
प्रीतिर्बहलैषाऽभवत्तेनाऽन्तरतो रमे
मङ्गलममन्दीभवदिन्दीवरनेत्रो दिशे-
द्वृन्दावनशोभि'हिन्दीसंमेलन'सङ्गमे ॥ ४८ ॥

वृन्दावने यदा अखिलभारतवर्षीय–हिन्दीसाहित्यसंमेलनस्याऽधिवेशनमभूत्तस्य प्रसङ्गवशादिदं वर्णनम्—भारतवर्षस्य भूरिभागधेयभूताः इमे सज्जनाः, देशभाषासाहित्यस्य संक्रमवेलायां समन्ततः समवेताः । अस्मिन्संमेलने प्रभावशालिनः भवताम् ( सभास्थजनानुद्दिश्योक्तिः ) प्रस्तावाः ( 'रेजुलेशन्स' ) पुरस्तात्सन्ति । नानाविधाः उपकारिणः प्रस्तावाः श्रीमतां सविधे उपस्थिताः सन्तीत्याशयः । कविसंमेलनमुद्दिश्योक्तिः—कविताक्रमे सत्कवीनां प्रशंसनीया भावाश्च पुरस्तात्सन्तीत्यर्थः । संमेलनोत्सवे गुरुकुलविद्यार्थिभिः कृतानि शारीरिकव्यायामकौतुकान्युद्दिश्याह—विविधकायकलाकौतुकैः बहुतरा प्रीतिरभवत् । तेनाहमन्तरङ्गेण प्रसीदामि । अतएव अमन्दीभवन्ती इन्दीवरे इव नेत्रे यस्य सः ( फुल्लकमललोचनः ) श्रीकृष्णो हिन्दीसंमेलनस्य सङ्गमे मङ्गलं दिशेत् देयात् ॥ ४८ ॥

## उपसंहारे सोरठाच्छन्दः

पुरुषपुङ्गवा हन्त, नवयुग ! तव युगमेतकत् ।
अतिगरिष्ठमवहन्त, विषमविकर्षणवर्त्मगम् ॥ ४९ ॥

हे नवीनयुग ! पुरुषश्रेष्ठाः गुरुतरं 'दायित्वपूर्णम्', लोकानां परस्परं घोरसंघर्षमार्गेस्थम् एतकत् ( एतत्, 'अकच्' ) तव युगं धुरम्, ( 'जूडा' हिन्दी ) अवहन्त अधारयन् । वृषभा यथा अतिगुरुभारयुक्तम्, परस्परं वृषयोराकर्षणमार्गगतत्वेन क्लेशप्रदं युगं धारयन्ति तथा इमे नवीनाः पुरुषाः परस्परस्पर्द्धापूर्णम् अतिदायित्वपूर्णम् एतन्नवरीतिप्रचारणरूपं युगम् अधारयन्नित्याशयः । पूर्वपद्धतिमुल्लङ्घ्य नवयुगप्रचारणमतिविचार्यपरिणा-मम् । अग्रे न जाने, नवपद्धतेरस्याः किं फलं भवेदिति युगरूपकेण ध्वन्यते ॥ ४९ ॥



# उपसंहतिवीथी

## कविताविज्ञानां वैरल्यम्

शुष्कशब्दशासनविवेचनविनोदयुताः
केचन कवीन्द्ररीतिनीतिमनयन्तः स्युः
संस्कृतसदुक्तिरससेचनसुखज्ञा अपि
केचन नवीनवृत्तबोधं न श्रयन्तः स्युः ।
मञ्जुनाथ केचन कवित्वरसविज्ञा अपि
शुष्केर्ष्यापिशाचीरसरेचनमयन्तः स्युः
कविताऽसौ सदसि निवेदिता यदपि मया
वस्तुतोऽत्र वेदितारो वदत कियन्तः स्युः ? ॥ १ ॥

शुष्कस्य शब्दशास्त्र-(व्याकरण-)विवेचनस्य विनोदेन युताः केचित्पण्डिताः, कवीन्द्राणां रीतिं च नीतिं च अजानन्तः स्युः । केचन विज्ञाः, संस्कृतसूक्तिरसेन यत्सेचनं बुद्धेस्तर्पणं तत्सुखवेदिनोऽपि, अस्मिन्ग्रन्थे वर्ण्यमानानां नवीनच्छन्दसां ज्ञानं न श्रयन्तो भवेयुः । संस्कृतकवितावेदिनोपि भाषाच्छन्दसां कवित्त-सवैयादीनां विषयेऽपरिचिता भवेयुरिति भावः । केचित्तु संस्कृत-हिन्दी-उभयविधकवितारसिका अपि, शुष्का या ईर्ष्यापिशाची तस्या रसस्य रेचनम् (पृथग्भावम्) अयन्तः (अगच्छन्तः) स्युः, ईर्ष्यानुगमशून्या न भवेयुरिति भावः । ततश्च कवितायाः वेदितारः कियन्तो भवेयुः ? अतिन्यूना भवेयुरित्याशयः ॥ १ ॥

पूर्वमेव सेयं देवभारती गहनतमा
विषमा ततोऽपि पद्यकविता प्रकृष्यते
कवितानिबन्धेऽप्यद्य कुहचन लभ्यो नाम
संदर्भः सुकाव्यगुणबन्धे विप्रकृष्यते ।
भाषान्तरवृत्तविनिबन्धे नैपुणी या, या च
तद्वद्गुणगन्धे साधुता सा कैर्विमृश्यते ?
मञ्जुनाथ ! सूक्तिस्ते निवेदिता यदपि भवे-
दुर्दैवात्तवैव तत्त्ववेदिता न दृश्यते ॥ २ ॥

संस्कृतभाषा गभीरा, ततोपि ( तत्रापि ) पद्यकविता गहना, अत एव बोधविषये प्रकृष्यते प्रकृष्टा भवति । कवितारचनेऽपि सुन्दराणां काव्यगुणानां बन्धे संदर्भः ( सूक्तिगुम्फः ) क्वचिदेव लभ्यः ( दुर्लभः ), अत एव विप्रकृष्यते विप्रकृष्टो भवति, साधारणतया दूरस्थो भवतीत्याशयः । ततोऽपि उर्दू-हिन्दीप्रभृतिभाषान्तरच्छन्दसां रचने या चातुरी, तद्वत् ( वृत्तबन्धनैपुण्यवत् ) गुणगन्धे सति ( काव्यगुणसौरभे सति ) या च कवितायाः साधुता सा कैर्जनैर्विचार्यते ? अपि तु अतिविरलैरेव विचार्यते इत्यर्थः ॥ २ ॥

शब्दानेव केचन विचारयन्ति साऽवहितं
कैरपि विवेचनविनोदेनैव हृष्यते
परिमितशब्दबोधसत्ताकैरबोधवशा-
त्कैश्चन तदर्थाद्वा वराकैर्विप्रकृष्यते ।
मञ्जुनाथ केचन विदन्तोऽप्यभ्यसूयावशा-
त्संतोषं न यान्ति, पुनरेकैर्नाऽभिमृश्यते
कविताऽद्य कुत्र विनिवेदिता भवतु नाम ?
दुर्दैवात्तवैव तत्त्ववेदिता न दृश्यते ॥ ३ ॥

केचन सावधानं कवितागतान् शब्दानेव विचारयन्ति (अयं सुप्रसिद्धः, अयमप्रसिद्धः इत्यादि), कैश्चित्पण्डितैः 'एवं प्रयोक्तव्यम्, एवं परिवर्तयितव्यम्' इत्यादिविवेचनस्य विनोदेनैव हर्षः क्रियते। परिमिता शब्दबोधस्य सत्ता (सामर्थ्यम्) येषां तैः, अज्ञानवशात्कैश्चित्पण्डितवराकैः हा (दुःखम्) तस्याः (कवितायाः) अर्थात् (अर्थतः) दूरीभूयते, परिमितज्ञानास्ते शब्दानजानन्तः कविताया अर्थसकाशाद्दूरे तिष्ठन्तीत्याशयः। केचित् जानन्तोऽपि असूयावशात्संतोषं न गच्छन्ति। एकैस्तु नाभिमृश्यते विचार एव न क्रियते॥ ३॥

## ईर्ष्यालुः पण्डितः

विज्ञा अपि काव्यगुणगौरवमजानन्तो हि
शृण्वन्तोऽपि सीदन्तीति लोके किल लोकेऽहम्
परिमितसूक्तिपरिबोधान् श्रावयामि बुधान्
किन्तु निर्निरोधां मुदं तेभ्यो नाऽवकोकेऽहम्।
मञ्जुनाथ मार्मिकेति, पात्रं साधु सूक्तेरिति,
साऽभिलाषं यस्य पुरः सूक्तान्युपढौकेऽहं
सूक्तिश्रवणेऽपि मौनमण्डितं मदेर्ष्यावशा-
त्पण्डितं तमन्तर्दैवदण्डितं विलोकेऽहम्॥ ४॥

व्याकरणादिविज्ञा अपि काव्यतत्त्वमजानन्तः, काव्यं शृण्वन्तोऽपि क्लेशमनुभवन्तीति लोके अह विलोकयामि। काव्यवेदिन इति कृत्वा परिमितः सूक्तीनां परिबोधो येषाम् ईदृशान् बुधान् यद्यपि निजकवितां श्रावयामि किन्तु निर्निरोधाम् मुदम् (पूर्णमानन्दम्) तेषां सकाशादहं न अवकोके न प्राप्नोमि। 'कुक वृक' आदाने। अयं मार्मिक इति, सूक्तिश्रवणस्य साधुरधिकारीति कृत्वा, यस्य पण्डितस्य पुरः साभिलाषं निजसूक्तानि उपढौके (उपहरामि), परंतु सूक्तिश्रवणेपि मदजनितायाः ईर्ष्यायाः वशात् मौनेन मण्डितम् (मौनेनैव तस्य शोभा, यदि स कविताया आलोचनाविषये

किञ्चिद्ब्रूयात्तर्हि तस्य पाण्डित्यं परिज्ञातं भवेदिति 'मण्डित' पदेन ध्वन्यते।) तं पण्डितम्, अन्तर्दैवेन दण्डितं पश्यामि । यः सूक्तितत्त्वज्ञोऽपि ईर्ष्यया मदेन वा कविताश्रवणोत्तरं उचितमनुचितं वा न निर्धारयति स दैवहत इत्येव मे भातीत्याशयः ॥ ४ ॥

**निर्वेदः**

बहुमनुरोधमधिगम्य सुप्रसिद्धनृणां
  राजसेविसार्थे पूर्वं परिचयमादधाम्
प्रचुरप्रतीक्षामयं समयं समेत्य ततो
  वैभवविलासमयं राजगृहमभ्यगाम् ।
मार्मिकजनानां मनोमर्म परिमृष्टवतीं
  संस्कृतसरस्वतीमतज्ज्ञेष्विह संन्यधां
किं किं न व्यधायि मया लक्ष्मीलवलालसेन ?
  लालसे ! पिशाचि प्रेहि संप्रति तु मुञ्च माम् ॥ ५ ॥

प्रसिद्धपुरुषाणामनुरोधं प्राप्य राजपारिषदानां वर्गे परिचयमस्थापयम् । अद्य नाऽवकाशः, अमुकदिने राज्ञः समीपे गन्तव्यमिति प्रचुरप्रतीक्षामयं समयमुल्लङ्घ्य राजभवनमयासिषम् । मार्मिकलोकानां मर्मस्पर्शिनीं संस्कृत-सूक्तिम् अतज्ज्ञेषु (संस्कृताऽनभिज्ञेषु) संन्यधां न्यक्षिपम्, एवंविधेषु कवितानिवेदनं प्रक्षेपप्रायमित्याशयः । हे पिशाचि लालसे ! प्रेहि अपयाहि म्रियस्वेत्यर्थः ॥ ५ ॥

**कीर्तितो निर्वेदः**

सकलसभासु सभ्यनिकरनिमन्त्रितोऽथ
  सभ्यतानियन्त्रितोऽधिगच्छसि पुरःस्थितिम्
सर्वविधलोकसभावेद्यामधिरुह्य ततः
  कोविदैकवेद्यामिह पठसि निजां कृतिम् ।

मञ्जुनाथ नाऽधिकविदग्धजननादाऽनुगान्
प्राप्य साधुवादान्बहु मन्यसे मनोरतिं
गाढमवधीरितोऽस्यलीककीर्तिकामनया
कामनया चित्त! सखे पश्यसि सुखाऽऽयतिम्? ॥६॥

सभ्यनिकरेण निमन्त्रितः सादरमाहूतः । सभ्यतया नियमितस्त्वं 'कविवरः' इति कृत्वा सर्वेषामग्रस्थितिं प्राप्नोषि । अज्ञविज्ञेत्यादिसर्वविधलोकानां सभाया मञ्चमारुह्य कोविदमात्रबोध्यां स्वां कवितां पठसि । तदनन्तरं नात्यन्तं विदग्धा ये जनास्तेषां हर्षनादानुगतान् 'साधु साधु' इत्यादि प्रशंसावादान्प्राप्य बहु यथा तथा मनस्तोषं मानयसि । अत एव अलीकाया. कीर्तेः कामनया हे मञ्जुनाथ भृशं विडम्बितोसि । हे चित्त! अनया (कीर्तिकामनया) कां सुखायतिम् (कं वा शुभपरिणामम्) पश्यसि? अनया मिथ्याकीर्तिलालसया न किञ्चित्परिणामसुखं भवेदित्याशयः ॥ ६ ॥

तृष्णातो निर्वेदः

सततमसभ्यद्वारपालाऽध्युषितामपि तां
राज्ञो हर्म्यमालामिह लोभादहमभ्यगाम्
प्रियमुपजल्पन्नपि वक्रदृशा दृष्टो हन्त
लोभपरामृष्टो धनिलोकानहमन्वयाम् ।
मञ्जुनाऽथ कविताकलापेनोपवर्णितवान्
कुटिल-कृतघ्नानपि भूयो वच्मि किंतमाम्
एतावत्सतृष्णेनेह घूर्णितमिदानीमये
कृष्णे देहि दृष्टिं सखि तृष्णे! परिमुञ्च माम् ॥७॥

निरन्तरम् असभ्यैर्द्वारपालैरधिष्ठितां राज्ञो हर्म्यमालां लोभवशादभ्यगच्छम् । प्रियं वदन्नपि, अपरिबुध्यमानैस्तैः वक्रदृष्ट्या वीक्षितः, लोभाभिभूतोह धनिकान् अन्वसरम् । अथ मञ्जुना कविताकलापेन कुटिलान् कृतघ्नानपि वर्णितवान् । अधिकं किं वदामि । हे तृष्णे! साभिलाषेण मया

एतावत् जनेषु भ्रान्तम् । इदानीं कृष्णे भगवति दृष्टिं देहि । कृष्णाऽनुरोध-वशान्मामिदानीं त्यजेत्यर्थः ॥ ७ ॥

## उपसंहारः

सम्प्रति सयत्नं सुप्रसाध्य भवदर्थे सैष
सज्जितोऽत्र सूरिजनः कोऽपि न विषीदतात्
सहृदयसेव्यमिह यावत्सौरभं नु भवे-
त्तावतैव विज्ञगणः सदयं प्रसीदतात् ।
मञ्जुनाथ मर्माऽपरिबोधात्कोपि, विज्ञजनो
व्यथते विरोधात्कोपि, कोणेऽसौ निषीदतात्
सदयदृशैवाऽदम्यदेवीकृतदासगणा
मे वीप्सितदाऽसौ गिरां देवी सुप्रसीदतात् ॥ ८ ॥

स एष ( निकुञ्जः ) सुप्रसाध्य ( सुतरामलंकृत्य ) सज्जितः सज्जीकृतः । अत्र ( निकुञ्जे ) कोपि पण्डितः न विषादं गच्छतु । निकुञ्जो हि विषाद-विगमाय भवत्यत एव कोपि खेदं मा यात्वित्याशास्ति । इह सहृदयैः सेव्यो यावान् सुगन्धो भवेत्तावन्मात्रेणैव दयां कृत्वा विज्ञसमूहः प्रसादं गच्छतु । यदि तु कोपि जनः मर्मणः अपरिज्ञानात्, कश्चित्तु विज्ञजनः विरोधकारणा-देव, सुखप्राप्तेः स्थाने व्यथां गच्छति, तर्हि असौ कोणे तिष्ठतु । नास्याऽनु-रोधमहं प्रतीक्षे । सदयया दृष्ट्यैव अदम्याः देवरूपाः कृता निजस्य दास-गणा यया सा वाग्देवी, मे मनोरथपूरिका सती सुप्रसन्ना भूयात् । यत्कृपा-दृष्ट्या यस्या दासाः कवयो देवा इव अमरतां गच्छन्ति सा सरस्वत्येव मे सुप्रसन्ना भवतु, न मे पण्डितानां प्रसादस्य प्रतीक्षेत्याशयः ॥ ८ ॥

गिरां मधुकिरां साधुमाधुरीमभिनन्दयन् ।
कविताकुसुमोद्यानचञ्चरीकः प्रसीदतु ॥ ९ ॥

मधुस्राविणीनां वाणीनां माधुर्यं साधु यथा तथा अनुमोदमानः, कवि-तानिकुञ्जगतः सुहृदयो भ्रमर एव प्रसीदतु ॥ ९ ॥

# वंशवीथी

तत्र पूर्वं—

## प्राचीनचत्वरः

आङ्गिरस–आयास्य–गौतमेतित्रिप्रवरान्वितगौतमसगोत्रोत्पन्नः कृष्णयजुर्वेदान्तर्गततैत्तिरीयशाखाध्यायी आपस्तम्बसूत्रो देवर्ष्यैवटङ्कतैलङ्गभट्टान्ववायप्रसूतः सोयं कविः साम्प्रतमात्मनो वंशपरिचयमारभते । तत्र वंशप्रवर्तकस्य गौतममुनेरनुभावं तपो वरदानं चारभ्य, बावीजीदीक्षितमूलपुरुषमनुक्रम्य, श्रीकृष्णभट्टकविकलानिधिपर्यन्तं कवेः पूर्वजेन हरिहरभट्टेन 'कुलप्रबन्ध' नामकं काव्यमिदमुपनिबद्धम् । अस्य रचनाकालः १६ शतकस्यान्तिमो भागः । यतो हि श्रीमान् कृष्णभट्टकविकलानिधिर्बुन्दीपतिं बुधसिंहदेवं तुष्टावेति ग्रन्थ उपलभ्यते । अस्य च नरपतेरेष एव कालः ।

गौतमगोत्रीयाणां देवर्षिग्रामाधिपतीनां तैलङ्गानां बावीजीदीक्षितमारभ्य श्रीकृष्णभट्टपर्यन्तानामस्मिन्काव्ये परिचयो दत्तः । एतदुत्तराणां तु ग्रन्थोपक्रान्तैर्हिन्दीवृत्तैर्मयकैव नवीनतया परिचयः प्रादायि । स्थाने स्थाने तत्तेषां कवीनां भाषाकविताया आदर्शा अपि संगृहीताः सन्तीत्यग्रे स्फुटं भविष्यति ॥

ग्रन्थकर्ता.

## कुलप्रबन्धः

तमोपहन्ता खलु गौतमोभू-
   द्दमोपगेहः स्फुटदिव्यदेहः ।
यस्मै परस्मै नुतिमावितेनु-
   र्देवा नृदेवा मुनिपुङ्गवाय ॥ १ ॥
यत्कीर्तिवल्ली विपुला पुनीते
   गोदावरी पुण्यपयःप्रवाहैः ।
अद्यापि नद्या समुपैति सङ्गं
   सद्यो यदङ्गं न स याति भङ्गम् ॥ २ ॥
नदी नदीनायकपूजितासौ
   न दीनसत्त्वा निरवद्यदेहा ।
पयांसि यस्याः परिपीय पुण्या-
   न्यारादपाराद्भवतोऽपयाति ॥ ३ ॥
यदीयपानीयपवित्रगात्र-
   स्त्रासं यमाशंसितमाविधूय ।
हरिं हरं वा भजमान एष
   समानवेषः समुपैति मुक्तिम् ॥ ४ ॥

---

गोदावरीरूपा कीर्तिवल्ली । यदङ्गं गोदावरीनद्या सह सङ्गं समुपैति स भङ्गं न यातीत्यन्वय. ॥ १ ॥ २ ॥ न दीनं सत्त्वं यस्याः सा । अथवा न दीनाः सत्त्वा मत्स्यादयो जीवा यस्याम् । अपाराद्भवतः संसारादपयाति निवर्तते ॥ ३ ॥ यमात् आशंसितम् अनुमितं त्रासम् । समानवेपः हरेर्हरस्य

पानीयपीयूषरसान्पिबन्तो
 हरेर्गुणाकर्णनलब्धवर्णाः ।
बुधा यद्ध्यासवशादनाप्त-
 निमेषभावा विबुधा इवासन् ॥ ५ ॥
अन्तर्नमन्तः सततं वसन्तः
 सन्तः कियन्तस्तटिनीतटेऽस्मिन् ।
हसन्ति मुक्तानपि विष्णुभक्तान्
 जनान्न नामग्रहणे समर्थान् ॥ ६ ॥
अलंकृता दिव्यलतावितानै-
 र्गन्धर्वगानै रुचिरैर्विमानैः ।
पक्षीन्द्रपक्षैरुपलालितासौ
 वृक्षैर्वलक्षैः शतकोटिलक्षैः ॥ ७ ॥
चकोरराजीव सबर्हिवृन्दा
 ज्योत्स्नेव तापप्रशमप्रगल्भा ।

---

वा सारूप्य प्राप्तः सन्नित्यर्थः ॥ ४ ॥ पानीयरूपस्य पीयूषस्य रसान् । यस्य हरेर्ध्यानवशात् अकृतचक्षुर्मीलनाः, अत एव अनिमेषतया देवा इवासन्निति भावः ॥ ५ ॥ मुक्तानां पुनर्देहाऽसम्बन्धेन नामग्रहणाभाव इति नामग्रहणासमर्थान् तान् हसन्तीत्यर्थः ॥ ६ ॥ पक्षीन्द्राणामाश्रयभूतैः, वलक्षैः स्वच्छैः, शतकोटिलक्षैर्वृक्षैरुपलालिता । अथवा पक्षीन्द्रपक्षैरिति पृथग् योजनीयम् ॥ ७ ॥ चकोरपक्तिर्यथा बर्हिणां मयूराणां वृन्देन सहिता, तथेयमपि । कैलासभूमिर्यथा हरस्य अवभासेन प्रकाशेन युक्ता तथेयमपि शिवतेजःप्रकाशिता । हंसी यथा मुक्तानां मौक्तिकानामशनेन भोजनेन

कैलासधात्रीव हरावभासा
हंसीव मुक्ताशनभूषितासौ ॥ ८ ॥
इतस्ततश्चारितरङ्गहस्तै-
राकारयन्तीव जनान् जवेन ।
शीतेन मन्देन सुगन्धितेन
वातेन या स्वःसुखमादधाति ॥ ९ ॥
द्रोणाद्रिरस्याः सविधे विभाति
विभाऽतिसंदीपिनभःप्रदेशः ।
यन्मध्यभागस्थिततारकालि-
र्व्यलोकि लोकैः कटिकिंकिणीव ॥ १० ॥
कर इव मणिबन्धभासुरोसौ
विट इव कूटशतैरुदग्रकायः ।
बुध इव बहुधागमैरुपेतो
गिरिवर एष चरीकरीति चित्रम् ॥ ११ ॥
पद्माकरस्पर्शनजातमोदो
गौराम्बरप्रावरणाभिरामः ।

---

शोभिता तथैव प्रसिद्धेः, एवमियमपि मुक्तं अशनं यैरीदृशैस्तपस्विभि-र्भूषिता ॥ ८ ॥ चारिभिः तरङ्गरूपैर्हस्तैः । स्वर्गसुखं करोति ॥ ९ ॥ वि-भया अतिसंदीपी नभःप्रदेशो यस्य, कान्त्या गगनं भासयन्नित्यर्थः ॥ १० ॥ हस्तपक्षे मणिबन्धः प्रकोष्ठः । गिरिस्तु मणीनां रत्नानां बन्धेन भासुरः । विटो मिथ्याशतैर्गिरिस्तु शिखरशतैरुत्कटशरीरः । बुधो बहुधा आगमैः शास्त्रैर्युक्तः, गिरिस्तु अगमैर्वृक्षैः ॥ ११ ॥ पद्मायाः करस्पर्शेन, कमलखण्डस्य च स्पर्शेन । गौरं स्वच्छं यदम्बरमाकाशं तस्यावरणेनाभिरामः, गौरस्य

वक्षःस्थलस्थापितदिव्यरत्नो
विभर्ति सौभाग्यमुरुक्रमस्य ॥ १२ ॥

विभूतिसितकायकः परमपार्वतीनायकः
फणीन्द्रपरिसेवितः सुबहुनीलकण्ठाश्रितः ।
दिगम्बरविराजितो द्विजपतिप्रभाभासितो
दधाति हरभावतां क्वचन गङ्गयालङ्कृतः ॥ १३ ॥

तपस्तेपे तस्मिन् शिखरिणि महर्षिः परमनाः
सदा ध्यायन्विष्णुं यमनियमपूजाजपरतः ।
द्विपञ्चर्पाण्येवं मधुमथनमाराधितवतः
प्रभुः प्रेम्णा तस्य क्षितितलमथाऽऽगाद्गगनतः ॥१४॥

कौस्तुभोरःस्थलस्थापनद्योतितः
पीतवासःप्रभाभूपिताङ्गः प्रभुः ।
पद्मनेत्रो मुनेः सद्म पद्मावरो
भूपयामास भूमीन्द्रभूपाकरः ॥ १५ ॥

परमीक्षणेन हरिमेक्ष्य ततः
परमं स विस्मयमवाप मुनिः ।

---

पीतस्य वस्त्रस्य आवरणं च ॥ १२ ॥ विभूतिर्वैभवं भस्म च । मयूरैः, नीलेन कण्ठेन च । दिक्षु अम्बरे च, दिगम्बरेण च । द्विजपतीनां ब्राह्मणानाम्, चन्द्रस्य च प्रभया ॥ १३ ॥ कौस्तुभयुक्तस्य उरःस्थलस्य स्थापनेन । पद्मायाः वरो मुनेः सद्म भूषयांबभूवेति योजना ॥ १५ ॥ परमुत्कृष्टं हरिम्, आदृक्ष्य । उमनयस्य लालनतः । महसा आवृतः स सहसा

उदतिष्ठदुग्रजयशासनतः
सहसावृतश्च महसाऽऽसनतः ॥ १६ ॥

विष्टरेथ मुनेर्विष्णुस्त्रिविष्टपपतिः स्तुतः ।
निविष्टः शिपिविष्टेन सहितः स हितः सताम् ॥ १७ ॥

ततान स्तवं गौतमस्तत्र तस्य
त्रिनेत्राङ्गसङ्गश्रियाऽलंकृतस्य ।
परेशाङ्घ्रिपद्मे नतोहं नतोहं
प्रसीद प्रभो पाहि दीनं दयालो ॥ १८ ॥

दीनेश दीनजनतारणनामभक्त्या
दीनत्वमेकमवलम्ब्य समागतोस्मि ।
कस्मात्प्रतारयसि मामघहारकेश
चिन्तामणिर्जयति राम तवैव नाम ॥ १९ ॥

हे नन्दनन्दन सनन्दनवन्दिताङ्घ्रे
चेतोभिनन्द्य विनिन्द्य मन्दभोगान् ।
पापान्निवर्तय विवर्तय दुष्टभावा-
त्कर्माणि कर्तय समर्थय सार्थकत्वम् ॥ २० ॥

मांसासृगस्थिनिचितासु नितम्बिनीषु
चेतश्चलं मम विचिन्तयते सुखानि ।

---

आसनत उदतिष्ठत् ॥ १६ ॥ शिपिविष्टेन शिवेन सहितः विष्टरे निविष्टः ॥ १७ ॥ त्रिनेत्रस्य शिवस्याङ्गसङ्गश्रिया । हरिहररूपा मूर्तिर्दक्षिणे प्रसिद्धा ॥ १८ ॥ दीनजनतारणेति नाम्नो भक्त्या श्रद्धया । अघहारक ईश ॥ १९ ॥

पापापहारिणि विहारिणि हृत्सरोजे
संसारतारिणि न याति भवत्यधीशे ॥ २१ ॥
चेतोनिकायनिहितोसि समर्थबुद्ध्या
श्रीनाथ चेन्मम रिपून्न निवारयेथाः ।
सेव्यास्त एव मदमत्सरलोभमोहा
लोके नरा बलिनमेव समाश्रयन्ति ॥ २२ ॥
आकर्णकृष्टविशिखासनरोपितेषुः
कालश्चिकीर्षति मृगे मृगयां ममाङ्गे ।
पश्यन्नुपेक्ष्यसि समस्तधरामणे चे-
त्सर्वायुधान्यथ विहाय तपः श्रयस्व ॥ २३ ॥
न क्षत्रियोसि बत रक्षसि नो यदस्मान्
पञ्चेषुतो हृदयरत्नचिरत्नचौरात् ।
यद्यायुधानि वहसे तदहो विचित्रं
हासाय किं व्यरचि राघव वेष एषः ॥ २४ ॥
येषां त्वमेव कुलदैवतमच्युतासि
ये त्वामनन्यहृदयाः परिशीलयन्ति ।

त्वामर्चयन्ति खलु ये करुणामृताब्धे
तैरेव मे भवतु राघव वाग्विलासः ॥ २५ ॥

त्वया त्रातो मातुर्जठरमुपयातो विधिवशा-
दजातो न ज्ञातो भवजलधिपातोपि हि मया।
प्रभुस्त्वं मे तातो भवसि, न कृपातो ह्यवसि चे-
द्रदापाणे जाने मयि विषमशीलोसि भगवन् ॥ २६ ॥

साश्रुकण्ठस्ततो वाचमुज्ज्ञितुं
गौतमो न क्षमः स्वच्छभावाकुलः।
रोमहर्षादिचिह्नानि विस्तारयँ-
स्तारयन् स्वां तनुं मूढ एव स्थितः ॥ २७ ॥

पादयोः पातिनं श्रीहरिस्तं ततो
हस्तपद्मेन विप्रं समुत्थापयन्।
क्षिप्रमूचे वचो—"विप्र यत्ते हितं
तद्ब्रवीतु, स्फुटं ते ददामि द्रुतम्" ॥ २८ ॥

स गौतमस्तमच्युतं जगौ मुदा पदानतः।
—अहं परेश भावतो गतो भवन्तमेव हि ॥ २९ ॥

प्राह तं केशवस्तद्वचो भावयन्
पद्मया संगतस्ते वसे वेश्मनि।

---

मायातः भवजलधिपातः न ज्ञात इत्यर्थः ॥ २६ ॥ वाचम् उज्ज्ञितुं प्रकाशयितुम्। 'उच्चारितुम्' इति तु 'उच्चारयितुम्' इत्यनेन बाधनीयम्। स्वच्छभावेन निर्मलभावेन। स्वां तनुं तारयन् भगवद्दर्शनेन उद्धरन् ॥ २७ ॥ हे

धन्यमन्यं वरं ते ददामि द्रुतं
वंशमेवांशभावेन ते भावये ॥ ३० ॥

अनिन्द्यहृद्यगद्यपद्यविद्यया विभूषितः ।
तवास्तु वंश एष देशसंपदामुदारभूः ॥ ३१ ॥

तर्कविद्या मदीया, त्वदीयानना-
न्निःसृता ते यशः स्थापयिष्यत्यलम् ।
नानया तुल्यतामेष्यते विद्यया
भारतीवैभवे कापि शास्त्रावलिः ॥ ३२ ॥

भाग्यभोगभूरिलाभभाजनं भवान्भुवि ।
लप्स्यसे परं पदं परम्परापवित्रितः ॥ ३३ ॥

एवमादिवाग्विलासवादसादरीकृतः ।
गौतमो ददर्श देहमात्मनो हिरण्मयम् ॥ ३४ ॥

हरिस्ततोन्तर्हित एव चासी-
द्दत्वा वरांस्तापसपुङ्गवाय ।

---

परेश! भावद्वारा भवन्तमेव आश्रित इत्यर्थः ॥ २९ ॥ वसे वत्स्यामि, वर्तमानसामीप्ये वर्तमानवन्निर्देशाद्वस आच्छादने इत्यस्य धातोर्लट उत्तमैकवचनम् । धातूनामनेकार्थत्वाच्च निवासोऽर्थः । निजस्य अंशभावेन (अंशसत्तया) तव अंशं जनयामि । तव वंशो ममांशकलया संभावितो भविष्यतीत्यर्थः ॥ ३० ॥ अनया तर्कविद्यया (सह) भारतीवैभवे कापि शास्त्रावलिः तुल्यतां न एष्यते । ईङ् गतौ, अस्माल्लृट् । वाङ्मयेऽनुपमा ते विद्या भविष्यतीत्यर्थः ॥ ३२ ॥ भाग्यस्य भोगस्य भूरिलाभस्य च भाजनम् ॥ ३३ ॥ एवमादिना वाग्विलासेन, वादेन संलापेन (उक्तिप्र-

तस्मिन् गते देववरास्त एतं
संभाव्य वाग्भिः प्रययुर्निकेतम् ॥ ३५ ॥

**वंशानुक्रमः**

बावीनामा समभवदलं कोपि तद्वंशचूडा-
रत्नं, कीर्तेः सदनमवनीमण्डनं शास्त्रतत्त्वम् ।
स्फूर्तेर्मूर्त्तिर्मदनमहिमा भारतीभागधेयं
क्षोणौ यस्य क्रतुभिरभवद्दीक्षितं नामधेयम् ॥ ३६ ॥

स दक्षिणो दक्षिणदिग्विभागा-
त्काशीपुरीं प्राप धनर्द्धियुक्तः ।
चकार वासं च निकारशून्य-
स्तस्यां सदाचारनवावतारः ॥ ३७ ॥

धनकनकसमृद्धो दानदाक्षिण्यशीलो
बहुविधबुधवृन्दं मानयन् रत्नवर्षैः ।
निखिलनृपतिलोकान् लालयन्वाग्विनोदै-
र्निजगुणसुमनोभिर्वासयामास विश्वम् ॥ ३८ ॥

आसीत्सूनुस्ततोऽस्माद्विधुरिव जलधेः कोपि लिङ्गोजिशर्मा
तस्याभूद्विश्वनाथस्तदनु च समभून्मण्डलस्तस्य सूनुः ।

---

स्युक्तिरूपेण ) च सादरीकृतः ॥ ३४ ॥ देववराः शिवादयः । शिवस्यागमनं ग्रन्थकृता स्वयमेवोक्तं पूर्वम् । अत्र आदिपदप्रयोगेण अन्येऽपि देवा आगता अभूवन्निति पूर्वमवसेयम् ॥ ३५ ॥ मदनवत् ( रूप–)–महिमा यस्य ॥ ३६ ॥ निकारेण आत्मावमाननेन शून्यः ॥ ३७ ॥ धनैः कनकेतरैर्गोगृहादिभिः, कनकेन च समृद्धः ॥ ३८ ॥ त्रिजगतीलावण्यस्य

एते यज्ञाप्तदीक्षास्त्रिपुरहरपुरीवाससंपूरितेच्छा
वैराग्यज्ञानभक्तिद्रविणसुयशसां कल्पवृक्षा बभूवुः ॥३९॥
काचिन्मण्डलदीक्षितस्य समभूत्कन्या मनोहारिणी
यामाहुः खलु पद्मिनीमिति बुधाः सामुद्रिकैर्लक्षणैः ।
नाम्ना चारुमती सुचारुचरिता पद्मालयेव स्फुर-
द्रूपौदार्यगुणान्विता त्रिजगतीलावण्यशैवालिनी ॥ ४० ॥
आकर्ण्य तस्याः स्पृहणीयरूपं
दिल्लीपतिस्तां चकमे गुणाढ्याम् ।
नानाविधैर्नाप यदा प्रयत्नै-
स्तदा रुरोधास्य गृहं समन्तात् ॥ ४१ ॥
रुद्धे गृहे दीक्षितवासवोपि
स्वमोचनोपायमनीक्षमाणः ।
स्वरोधकान् द्रव्यगणैः प्रतोष्य
नावं समारुह्य ययौ प्रयागम् ॥ ४२ ॥
वासांसि धान्यानि धनानि पात्रा-
ण्यन्यानि वस्तून्यपि तस्य तत्र ।
स्थितानि काश्यां, स पुनः प्रयागं
प्रति प्रतस्थे सकलत्रपुत्रः ॥ ४३ ॥
मध्येमार्गं बन्धुवर्गान्विचिन्व-
न्पौत्रं स्वस्य प्राणतोपि प्रियं सः ।

---

शैवालिनी नदी ॥ ४० ॥ दीक्षितेषु इन्द्रः ॥ ४२ ॥ सौम्य ! सोपि

नैवापश्यन्मण्डले मण्डलेशः
शोकाक्रान्तस्तत्र संमूर्च्छितोऽभूत् ॥ ४४ ॥
यथाकथंचित्समवाप्तसंज्ञः
पार्श्वे स्थितं दासमथो बभाषे ।
'त्वं धर्मपुत्रोसि मम प्रयाजि-
न्मामुद्धरस्वाद्य विपत्समुद्रात् ॥ ४५ ॥
दोलासंस्थो विश्वनाथस्य पुत्र–
स्तत्रैवास्ते, किं करोमि क्व यामि ।
प्राणास्तन्मे रक्षणीयास्त्वयैते
सौम्यानेयः सोपि सौम्यैरुपायैः ॥ ४६ ॥
बद्धा तिष्ठत्वत्र नौकापि ताव–
त्प्राणप्रेष्ठो यावदायाति बालः ।
याहि त्वं, मे साधयस्वाद्य कार्यं
भूयात्तेऽयं भूतनाथः सहायः' ॥ ४७ ॥
अथ प्रयाजी स निजप्रयाणे
स्मरन्मृडानीपतिमुग्रवीर्यम् ।
आलक्ष्य सुप्तानवरोधिलोका–
नन्तर्गृहं च प्रविवेश सद्यः ॥ ४८ ॥
हिन्दोलिकायां सुखसुप्तमेनं
बालं विशालाक्षमथाभ्यपश्यत् ।

---

सौम्यैरुपायैः (न तु बलविग्रहादिना) आनेयः ॥ ४६ ॥ सर्वं वृत्तान्तम्.

कृत्वा तमुत्सङ्गगतं समेत्य
स्वस्वामिनं सर्वमुदन्तमाख्यत् ॥ ४९ ॥
आनन्दपूरो मनसि क्षणेऽस्मि-
न्बालावलोकादथ तस्य योभूत् ।
मन्ये न मान्यो गलदश्रुदम्भा-
दासीद्बहिर्नेत्रपथात्स एव ॥ ५० ॥
प्रयाजिने दातुमशक्नुवानो
मानोचितं किञ्चन वित्तमस्मै ।
यज्ञोपवीतं निजकण्ठदेशा-
दुत्तार्य तत्कण्ठगतं व्यतानीत् ॥ ५१ ॥
तस्मिन्नथ ब्राह्मणतां प्रपन्ने
तपोबलाद्दीक्षितपुङ्गवस्य ।
तद्वक्त्रपद्मादथ वेदशास्त्र-
पुराणवाणी स्फुटमाविरासीत् ॥ ५२ ॥
प्रयागमेत्याथ वसन्द्विजाते-
र्निलीय सद्मन्यथ मण्डलेशः ।
विज्ञापितो बान्धवभूमिभर्तुः
स्वरूपतो ज्ञातचरोपि चारैः ॥ ५३ ॥

---

अकथयत् । आङ्पूर्वकात् चक्षेः ख्यातेर्वा लुङ् ॥ ४९ ॥ न मान् यः अवकाशं न प्राप्नुवन् सन् ॥ ५० ॥ स्वरूपेण आकारमहिम्ना । ज्ञातचरोपि पूर्वतो ज्ञातोपि । बान्धवदेशभूपस्य चारैर्गुप्तचरैर्विज्ञापितः ॥ ५३ ॥ स्वगुरोः परी-

राजा बान्धवदेशभूपरिवृढो गोपालसिंहस्तदा
दीक्षायां स्वगुरोः परीक्षणमथो कृत्वा स वव्रे ततः ।
श्रीमन्मण्डलदीक्षितं स्वपरमाचार्यं ददौ चादरा-
देवर्षिप्रमुखान् शताङ्कगुणितान्ग्रामान् स तस्मै पुनः ५४

आच्छाद्य क्षौमवासोभिः क्षितिं स्वनगरावधि ।
गोपालसिंहस्तं निन्ये प्रयागान्निजपत्तनम् ॥ ५५ ॥

अदीक्षयद्बान्धवदेशनाथं
समेत्य तत्रामलमन्त्रदानात् ।
प्रदापयामास पुरोहितस्य
कन्यां च तस्मै नवबाडवाय ॥ ५६ ॥

तत आगत्य देवर्षिग्रामं राजर्षिमानितः ।
दीक्षितर्षिः सुहृद्बन्धुवर्गयुक्तोऽवसत्सुखम् ॥ ५७ ॥

चक्रे तत्राथ राज्यं निजकुलसहितो मण्डले मण्डलेशो
विद्या–सौभाग्य–भाग्योदय–विमलयशः–पुण्यपूर्णप्रतिष्ठः ।
तस्मादासीदुदासीकृतरिपुनिवहो विश्वनाथस्तनूज-
स्तस्मादुद्दामधामा समजनि तनयो मण्डलोऽखण्डलक्ष्मीः ५८

---

क्षणं कृत्वा दीक्षायां स गोपालसिंहो मण्डलदीक्षितं परमाचार्यं वव्रे इति योजना ॥ ५४ ॥ क्षौमवासोभिः कौशेयवस्त्रैः, स्वनगरपर्यन्तं क्षितिं आच्छाद्य, (पगपाँवडा) ॥ ५५ ॥ नवबाडवाय नवीनब्राह्मणाय तस्मै राज्ञे पुरोहितस्य कन्यां दापयामास । अनेन सिध्यति यद्बान्धवदेशाधिपतिर्ब्राह्मण आसीदत एव पुरोहितपुत्र्या साकं तस्य विवाहं मण्डलेशः कारयामास ॥ ५६ ॥ तत्र मण्डले ('देवर्षि' आदिग्राममण्डले) । उदासीनाः कृताः रिपुनिवहा येन । वैरिणोपि वैरिभावं तत्यजुरिति भावः । उत्पूर्वकादास्तेः

कर्पूरचीरधाराप्रवाह इति कनकशब्दान्ते ।
तस्य त्रिलोकविदितं नामासीदर्थिकल्पतरोः ॥ ५९ ॥

देवर्षिग्रामवर्यो जयति, यमुनया संगता यत्र गङ्गा
बावीजीदीक्षितानां समभवदतुला तत्र वंशस्य वृद्धिः ।
तत्रासंख्यक्रवर्तिप्रसृमरयशसः केपि, केचित्सिँवर्या
गङ्गायाः सेवयैते त्रिपथविगलितास्त्रीणि नामानि भेजुः ६०

कनीयान्मण्डलेशस्य काशीनाथ,—स्तदात्मजः ।
जगदीशोऽजयत्कीर्त्या कवीन्दिल्लीशमानितान् ॥ ६१ ॥
परमेश्वरशर्माऽभूत्तत्पुत्रः संमतः सताम् ।
तस्माद् गोपालरायोऽभूद्दीपाद्दीप इवोद्गतः ॥ ६२ ॥
दीक्षितानां विश्वनाथशर्मणां कृष्णदीक्षितः ।
भ्रातासीत्तत्कुले जज्ञे भट्टः कल्याणपूर्वकः ॥ ६३ ॥
श्रीगोविन्दोऽभवत्तस्मात्कवीनामग्रणीः सुतः ।
स इदानीं वने काम्ये मरुत्वानिव तिष्ठति ॥ ६४ ॥
रणछोडप्रभृतयो बाबूरायादयः परे ।
देवर्षयो गोकुलस्था इत एव त उद्गताः ॥ ६५ ॥

---

पचाद्यच् ततश्शिवः ॥ ५८ ॥ कनकादिदानशौण्डतया 'कनककर्पूरचीरधाराप्रवाह' इति नामासीत् ॥ ५९ ॥ चक्रवर्तिषु प्रसृमरयशस्तया 'चक्रवर्तिनः' सिँवरीगङ्गायाः सेवया 'सिँवरी' इति, द्वाभ्यां भेदाभ्यां सह देवर्षिग्रामाधिपतीनां देवर्षिचक्रवर्तिसिंवरीति त्रयो भेदा बभूवुरित्यर्थः ॥ ६० ॥ रणछोडबाबूरायादयो गोकुले स्थिताः ते देवर्षय इत एवोद्गताः ॥ ६५ ॥

हरिहर इति नाम्ना विश्रुतो मण्डलेशा-
त्समजनि सुखसंपत्संयुतः कोपि सूनुः ।
गिरिधरगिरिपुत्रीगीर्गिरीशैकदेहो
गगनचरगणैरप्यादृतप्रेमदेहः ॥ ६६ ॥

भूमण्डलाखण्डलतः स लेभे
क्षोणीकवीनामधिपत्वभावम् ।
देवर्षिनाम्नि प्रकटप्रभाव-
श्चकार राज्यं निजपत्तनेस्मिन् ॥ ६७ ॥

सप्ताप पुत्रीः स पवित्रमूर्तिः
पुत्रं न चैकं कुलतारणाय ।
धर्मैर्धुरीणैर्धरणीधवानां
धुरि स्थितो धाम हरेर्जगाम ॥ ६८ ॥

तस्मिन्प्रपन्ने परलोकयात्रां
तस्यानुजो माधवतुल्यतेजाः ।
श्रीमाधवो ग्रामशतस्य राज्यं
प्रहर्षयन्पौरजनान्प्रपेदे ॥ ६९ ॥

अकबरनृपतेरवाप्य मानं
सनयैः स्वैस्तनयैः समर्चिताङ्घ्रिः ।

---

विष्णु–पार्वती–सरस्वती–शिवानामेकदेहः, एतैरेव मूर्तिर्धारितेति यावत् । अत एव देवैरपि आदृतः प्रेम्णा देहो यस्येदृशः । अथवा, देवैरपि आदृता प्रेमदा ईहा चेष्टा यस्य सः ॥ ६६ ॥ भारतचक्रवर्तिनः सकाशात्कविसार्वभौमत्वं लेभे ॥ ६७ ॥ धुरीणैः श्रेष्ठैर्धर्मैः । धरणीधवानां राज्ञाम् ॥ ६८ ॥

चतुराननचातुरीविचित्रो
हरिसेवारसलोलुपः स आसीत् ॥ ७० ॥
वृथाकल्पनाजल्पनाऽपेतचित्तः
स्वधर्माय वित्तोपपत्तिं ततान ।
हरिध्यानधौताशयः शान्तिनिष्ठो
न संसारतापं प्रपेदे कदाचित् ॥ ७१ ॥
कवीश्वराणामथ पण्डितानां
धुरि स्थितो वैष्णवधर्मनिष्ठः ।
गङ्गातटे श्रीयमुनातटे वा
चरन्मनः स्वं रमयांचकार ॥ ७२ ॥
यः श्रीशुकमुखोद्गीर्णश्रीभागवततत्त्ववित् ।
'अनन्यानन्दिनीं' चक्रे टीकां वैष्णवसत्कृताम् ॥ ७३ ॥
पुत्राः साधुचरित्राः क्षोणीसुत्राममानपूजार्हाः ।
वंशीधर–मुरलीधर–गिरिधर–संज्ञास्त्रयोऽभवँस्तस्य ७४
दयादानदाक्षिण्यविद्याप्रवीणः
कलाकल्पनाकल्पशाखी नवीनः ।
स वंशीधरस्तेषु वंशीधरांशो
हृदेरामभूमीशमित्रं बभूव ॥ ७५ ॥

---

चतुराननवत् चातुर्येण विचित्रः ॥ ७० ॥ स्वधर्मायैव वित्तोपपत्तिं सर्वस्वविनियोगं चकार ॥७१॥ क्षोणीसुत्राम्णः पृथिवीन्द्रस्य मानपूजार्हाः ॥७४॥ कलाविषये याः कल्पनाः नूतनाविष्कारास्तेषु प्रवीणः । अथवा कलया चातुर्येण याः कल्पनाः कवित्वोत्प्रेक्षणानि । हृदयराम इत्यस्य भाषाप्रसिद्ध्या च्छन्दोनु-

लावण्यनाम्नि नगरे स चकार वासं
प्रेम्णा नृपस्य विदधे च परप्रकाशम् ।
द्वावेव तत्र वसतः किल रामकृष्ण-
नारायणाविति बभूवतुरात्मजातौ ॥ ७६ ॥

लब्ध्वा विद्या निखिलाः पण्डितराजाज्जगन्नाथात् ।
नारायणस्तु दैवादल्पायुः स्वःपुरीमगमत् ॥ ७७ ॥

अनूपनगरे ततस्त्रिपथगामिनीये तटे
चकार मुरलीधरो हयशिरःसमाराधनम् ।
स तेन परितोषितः कमलया समालङ्कृतः
समागमदुमापतिप्रमुखदैवतैः संयुतः ॥ ७८ ॥

वराभीतिविद्यासुधाकुम्भपाणि-
स्तदानीं सदानीतसिंहासनस्थः ।
'वरं ब्रूहि विप्र प्रसन्नोस्मि तुभ्यं'
स ऊचे वचो नूतनस्तोत्रतुष्टः ॥ ७९ ॥

निशम्य सम्यक् स हरेः समीरितं
तदा मुदा वाचमुवाच वाडवः ।
'प्रदेहि मे देहिषु दुर्लभां मतिं
विद्यां यशः संततिमैश्वरीं गतिम्' ॥ ८० ॥

---

रोधात्तथा बन्धः ॥ ७५ ॥ परस्य परमपुरुषस्य प्रकाशमुल्लासम् ॥ ७६ ॥ त्रिपथगामिन्या इदं त्रिपथगामिनीयम् ॥ ७८ ॥ सद्भिः आनीते सिंहासने तिष्ठतीति । तुभ्यम् त्वत्कृते ॥ ७९ ॥ अमलानि नामधेयानि यस्य स हयग्रीवः,

तथास्तु ते बाढमिति ब्रुवाणो
जगाम धामामलनामधेयः ।
विप्रोपि विद्यार्थमसौ नृगेयः
काशीपुरीं प्राप बुधैरजेयः ॥ ८१ ॥

मतितरणिमवाप्य तत्र तूर्णं
षडपि च शास्त्रसरित्पतींस्ततार ।
क्वचिदपि न विमोहमाप सद्यः
स्मृतहयशीर्षगुणप्रभावविद्यः ॥ ८२ ॥

काव्यव्याकृतिनाटकाम्बुतरणिः साहित्यजीवः कला-
कौशल्याङ्गिरसः कवित्वरचनाचातुर्यवल्मीकभूः ।
वेदाख्यानविरिञ्चिचारुचरितः स्मृत्यर्थवैवस्वतः
किं चामानपुराणमानकुशलो योगाङ्गचन्द्रोदयः ॥ ८३ ॥

शब्दाब्धावपि शेषशालिधिषणः सांख्येऽथ पातञ्जले
वेदान्ते गुरुगौरवोन्नतमनाः कोशेषु कोशोऽपरः ।
मीमांसोदधिगाहने गहनधीर्वैशेषिके विश्रुत-
स्तन्त्रार्थामलमर्मसु त्रिनयनो न्यायाब्धिनाथोऽभवत् ॥८४॥

---

धाम जगाम ॥ ८१ ॥ स्मृताः हयशीर्षगुणप्रभावेण विद्या येन सः ॥ ८२ ॥ काव्य-व्याकरण-नाटकरूपे अम्बुनि तरणिसदृशः । साहित्यस्य जीवः (प्राणः) । आङ्गिरसो बृहस्पतिः । वल्मीकभूर्वाल्मीकिः । अप्रमाणं यत्पौराणिकज्ञानं तस्मिन्कुशलः । योगशास्त्रस्य विषये प्रकाशकत्वाच्चन्द्रोदयः ॥८३॥ गुरुवत् बृहस्पतिवत् गौरवेणोन्नतमनाः । कोशानां विषये कोषसदृशः,

जितसकलबुधेन्द्रवृन्दचूडा–
मणिनिकरद्युतिरञ्जिताङ्घ्रिपट्टः ।
पदमभिनवमाप सद्य एष
त्रिपुरहरामलपत्तनप्रतिष्ठः ॥ ८५ ॥

विद्यावागीशशर्मा सकलमुनिजनस्तुत्यकर्मा स आसी–
न्नित्यं श्रीकृष्णधर्माचरणपटुमतीन्मानयामास भक्तान् ।
व्याप्ता विश्वम्भरान्तःकमलसदनया विद्यया यस्य कीर्तिः
स्फूर्तिः शास्त्रेष्वनन्ता समजनि जगतीजीवजाते न यादृक् ॥ ८६ ॥

भूनरेन्द्रादसौ रत्नपूर्णान् वसू–
नाप जापप्रभासुप्रभावप्रथः ।
न्यायविद्याविधौ वादिपञ्चाननः
सञ्चिकाय स्वयं स्वं यशो भासुरम् ॥ ८७ ॥

तस्यानुजोऽथ जगतीजगतीपतीनां
सेवां विहाय जगतीड्यतमं तुतोष ।
वंशीधराच्च मुरलीधरतस्तदानीं
लब्ध्वा धनानि विविधानि विधानदक्षः ॥ ८८ ॥

---

(आकरः) ॥८४॥ त्रिपुरहरस्य शिवस्य अमले पत्तने (काश्याम्) प्रतिष्ठः स्थितः, स्तिष्ठतेरच् । अभिनवं पदम् आप ॥ ८५ ॥ विद्यावागीशशर्मेति प्रथितविरुदः । अन्तःकमलैव सदनं यस्यास्तया विद्यया सकलधरा व्याप्तेति यावत् ॥८६॥ जापप्रभया सुप्रभावा प्रथा (प्रसिद्धिः) यस्य ॥ ८७ ॥ जगत्याः पृथिव्या ये जगतीपतयः राजानस्तेषाम् । जगति ईड्यतमम्—अथवा जगत्याः ईड्यतः

अगंणितगुणगणपात्रं गिरिधरपुत्रो बभूव भाग्यनिधिः ।
विमलकलाकुलशीलनगततन्द्रो रामचन्द्र इति ॥ ९४ ॥

तस्य द्वावथ पुत्रौ गिरिधर-मधुसूदनौ भवतः ।
भोक्तुं स्वर्ललनानां सुखं गतौ तौ सुरेन्द्रपुरीम् ॥ ९५ ॥

श्रीमान् बालमुकुन्दो मुरारिभट्टश्च वर्द्धितप्रणयौ ।
जज्ञाते द्वावेतौ वंशमणी गोकुलोत्सवात्तनयौ ॥ ९६ ॥

यशःप्रतापाविव मूर्त्तिमन्तौ
विवेकधार्माविव वर्धमानौ ।
कृतावतराविव पुष्पवन्तौ
द्वावेव भूमौ जयतः समर्थौ ॥ ९७ ॥

श्रीवैष्णवाचारविदां वरिष्ठा–
च्छ्रीकृष्णचन्द्रामलभक्तिनिष्ठात् ।
मुकुन्दभट्टादुदितो गुणाढ्य–
श्चकास्ति सूनुर्व्रजभूषणाख्यः ॥ ९८ ॥

श्रीकृष्णशर्मा तनयस्तदानीं
श्रीलक्ष्मणादाहितलक्षणोभूत् ।
वशीकृतो येन गुणैरुदारै–
र्बुन्दीपतिः श्रीबुधसिंहभूपः ॥ ९९ ॥

मीमांसापरिशीलने पटुमतिः सांख्याब्धिपारंगमो
न्यायानर्गलवाक्प्रपञ्चचतुरो वेदान्तसिद्धान्तधीः ।

---

नदिया–नवद्वीपादिषु ॥ ९३ ॥ विमलकलासमूहस्य शीलने गततन्द्रः ॥९४॥

रामकृष्णस्ततस्तेन विज्ञप्तैः सादरीकृतः ।
न ययौ म्लेच्छदेशं स विप्रागमबहिःकृतम् ॥ १०५ ॥

ततः स आकारित आदरेण
श्रीकृष्णसिंहेन नृणां वरेण ।
अनूपनाम्नो नगरस्य नूनं
विश्वम्भराभागमलंचकार ॥ १०६ ॥

गङ्गापयःस्नानपवित्रमूर्तिः
श्रीरामनामस्मृतिबाधिताघः ।
श्रीकृष्णसिंहादमितानि लेभे
वसूनि शिष्यान्निजभक्तियुक्तात् ॥ १०७ ॥

पुरन्दरदराहूतः स उदारगुणाग्रणीः ।
सुरसिंहैस्ततो लेभे कृष्णसिंहः सुरालयम् ॥ १०८ ॥

तस्मिन्प्रपन्ने किल नाकलोकं
तदा मुदा श्रीजयसिंहसूनुः ।
श्रीकीर्तिसिंहः कुतुकी कलासु
समाह्वयद्राजकविं नरेन्द्रः ॥ १०९ ॥

समानसौ सप्त रविप्रकाशः
कामाटवीमन्दिरलब्धवासः ।
निनाय नारायणनामधेयै-
स्ततान तत्रापि च पुण्यराशीन् ॥ ११० ॥

---

सुरसिंहैरिति करणे तृतीया । पुरन्दरेण दरं शीघ्रं आहूतः ॥ १०८ ॥ सप्त समान् वत्सरान् ( अत्यन्तसंयोगे ) । पुंस्त्वमपि ज्ञायते । कामाटवी काम-

त्यक्त्वा श्रीकीर्तिसिंहं तदनु स दनुजारातिभक्त्याप्तकाम-
स्तत्पित्रा मानमानन्दितमधुरमना मानसोन्माथिमूर्तिः ।
दत्त्वा पादं रिपूणां शिरसि, च सुहृदां पाणिपङ्केरुहाग्रं
जाग्रद्विद्योद्यतस्तत्पुरि मुदममितामाप मीनध्वजश्रीः १११

तस्मिन्गते मोक्षपदं क्षितीशे
क्ष्मारक्षणे बुद्धिविचक्षणश्रीः ।
श्रीरामसिंहस्तनयस्तदीयः
श्रीरामकृष्णं रमयांबभूव ॥ ११२ ॥

तस्मिन्नपि स्वर्ललनाविलास-
सुखानि भोक्तुं दिवमभ्युपेते ।
तत्सूनुरासादितभूमिभारो
बभूव राजा किल कृष्णसिंहः ॥ ११३ ॥

गुरुवत्कृष्णसिंहेन रामकृष्णोथ मानितः ।
कञ्चित्कालं वसंस्तत्र बुभुजे स्वर्गवत्सुखम् ॥ ११४ ॥

कलिन्दकन्याम्बुपवित्रितायां
दिल्लीशपुर्यां वसतोऽथ तस्य ।
जीवो ययौ धामनि दानवारे-
रस्थीनि गङ्गासलिले ममज्जुः ॥ ११५ ॥

---

वनम् ॥ ११० ॥ दनुजारातिर्हरिः । तत्पित्रा कीर्तिसिंहपित्रा । मानस्य मया लक्ष्म्या आनन्दितमधुरमनाः । जाग्रत्यां विद्यायामुद्यतः ॥ १११ ॥ दानवा-

माधव—हरिहर—गङ्गाधरसंज्ञाः सूनवस्तस्य ।
जीवातवो जनानां काले तस्मिन्स्थितास्त एव परम् ११६

श्रीमाधवस्तेषु विशालभाल-
श्चाकर्णनीलोत्पलपत्रनेत्रः ।
उदारचेताः शुभवाग्विलासो
वंशाभिमानः कृतदेवगानः ॥ ११७ ॥

व्याकृत्यावर्तगर्ते श्रुतिहरिशयने तर्कनक्रक्रमाढ्ये
काव्यालङ्कारवीचौ स्मृतितरुणतरौ शुद्धमुक्तापुराणे ।
कोषश्रीरत्नकोषे प्रतिफलितयशःपूरनीरे गभीरे
केलिं यद्गानसिन्धौ प्रकटतरमियं भारती चर्करीति ११८

विद्यावतां मन्त्रविदां समाजे
वाचस्पतौ किञ्चन सन्दिहाने ।
प्रष्टुं तमर्थं सुरनायकेन
तदा मुदाऽऽकार्यत माधवोपि ॥ ११९ ॥

---

रेर्धामनि वैकुण्ठे ॥ ११५ ॥ जनानां जीवातवो जीवनौषधभूताः । ते एव तस्मिन् काले स्थिताः ॥ ११६ ॥ कृतं देवानां गानं स्तुतिर्येन ॥११७॥ यस्य माधवस्य गानरूपे सिन्धौ समुद्रे, भारती केलिं अतिशयेन करोति । व्याकृतिरेव आवर्तगर्तो यस्मिन् । श्रुतिर्वेद एव हरिशयनं शेषो यस्मिन् । स्मृतिरेव तरुणतरा तरिः (नौका) यस्मिन् । शुद्धमुक्ताफलसदृशानि पुराणानि यस्मिन् । यशःपूर एव नीरं यस्मिन् । इत्यादीन्यङ्गरूपकाणि

अद्यापि तस्यां निवसन्सभायां
सभ्यैः समस्तैरुपलालिताङ्घ्रिः ।
श्रीमाधवः स्वर्गसुखानि विन्दन्
क्षोणीतले नैव मनः करोति ॥ १२० ॥
आनन्दरामः खलु तस्य पुत्रः
सदा सदाचारपवित्रिताङ्गः ।
चकास्ति नान्हेन्द्र इति प्रसिद्धः
श्रीकृष्णपुर्यां सुखसम्पदाढ्यः ॥ १२१ ॥
गङ्गाधरोपि स्फुरितानुभावः
श्रीजाह्नवीतीरसमर्द्धितश्रीः ।
कलत्रपुत्रान्वित एव लेभे
पन्नापतिप्रौढपुरीविलासान् ॥ १२२ ॥
हरिहर इति नाम्ना रामकृष्णात्मजोयं
व्यरचयदथ वंशज्ञानसिद्ध्यै प्रबन्धम् ।
अयमधिकमनोज्ञः पण्डितानां कवीनां
जनयतु सुखसम्पत्सौष्ठवं सेव्यमानः ॥ १२३ ॥
कलाकमलशालिनी गुणगभीरनीराकुला
सदागमनिषेविता शुभसपक्षवृन्दाश्विता ।

---

॥ ११८ ॥ माधवः परलोकं जगामेत्यर्थः । पर्यायोक्तम् ॥ ११९ ॥ तस्यां स्वर्गीयसभायाम् (सुधर्मायाम्) सभ्यैः देवैः ॥ १२० ॥ श्रीकृष्णपुर्यां मथुरायाम् ॥ १२१ ॥ पन्नापतिप्रौढपुरी कृष्णपुरी ॥ १२२ ॥ अयं प्रबन्धः । सेव्यमानः सुखसम्पदां सौष्ठवं सौन्दर्यं (सौकर्यं) जनयतु ॥ १२३ ॥ सदा आगमैः (वेदैः) निषेविता । नदीपक्षे अगमैः वृक्षैः 'शैलवृक्षौ

सुशिष्यतरणिस्तृता सितयशस्तरङ्गोज्ज्वला
नदी विजयतेतरां विमलवंशभूभृद्भवा ॥ १२४ ॥

बावीदीक्षितमूलकः सुमनसामानन्दनो माधव—
स्कन्धस्तत्सुतशाखिकः शुभदलः श्रीरामकृष्णादिभिः ।
भट्टाचार्यसुतावदातकुसुमस्तत्पुत्रपौत्रादिभिः
प्रोद्यन्मञ्जुफलो जयाय भवतान्मे वंशकल्पद्रुमः ॥१२५॥

भूतं भविष्यद्भजते प्रकाशं
गीर्देवता चेत्कुरुते विलासम् ।
आयुर्न वा गच्छति चेद्विनाशं
मनस्तदा स्यान्मम वर्णनाशम् ॥ १२६ ॥

स्ववंशविख्यापनशीलशाली
कृतो मयायं ललितः प्रबन्धः ।

---

नगावगौ'। शुभा ये सपक्षाः समानपक्षाश्रिता (अनुगामिनः) तद्वृन्दैराश्रिता। पक्षान्तरे शुभैः सपक्षवृन्दैः पक्षिवृन्दैः। सुशिष्यरूपाभिस्तरणिभिः स्तृता आच्छादिता। विमलवंश एव भूभृत् (पर्वतः) तद्भवा ॥१२४॥ सुमनसां बुधानां पुष्पाणां च। भट्टाचार्यस्य मुरलीधरस्य सुता एव सुन्दराणि कुसुमानि यस्य। तस्य मुरलीधरस्य पुत्रपौत्रादिभिः (तद्द्वारा) प्रोद्यन्मञ्जुफलः ॥ १२५ ॥ यदि भूतभविष्यद्वेदी स्यात्, वाग्देवीकृपा स्यात्, आयुर्नाशो न स्यात् (अमरः स्यात्), तदा मे मनः वर्णनायाम् आशा यस्य, ईदृशं स्यात्। अपारस्यास्य वंशस्य मम वर्णनस्याशा नास्तीतिभावः ॥ १२६ ॥ स्ववंशविख्यापनप्रयोजनेऽस्मिन्प्रबन्धे यद् चपलं तत्र काव्यकलाचतुराः क्षाम्यन्तु। काव्यकलाचतुरा जानन्ति यत्काव्यकलाप्रदर्शनार्थं कुत्रचिद्रूपकादाधिक्यं भवति। अतएव तत्र स्ववंशस्य स्वमुखत एव गौरववर्णनं दोषो मह्यं न देय इति भावः। वस्तुतस्तु नात्रातिशयोक्तिः।

यदत्र मे चापलमार्यवर्याः
क्षाम्यन्तु तत्काव्यकलासु धुर्याः ॥ १२७ ॥
इमं प्रबन्धं मम शोधयन्तो
मनोविनोदेषु निवेशयन्तः ।
सन्तो भवन्तो यदि बुद्धिमन्तो
नबुद्धिमन्तोरिह क्वापि भीतिः ॥ १२८ ॥
निरस्य दोषान् गुणगौरवेण
सन्तः प्रबन्धं मम शोधयन्तु ।
दृष्टं न दोषव्यतिरेकि किञ्चि-
द्दोषाकरो यद्विधुरप्यभाणि ॥ १२९ ॥
विस्मृत्य सर्वं करणीयगर्वं
ब्रह्मैकतानं यदभून्मनो मे ।

---

ग्रन्थकर्तुः समये वर्तमानस्य सर्वतोऽर्वाचीनस्य (इदानीमपि 'अलङ्कारकलानिधि'ग्रन्थमहिम्ना प्रसिद्धस्य) श्रीकृष्णभट्टमहाभागस्य यत्सौभाग्यवर्णनं तस्य यथार्थताऽनुभवात् । तस्य यद्वर्णनं तत्सर्वथा सत्यमेव । संस्कृतव्रजभाषापाण्डित्ये तस्मिन्कालेऽद्वितीयोऽभूत्सः । अतएव जयपुरनगरप्रतिष्ठापकेन श्रीजयसिंहनरेन्द्रेण तस्मै कविकलानिधिपदं ग्रामद्वयं च प्रादीयत । अग्रे इदं स्पष्टं भविष्यति । ततश्च स्थालीपुलाकन्यायेन सर्वमत्रत्यं वर्णनं सत्यमिति निर्भ्रान्तं सिध्यतीति दिक् ॥ १२७ ॥ यदि बुद्धिमन्तस्तर्हि शोधनमनोविनोदादिषु निवेशो वाञ्छितः । यदि न, तर्हि नबुद्धेः (अबुद्धेः बुद्धिरहितस्य । नशब्देन सह नैकधेतिवत् समासः) मन्तोः क्रोधात् क्वापि भीतिर्न । अबुद्धेर्जनात्क्रुध्यतोपि को बिभेतीति भावः ॥ १२८ ॥ दोषव्यतिरेकि दोषविरहितम् । अभाणि अगादि ॥ १२९ ॥ ग्रन्थरच-

को वा गुणस्तस्य गवेषणीयो
यन्निर्गुणे ब्रह्मणि लीनमासीत् ॥ १३० ॥
क्षिप्तो गदापाणिपदाब्जयुग्मे
पद्यप्रसूनस्तबको ममायम् ।
समीरणादाविकसन्नशेषं
सभाप्रदेशं सुरभीकरोतु ॥ १३१ ॥
दौहित्रः श्रीनिवासस्य पौत्रो वंशीधरस्य च ।
पुत्रः श्रीरामकृष्णस्य प्रबन्धं व्यदधाद्धरिः ॥ १३२ ॥

इति श्रीहरिरायकृतो बावीजीदीक्षितकुलप्रबन्धः समाप्तः ॥



नायां मे मनो ब्रह्मैकतानमासीत्, अत एव यदि मम काव्ये कश्चन गुणो न स्यात्तर्हि न विरुद्धम् । ब्रह्मणो निर्गुणत्वान्मम च मनसो ब्रह्मणि लीनत्वादित्याशयः ॥ १३० ॥ गदापाणेः श्रीविष्णोः । समीरणात् सम्यक् ईरणात् पठनात् अशेषं यथा स्यात्तथा आ विकसन् चेतसि व्याप्नुवन् सन् । पुष्पस्तबकपक्षे समीरणाद्वायोः ॥ १३१ ॥

# ग्रन्थकर्तुर्वंशवृक्षः ( पूर्वभागः )



अथ ग्रन्थकर्तुर्नवनिर्मितो



# वंशपरिचयः

→॥ दोहाच्छन्दः ॥←

एतदवधि षोडशशतकशाखान्तं या शास्ति ।
गौतमगोत्रपरम्परा परानुगमलभ्यास्ति ॥ १ ॥

'कुलप्रबन्ध'कविं हरिहरभट्टमारभ्य षोडश-सप्तदशशतकयोः शाखापर्यन्तं या वृत्तान्तं सूचयति, सा गौतमगोत्रसन्ततिः परेणान्वेषणेन लभ्यास्ति । तथा च प्राचीनग्रन्थानामालोडनेन यत्किञ्चिदवगतं तदिह निबध्यते इति भावः ॥ १ ॥

## ॥ पुरुषोत्तमगोस्वामी ॥

कवित्तच्छन्दः (घनाक्षरी)

गौतमसगोत्रधरतैलङ्गद्विजानां वंशो
व्याप्तुवत्प्रशंसो बुन्दि-ढुण्ढारेषु संययौ
अम्बरनरेशभुजविक्रमविभवमय्यां
षोडशशताब्द्यां वसन्नम्बरे स निर्बभौ ।

कोमलमधुरवर्णमैत्रीकलालास्यकरो
दीपितशृङ्गारभरो भूरिविभां निर्ममौ
काव्यकलालक्ष्मीगेहलक्ष्मणमहोदधितो
जनितः श्रीकृष्णकविकलानिधिरुद्धभौ ॥ ५ ॥
ये काव्यप्रकाशसूचुरलङ्कारकलानिधौ
श्रीमज्जयसिंहभूपमानसमुदावहे
रामायणं कृत्वाऽवहन् रामरासाचार्यपदं
वीणाः संनदन्ति येषां काव्ये माधुरीवहे।
बुन्दीनरपालबुधसिंहयशोविख्यापकान्
'लाल' कविनाम्ना कृतकाव्यान्प्रमिमीमहे
श्रीमज्जयसिंहदत्तकाव्यकलानिध्यभिधान्
श्रीकृष्णाभिधानकविविबुधान् स्तुवीमहे ॥ ६ ॥

यस्मिन् कविकलानिधौ उदिते सति। कविगोष्ठ्याः प्रकृष्टा कान्तिरभूत्। सभारूपा कैरविणी कुमुदिनी निर्वृता, सुखिताऽभवत्। पद्माकरः कमलखण्डः, कलानिधेः कलामभ्युपगच्छन्नपि नियतिवशात्संकोचं प्राप्नोति। पक्षान्तरे, एकोनविंशशतके ( संवत् १८१० ) उत्पन्नः पद्माकरकविः शब्दालङ्कारवर्णमैत्र्यादिषु कविकलानिधिविरुदमण्डितस्य यस्य कलामनुजीवन्नपि शब्दालंकारमात्रप्राधान्यात् निर्मीलनं तत्तुलनायां 'शब्दकवि'रिति निग्रहं जग्राह। तदवबोधनार्थं किञ्चिदेकं निदर्शनं दीयते। यथा 'अलङ्कारकलानिधौ' श्रीकृष्णभट्टमहाभागानां पद्यम्—

"ईंगुरसुरंग एडी तरवानि तर मिंडि
चूर ह्वै चरननखचन्द रुचि मिलिगो
अटकि टकोननि, खटकि गोरी पींडुरिन,
लटकि भटकि ऊरूकेलिथंम किलिगो।

नाभीसर बूडि, रोमराजीसों उरझि, त्रिब-
लीनसों बलित गाढ़े ठाढ़े कुच ठिलिगो
मृगमदलेप तम क्योंहूं तरि, चंद उजि-
यारे मन मरकत नैननसो मिलिगो ॥"

एतस्य च्छाया पद्माकरकवेः पद्ये उपलभ्यते। यथा 'जगद्विनोदस्य' ६८ पृष्ठे—

"ईशकी दुहाई शीशफूलते लटकि कट,
लटते लटकि लट कन्धपै हठरिगो
कहै पदमाकर सुमन्द चलि कन्धहूतें
भूमि भ्रम भाईसी भुजामें त्यों भभरिगो।
भाईसी भुजातें भ्रमि आयो गोरी, गोरी गोरी
बांहतें चपरि चलि चूनरीमें अरिगो
हेरे हरै हरैं हरी चूनरीते जोलौ
तोलौ मन मेरो दौरि तेरे हाथ परिगो ॥"

पद्येऽस्मिन् अर्थोपजीवनमविकलमारचय्य 'भूमिभ्रम भुजामें भभरिगो' आदि केवलशब्दाऽम्बरमात्रमधिकमाबद्धं कविना। कतरदनयोर्मधुरमव्यर्थपद्गुम्फितम्, आवश्यकशब्दालङ्कारमण्डितं चेति तु बुधा एव समीक्षन्ताम्।

किं च पद्माकरकविः कविकलानिधेः शब्दसंनिवेशमपि प्रायोऽविकलमपाहरत्, यथा—

"को है यह 'लाल' गलकंचनकी माल
होत जीवन निहाल या पियूख पूर पोखेमें
ऊनियाई भाल चोवा बिदली बिसाल, भरे
चांदनीके जाल इँहिँ आनन अनोखेमें।
छैल इँहिँ ओर छिन कीजै दग छोर, चल्यो
चाहत चकोर चहुं ओर चंद धोखेमें
उझकि उझकि झीने झूने वारी झूमि झूमि
झिझकि झिझकि झुकि झांकत झरोखेमें ॥"

एतद्धि कविकलानिधेः पद्यम् । एतस्य चतुर्थचरणस्थं शब्दसंनिवेशं पद्माकरकविः पद्यस्य प्रथमचरणे निबबन्ध । यथा जगद्विनोदस्य ६७ पृष्ठे—

"उझकि झरोखा ह्वै झमकि झुकि झांकी वाम
श्यामकी बिसरि गई खबरि तमासाकी ।" इत्यादि.

कोमलमधुर—वर्णमैत्रीकलाया लास्यकरः उल्लासकरः । मधुररचना-सौष्ठवेन दीपितः परिपोषं प्रापितः शृङ्गाररसो येन सः । विभां कीर्तिम् । कलानिधि-(चन्द्र—)—पक्षे तु—उद्दीपकत्वात्सर्वं समञ्जसमेव । लक्ष्मणभट्ट-रूपान्महोदधितः । महोदधिः किल लक्ष्मीगृहम्, अयं हि काव्यकलालक्ष्म्या गृहम् ॥ ५ ॥

'अलङ्कारकलानिधिनामा व्रजभाषामयः साहित्यस्य परमोच्चकोटिको ग्रन्थः । एष हि जयपुरनगरनिर्मातॄणां श्रीसवाईजयसिंहदेवानामाज्ञया निर्मितः । अत्र हि काव्यप्रकाशस्याधारेण अलङ्कारशास्त्रस्य विस्तरतस्तत्त्वमा-विष्कृतम् । येषु मर्मस्थलेषु चतुराष्टीकाकृतोपि मुह्यन्ति, तेषु स्थलेष्वेभिः तथा स्फीतोर्थ उपनिबद्धो यं विलोकयतः सहृदयस्य बलादेषु श्रद्धोत्पद्यते ।

रामायणनिर्माणस्य कारणमेवं श्रूयते—कदाचिद् सभामध्यमास्थितः श्रीजयसिंहधरणीन्द्रः—"श्रीकृष्णवत् रामचन्द्रस्यापि रासप्रसङ्गवर्णनमस्ति न वेति" कविकोविदैः साकं स्निग्धं संलपन्नासीत् । सर्वे पण्डिता मौनमा-स्थिता आसन्, परं कौतुकाविष्टमतेः श्रीकृष्णभट्टमहाभागस्य मुखात्सहसा निरसरत्—"अस्ति तादृशं पुस्तकं काश्याम् ।" महाराजस्तु कविकलानिधेस्तां वाचमागृह्य 'मासद्वये तत्पुस्तकमस्मत्सविधे प्रापणीयमिति' साग्रहमाज्ञप्त-वान् । गृहमागतः सोयं कविशेखरो बहुलमसमञ्जसं विचारयामास । यतो नासीत्तादृक्पुस्तकम् । अस्तु तद्दिनादारभ्यैव व्रजभाषामयं 'रामरासा' नामकं रामायणग्रन्थं मासद्वये निर्ममौ । अवधिसमये च महाराजस्य निकटं प्राप-यामास । कविताकलामार्मिको महाराजः कलानिधिमहाशयस्य लेखनीं प्रत्यभिज्ञातवान् । सुबहु प्रीतोऽम्बरधरणीपतिः कलानिधिमहाभागाय अपरिमेयं धनराशिम् 'रामरासाचार्ये'ति पदवीं चोपहृतवान् ।

श्रीकृष्णभट्टमहाभागस्य पूर्वं निवासो बुन्दिनगरेऽभवदिति तस्य रचनातः प्रतीयते। कुलप्रबन्धे हरिहरभट्टैरपि लिखितम्—

"श्रीकृष्णभट्टस्तनयस्तदानीं श्रीलक्ष्मणादाहितलक्षणोभूत्।
वशीकृतो येन गुणैरुदारैर्बुन्दीपतिः श्रीबुधसिंहभूपः॥"

बुन्दीश्वरस्यास्य बुधसिंहस्याज्ञया 'शृङ्गाररसमाधुरी' 'विदग्धरसमाधुरी' नामकौ ग्रन्थौ कविकलानिधिमहाभागेन रचितौ। अलङ्कारकलानिधिप्रभृतिष्वन्यान्येष्वपि पुस्तकेषु बुधसिंहभूपस्य प्रशंसायाः काव्यान्युपलभ्यन्ते। श्रीकृष्णभट्टमहाभागानां काव्यानि प्रायो 'लाल'कविनाम्नाऽङ्कितानि। यथा अलङ्कारकलानिधौ—

"राव अनिरुद्धसिंहजूके राव बुद्धसिंह
रावरे सबल दल चलत तमकसों
लालकवि तितके भुवाल पयमाल होत
खूंदे हयमाल खुरतालकी झमकसों।
भारे होत वारिधि अँध्यारे धूरधार उजि-
यारे दामिनीके असि कारेकी दमकसों
गारे परैं नदिन पगारे परैं वारिधिन
गारे परैं अरिन नगारेकी धमकसों॥"

पद्यमुक्तावल्यामपि—

"देव श्रीबुद्धसिंह त्वदसिजलधरोल्लासिसत्कीर्तिनीरे
तुङ्गप्राच्यादितीरे भवसरसि भवत्साधुवादोर्मिसंघे।
नक्षत्राण्येव हंसाः परिलसितनभोनीलिमा शैवलौघः
पूर्णेन्दुः पद्ममस्मिन् मधुरमधु सुधा देववृन्दा मिलिन्दाः॥"

अनन्तरं तु कलानिधिमहाशयस्यालौकिकप्रतिभया चमत्कृतोऽम्बरधरणीपुरन्दरो बुन्दिभूपालाद्याचित्वा सुबहुसत्कारसंतोषितमेनमाम्बेरनगरे निवासयामास। श्रीकृष्णभट्टमहाभागानां प्रपौत्रैः देवर्षिवासुदेवभट्टैः स्वनिर्मितायां 'राधारूपचन्द्रिका'यां स्ववंशपरिचये एवं लिखितम्—

"छप्पै—दच्छिनदिसि तैलङ्गदेस इक राजत नीको।
तहँके परम कुलीन विप्र कविराज सहीको॥
कृष्णभट्ट इमि नाम, वेद, शास्त्रनमें पारग।
लौकिक वैदिकरीति, कृष्णको जान्यो मारग॥
तिन कियउ ग्रन्थ सब शास्त्रके, रामायन तप तेह भो।
तिनसों जयसाह नरिंदके, गुनगरिमा भल नेह भो॥ १॥
दो०—बुन्दीपति बुधसिंहसों लाये मुखसों जाचि।
रहे आइ आँबेरमें प्रीति रीति बहुभांति॥ २॥"

स्वयं विद्वान् विद्वद्गुणग्राही च श्रीमान् जयसिंहधरणीन्द्रः श्रीकृष्णभट्ट-महाभागानामतुलमादरं चकार। आत्मनो नामाऽमरीकरिष्यन् सोयं श्रीकृष्णभट्टद्वारा अलङ्कारकलानिधिप्रभृतीन् ग्रन्थान् निर्मापयामास। भारतवर्षे दूरदूरपर्यन्तं श्रीकृष्णभट्टसदृशो महाकविर्विद्वांश्च नासीत्। संस्कृते व्रजभाषायां किंबहुना प्राकृतभाषायां चापि श्रीकृष्णभट्टमहाभागानामप्रतिहता कवित्वशक्तिरासीत्, यस्याः परिचयः किञ्चिदग्रे दास्यते। अत एव तेषां पाण्डित्येन मुग्धोयं धरणीपुरन्दरस्तस्मै 'कविकलानिधि'पदकं प्रादात्। यथा हि प्रोक्तं देवर्षिवरमण्डनमहाभागैः 'रावलचरित्रकाव्ये'—

दो०—"द्विजकुलकवि श्रीकृष्ण भय पंचद्रविड तैलंग।
रामायन जिनने कियो रामरासपरसंग॥
विद्वत्कुलके मुकुटमणि, 'काव्यकलानिधि' दच्छ।
दिय किताब जयसाहने सब भुविमें परतच्छ॥"

एतादृशान् श्रीकृष्णभट्टनामकान् कविषु विबुधान् स्तुवीमहे। स्वपूर्वजानामादरार्थं कर्मणि बहुवचनम्। एवमग्रेपि, चरित्रवर्णनविषये एकवचनमपात्तं तेषामुपश्लोकने तु बहुत्वमेव प्रायोजि॥ ६॥

सो०—सत्यसिद्धिसुलभा हि, वाग्देवी वशगाभवत्।
येषां वैभववाहि-विविधकथाः प्रथिताः कुले॥ ७॥

येषां श्रीकृष्णभट्टानाम्। वैभववाहिन्यो नानाकथाः कुले प्रसिद्धाः॥७॥

तदनु स ईशविलास,-मीश्वरिसिंहनृपाज्ञया ।
काव्यं कलयामास, पूर्वभूभृदितिहासगम् ॥ ८ ॥

संस्कृते–ईश्वरविलासनामकं महाकाव्यम्। पूर्वेषां भूभृतां राज्ञामितिहासानुगम्। यथाहि ईश्वरविलासस्य प्रथमसर्गारम्भे—

"आज्ञातः श्रीसवाईश्वरधरणिपतेः प्राप्तभूरिप्रमोदः
संप्राप्योत्साहकश्रीहरिहरसुकवेः संमतं संशयघ्नम्।
काव्यं नव्यं सुभव्यं भुवि रचयति यः प्रीतये पण्डितानां
सोयं श्रीकृष्णशर्मा कृतमति नमति श्रीगुरोरङ्घ्रिपद्मम् ॥"
(हरिहरसुकवेः 'कुलप्रबन्ध'निर्मातुः श्रीहरिहरभट्टस्य) ॥ ८ ॥

प्रलसति पुण्या 'पद्य,-मुक्तावलि'रेतत्कृता ।
जनयति मुदमनवद्य,-त्रिपुरसुन्दरीस्तववरः ॥ ९ ॥

पद्यमुक्तावलिः संस्कृतप्राकृतभाषापद्यानां संग्रहकोषः। त्रिपुरसुन्दरीस्तवराजः शिखरिणीच्छन्दोभिराबद्धस्तन्त्ररहस्यानुगः स्तोत्रग्रन्थः। एनयोः कानिचित्पद्यान्यग्रे आदर्शरूपेणोद्धारिष्यन्ते ॥ ९ ॥

दो०—माधवसिंहनृपो ददा,-वष्टादशशतके च ।
कर्मपुरग्रामं महीं, हथरोहीग्रामे च ॥ १० ॥

कर्मपुरग्रामं संपूर्णम्, हथरोहीग्रामे च शतनिवर्तनात्मिकां (१०० बिगहा) भूमिम्। श्रीमदीश्वरीसिंहदेवस्यानन्तरं श्रीमति माधवसिंहनरपाले जयपुरराज्यस्य धुरं धारयति, श्रीकृष्णभट्टमहाभागस्तमप्यात्मनोऽनुपमेन पाण्डित्येन भूयस्तरां संतोषयामास। अम्बरधरणीन्द्रेण श्रीमज्जयसिंहनरेन्द्रेण साकं गाढपरिचयप्रसङ्गो रामायणनिर्माणेन बभूव। (अनेन अलङ्कारकलानिधेरपेक्षया रामायणं पूर्वनिर्मितमिति सिध्यति।) श्रीमानीश्वरीसिंहभूपालस्तु स्वराज्ये पूर्वतः प्रसिद्धमेनं कवीन्द्रं गुणगणानुरागवशादेव बहु मानयामास। परं पारस्परिकयुद्धोत्तरं यदा श्रीमन्माधवसिंहः सिंहासनारूढोऽभवत्तदा

वृद्धस्य कलानिधिमहाभागस्य मनसि महाराजस्य संतोषविषये किञ्चन संदेहोऽभवत् । परं कलानिधिमहाभागस्य कविताकला श्रीमन्माधवमहीन्द्रमपि प्रसभमावर्जयामास । अतएव श्रीमज्जयसिंहेश्वरीसिंहमहाराजयोः समय एव प्रचार्यमाणा ग्रामवितरणस्याज्ञा श्रीमन्माधवसिंहमहाराजस्य समये पूर्णाऽभवत् । एतस्मिन्समये ग्रामस्य शासनपत्रं (पट्टा) अदीयत कलानिधिमहाभागाय । अयं भावः पद्यमुक्तावलेरनेन पद्येन विज्ञायते—

"श्रीमद्राजाधिराजे सति समुपकृतं भूरि रामायणेन
प्रारब्धादीश्वरेऽभूत्कविविबुधगुणग्राहितैवोपकर्त्री ।
भाति प्रोच्चैररातिप्रकरहरकरः कोविदानां कवीनां
भाग्यैः श्रीमाधवाख्यो नरपतिरधुनाऽकारि केनोपकारः ॥"

शनैः शनैः कविकलानिधिमहाभागस्य गुणैरतिवशीभूतो बभूव श्रीमाधवधरणीन्द्रः । आत्मनो लेखादिकं परमविश्वासभाजनायास्मै प्रेम्णा दर्शयामास । पद्यमुक्तावल्यां स्वयं लिखितं कलानिधिमहाभागैः—

"एकदा माधवक्ष्माधवेन स्वहस्तेनाक्षराणि लिखित्वा यदा मम प्रदर्शितानि तदैवेदं सद्यः पद्यमुत्पादितम्—

श्रीमाधवाम्भोनिधिसंप्रभूत-
रत्नानि नित्यं ललिताक्षराणि ।
श्रीसूर्यवंशोदितदीप्तिमन्ति
जगत्समग्रं परिभूषयन्ति ॥*॥" १० ॥

**किं बहुना नरपतिमनसि, कविकुलकीर्तिररोपि ।**
**भूरिभूमिसम्पदमदु,-र्बुन्दीनरपतयोपि ॥ ११ ॥**

नरपतेर्माधवेन्द्रस्य । कविसमूहस्य कीर्त्तिः अरोपि दृढीकृता । अत एवाग्रे बहुभ्यः कविभ्यः श्रीमाधवेन्द्रेण ग्रामादिसंमानः प्रादायि । बुन्दीनरेशेन बुधसिंहेन, अन्यैश्च तदुत्तरै राजभिर्बहुतरा भूमिसंपत्तिर्दत्ता, या तद्वंशजानामधिकारे बहुकालं तस्थौ । पश्चाच्च सुन्दरलालशर्मणः समये सा सम्पद्धिक्षयं गतेत्यग्रे ग्रन्थकर्तुः परिचयप्रसङ्गे स्फुटीभविष्यति ॥ ११ ॥

## चरित्रसंग्रहः



श्रीमान् श्रीकृष्णभट्टमहाभागो भारतस्य बहुषु प्रान्तेष्वभ्राम्यत् । आसीच्च तस्मिन्समये स्थाने स्थाने महापण्डित-कवीन्द्रस्यास्य सुबहुमानः । मालवदेशेऽस्य भूयान्निवास आसीदिति प्रतीयते । मालवस्त्रीणां वर्णनम्, महाकालस्तवः, नर्मदास्तोत्रम्, अन्यान्येषां च तद्देशस्थानानां वर्णनं पद्यमुक्तावल्यामुपलभ्यते—

"शिप्राम्भःप्रेङ्खितेभ्यः परमकरुणया राजहंसोत्तमेभ्यः
स्वान्तेवासिभ्य एभ्यः स्मरनिगमगणाध्यापनं निर्दिशन्ति ।
पादाङ्गुष्ठाङ्गुलीयाभरणचटकिकाचारुचाटूक्तिदानै-
र्मन्दान्येवोद्धतानि प्रविदधति मुदं मालवीनां गतानि ॥"

(पादाङ्गुलिषु व्रजभाषायां 'चुकटी' इति प्रसिद्धमाभरणं धार्यते । तन्नाम स्मारयन्, तत्र चटकात्वं रूपयन् तस्याः शिञ्जारवं चाटूक्तिरूपेणोत्प्रेक्षांचक्रे कलानिधिमहाभागः ।)

"तारुण्योद्भेदभाजां कटिचरणरणत्किङ्किणीनूपुराणां
प्रोद्यन्मन्दानिलान्दोलितपरमपटस्पष्टनर्मस्थलानाम् ।
गम्भीरावर्तनाभीलसदुदरवलीरोमवल्लीयुताना-
मेतासां मालवीनां कलयति मदनोन्मादनं मन्दहासः" इत्यादि ।

'गीतिः'

'मम मतिरतिविरमति चन्द्रभाले महाकाले । (ध्रुवम्)
लीलालोलव्यालमाले । कलितभूमीधरबाले । जटाजूटजटाले ।
केलीविदलितदुःखजाले, निखिलसुरावलिभूपाले, सुरधुनीचूडाले ।
गरलनिगलनाकण्ठेकाले । धत्तूरारुणदृग्जाले । सुकविकलानिधिकृपाले ॥'

"यस्या नीरे गभीरे सकलभयहरे स्वां तनुं स्तम्भयित्वा
मज्जन्नेवान्तरालोकयति परशिवानन्दसाक्षात्स्वरूपम् ।
मार्कण्डेयप्रचण्डप्रचुरतरतपोराशिपुण्यच्छटाया-
स्तस्याः श्रीनर्मदायास्तव जननि सरित्का समत्वं प्रयाति ॥" इत्यादि।

श्रीमता जयसिंहदेवेन सुबहुमानपुरस्सरमाम्बेरनगरमानीय निवासितोऽयमासीव्। परमस्यैव समक्षं जयपुरनगर्याः स्थापनमकारि श्रीजयसिंहधरणीन्द्रेण। ईश्वरविलासमहाकाव्ये ब्रह्मपुर्याः स्थापनं श्रीमज्जयसिंहकृतमुपवर्णितम्—

"येन ब्रह्मपुरी कृताऽतिधवलैः कैलासशैलोपमै-
र्विप्राणां भवनैः सदा समुदयत्संपद्विलासाञ्चितैः ।
प्रत्यागारमुरुप्रकारहवनैर्यत्राग्निहोत्राण्यभु-
र्लीलादत्तचतुःपुमर्थपटलीजातादराणि स्फुटम् ॥
श्रियं धत्ते यस्यामधिगिरिशिरः श्रीगणपते-
र्गृहं दूराद्दृश्यं सुखचितमणीभाभिररुणम् ।
ध्रुवं तस्या एव क्षितिपतिरमण्याः सुरुचिरे
ललाटे सिन्दूरैः कलितमिव सौभाग्यतिलकम् ॥"

(गणेशगढगतस्य गणपतेर्वर्णनम्। तस्या ब्रह्मपुर्याः।)

पद्यमुक्तावल्यां नवस्थापिताया जयपुरराजधान्या वर्णनं स्पष्टमुपलभ्यते, परं तस्मिन्समये युद्धोपकरणसज्जायास्तन्नगर्याः स्वरूपमुपलभ्यते। यथा—

"नित्यज्यारूढचापा स्थिरतरवरधानुष्कता सद्ध्वजाढ्या
निःसानश्रीः समन्ताद्द्रुतितजनमना व्योम्नि नग्नासिधारा ।
प्रोदञ्चच्छक्तिलीला मदगजगतियुग् जैत्रवाद्यानुनादा
जाग्रत्कामाधिराज्या जयति जयपुराख्या नवा राजधानी ॥"

(शक्तौ भगवत्यामपि सर्वाणि विशेषणानि युज्यन्ते। कामानाम्न्या नगर्यास्तस्मिन् समये आधिराज्यमासीत् ॥)

नानानरेशानां परमादरभूमिः श्रीमान् श्रीकृष्णभट्टमहाभागो मनस्वि-

तायाः परा काष्ठा बभूव । स न कदापि दैन्यं पस्पर्श । अहह ! कीदृङ् मधुरमुक्तं मुक्तावल्यां तेन—

"ज्वलतु जलधिक्रोडक्रीडत्कृपीटभवप्रभा-
प्रतिभटपटुज्वालामालाकुलो जठरानलः ।
तृणमपि वयं सायं संफुल्लमल्लिमतल्लिका-
परिमलमुचा वाचा याचामहे न महेश्वरान् ॥"

यो ह्यनेन सह निरर्थकं स्पर्द्धते स्म, तमयं समयं प्राप्य मर्मस्पर्शिवचनैः समालोचयति स्म । एतस्य समये भवेत्कश्चिदौदुम्बरभट्टोस्य प्रतिस्पर्द्धी, तमयं कीदृगवहेलया स्मरति । दृश्यताम्—

"गुणवद्गणितो गुणिनां शृणुयादेवैष सुमधुरा वाच. ।
यद्यस्य कर्णलग्नो न स्यादौदुम्बरो मशकः ॥"

नरपतिसभासु बहुतरं समयं यापितवतो धर्मैकनिष्ठस्य कलानिधिमहाशयस्य पर्यन्ते शनैः शनैर्निर्वेद उदेति स्म । विशेषतो मिथोविरुद्धयोर्द्वयोर्भूपयोः परस्परप्रतिस्पर्द्धिसौभाग्यवर्णनेन समुत्पन्नोऽभून्निर्वेदः श्रीमतः कलानिधिमहाशयस्येति ज्ञायते । अत एव राजसेवोत्तरमन्ते वृन्दावनवासो निर्धारितोऽभूत् । परं जयपुरनरेन्द्रस्य श्रीमाधवेन्द्रस्य परमाग्रहवशान्नासौ लब्धः श्रीकृष्णभट्टमहाभागैः । प्रोक्तं मुक्तावल्याम्—

"कालिन्दीतटनिकटस्फुटकुटजकुटीनिवाससौख्याय ।
व्यरचि मृषाभाषणमपि, न तदजनि हृदिमहत्कष्टम् ॥
राज्ञां सदस्सु गमनं कविताकरणं मृषाऽऽकलनम् ।
वृन्दावनवासार्थं व्यरचि विधे किं न तदपि संपन्नम् ॥
मिथ्याकथनदुरत्ययनृपवरकृतरक्षणव्यथादुष्टः ।
हा वृन्दावन भवता संप्रति दूराद्विमुक्तोऽस्मि ॥"

सबहुमानं राजभिः परिचरितोपि मनसि भगवद्विषयकमेवाध्यानं कुर्वन्नासीत् । अत एव लभ्यन्तेऽन्ते मुक्तावल्याम्—

"किञ्चिन्न्यायेप्यधीतं किमपि च पठितं पाणिनिव्याकृतौ मे
किञ्चित्साहित्यसिन्धुप्रसृमरलहरीसङ्गसंसिक्ततास्ति ।

सर्वावस्थासहायस्मरणविषयता श्रीयशोदाकुमारे
जाने नैतच्चतुष्कादितरमहमहो नैव जाने न जाने ॥
अमुना यमुनाकूलवटमूलविहारिणा ।
हारिणा हरिणा हन्त हेलितं हृदयं मम ॥
अद्भुतमेतदिदानीमनुरागि मनो यथा यथा मग्नम् ।
क्वचिदपि नीलरसे तत्तथा तथा जातमवदातम् ॥" इत्यादि ।

बुन्दीराजसभायां गमनात्पूर्वमयं भरतपुरराज्येपि किञ्चित्कालं तस्थाविति केषांचिन्मतम् । अत एव तत्र एतत्कृतो 'दुर्गाभक्तितरङ्गिणी'नामको ग्रन्थः प्रसिद्धोऽस्ति । यदीदं मतं सम्यक्, तर्हि पद्यमुक्तावल्यां प्रोक्तं पद्यद्वयं जट्टराजस्य श्रीमतः सूर्यमल्लस्यैव कृते कविनोपनिबद्धं भवेत् । यथा—

"इतो हैन्दवीं सृष्टिमानन्दयन् स्वै-
गुणौघैस्ततो यावनीं सृष्टिमुच्चैः ।
महेन्द्रास्पदे श्रीयुतः सूर्यमल्ल-
स्तटद्वन्द्वसंयत्तरङ्गः समुद्रः ॥
उद्यन् दोषाकरस्याप्यथ निजचरणैकाश्रयस्य प्रभावं
तन्वानः किंकराणां किमुत गुणवतां रज्यतामम्बुजानाम् ।
भाति ख्यातप्रभातोदयगिरिगदितोद्दामविद्योतरश्मि-
प्रोदञ्चन्मण्डलाग्रप्रचुरतररुचिः श्रीयुतः सूर्यमल्लः ॥"

( मण्डलाग्रं बिम्बाग्रं खड्गश्च । )

एतावत्सु स्थानेषु स्ववैदुष्यं प्रख्यापितवद्भिः कलानिधिमहाभागैर्बहवो ग्रन्था निबद्धा भवेयुः, परं दौर्भाग्यवशादेतद्वंश्यानां सविधे कतिचिदेव प्राप्यन्ते । लब्धान्यपि पुस्तकानि प्रायो जीर्णान्यपूर्णानि च सन्ति । एतस्य कारणमग्रे ग्रन्थकर्तुः परिचयप्रसङ्गे स्फुटीभविष्यति । अद्यावधि लब्धान्येतानि सन्ति । संस्कृते—ईश्वरविलासमहाकाव्यम्, पद्यमुक्तावलिः, सुन्दरीस्तवराजः, वेदान्तपञ्चविंशतिः ।

व्रजभाषायाम्—अलङ्कारकलानिधिः, सांभरजुद्ध, जाजऊजुद्ध, बहादुरविजय ( ग्रन्थ ), शृङ्गाररसमाधुरी, विदग्धमाधवमाधुरी, तैत्तिरीयाद्युपनि-

पदां प्राचीनहिन्दीभाषायामनुवादः, जयसिंहगुणसरिता, रामचन्द्रोदय, रामरासा, वृत्तचन्द्रिका, नखसिखवर्णनं दुर्गाभक्तितरङ्गिणीप्रभृतयः। कलानिधिमहाभागानां संवत् १७२५ तमे वैक्रमवत्सरे जन्माभूदित्यनुमीयते। प्रयाणं च १८०० तमाद्वत्सराद्युत्तरं भवेदिति प्रतीयते॥

पद्यमुक्तावल्याः कानिचित्पद्यानि प्रसङ्गेन पूर्वमुद्धृतान्येव। परमस्यां बहवः खङ्ग–गज–नर–पद्म–द्विगुणपद्म–कामधेनु–कपाटबन्धप्रभृतीनि चित्रकाव्यानि सन्ति। किन्तु तत्र तेषां चित्रणानुपलम्भाद्विस्तरभयाच्च नेह निदर्श्यन्ते। अन्यान्यपि चमत्कारीणि बहूनि काव्यानि सन्ति। प्राकृतसंस्कृतयोर्भाषासमकानि प्रायो दृष्टानि। परं हिन्दीसंस्कृतयोर्नाद्यावधि प्रसिद्धानीति बहवो वदन्ति। एकद्वे पद्ये एतासां पङ्क्तीनां लेखकेनापि पूर्वं (जयपुरखण्डे) प्रकाशितान्येव। किन्तु कलानिधिमहाभागस्य दीर्घेषु वृत्तेषु सुरुचिराणि भाषासमकानि (हिन्दीसंस्कृतभाषाश्लिष्टानि) पद्यान्युपलभ्यन्ते। तेष्वेकमत्र पाठकानां मनोविनोदार्थमुपन्यस्यते, अर्थोद्धारस्तु प्राक्तनपुस्तके नोपलभ्यते। किञ्च मया किञ्चिच्च पाठकैरेव स्वबुद्ध्या विचारणीयो भवेत्। विशिष्टश्चमत्कारस्त्वस्मिन् पद्ये सोयं विलोकनीयो यद् यथा संस्कृतहिन्दीभाषयोः श्लेषः एवमर्थेपि श्लेषः। हिन्दीभाषायां वर्णनीयः श्रीकृष्णचन्द्रः। संस्कृते तु वर्ण्यो भगवान् शङ्करः। दृश्यतां, व्रजभाषाऽर्थानुकूल्येन पदच्छेदादिभिर्विलिख्यमानं तदिदं पद्यम्—

"सात दिना कर लीन महागिरि जा पर मोरु कुतूहल धारी<br>
कण्ठहरा हर कीलकुटी, तनु नीलम सी रुचि रञ्जनकारी।<br>
कामद, यारहितो वर गोपतियान उदार कलानिधि भारी<br>
भावनि जाचित सर्वसु राधिक ए तुम नोनित राम हि हारी॥"

(सप्तदिनावधि, करे येन महागिरिः (गोवर्धनः) गृहीतः, यदुपरि मम कुतूहलं दधाति। कण्ठे हारः (वनमाला), कीलकुट्याः दावानलजालस्य यो हारकः (वह्नेर्द्वयोर्ज्वालकीलौ)। यस्य तनुः नीलमणिवत् स्वकान्त्या रञ्जनकारिणी। कामदः, मित्रेषु हितः, श्रेष्ठासु (गोपतियान) गोपस्त्रीषु उदारः, श्रेष्ठश्च कामकलानां निधिः। भावैः यस्य चित्ते सर्वस्वं

राधिकास्ति, अयि त्वं नवनीतस्य (महि) दध्नश्च हारी असि।" एवंप्रायो व्रजभाषायामर्थः)।

संस्कृते तु—(सातदिनानां सुखदिनानां समूहे लीनं महस्तेजो यस्य, सातदिनाकरलीनमहा, यस्य तेजः (प्रभावः) सुखदिनकारी, कालं शुभं निर्मातीति यावत्, (शर्मसातसुखानि च)। यः शिवः, गिरिजायाः परमोरु—महत् कुतूहलं धरति। कण्ठे या हलाहलस्य कीलकुटी ज्वालरेखा, तया तनुः सूक्ष्मा या नीलमसी-(स्याही-)-वत् रुचिः, तया रञ्जनकारी। कामोपरि दयारहितः, वरः श्रेष्ठो यो गोपतिर्नन्दीश्वरः स यानं यस्य। उदारं निष्कलङ्कं कलानिधिं चन्द्रं बिभर्ति सः। भावेन निजं स्वयं आचिताः एकत्रस्थापिताः ये सर्वे सुराः तेषु अधिकः, ईदृशः अहिहारी (सर्पभूषणः) नितरां सदा मनः एतु, अधितिष्ठतु—अयमर्थः स्यात्।)

अन्योपि शब्दकृतश्चमत्कारोऽनुभूयताम्—

"पायान्नः शशिखण्डमण्डितशिराः कैलासकेलीधरः
कैवल्याहितवैभवः कुशलकृत् कामाहितैकप्रदः।
साराधायकहृद् विरूपनयनानन्दी सदामोदरो
रुद्राणीकृतदानवेशसुभगः श्रेयाननाद्याक्षरः॥"

अनाद्यः अक्षरश्च स शिवः पायादिति दृश्यमानः स्पष्टोऽर्थः। किन्तु—सर्वेषु पदेषु अनाद्याक्षरः, आद्याक्षररहितः सदामोदरः (आद्याक्षरराहित्येन दामोदरः) पायात्। तथाच शिखण्डमण्डितशिराः, लासकेलीधरः वल्याहितवैभवः (बलेः सकाशात् आहितं गृहीतं वैभवं येन), शलं तन्नामकं मल्लं कृणत्ति सः, मायाः लक्ष्म्या हितस्य एकमात्रः प्रदाता, राधायकहृद् (राधामयति हृद् यस्य), रूपेण नयनयोरानन्दजनकः, द्राणीकृताः विद्राविताः दानवेशाः श्रेष्ठदानवा येन अत एव सुभगः, इति दामोदरपक्षेऽर्थः।

न केवलं शब्दचमत्कार एव पाटवं कलानिधिमहाशयस्य। पद्यमुक्तावल्यां सरसाः सार्थचमत्काराश्च बहवः श्लोकाः सन्ति। यथा माधवेन्द्रवर्णनप्रस्तावे—

"माधवेन्द्र द्विषद्वामाः क्षामाः कामार्तितो दधुः ।
बाष्पौघान्तरितौ सायं चक्रवाकाविव स्तनौ ॥
तेजस्विनो विदलितास्तव प्रतापेन, माधव विमुक्तौ द्वौ ।
बाडवतया किलौर्वो मित्रतया चित्रभानुरपि ॥"

(बाडवो ब्राह्मणो बडवाग्निश्च । मित्रपदेन सुहृत्सूर्यौ प्रसिद्धावेव ।)

"हास्यं पुष्पाकरस्ते, शशिमुखि सुरते ग्रीष्मकालो, वियोगे
वर्षा, वक्रे तदभ्यो, वचसि भृशसमुल्लासिहेमन्तकालः ।
अङ्गस्पर्शे च कान्ते तव वसति ऋतुः शैशिरस्तज्जनो यः
संधत्ते संनिधिं ते स भवति षडृतूद्भाव्यभोगैकभर्ता ॥
यथा तव कलावृद्धिस्तथा नक्षत्रसंक्षयः ।
नक्षत्राधिप ! नैषा ते स्वनामोच्चाटनोचिता ॥" इत्यादि ।

पाठकमहाभागाः ! कियद्वोदाह्रियन्तां पद्यमुक्तावल्याः पद्यानि । सत्यं सा मुक्तावलिरेव । अथापि किञ्चिदीश्वरविलासस्य राज्ञामैतिहासिकवर्णनशैली परिचीयताम् । तत्र श्रीमन्मानसिंहप्रपौत्राणां जयसिंहदेवानां वर्णनम्—

"बद्ध्वा दाराशिकोहं रणभुवि सहसा दोर्बलेनानिनाय
द्रागेव द्रावयित्वा भृशमनभिमतं यो विजिग्ये शुजाख्यम् ।
कर्तुं चाकर्तुमीशः प्रसभमितरथा कर्तुमप्येष राजा
चक्रे नोरङ्गजेबं निजबलविभवेनैव दिल्लीशमेकम् ॥"

तत्पुत्राणां श्रीमद्रामसिंहदेवानाम्—

"काले प्रालेयहेमाचलयुगलमपि प्रस्खलेत्सागरोपि
क्षोभेण त्यक्तवेलो भवति, न तु चलेद्रामसिंहोतिधीरः ।
सेवाशुम्भावसंभावितितमयवनाधीशकाराविमोकौ
सद्यो निर्मोच्य भूयस्तरमुपरि भरं स्वात्मनः सोयमूहे ॥"

(शिवाजीसंभाजीनाम्नोः राजपुत्रदेशे तथा प्रसिद्धिः) ।

सवाईजयसिंहदेवानाम् (जयपुरराजधानीप्रतिष्ठापकानाम्)—

"शाकम्भर्यास्तडागोपरि परिपतितं यत्प्रभावप्रसर्प-
त्सेनावीरेन्द्रवर्यप्रकरकरचलत्तीक्ष्णकौक्षेयकाग्रैः ।

उच्चैराताल्लुकृत्तं पुरहरमहिषीमुण्डमालात्रसूत्र-
प्रभ्रष्टं मुण्डवृन्दं क्षितिरजसि लुठन्निःश्वसत्सैयदानाम् ॥
यस्योद्यद्द्विपदानवारिभिरभूत्प्रस्थानभूः पङ्किला
सा नीता प्रकृतिं चलत्खुरपुटैरश्वैः कृतोर्ध्वक्रमैः ।
इत्यालक्ष्य कृतत्रपैरिव गजैरुत्क्षिप्तशुण्डोच्चल-
द्वार्भिर्व्योम्नि रजोभरः शबलितो जम्बालपिण्डायते ॥
यत्तुङ्गोत्तुङ्गरिङ्गत्तुरगखुरपुटाक्रान्तविद्वेषिदेश-
क्षोणिप्रोद्यद्रजोभिर्व्यरचि दिवि परं भूतलं श्यामवर्णम् ।
यद्वीरेन्द्रासिकृत्तप्रतिनृपतिपदस्थापनाधारतायै
शङ्के यद्वारणेन्द्रैः प्रचुरकरपयःसीकरैर्द्रावितं तत् ॥
यस्य क्ष्माभृत्सहस्रस्फुटमुकुटमणेर्जैत्रयात्राप्रसङ्गे
माद्यद्दन्तावलोद्यत्तुरगचयचमूचङ्क्रमोद्भूतभारैः ।
भग्नीभूतासु वेलास्वतिचपलपयःसङ्घसंघर्षधाव-
त्कल्लोलाक्रीडशाली जयति जलनिधिर्जैत्रनिःसानघोषम्[1] ॥
साधीयान् यस्य बाहुः समरमखमहादीक्षया लब्धकीर्तिः
शस्त्रास्त्रध्वानवेदध्वनिजनितविधिर्वीरऋत्विक्परीतः ।
जातप्राज्याऽसृगाज्याहुतिसततपरिस्निग्धया खड्गदर्व्या
चण्डक्रोधाग्निकुण्डे सकलमपि बलं सैयदानां जुहाव ॥”

यावदुपलब्धेऽस्मिन्नीश्वरविलासकाव्ये प्राय एवंविधैव समुच्छलदोजः-प्रशस्तिर्वर्णनपद्धतिः । इदानीं तत्रशास्त्रपारदृश्वनः श्रीमतः कलानिधिमहाभागस्य ‘सुन्दरीस्तवराज’स्य किञ्चित्परिचयः प्राप्यताम् । त्रिपुरसुन्दर्याः स्तोत्ररूपोयं ग्रन्थ इति तु पूर्वमुक्तमेव । अत्र हि शिखरिणीच्छन्दोभिः सुमधुरो गुम्फः प्रकटितः कविकलानिधिभिः । यथा हि—

“कलाकेलीलोलक्वणितमणिकाञ्चीगुणगणां
विलुप्ताङ्गीं मध्ये कुचभरनताङ्गीं शशिमुखीम् ।

---

१ निसान, नक्कारा (दुन्दुभिः) ।

करांभोजभ्राजत्सधनुरिषुपाशाङ्कुशवरां
समन्तात्त्वां वन्दे स्मरहरतपःसिद्धिपटलीम् ॥
स्थिता सर्वस्यान्ते निजमहिमशान्तेन महसा
विशुद्धा त्वं काचित्परमसुखचैतन्यकलिका ।
शुकादीनां प्राचामपि हृदयवाचामविषयः
शिवः शक्तिः शक्तिः शिव इति न निर्णेतुमुचिता ॥"

सृष्टिक्रममालम्ब्य कीदृगुदीरितं भगवत्याः स्तुतिपरेण कलानिधमहाभागेन—

"त्वमेका विश्वस्मिन् रमणमनसा द्वैतमकरो-
स्ततस्त्वत् त्वं जज्ञे महदिदमहङ्कारसहितम् ।
मनस्तेनारब्धं सकलमपि दृग्दृश्यमसृज-
त्तदेवं लोकेऽस्मिन् किमपि न विलोके त्वदितरत् ॥"

दृश्यतां भक्तिप्रवणता श्रीमतः कलानिधिमहोदयस्य—

"जगत्क्षोभिण्याद्यास्तव जननि मुद्रास्त्रिभुवनं
सृजन्त्यः पुष्णन्त्यो लयमपि नयन्त्यः समुदिताः ।
कथं ताः कुर्वेऽहं सकलभुवनव्याप्तविभवाः
प्रपञ्चान्तर्मातर्मशक इव लीनाकृतिरणुः ॥
न धूपैर्नो दीपैर्न च मधुरनैवेद्यनिवहै-
र्न पुष्पैर्नो गन्धैर्न च विविधबन्धैः स्तुतिपदैः ।
समस्तत्रैलोक्यप्रसरणलसद्भूरिविभवे
सपर्या पर्याप्ता तव भवति भावोपचरणैः ॥
दरिद्रं दुःशीलं दुरधिगमनं दुःखदलितं
दुराचारं दूरे पतितममरैर्दुर्भरतरम् ।
जनैर्मुक्तं भुक्तिप्रमुखसुखसम्पत्समुदयाः
पुमांसं सेवेरन् भगवति भवद्दृष्टिभरितम् ॥
निबन्धं पङ्कं सरमसमवष्टभ्य पिबति
द्विपास्ये मक्षेहस्रवणसरसो दक्षिणकुचः ।

परो मातः स्कन्दोपरि सकरुणस्यन्दमधुरः
स्तनस्ते तं भावं प्रकटयतु मल्लक्षणशिशौ ॥"

तन्त्ररहस्यमार्मिकता स्थाने स्थाने प्रस्फुरन्ती किञ्चिदिहाप्यनुमीयतां पाठकमहाभागैः—

"त्रिरेखान्तर्वृत्तत्रयगत(हृद्दे)ळाष्टदलयोः
परस्ताद्वृत्तैकस्फुटभुवनकोणान्तरगते ।
दशारद्वन्द्वेऽन्तः स्फुरितवसुकोणान्तरलस-
त्रिकोणे त्वं नित्यं विलससि महाबिन्दुवपुषा ॥
मुखे बिन्दुस्फूर्तिस्तव हसपरार्द्धाकृतिमयी
कुचद्वन्द्वं बिन्दुद्वयहसपरार्द्धाकृतिमयम् ।
कलारूपे मातस्तव हसपरार्द्धाकृतिमय-
द्विरेखाविस्फूर्त्या परिलसति पूर्णावयविता ॥
निदानं मन्त्राणां विलसति धरित्री हिमकरः
शिवो मायाशक्तिर्ज्वलनजननो मादनकरः ।
तथार्द्धेन्दुर्बिन्दुर्नवकमिदमस्मादुपचिता-
त्तरङ्गन्यायेन स्फुरति सकलो मन्त्रनिवहः ॥"

स्वरूपवर्णनपद्धतिर्दृश्यतां कविकलानिधेः—

"स्फुरच्चिन्तारत्नप्रवरपरिषत्पाटवहरैः
प्रकाशैः पूर्णानां भुवनजनचेतोरुचिभृताम् ।
नवीनोद्यत्तारापरिवृढसखानां चरणयो-
र्नखानां ते कान्तिस्तिरयतु मम स्वान्ततिमिरम् ॥
प्रवालश्रीसर्वापहरणविलोलाङ्गुलिगणाः
स्फुरद्रक्ताम्भोजद्युतिविजयिमाञ्जुल्यनिलयाः ।

---

१ अतिजीर्णे साक्षात्कलानिधिमहाशयस्य स्वहस्तलिखितेऽस्मिन्पुस्तके स्थाने स्थाने पत्रविशरणेनाक्षराणि लुप्तानि । अत्यवधानेन, अनुमानेन कानिचिन्मया स्थापितानि । परं तन्त्ररहस्येऽस्मिन्नाहं प्रभुः । अत्र किमस्तीति मार्मिको जानीयात् ।

चतुर्वर्गश्रेणीफलयुगपदुद्भावनकराः
करास्ते चत्वारः कलयितुमलं शर्म विमलम् ॥
रसक्रीडामाने प्रणयिनि रुषेवारुणितयो-
स्ततो नीचीभूतत्रिदशधुनिवीचीविशदयोः ।
प्रसादप्रोद्भूतप्रचुरसुखसौभाग्यपदयोः
स्थिरं स्यान्मच्चित्तं गिरिशमहिषि त्वत्प्रपदयोः ॥
शिवे शय्यावेश्मोपगमसमये भूरिसुखदै-
र्बृहत्सामस्तोमप्रवचनचमत्काररुचिरैः ।
कलक्वाणैः प्राणप्रदमिव गिरीशश्रवणयो-
रिदं ते हंसानां हरति हृदयं हंसकयुगम् ॥"

पाठकमहाभागाः! कियद्वोदाह्रियताम्। अस्य स्तोत्रवरस्य नवोत्तरशतं श्लोकाः सर्वेप्यहमहमिकया युगपदुपतिष्ठन्ते। हन्त! स्थाने स्थाने विशीर्णपत्रमिदं पुस्तकं भूयसापि परिश्रमेण कदाचित्साङ्गं भवेन्न वेति विशङ्कैव। नोपनिबद्धं कविकलानिधिमहाशयैः केवलं गीर्वाणगिरायामेव, अपि तु प्राकृतभाषानिगुम्फनपाण्डित्यमप्यविकलमासीदेषां महोदयानाम्। दृश्यन्तामिहोद्धृताः काश्चन माधवेन्द्रगाथाः—

"[1]माहवणिवकित्तीओ फुल्लिअविअइल्लमालइवणाइं।
सअलकइमहुअराणं साणंदविणोअकारणाइँ धुअम् ॥
सरसगुणकव्वमज्झे जेत्ताओ सुकइकण्ठअम्मि संठविआ।
तेत्ताणं उवमाणं तुमं सि माहवणरिन्द दप्पणओ ॥

१ माधवनृपकीर्तयः फुल्लविचकिलमालतीवनानि।
सकलमधुकराणा सानन्दविनोदकारणानि ध्रुवम् ॥
सरसगुणकाव्यमध्ये यावत्यः सुकविकण्ठे संस्थिताः।
तावतीनामुपमाना त्वमसि माधवनरेन्द्र दर्पणः ॥

आजु दसराहेके उछाह कविलोग तुम्हें
देतहैं असीस सुनिबेकों सावधान होहु
उमरि दराज मारकंडेमुनिमाने होहु
कीरतिप्रताप ससिसूरज समाने होहु ।
पारथ ज्यों बीर जगजाने होहु जयसाह
चित्तके प्रमान नित वित्तके खजाने होहु
बाजते सदाने होहु देश आबादाने होहु
रंगभरे बाने होहु साहिमनमाने होहु ॥ ४ ॥"

ओजोऽनुकूलगुम्फो यथा—

"छप्पय—भंति गरज्जि घन गज्जि, तडित जिमि खंभ तडक्किय ।
प्रगटिय बपु विकराल, असुरघर काल कडक्किय ॥
लटकत विकटजटानि, अटकि घनघटा झटक्किय ।
बिज्जुछटा लपटात, झटकि गिरितटनि पटक्किय ॥
बहुडड्ड बड्ढि चड्ढिय नभहि मड्ढिय रवि रुड्ढिय ससिय ।
सुख रोस सांस नरसिंहके, सत्तलोक ऊरध त्रसिय ॥ ५ ॥

## अमृतध्वनि

"तरलित होत भुजंगवर, परत गंग उत इत्त ।
जटाजूट छूटत जबहिं, नृत्तत्तत हर नित्त ॥
नृत्तत्ततहर नित्तत्तबहि दुचित्त त्तिभुवन ।
धित्तत्तत धुनि तित्तत्तजिंहिं न मित्तत्तसु गन ॥
सित्तत्ततगुन गित्तत्रिदस पवित्तत्तरनित ।
जित्तत्तपससि मित्तत्तकहिं चकित्तत्तरलित ॥ ६ ॥
जय जय सुरनर उच्चरत, गनपति करत गरज्ज ।
बज्जज्जत बज्जन बिबुध, सज्जज्जत सुभकज्ज ॥
सज्जज्जत सुभकज्ज जग गल गज्जज्जत गन ।
तज्जज्जत अति लज्जगवरि सुरज्जज्जत मन ॥
धज्जजिमि सिर छज्जजलनि निमज्जज्जन चय ।
भज्जज्जतजुतरज्जज्जतअरि बज्जजय जय ॥ ७ ॥"

शृङ्गारविषयकवर्णनम्—

"दीपति दिवारीसी दिपति देहदीपतिसों
दामिनीसी दमकै न दिन हू दुरति है
राजत अनंग तरुनाई के तरंग रति-
रंग के उमंग अंग अंग अंकुरति है।
अतरके सौरभसे तर ह्वै रहे हैं अति
सतर उरोज देखि भूली गति मति है
देखो 'लाल' रूप धरैं रूप है कि, रस है कि,
रंग है कि, रंभा है कि, रमा है कि, रति है ॥ ८ ॥
लहँगा ललित लाल लाहीको लसत, तैसी
चोएभीनीं चोली कसी कुचनि बनाइसों
सकलसिंगारनिसो सखिन सिंगारी प्यारी
पहरि किनारीदार सारी चित्तचाइसों।
सौंधके सलिलसने सिलसिले केस लसैं
छूटे मुखनलिन पै अलिनके भाइसों
आजुही अन्हाइ आइ आननउजास ओप,
सादेही सिंगार साज सोहति सुभाइसों ॥ ९ ॥
कुचतट निपट मिटानो अरगजा, छूट्यो
अति ही अधरराग मंजन सुभावरी
नैननिके दूर दूर अंजनकी रेख मिटी,
पातरेसे गातनि पुलक दरसाव री।
दूतिनकी वानि झूंठ बोलिबोई जानि होत
बंधुहितहानि जानिये न आपु चाव री
वा सठसमीप ही पठाई तू न गई तहां,
बावरी अन्हान कों गईही आजु बावरी ॥ १० ॥
गृहपति गये गैया पसर चरावन कों,
सासरे ननद, परी सास सो ससुरिया

खाली है खिरक घर आंगन बरोठी अटा,
आजु रैन चीरनिके मनोरथपुरिया ।
सोचति परोसनि सुनाइकें सुघर ग्वारि
कान्ह त्यों निहारी पुनि आनंदविथुरिया
तरकि तरकि गईं तनीं अँगियाकी तनीं
करकि करकि गईं करनकी चुरियां ॥ ११ ॥
चाइभरे पियमुख चाहि न सकत चख,
होती जहां राते दुहूं नैननि झकाझकी
भौंहनिके भंग संग अज हू भ्रमत भूले
बरुनी बिरुझि पलकनिके धकाधकी ।
केसरिके खोरि आइ लीने अति छाइ छाइ
छबिकी छटानि छिन छिननि छकाछकी
कुंडल झलक्र प्रतिछलक कपोलतल
अलकचिलक चकचौंधनि चकाचकी ॥ १२ ॥
रति है न समताकों अति है अनूप रूप,
अंग लसी सारी जरकसीकी सुरंग है
अंजनकी रेख अलिगंजन चतुर नैन
भंजनसो लहै मीन खंजन कुरंग है ।
जोबनके जोर जगी जगमगी जोति लसै
सगबगी सौंधें कौंधै बीजुसी गुरंग है
कंचुकीके बंद कसैं, उरज उतंग लसै
तंगकसैं मानहु अनंगके तुरंग हैं ॥ १३ ॥

श्लेषचमत्कारो यथा—

* "चारों ओर बात चलैं कछु न बसात
अति कंपत हैं गात गुरुलोक घन गरजी

---

* अस्मिन्पद्ये शीतभीतस्य 'रजाई–' (तूलभृतप्रावरण–)–निमित्तं प्रार्थनं तु स्फुटमेव । अस्मिन्पक्षे—'बात' वातो वायुः । 'बसात' न कश्चिद् गन्धः

धूंआंभरी सास ननदीके पास वास, कोऊ
बैठिबेकी आस न खरोंही काम तरजी ।
आली महिं ओसी अति दुखद परोसी
घर भीतरन जागैं सब भांतिनसों लरजी
दुतही करी ना नहिं कुलहीन पाई लाल
रावरी रजाई कोऽब हाथ जोर अरजी ॥ १४ ॥"

एवंविधानि परःसहस्राणि पद्यानि स्वयं निर्माय अलङ्कारकलानिधौ कलानिधिभिरुदाहृतानि । सांभरयुद्धप्रभृतयो ग्रन्थास्तु नाद्यावध्युपलब्धाः, अत एव तत्रत्य विषयमादर्शयितुं नाहं प्रभवामि । परं कवितारत्नपरीक्षका इयतैव परिज्ञास्यन्ति यत्संस्कृत–प्राकृत–व्रजभाषासु समानं कवयतः कलानिधेः कियती कवित्वशक्तिरासीदिति । अपि एषु त्रिशतवत्सरेषु सहसैवोपलभ्येत तादृशशक्तिशाली कविः ? अस्तु–वंशपरिचयप्रसङ्गे प्रमुखप्राप्तमिदं श्रीकृष्णभट्टानां जीवनवृत्तं यावदुपलब्धि पाठकानां सेवायामुपस्थापितम् । यद्यपि अनेन विस्तरेण कदाचिदुदयेत्केषांचन महोदयानामरुचिः, परमारम्भे (जयपुरवैभवाख्यस्य पूर्वखण्डस्यारम्भे) "तुलसी–सूर–विहारि–कृष्णभट्ट–भारति–मुखाः" इत्युपश्लोकनमेषां विस्तृतं परिचयमपेक्षत इति तथानुष्ठितमित्यलमधिकोपचारेण ।

---

प्रतीयते । गर्जनकारका घनाः (मेघाः), तेनातिशीतवृद्धिः । 'सांस' श्वासः । 'न नदीके पास' शीतवशान्नद्याः समीपे वासो न । 'कोऊ' ग्रामीणानामग्न्याधारस्थानम् । 'आली' आर्द्रा 'मही' भूमिः 'ओसी' अवश्याययुक्ता । 'सी' शीतं अतिदु खदं पतितम् । 'न जागैं' गृहान्तर्नावकाशो, वृष्टे । 'दुतही' द्विस्तरयुक्ता 'दुलाई' न कृता । 'कुलही' उष्णीषिका (टोपी) न प्राप्ता, इत्यर्थः । पक्षान्तरे तु–नायिका गृहे सकेतावकाशाभावात् 'रजाई' गमनानुमतिं याचते । तत्र–गुरुलोकात्तर्जनकारका । 'सास' श्वश्रूः प्रधूमिता । आली सखी 'महिं' अभ्यन्तरे 'ओसी' अवसरापेक्षिणी । प्रतिवेशिनः गृहाभ्यन्तरे जाग्रति । 'दुतही' दूती नास्ति । अहं कुलहीनापि नास्मि । अत एव कुलजाया मेऽनवसरादनुमतिप्रदानमेव योग्यमिति गूढोऽर्थः ।



## सुकविः श्रीद्वारकानाथभट्टः
(सरस्वती. वाणी. भारती.)

श्रीकृष्णाख्यकोविदादमुष्मादाविरासीदथ
  भूरिभाग्यभासी द्वारकानाथो महामना
यो हि कविश्रेष्ठो वन्दनीयो बुधपुङ्गवानां
  ज्येष्ठो जगदीशकवेर्नूनं निजजन्मना ।
गुणगणवैभवेन तातमतिशेते यो हि
  कीलयते कोविदानपीह यस्य कल्पना
'भारती'तिनामवहा भारती विभाति यस्य
  हंहो देवी भारतीव कविवदनाऽऽसना ॥ १२ ॥

भूरिभाग्येन भासते तच्छीलः । महत् मनो यस्य स महामनाः, यकार-परत्वाद्विसर्गलोपः । जन्मना, जगदीशकवेर्ज्येष्ठः । एवं च कविकलानिधेः श्रीकृष्णभट्टस्य द्वौ पुत्रौ, द्वारकानाथो जगदीशश्च । तत्र जगदीशकविश्चिम्मनलालस्य दत्तकोऽभूदित्यग्रे स्फुटीभविष्यति । एतेषां संस्कृतकवितानिदर्शकानि नाधिकानि पुस्तकान्युपलभ्यन्ते, परं व्रजभाषाकवित्वे तातोपि माधुर्यमेषां कवितास्वनुभूयते । 'भारती'त्युपनामाङ्किता यस्य भारती (वाणी) वाग्देवीव कविवदननिवासिनी, कविभिरादृतकवित्वा इत्यर्थः ॥१२॥

यद्वाणी विभाति वाणीनूपुरानुकारिणीव
  भाषामपि तां रसानुसारिणीमयामहे

साहित्यानुबन्धिनो निबन्धान् यैः प्रणीतानहो
चौरचयनीतानद्य हन्त न लभामहे ।
'सरस्वती' 'वाणी' 'भारती' ति नामधेयवहान्
मोदितमहीन्द्रमाधवेशान्महयामहे
सौष्ठवसनाथरम्यरचनाचमत्कृतिकान्
श्रीद्वारकानाथकविपुङ्गवान् कवामहे ॥ १३ ॥

येषां भाषामपि माधुर्यवशात् रसानुकूलाम्, अयामहे जानीमहे । सर्वे गत्यर्था ज्ञानार्थाः । यतो हीमे साहित्यातिरिक्ते संगीतशास्त्रेपि परिनिष्ठिता आसन् । अत एवैषां कवितायां वर्णकृतं माधुर्यमधिकमनुभूयते । एभिः संगीतशास्त्रे 'रागचन्द्रिका' नामको ग्रन्थो विरचितः । 'मधुकरकलानिधिं' विहाय साहित्यसंबन्धिनोऽमीषां ग्रन्थाः केपि नोपलभ्यन्ते । ते किल सुन्दर-लालशर्मणः समये चौरचयेन नीता इति अग्रे स्फुटं भवेत् । कवामहे कवितया उपश्लोकयामहे । कुङ् शब्दे ॥ १३ ॥

दो०—'सुकवि'—'भारती'त्युपपदं ददे सूक्तिसुहितेन ।
जयपुरमण्डलमघवता माधवधरणीपेन ॥ १४ ॥

पितुः श्रीकृष्णभट्टकविकलानिधेः स्वर्गवासोत्तरमेतस्य सरससूक्तिभिः सुहितेन तृप्तेन श्रीमता माधवसिंहदेवेन (प्रथमेन) 'सुकविः' 'भारती'-त्युपपदं प्रादायि ॥ १४ ॥

बुन्दीपतिरपि भृशममुं दीव्यति स्म विनयेन ।
येन सोयमलमर्चितः पूर्वजनृपतिनयेन ॥ १५ ॥

पूर्वजैर्नृपतिभिर्यथा द्वारकानाथमहाभागस्य पूर्वजाः श्रीकृष्णभट्टादयः सत्कृताः, एवं तत्सामयिकबुन्दीनरपालोपि एनं सुभृशं पूजयति स्म । एतस्य वंशजानां सविधे बुन्दीधराधीशेन प्रहितमेकं राजकीयपत्रं वर्तते, यत्र पृथ्वी-सिंहनृपेण स्पष्टं लिखितमस्ति यद्भवन्तो मम पितृस्थानीयाः किमधिकमहं

मावेदयामि। मम जीवनदशापर्यन्तं नास्मिन् भावे परिवर्तनं भवेदत्र परमेश्वरः प्रमाणमिति। तदेतत्पत्रं सौवर्णरेखाभिश्चित्रितमतिप्राचीनमपि सुभगमवलोक्यते। एवं दानबहुमानादिभिः पूर्वजनृपतिपद्धत्या बुन्दीधराधीशेन सोयं पूजितः॥ १५॥

## चरित्रसंग्रहः



जयपुरधरणीन्द्रस्य माधवसिंहदेवस्य सोयमतिप्रीतिभाजनमासीत्। अहर्निशं श्रीमान्माधवेन्द्रः कवीन्द्रमिमं स्वसहचरमेव चक्रे। दानबहुमानादयोपि भूरिशोऽस्य कृताः। ग्रामादिभूसम्पत्तिरप्यस्मै अवश्यमेव अदायिष्यत, परं श्रीकृष्णभट्टकविकलानिधेर्नाम्ना ग्रामद्वयं माधवेन्द्रस्य समय एव पत्रारूढमभवत्। अत एव राजकर्मचारिभिस्तथाविधिः प्रतिषिद्ध इति श्रूयते। मुक्तककवित्वेषु श्रीमतो माधवेन्द्रस्य यशोवर्णनमस्त्येव, परमेतस्य मनःप्रसत्तये 'मधुकरकलानिधिः' नाम शृङ्गाररसग्रन्थो विरचितः। अत्र हि 'मधुकरराज'नाम्ना श्रीमतो माधवेन्द्रस्य व्यपदेशः कृतः। अत्र हि शृङ्गाररसस्य समग्राङ्गानां सविस्तरवर्णनमस्ति, उदाहरणानि च सर्वाणि माधवेन्द्रवर्णनात्मकानि। अस्मिन् किल कविना माधवधरणीन्द्रस्य महिमैव चरमव्यङ्ग्यं स्थापितम्। शब्दार्थौ हि भूयोगुणीकृतौ। ग्रन्थारम्भे प्रोक्तं हि तेन—

"सबद अरथ जीरणबसन, लखि तंदुल गुनगाथ।
माधव मोऽब सुदामसों कर्‍यो द्वारकानाथ॥"

अहो कीदृशी ध्वनिगर्भा सूक्तिः। कविः कथयति—शब्दार्थाविमौ मद्गतौ जीर्णवसनस्थानीयौ, यतो हि ताविमावनादितः सर्वैः कविभिः प्रयुक्तप्रायौ। अत एव जीर्णवसनान्तरिता भवद्गुणगाथैव सुदामतंदुलोपमा सेयमुपहारः। किञ्च तन्दुलग्राही पुरुषस्तदुपरिवेष्टितं वस्त्रं नापेक्षते। एवमेव

भवान् जीर्णवसनमदृष्ट्वैव गुणगाथायां दृष्टिं दद्यादित्यात्मनो विनयः सूच्यते। भवांश्च माधवसत एव भवद्गुणबाहुल्येपि मदुपस्थापितान् कतिपयतन्दुलानेव गृहीत्वा सोयं सुदामसदृशोपि जनो द्वारकानाथो विहितः।

जयपुरेन्द्रस्य माधवसिंहदेवस्य स्वर्गारोहणोत्तरं श्रीमता पृथ्वीसिंहनरपालेन, सकलगुणिजनशरण्येन प्रतापसिंहभूपेन चापि सोयं सुबहु मानितः। पृथ्वीसिंहमहाराजस्य पठनार्थमनेन कौमुद्या अनुवादरूपा 'शब्दचन्द्रिका' निर्मिता। श्रीमान् प्रतापसिंहदेवोप्येनं कवितामाधुर्यमुग्धः सुबहु सत्करोति स्म। एष ह्येतस्मै कवीन्द्राय 'भारती'त्युपपदमर्पयामास। एतस्य परिचयप्रसङ्गे 'मण्डनकवीन्द्रेण' रावलचरित्रकाव्ये यदुपनिबद्धं तदधस्तादुद्ध्रियते—

"तिनकें (श्रीकृष्णभट्टजीके) तिनहीसे भये तनय द्वारकानाथ।
माधवेश सँहिभानुके रहे रैन दिन साथ॥
प्रभुकों राजी कर लियो 'सरसुति' 'सुकवि' किताब।
जिनके जगमें जगि रहे सुजस सरदमहताब॥
पृथ्वीसिँह, परतापको किय गुनसों भरपूर।
बानी भारति नाम लिय जगमें रह्यो जहूर॥
कविकुल और कवीन्द्र नित, नृपमुख बोले बैंन।
पृथ्वीसिँह परतापसों पाये निसिदिन चैन॥"

अद्यावध्युपलब्धा एतस्य ग्रन्था इमे सन्ति—व्रजभाषायाम्–मधुकरकलानिधिः, वाणीवैराग्यम्, श्रीमत्प्रतापसिंहसभासदानां पद्यैर्वर्णनम्, रागचन्द्रिका, शब्दचन्द्रिका, पृथ्वीसिंहमहाराजस्य विवाहोत्सवः (पृथ्वीसिंहमहाराजका ब्यावला), बुन्दीनरेशस्याज्ञया निर्मितोऽलङ्कारग्रन्थः (यस्य पत्रभ्रंशेन नाम न विदितम्)। संस्कृते–गालवगीतम्–यद्धि पाठकैरवलोकितमेव जयपुरवैभवाख्यपूर्वखण्डस्य गालवाश्रमवर्णनप्रसङ्गे। अन्यान्यानि च वृक्ष–पक्षि–वर्णनात्मकान्यस्य संस्कृत–पद्यानि प्राप्यन्ते। वाणीवैराग्यं भर्तृहरिकृतस्य वैराग्यशतकस्य व्रजभाषापद्यैरनुवादः, यस्यादर्शः किञ्चिदग्रे दास्यते। एतेषां कृतिरेतद्वंशजानां सविधे समग्रा नोपलभ्यते। अत एव नैतेषां ग्रन्थानां विषये किञ्चिद्वक्तुं शक्यते। एतेषां कवितामाधुर्यनिदर्शकानि

कानिचित्पद्यानि 'मधुकरकलानिधि'प्रभृतिभ्यो ग्रन्थेभ्यः समुद्धृत्य पाठकानामवलोकनाय संगृह्यन्ते—

"बरनबिचार लघुगुरु लोक लीकनकों
साधि सोधि रसनाके सुबरन पत्रपर
कर चितहीतें चतुराई चारु लेखनि लै
सबद अरथ रंग व्यङ्गनि उजास धर।
'सरसुति' राधिका कुंवर व्रजचंदजूके
रूपकी घटानि बरसांवै रसरंगझर
नेहके नगर जग जगर मगर ऐसे
सुघर सुघर बंदौ भारतीके चित्रकर॥ १॥
बानीजू हो जगरानी सही पदपंकज रावरे जे नर ध्यावैं
ते नर ऊखमयूखपियूखसनी मृदु काव्यकला बरखावैं।
मानभरे गुनज्ञानभरे पहुमीमघवाननकों ते रिझावैं
कीरति चन्द्रिकाचन्द्रसमान समानमें ते ही कवीन्द्र कहावैं॥ २॥"

राजवर्णनप्रसङ्गे—

"बजत सदाने रणथंभ थिरथाने सुनि
अरि थहराने ह्वै पराने कुल जेसके
केतक अमाने पुनि तेगनसों भाने, ते वे
भरत खजाने आन माने देस देसके।
राजाराव राने अरु खानसुलताने केते
हुकमी बखाने 'सरसुति' इलवेसके
बाने परतापके सुहाने जगजाने आज
जयके निसाने फहराने माधवेसके॥ ३॥
कूरमसवाई माधवेसके हुकुम जोध
जाटनपै झारे झुकि सारनके भलके
कटि कटि परैं बार वेसुमार वैरिनके
जुग्गिन विसाल मांसग्रास लेत ललके।

'सरसुति' तहां संभुसाहिबी सराहिबी यों
छाये छिति प्रेतनि करेजे लोहू छलके
चांवडाके आंवनकों मांवडाके खेत महिं
पांवडा विछाये मानों लालमखमलके ॥ ४ ॥
कोटापै कुपित माधवेस असवार होत
लच्छ कच्छवाहे वीररस अभिलाखे हैं
धाये धूत धींग, धीर धौसनि धमकै धरा
धूरे धूरि सूरससि गगनगवाखे है।
उप्परी उडत बैरीखुप्परी कराकन सों
भभकत लोहू, मुंड झुंड काटि नाखे हैं
मानहुं पतंगरग कालीकाल खेलनको
फागुसमै कंचन कचोरे भरि राखे है ॥ ५ ॥"

हयवर्णनादर्शः—

"कलित कलंगी सिर, ललित लगाम मुख,
बलित जराउजरी जीनन धरे रहैं
छाती छुवें पाइन कराइनके मोरनमें
मोरि ग्रीव नटकी कलानिकों कखो करै।
ऐसे रघुवंसी माधवेसके विलंद हय
केते राव राने जिन पायरे तरे रहैं
अकरे खरीदनिके जकरे ढुबागनसौ
पकरे रहैं तौहू पौनसों अरे रहैं ॥ ६ ॥
जोर करि दौरतमें मनहूके आगें होत
जवके समुद अँगबीचिन के बीच है
सरसुति रविके तुरँग जिँहिँ देखनकों
खनकों रहत दिनमाँझ ठकाठीच है।
ऐसो रघुबंसी माधवेसजूको जोती हय
सलज चलत जिहिँ पौनहू नगीच है

मेरे जानि देवराजहीको बाजिराज यह
रपटि पर्यो है देवतटिनीके कीच है ॥ ७ ॥"

गजवर्णनादर्शः—

"ढाहै कोट गढनि गनीमनके मत्थधरि
सुंडनसों राहैं रोकि रहत अरसकीं
धीरै धीरै धरत चलत चरननि तऊ
धसकी धरासों लेत सेससीस ससकीं।
साहिब राजाधिराज माधवेस कूरमके
ऐसे इभ जिह्वै सरसुति कह न सकीं
देत दान मद जे मिलिन्दनकों एही हेत
दन्तन कपट कढीं कन्दलै सुजसकीं ॥ ८ ॥
सांवनके घनज्यों सुहावन बिलंद कद
मद बरसावन जे पोखैं जस कंदकों
घुरत निसानसे घनेरे घोरघोस जिन
घूमत करैं जे कैधों सुंडनिके छंदकों।
सरसुति सिद्धिभरे कुंभजुग कुंभनसों
दारिद बहाइ करैं आनँद अमंदकों
मेरे जानि ये ही माधवेसके मतंगवर
ढक्कन दै राहुसों उबारैं रविचंदकों ॥ ९ ॥"

शृङ्गारवर्णनादर्शः—

"लहलही ललित लतानिसों गलित ह्वैकैं
तो तनसुगंध अलि डोलैं लोभलालची
कहा रति रंभा कहा कमला अचंभा, बात
बसी उरबसी हू न सचीकी प्रभा लची।
सरसुति कहैं दग जेतवार मृगनके
इन्दीवर तमाम इतमाम ढालची

स्यामसुखसाधे राधे तेरे हैं अगाधे रूप
  जाके मुख आगै लागै चन्द्रमा मसालची ॥ १० ॥
चंपक चिराक चांदनीनके उजास जीति
  अंगछविजालनसों जगमग भौंन भौ
बारनसों जीते मोर, इन्दु जीत्यो आननसौं
  भौंहनि कमान, दृगजीत्यो मृगछौंन भौ ।
कुच जीते चक्र, त्रिवलिनसौं तरंग जीतीं
  रोमावलि बरछी, गयंदजीति गौन भौ
रति जीती रूपसौं तरुनतासौं सौति जीती
  प्यार जीत्यो प्यारो, लाज जीत्यौ मन मौन भौ ॥ ११ ॥
भरिहांई देह दुहू अरिहां उरोज होत
  करिहां मनोजबान भालिनि छुलहियाकैं
सुषमासुछंदजोतिजालनको कंद मुख-
  चंद्रिका अमंद चैतचन्द्रसौं तुलहियाकै ।
सहजहूं मंदहंसी, नासा लसी, भौंह कसी
  उनये सनेह मेह अँखियां खुलहियाकैं
ज्यौं ज्यौं सरसात अलिसंगम लहात त्यौं त्यौं
  प्रात उलहात अंग जोबन दुलहियाकै ॥ १२ ॥"

ऋतुवर्णनादर्शः—

वर्षाः—

"उमडि अथाह अंबु धारैं धुरवा न ये तो
  झंझाकी झकोर झुके झरना झरत हैं
सरसुति कहैं चपलानकी चमाचमी न
  चमकति कहियो दिव्य औषधि हिरत हैं
टूटि टूटि परत वधूटी व्योममंडल तैं
  भिरि भिरि मानिकके सिखर खिरत हैं

जांखवारे शक्रसों पयोनिधिकी कांखवारे
पांखवारे पब्वै मेघमिस लै फिरत हैं ॥ १३ ॥
काजरसी कारी घटां ऊनिआईं भारी
भूलि जैहो व्रजवारी बाट घोर अँधियारीमें
वारपारवारी बहै जमुना करारी, तामें
पार न उतारी कान्ह गोकुल निहारी मैं
छाँह बनवारी! ये कदंबअनवारी अरु
तामें पनवारी बास तामधि विचारी मैं
चूनरी हमारी लाल कामरी तिहारी तर
कामरी तिहारी पात छतनाकी झारी मैं ॥ १४ ॥"

हेमन्तः—

"सीतरैं भवन झुके परदा रतन द्वार
अगर बगर दीप सिघरी सुहाईमें
कीने पसमीनेके बितान भरे झालरिन
मखसली निलम गिलम गहराईमें।
राजैं प्रानप्यारे जहां फूलनकी सेजपर
सरसुति बीन लै अलापै सुघराईमें
एकछत्रछाई ऋतुराजकी दुहाईमधि
दुहुंन रजाई पाई एक ही रजाई मैं ॥ १५ ॥"

शीतः—

"दिस औ विदिस मिलीं चतुर कुहेलियानि
धूंधरि मचाइ चहूं चित अभिलाख्यो है
सरसुति कहै पुलकित रोम रोम तन
अंग अंग कंपन सिथिल बहुभाख्यो है।
सांसनि कढत धूमधारमिस बार बार
हियतैं निकारिकै बिरह दूरि नाख्यो है
होइ न कुहेला फागु खेलाकों बसंत संग
सिसिर सहेलाने अबीर उडै राख्यो है ॥ १६ ॥"

दानवीरादर्शः—

"सज्जित तुरंग झूलिझंपित मतंग, सुख-
पालकीं उतंग झुकीं झालरी नछत्रसीं
ललित कलंगीं सिरपेच मंजु मोती करे
हारतति अच्छरअवलि जयपत्रसीं।
छाये कवि जाचक जलूस जरीसाज सजि
सरसुति जागीं सिरसोभा छविछत्रसीं
माधवेस कौलौ कहैं रावरेके दान, तुम
ताम्बेपत्र दै दै, कीनी दिसी रूपेपत्रसीं ॥ १७ ॥

झूमै द्वार माते गय, टापटोप ताते हय
ड्यौढी चोपदारनसौ दौलतिकैं दौर हौं
सरसुति रंग रंग भूषनबसन सजि
बैठ्यो सुखपाल त्यौं जलेब चहु ओर हौं।
सपनोसो दारिद विलाय गयो छिनही मैं
देख्यो आज माधवेस नैननकी कोर हौं
द्वैकही कवित करि वाह्मन भुलानो आपु
बूझै घरनीसौ प्यारी वहै हौ कि और हौं ॥ १८ ॥"

वीरवर्णनादर्शः—

"बाडवकलासी दावानलकी झलासी भुज-
गेसअवलासी रिपुप्राननकी प्यासी है
त्रिजटाजटासी शंभुनैनकी छटासी काल-
रातिकी घटासी, सत्रुकुजरतरासी है।
बानीकों विहासी कालीलुलितजिहासी, बिक-
राल तेज त्रासी प्रलैरविकी प्रभासी है
बैरिनकों कासीसी, प्रकासी चंचलासी, कढि
वीरताविलासी भुवपाल असि भासी है ॥ १९ ॥

मंह मह फैली जाकी कीरतिकलपलता
तपत प्रताप जिहिं तपनसमानको
धुज्जत महीप आय सीस धरैं जाकी आन
मान दान किरवान जीतै मघवानकों ।
कहि कहि नाम जपैं चारोंही बरन जाकों
चारोंही बरन सरसुतिकवितानको
रघुवंशनि छत्रनि नछत्रनि नछत्रपति
छत्रपति सो है रखवारो हिन्दुवानको ॥ २० ॥"

भर्तृहरेर्वैराग्यशतकानुवादस्य 'वाणीवैराग्यस्य' कानिचित्पद्यानि समूलान्युद्ध्रियन्ते—

यदा किञ्चिज्ज्ञोहं द्विप इव मदान्धः समभवं
तदा सर्वज्ञोस्मीत्यभवदवलिप्तं मम मनः ।
यदा किञ्चित्किञ्चिद्बुधजनसकाशादवगतं
तदा मूर्खोस्मीति ज्वर इव मदो मे व्यपगतः ॥

मदअंधर सिन्धुरबन्धु समान जबैं कछुएक हौं जान भयो
तब जानौं सबै यह मो मनमें कवि बानी कहै अभिमान छयो ।
जब पंडितलोकनके मुखकौंल कछू कछु कांनन सांझ ठयो
तब मूरख हों, इहिं भांति चल्यो ज्वरसो मद जानौं कितैको गयो ॥

नायं ते समयो, रहस्यमधुना निद्राति नाथो, नहि
स्थित्वा द्रक्ष्यति ते मुखं प्रभुरिति द्वारेषु येषां वचः ।
चेतस्तानपहाय याहि भवनं देवस्य विश्वेशितु-
र्निर्दौवारिकनिर्दयोक्तिपरुषं निःसीमसीमप्रदम् ॥

नाहि समौ तुव हैऽब इकंत, करैं सुख, बैठे न तो मुख देखैं
बानी कहैं जिन द्वारनपै इन भांति सुने अपमान विसेखैं ।
रे मन दूरिही छांडी तिन्हे सु बिसेसुर देवके भौंनहि पेखैं
जो छरीदारनिकी निरदै निठुराई रह्यो सुखदाई अलेखैं ॥

---

१ चतुश्चरणानामाद्यैरक्षरैर्माधवेन्द्रस्य कविताव्यपदेश्यं 'मधुकर' इति नामापि स्थापितं कविना ।

किं कन्दाः कन्दरेभ्यः प्रलयमुपगता निर्झरा वा गिरिभ्यः
प्रध्वस्ता वा तरुभ्यः सरसफलभृतो वल्कलिन्यश्च शाखाः ।
वीक्ष्यन्ते यन्मुखानि प्रसभमपगतप्रश्रयाणां खलानां
दुःखोपात्तात्पवित्तव्ययवशपवनानर्तितभ्रूलतानि ॥

कैधों कंदरनितें विलाय गये कंद, कैधौं
गिरिनतै झरने झरत अब रहिगे
बानी कहै कैधों तरु सरसफलनि भरे
बकल सिकलधरे डारिधरैं डहिगे ।
दुःखसों सकुचि थोरे धनके खरच, मृदु
पौंननची भृकुटीलतानि जे उलहिगे
विनयविहीन खललोगनि मलीन ऐसे
मुखनकों देखन कुलीन जो उमहिगे ॥

नाभ्यस्ता भुवि वादिदर्पदमनी विद्या विनीतोचिता
खड्गाग्रैः करिकुम्भदन्तदलनैर्नाकं न नीतं यशः ।
कान्ताकोमलपल्लवाधररसः पीतो न चन्द्रोदये
तारुण्यं गतमेव निष्फलमहो शून्यालये दीपवत् ॥

वादीके विजेकी कोऊ विद्या नहि साधी, पुनि
लायकी न पाई जगजाहिर अमापसों
बानी कहै करिनके कुभमुकताहलनि
सुजसकैं लूम न लगाई खगाचापसों ।
कामिनीके कोमल अधरपल्लवहि दाबि
पीयो न पियूप जुहू मैनके प्रतापसों
जोबन दगा दै बिन काज नाइलाज यहै
सूने भौन दिया लौं बिलाय गयो आपसों ॥




एतस्माद्बभूव महिपालमणिमान्यतमः
श्रीमद्व्रजपालनामतनयो नयोद्भवान्
वाणीकरकङ्कणनिनादतो विवादकरी
प्रीणयते यस्य पदलहरी परीक्षकान् ।
व्रजनिधिनाम्ना येन चक्रे श्रीप्रतापनृप–
प्रीतिमनुरुध्य गीतिग्रन्थः स्वररीतिमान्
पोषितप्रतापगुणान् यस्याद्यापि गीतिगणान्
गुणिजनगोष्ठी किल गायति गुणोज्ज्वलान् ॥ १६ ॥

एतस्मात्, द्वारकानाथमहोदयात् । महिपालमणिभिर्मान्यतमः । नयोद्भवान्, प्रशस्तनययुक्तः । 'प्रकाण्डमुद्धतल्लजौ । प्रशस्तवाचकान्यमूनी'त्यमरः । माधुर्येण सरस्वतीकरकङ्कणनिनादस्य प्रतिद्वन्द्विनी यस्य (व्रजपालस्य) पदलहरी, गीतिपदलहरी वाग्गुम्फपरीक्षकान् मोदयति । श्रीप्रतापसिंहदेवस्य प्रीतेरनुरोधेन प्रतापभूपतेराराध्यस्य श्रीगोविन्ददेवस्य गुणवर्णनपरः संगीतग्रन्थो येन कृतः । यस्मिन् ग्रन्थे संगीतशास्त्रनियमानुसारं सर्वेषां रागाणां स्वरक्रमोपि पृथक् पृथक् निर्दिष्टः । अस्मिन् ग्रन्थे नृत्यस्य, तालानाम्, सर्वेषां च रागाणाम्, तेषां ध्यानस्य, तेषां स्वरक्रमस्य (सरिगम), स्वराणां प्रस्तारस्य, सर्वेषां वाद्यानां स्वरूपस्य, मृदङ्गध्वनेरनुकरणानाम् (परण) अन्येषां च संगीतशास्त्रविषयाणां सविस्तरः संग्रहोस्ति । उत्तरखण्डे च श्रीराधागोविन्दगुणगौरवमयी नानाच्छन्दोबन्धुरा अनेकलयानु-

सारिणी गीतिपदसाहस्री वर्तते । एतद्ग्रन्थनिर्माणे अन्येपि गुणिनो गायकाः कवयश्च व्रजपालमहोदयसहकारिण आसन्निति श्रूयते । पोषिताः प्रतापसिंहस्य गुणाः यैस्तान्, गीतिगणान् । तथा च यैर्गीतिगणैरद्यापि प्रतापसिंहदेवस्य गुणः पुष्यतीति भावः । पोषितौ ( व्रजपालस्य ) कवित्वप्रतापौ गुणश्च यैस्तान् गीतिगणानित्यपि शब्दशक्तिमहिम्ना व्यज्यते । कविताुगुणैरुज्ज्वलान् तान् गीतिगणान्, गुणिजनानां गोष्ठी अद्यापि गायति । प्रसिद्धाः किल प्रतापसिंहदेवस्य निर्मिता निर्मापिताश्च गीतय इति नैतत्प्रमाणसापेक्षमिति भावः ॥ १६ ॥

दो०–मुनिशिवदृग्वसुभूमिते वर्षे हर्षयुतेन ।
ग्रामबदरवासो ददे श्रीप्रतापभूपेन ॥ १७ ॥

१८३७ तमे विक्रमसंवत्सरे गुणगौरवसन्तुष्टेन प्रतापसिंहदेवेन पुण्यार्थं ( उदके ) बदरवासग्रामो दत्तः ॥ १७ ॥



## चरित्रसंग्रहः



व्रजपालमहोदयस्य श्रीमत्प्रतापसिंहदेवस्य समये राजप्रासादे सुमहान्समादरोऽभवत् । प्रतिसमयं श्रीजयपुरेन्द्रस्तमात्मनः समक्षमेव रक्षति स्म । यथा यथा च श्रीमतः प्रतापसिंहदेवस्य गीतिप्रकारे मनः प्रसज्यति स्म, तेन तेनैव प्रकारेण सोयं गीतीर्विरचयामास । क्रमेण च सोयं सुमहान्संग्रहोऽभवत् । एतद्विषये कवीन्द्रमण्डनेन 'रावलचरित्रकाव्ये' यदुक्तं तदविकलमुद्धरामि—

"तिनके ( द्वारकानाथजीके ) सुत व्रजपाल हुव काव्यकलनके गेह ।
श्रीप्रतापमहाराजसौं बाढ्यो निस दिन नेह ॥

किय राधागोविन्दके नाम नयो संगीत।
प्रीति पाय महाराजकी थापि सुरनकी रीत ॥"

एतन्निर्मिता अन्ये ग्रन्था नोपलभ्यन्ते। केवलं महाभारतस्यानुवाद एतत्कृतः साम्प्रतं खण्डश उपलभ्यते।

एतस्य मुक्तककवित्वानि यान्युपलभ्यन्ते तेषु 'व्रजपाल' 'व्रजनिधि' इत्युभयविधा मुद्रा दृश्यते। दुर्भाग्यवशादेतस्यान्यान्यपूर्वजवदस्यापि कृतिः साम्प्रतमेतद्दंश्यानां सविधे अन्वेषणीयप्रायैव संवृत्ता। गीतीनामादर्शसंग्रहस्य मन्ये न भवेदावश्यकता। संगीतविषयकाणि पदानि 'प्रतापसागरे' सुप्रसिद्धान्येव। 'व्रजपाल' 'व्रजनिधि' मुद्राप्रमाणभूतानि एकद्वकवित्वान्यधस्तान्निदर्शयामि—

"आई ही खिरक मांझ गायके दुहावनको
आय गयो मेह दूरि रहिगो सहरिया
चमकत विज्जु व्रजपाल अकुलात मन
ऐसो न हि दूजो करै छिनको महरिया।
अबही रँगाइ दीन्ही मांने बहु दाम दैकै
वाको है फिकर जामें रंग है गहरिया
तुम सम स्याम नहिं कोऊ इँहिँ ओसरमें
खोहीमें बचाय मेरो लीजिये लहरिया ॥१॥"

सेयं वाग्विदग्धाया उक्तिः। अत्र यद् व्यङ्ग्यं तद्रसिकमहाभागानां सविधे सुस्पष्टमेव।

अयं हि जयपुरमहीमहेन्द्रस्य श्रीप्रतापसिंहदेवस्य मनोऽभिप्रायानुसारं कवितामारचय्य तस्मै समर्पयामासेति पूर्वमुक्तमेव। एष हि नरेन्द्रो जयपुरभाषायामपि सुमनोहराणि साहित्यसर्वस्वभूतानि पदानि कवित्वानि च निर्ममौ निर्मापयामास च। तन्मनःप्रसत्तये व्रजपालमहाभागेनापि जयपुरीयनागरिकभाषायां कवित्वानि निर्मितानि। मन्ये, तेषामेकतमन्न भवेत्पाठकानामरोचकमित्यधस्तादुद्ध्रियते—

"पनघट घाट ठाठ ठाठ्यो छै उचाबाईको
गैले जाती गोरयानैं थे किसै काम टोको छो
रसका रसीला गरबीला हुया कांई फिरो
काम पड्यां कोढै कोढै जाय पग ढोको छो ।
थांको तांणो बाणो प्यारा ! म्हांसे चिनी छानो नहीं
आया छो अबार जाणै थांने दियो कोको छो
व्रजनिधि सांवरा सुण्यां छै गुण रावरा म्हे
नंदका हठीला म्हांको गैलो कांई रोको छो ॥ २ ॥"



## कविवरः श्रीजगदीशभट्टः

सवै०—

यस्त्वनुजो जगदीशकविः किल दत्तकतामगमत्सुकृती
स हि भागवताद्यनुवादमधाद्व्यदधाद्बहुग्रन्थगणं गणिती ।
यत येन प्रतापनरेशप्रतापकृतौ प्रहिता कवितासुदती
सततं स हि संभ्रियमाणकृती रसवाग् जयताज्जगदीशकृती

यस्तु द्वारकानाथभट्टादनुजः श्रीकृष्णकविकलानिधेस्तनुजः स हि चिमनलालशर्मणो गृहे दत्तकोभूत् । गणिती गणितशास्त्रवेदिता । यद्यपि माधवेशात् (प्रथमात्) आरभ्य जगत्सिंहदेवपर्यन्तमस्य कविता प्रवृत्ता, परं प्रधानतया प्रतापसिंहदेवस्य प्रतापसूचिकायां कृतौ (रचनायां) येन कवितासुन्दरी प्रेरिता । सततं संभ्रियमाणा संगृह्यमाणा कृतिर्यस्य । रसवाक् सरसवाणीकः स जगदीशकृती जयतात् ॥ १८ ॥

# चरित्रसंग्रहः

एष हि ज्येष्ठभ्रातुः श्रीद्वारकानाथमहोदयादेव चिन्तामणिमन्त्रं सकलशास्त्राणि कवितां चाधिजगाम। प्रत्येकग्रन्थस्य समाप्तिलेखे लिखत्ययं "ज्येष्ठभ्रातृश्रीद्वारकानाथपट्टशिष्य–चिन्तामणिमन्त्रोपासक०" इत्यादि। अनेन बहवो ग्रन्था निर्मिताः। प्रायो बहूनां पुराणानां कवित्त्वसवैयाच्छन्दस्स्वनुवादोपि विहितः। संस्कृतकाव्यानामप्यस्य भूयसामनुवादः प्राप्यते। श्रूयते यदस्य हस्तेऽनिशं लेखनी तिष्ठति स्म। गच्छँस्तिष्ठन्व्रजन्समयं कवितामयभावेषु विचरति स्म। कवितामारचयन् सोयं न लेखनीं [illegible] छन्दोबद्धा भारती स्वतः प्रावर्तिष्ट। भावान्केवलमयं विचारयति स्म। सेयं प्रसिद्धिः समूलैव। भूयस्तरामस्य ग्रन्थाः सन्ति, एवं सामर्थ्याभावे नैतत् भवेदित्यूह्यते। दुर्बुद्धिहस्तपतिता एतस्यापि ग्रन्था बहवो लोकैरुड्डायिता, बहवो नष्टाः, बहवश्च नामशेषाः। परं प्राप्यमाणग्रन्थेषु त इमे सन्ति—

काव्यविनोदः ( महाराज वीसिंहदेवार्थं विरचितो व्रजभाषामयोऽलङ्कारशास्त्रग्रन्थः, रचनाकालः सं. ८३१ ), किशोरसुखसागरः ( गवडाधीशस्य किशोरसिंहस्य वचनेन निर्मित नवरसानां लक्षणोदाहरणैः स्वनिर्मितैरुपबृंहितः, रसानां समग्रोपाङ्गैः स ः ) जगतरसरञ्जनम् ( श्रीमज्जगत्सिंहदेवार्थं विरचितोऽयमपि नवरसा पङ्गोपाङ्गैः समेतः सलक्षणोदाहरणः। रचनाकालः १८६२ सं. ) जगत विलासः ( जगत्सिंहदेवार्थं देवरतिभावमयः सोयं व्रजभाषाग्रन्थो नि ) भक्तिभरगजा, पदमकरन्द, पदपङ्कज, ब्रह्मवैवर्तपुराणस्य दोहाचतुष्पद न्दःस्वनुवादः, भागवतदशमस्कन्धस्यानुवादः, श्रीवल्लभाचार्यनिर्मित ग्रन्थानामनुवादः, महाभारतस्य वन–

शान्तिपर्वणोरनुवादः, माघकृतशिशुपालवधस्यानुवादः, भर्तृहरिशतकत्रयस्य कवित्वसवैयाच्छन्दःस्वनुवादः, अमरुशतकस्यानुवादः ( कवित्वसवैयाच्छन्दःसु ) इत्यादि।

एतस्य कवितायाः केचिदादर्शाः पाठकानां पुरस्तादुपस्थाप्यन्ते—

"नेवर जराऊ हेमहंसक घराऊ आछे,
किंकिनीके नीके नग नग सो सुहात हैं
सोहैं मुंगमाल गुंजमाल वैजयन्तीमाल
पुहुंची रसाल लाल बाजू दरसात हैं।
पीतपट बांधैं बंसीनाद सुर साधै कहौं
कौलों जगदीस जे गुविन्द छवि गात है
सीसपर ऐसें छहरात मोरचंद्र मानों
आनँदके मंदिरमें धुजा फहरात है ॥ १ ॥"

जयपुरनरेन्द्रहर्म्यमालायां श्रावणतृतीयामहोत्सवः—

"एकै भांति भूषन बसन खास लोगनकें
विना छत्र चौंर पते भूप को पिछानतो
चलत हवाई के तनत तारे अम्बरते
उलटि न आवते तौ तारे कौन मानतो।
तीजको त्यौंहार जयनगर नरेस सोभ
विन वरदान कवि कैसें कै बखानतो
गोरियांके सीसपै न होतीं गनगोरियां तौ
गोरियांके बीच गनगोरियां को जानतो ॥ २ ॥
उतै भूरि बादर हैं बादर महल इतै
चंचला उतैको इतै कंचनियां लाखी है
जिंगन जमात उतै दीपनकी पांति इतै
गरज उतैकों इतै नौवतियां आखी हैं।
उतै सांझफूली इतै रंगरुली सभा सोभ
कवि जगदीस भलिभारथि यों भाखी है

उतैं इन्द्र, राजै इते महेन्द्र श्रीप्रताभूप
अदभुत तीजकी जलूस रचि राखी है ॥ ३ ॥"

गजवर्णनादर्शः—

"वज्रसम सीस टक्करनिसों सहजही सों
ढेर करि डारै रिपुकोट गढ छनमें
जिनकी गराज सुनि लाजत दिसाके पील
डीलके उतंग है अडिग्ग महारनमें ।
ऐसे गजराज महाराज माधवेस तेरे
कहै जगदीस जोम राखै रहैं मनमें
ऐंही हेत आपुस विरोधिनहू एक कीवे
आंखिनमें तेज राखैं तम राखैं तनमें ॥ ४ ॥
सक्रपुरद्वारनिकों पारैं सीसटक्करनि
सुंडनि उखारै बन नंदनके तर हैं
कहैं जगदीस गंडमंडित भँवरगन
झरिबो करत मद आठ हू पहर हैं ।
हलत धरनि अति चलत जबै जे नैक
गज्ज सुनि दिग्गज करत थरथर हैं
साजैं अंग आभूषन काजैं जंगजीतनके
राजै माधवेसजूके ऐसे गजवर हैं ॥५॥""

हयवर्णनादर्शः—

"मधुकरराज राजैं ऐसे दान तुंग तुरी
तुरकी औ ताजी तेजी अबलख लाखनाम
कलित कनककाठी बलित बनात जीन
छलत रकेबै मन, ललित लसैं लगाम ।
कहैं जगदीस ऊंचे डीलनके पीलन से
मात करैं धापनसों सातहय तेजधाम

चाबुक न लागै कहूं हमसे जवीन हूकैं
चौंकतसे रहैं यातैं मान हुं असेस जाम ॥ ६ ॥

पौन मन कैसें धौं लगाइये लवे को, जिन
दूरही रहत जव जलनिधि पाज ते
धरैं जरदोजी जीन मीननके पाइरेन
चव्वत खलीन रविहय छोह छाजते ।
कहैं जगदीस दीहदानके प्रबंधनमें
देत महाराज माधवेस वाजिराज ते
लोक सव लंघनके लायक ही होते, जो पै
करत करत विधिभुज तैं न भाजते ॥ ७ ॥"

शृङ्गारवर्णनादर्शः—

"कुंजनिकी गैल मिली छैल नंदनंदनकों
कुंदनसे अंग छिन एक दरसै गई
कवि जगदीस चैतचंदसो दिखाय मुख
तनमें अतन वेदना कों अति कै गई ।
मंद मंद मदके गयंद जैसी चाल चलि
करिके निहाल नेह वीजनकों वै गई
मृदु मुसक्याइ रसवातनि सुनाइ नारि
तिरछी निहारि वरछीसी उर दै गई ॥ ८ ॥

चहूं ओर छाये छिति छोरन लौं जोर घन
पवन झकोर घोर गाजति घमकि घमकि
कवि जगदीस कहैं मोरनके सोर मांचे
चख चकचौंधी देत चपला चमकि चमकि ।
ऐसे समैं राधेके महल तरैं घनस्याम
ठाडे सुख लेत रूपरंगनि रमकि रमकि

झांकति झरोखैं प्यारी झुकि झुकि रुकि रुकि
झमकि झवीनि देह दुतिसों दमकि दमकि ॥ ९ ॥

सारद सुधाकरकी फैली चहूं चांदनी है
पास लै चकोरनि चकोरी सुधा चाखैं सी
ऐसे समैं चारु दासी संग लियें सारदा सी
बनिके चली है प्यारी अंग अभिलाखैं सी ।
कहि जगदीस आइ ऊपरके खंड देखि
सुमनकी सेज सूनी सब सुख नाखै सी
जोइ रही जकि थकि आनन सहेलिनको
होइ रही खंजन सी आंखै बिन पांखैं सीं ॥ १० ॥"

ऋतुवर्णनादर्शः—

"नरनिकी कहा चली तरनि अताप तप
दरनिमें दुके सिंह चिरिनके चेटेसे
ऐसे समै राधिका गुविंद राजै कुंजनमें
छूटत फुँहारे अग्र असमान भेटे से ।
खुसके सुनत राग खसके अतर लाग
रसके कवित्त पढैं जगदीस जेटे से
अलिभुज भेटे जुही झालरिलपेटे, होत
पंखन झपेटे देत ग्रीखम चपेटे से ॥ ११ ॥"

अमरुशतकानुवादात्कानिचित्पद्यानि समूलमुद्ध्रियन्ते—

त्वं मुग्धाक्षि विनैव कञ्चुलिकया धत्से मनोहारिणीं
लक्ष्मीमित्यभिधायिनि प्रियतमे तद्वीटिकासंस्पृशि ।
शय्योपान्तनिविष्टसस्पृहसखीनेत्रोत्सवानन्दितो
निर्यातः शनकैरलीकवचनोपन्यासमालीजनः ॥

सवै०—प्यारी तुम्हें बिन कंचुकी ही छबि आछी लगै कत अंग बंधैवो
यों कहि प्यारेनें नीवी गही तब आपसमें चितँई अब जैवो ।

जांहि तो बाल कहै जिन जाहु, न जांहि तौ पीतम नैंन रिसैबो
काहू कह्यो बिरी बांधिबो, काहू कह्यो मुहि सूवहि भोजन दैबो॥१२॥

कृतो दूरादेव स्मितमधुरमभ्युद्गमविधिः
शिरस्याज्ञा न्यस्ता प्रतिवचनमुच्चैः प्रणमितम् ।
न दृष्टेः शैथिल्यं मिलन इति चेतो दहति मे
निगूढान्तःकोपात्कठिनहृदये संवृतिरियम् ॥
आवतमें दूरही सों हास सों मनोहर ह्वै
चारिक चरन भरि साम्हें कियो आवनो
कवि जगदीस मैं कह्यो सो आनि सीस धरि
नीचें होइ ऊतरको देति उरझावनों ।
मिलिवेमें तेरी डीठि ढीली नांहि होत यहै
करत है मेरे महा चित्तको तचावनो
मनकों कठोरधारी एरी गोप कोपवारी
सीखी कौंनसों है यह अंतर छिपावनो ॥ १३ ॥

एकस्मिन् शयने पराङ्मुखतया वीतोत्तरं ताम्यतो-
रन्योन्यस्य हृदि स्थितेप्यनुनये संरक्षतोर्गौरवम् ।
दम्पत्योः शनकैरपाङ्गवलनान्मिश्रीभवच्चक्षुषो-
र्भग्नो मानकलिः सहासरभसव्यासक्तकण्ठग्रहः ॥
एकै सेजपर मुख मोर करि मौंन लीने
दोउनके मनमें महाई खेद छयो है
आपसमें दोऊ ही मनावन चहत तौहू
आपनी बडाई पालिवेमें मन ठयो है ।
कवि जगदीस कहै चलिकैं कटाच्छ धीरै
दंपतिदृगनको मिलाव होइ गयो है
हासहि सहित ग्रीव गहि तदुवाहन सों
प्रीति कोपकलह दुहूंनि दूरि भयो है ॥ १४ ॥




सो०—चत्वारो व्रजपाल,—तनयाः सुनयाः समभवन् ।
'मण्डन-छोटेलाल,-वासुदेव-गोविन्द' इति ॥ १९ ॥

व्रजपालमहोदयस्य चुन्नीलालेत्युपनामकस्य तनयाः । सुनयाः सुन्दर-नीतिशालिनः ॥ १९ ॥

मण्डनमहोदयोऽथ तेषामयमाद्यो यस्य
वाणीकरवाद्योपमा सूक्तिरुपभासते
नवरसरत्नाकर-रावलचरित्र-जय-
साहयशःप्रख्यो यस्य ग्रन्थचयो रोचते ।
नानानरपालबहुमानास्पदमेष कृती
श्रीमज्जयसिंहप्रीतिदानायतनायते
देवर्ष्यवटङ्कभट्टतैलङ्गानामङ्कगतः
सोयमकलङ्कशरद्विधुरिव राजते ॥ २० ॥

तेषां तनयानां मध्ये मण्डनमहोदयः आद्यः प्रथमः । वाण्याः सरस्वत्याः करवाद्यं वीणा, तदुपमा । यस्य सूक्तिः अतिशयमधुरा महिता चेत्यर्थः । जयसाहयशः, (जयसाहसुजसप्रकाश) इति प्रख्यो मुख्यो यस्य । एतत्कृतानां ग्रन्थानां नाम, विवरणं चाग्रे दास्यते । बुन्दीश—बापूसिंदे—भारतसिंह—रावलमहोदय—एतत्प्रभृतीनां नानानरपालानां बहुमानस्य भाजनम् । बहूनां राज्ञामाज्ञामधिगत्य अनेन ग्रन्था विरचिताः । जयपुरधरणीन्द्रः श्रीजगत्सिंहः, तत्सुतः श्रीजयसिंहदेवः, एतयोः यशःप्रख्यापनार्थं—प्रतापसुतज-

सचन्द्रिका, जयसाहसुजसप्रकाश एतदादीनां ग्रन्थानां निर्माणं त्वावश्यकमेव। यतो हीमौ मण्डनमहोदयस्य प्रधानाश्रयावास्ताम्। परं 'कृष्णसुजसप्रकाश, जवानचरित्र, शिवनाथगुणसरिता, राठौरचरित्र, बापूचरित्र, सालिमविजयविनोद, मङ्गलप्रकाश, भारतचरित्रप्रभृतयो ग्रन्था ग्रन्थानामादितः सूचितनामधेयानां भूमीशानां मनोविनोदाय रचिताः। एतेषां ग्रन्थानां विषयविवरणमग्रे प्रदास्यते। श्रीमज्जयसिंहदेवस्य (जगत्सिंहतनयस्य) प्रीतिदानस्य आयतनमिव आचरति, उपमानादाचारे क्यङ्। अङ्कगतः समीपमागतः। सोयं मण्डनमहोदयः, कलङ्करहितः शरच्चन्द्र इव राजते, बहुतरकीर्तिशालित्वात्॥ २०॥

सरससुरीतिसुनिबद्धसूक्तिसर्गपटून्
नित्यदा निसर्गजातमधुरमहोमयान्
आद्यकुलदैवताश्रयेण विश्रुताख्यान्नीति-
दक्षतोदयेन दशगुणितगुणोच्चयान्।
शेखावत-नाथावत-राठोडादिकीर्तिवहान्
बुन्दीमहाराजादितो मिलितमहोदयान्
वन्देहं महीन्द्रजयसिंहबहुमान्यकवीन्
सकलकवीन्द्रमौलिमण्डनमहोदयान्॥ २१॥

सूक्तिसर्गे सूक्तीनामुत्पादने पटून्। निसर्गजातं स्वाभाविकं यन्मधुरं महः (तेजः) तन्मयान्। तथा च महापुरुषतेजःशालित्वेपि तेषु स्वाभाविकं माधुर्यमासीदिति सूच्यते। आद्यं कुलदैवतं श्रीहयग्रीवः, सरस्वती च तयोराश्रयेण विश्रुतनामधेयान्। अत एव समये समये त इमे भगवतीं ध्यात्वा अभीष्टं साधयन्ति स्म। बहुषु स्थानेषु परिचयो दत्तः। यथा रावलचरित्रे-"इकदिन श्रीजगदंबको किय पूजन सुख पाय। अरज करी कर जोरिकैं उर आनँदसो छाय॥"। नीतिदक्षतायाः उदयेन, दशगुणितो गुणोच्चयो

गुणसमूहो येषां तान् । यथा ह्येतेषु वैदुष्यं कवित्वशक्तिश्चासीत् सा नीतिपाटवेन दशगुणिताऽभवदित्यर्थः । एते हि जयपुरराज्यस्य विश्वस्तजनसाधनीयेषु बहुषु राजरहस्येषु राजनैतिककार्येषु च प्रसिता अभूवन्, तदेतदग्रे सूचयिष्यते । बुन्दीमहाराजप्रभृतितो मिलितः महान् उदयः (उत्कर्षः) येभ्यस्तान् । बुन्दीनरेशेन, बापूसिंहशिन्दे अवधप्रान्तनरपतिना, अन्यैश्च भूपतिभिः प्रत्यक्षगजो रत्नमाल्यादि च भूयसी विभूतिर्दत्ता । श्रीमतो महीन्द्रस्य जयसिंहस्य बहुमान्यान् राजकवीन् । सकलकवीन्द्राणां मौलेर्मण्डनभूतान् मण्डनमहोदयान्, मण्डनपदस्य तन्त्रेण तथार्थः । कवीन्द्राणां मौलिभूतान्मण्डनमहोदयानिति वाऽर्थः । आदरार्थं बहुवचनमिति पूर्वमुक्तमेव ॥ २१ ॥

सो०—मुनिमुनिवसुहिमधाम,-मिते वत्सरे जयपतिः ।
श्रीजयसिंहो ग्राम,-मदित मुकुन्दपुराभिधम् ॥ २२ ॥

हिमधामा चन्द्रः । १८७७ तमे विक्रमसंवत्सरे । जयपतिः जयपुरधरापतिः । श्रीमान् जयसिंहदेवो मुकुन्दपुराभिधं ग्रामम्, अदित अदात् । यो ह्यद्यावधि एतद्वंशजानामधिकारेऽस्ति ॥ २२ ॥

दो०—सूक्तिसुहितसामन्तगणसादरसमर्पितानि ।
तुङ्गतुरङ्गमतङ्गजप्रभृतिधनान्युदितानि ॥ २३ ॥

सूक्तिभिः सुहितः प्रीतो यः सामन्तगणस्तेन सादरं समर्पितानि । तुङ्गा उन्नता ये तुरङ्गा मतङ्गजाश्च तत्प्रभृतीनि धनानि उदितानि जातानि । सामन्तदत्तानि बहूनि धनान्यागतानीति भावः । सामोदभूमीशश्रीरावलवैरीसालसिंहेन, लदानाधिपति—माधवराजपुराधिकर्तृ-रावभरतसिंहेन, चौमूभूमीशनाथावतकृष्णसिंहेन, अन्यान्यैश्च जयपुरराज्यस्य अपरिसंख्यातैः सामन्तैर्मण्डनमहोदयाय स्वयशःप्रख्यातये भूयांसि धनानि दत्तानि । यदा हि टोंकराज्यनवाबेन मीरखांनामकेन राजपुत्रप्रदेशस्य स्थाने स्थाने लुण्ठनमारणमाक्रमणं चारब्धं तदा हि मीरखानो माधवपुरसमीपे जयपुरराज्यस्य

भूयसीं भूमिमाचक्राम । लावाराज्योपरि अभियानमकरोत् । तत्पराभवाय श्रीजयपुरधरणीन्द्रेण जगत्सिंहदेवेन बहवः सामन्ताः प्रेषिता अभूवन् । तेषु लदानास्थानाधिपतेः रावमदनसिंहस्य पुत्रो भरतसिंहोपि प्रधानतया प्रहितोऽभूत् । स हि तं माधवपुरप्रान्तात्पराजित्य दूरं निर्वासयामास । सहैव च माधवराजपुरानामकं जयपुरराजभुक्तं पत्तनं स्वाधिकारे चक्रे । एतत्पूर्वमेतत्पत्तनं कमध्वजक्षत्रियाणामधिकारे आसीत् । ते च तस्मिन्समये निर्वीर्या अभूवन्निति मीरखानस्याधिकारे कस्मिन्नपि समये गच्छेदिदं पत्तनमिति शङ्कया सोयं भरतसिंहो माधवराजपुराभिधं राज्यमात्मनोधिकारे चक्रे । एतदसहमानाः कमध्वजक्षत्रियाः स्वकुलक्षयमविचारयन्तो मीरखानमेव शरणं ययुः । माधवराजपुराधिकारस्य लोभं दत्वा मीरखानं भारतसिंहस्य प्रातिद्वन्द्व्ये माधवराजपुरोपर्याक्रमणाय आनिन्यिरे । इतस्तु श्रीजगत्सिंहमहाराजस्य कृपापात्रमयं महावीरो भारतसिंहो माधवराजपुरारक्षायै मीरखानेन सह सविक्रमं युयुधे । जयपुरेन्द्रस्याज्ञया बहवः सामन्ता भारतसिंहस्य सहायका भूत्वा मीरखानस्य प्रतिपक्षे जग्मुः । महापराक्रमो भारतसिंहो मीरखानं पराजित्य निर्वासयामास, तद्गर्वगञ्जनाय च तस्य स्त्रियो बन्दीकृत्य निजदुर्गं आनिनाय । एतं महाविजयं मण्डनमहाकविः 'भारतचरित्र' नामके काव्ये सुरुचिरं लिलेख । तस्मिन् युद्धे ये ये सामन्ता ग्रामाधीशाश्च मीरखानप्रातिपक्ष्ये जग्मुस्तेषां सर्वेषां प्रायो नामानि भारतचरित्रे लिखितानि । यथा—

"बेटा भोपतसिंहको लेकैं संग जुवान । लावासों चलि आयकें ठाडो भयो खुमान ॥ भुज फरकत हरखत हियें नरू वंसके साथ । तुरक प्रानके लैनकों आय धस्यो हरनाथ ॥ लियो कौनने आजलौं जाके बलको अन्त । गांव झराणाको नरू धस्यो आय जसवन्त ॥ जानि लिये जाने सबै जंग जीतिके दाव । चौरूंको जीवन खडो दे मूंछनपर ताव ॥"

एवंविधानि परःशतानि सामन्तानां नामानि तत्रोपलभ्यन्ते । ततश्च ये ये सामन्ता युद्धे जग्मुस्ते सर्वे एव मण्डनकविं स्वनामनिवेशाय सूचयांचक्रुः । यतो हि राजाज्ञया ते सर्वे सामन्ताः प्रहिता अभूवन् । युद्धे च विजयोऽ-

भूदिति जयपुरेन्द्रस्य सविधे संमानप्राप्तये, इतिहासे यशःप्रख्यातये च सर्वे एव मण्डनकविकृतभारतचरित्रकाव्ये स्वनामनिवेशार्थं कविमिमं पूजयांचक्रुः। अत एव सामन्तकृतो भूयान् संमानो मण्डनमहोदयस्यासीदिति सर्वथा सुस्पष्टमेव। तदेतद्भारतचरित्रविवरणे पुनः स्पष्टं भवेत् ॥ २३ ॥

महिपतिमानितभट्टमणिमालामध्यगतो हि।
मेरुरभून्मण्डनकविर्मतं यस्य मधुदोहि ॥ २४ ॥

महिपतिभिर्मानितानां भट्टमणीनां या माला, तस्या मध्यगतो मेरुरिव मण्डनकविरभूत्। यस्य मतं सूक्तमिति यावत्, मधुदोहि सुमधुरमासीत्। मालायां यदा मेरुरायाति तदा माला पूर्यते। एवं राजभिः संमानितेषु तैलङ्गभट्टमहोदयेषु मण्डनमहोदयश्चरमो बभूव। यद्यपि लक्ष्मणभट्टः पश्चादपि सुप्रतिष्ठितोभूत्तथापि मण्डनसदृशो महाकविः कतिवारं प्राप्तगजसंमानो राजकीयरहस्यभुक्तः प्रभावशाली च नाग्रे बभूवेति सूच्यते ॥ २४ ॥



## चरित्रसंग्रहः



महाकविर्मण्डनमहोदयः श्रीजगत्सिंहधरणीन्द्रस्य तत्तनयस्य श्रीसवाईजयसिंहदेवस्य च (द्वितीयस्य) समये कवितां चकार। एष हि श्रीश्रीजगत्सिंहभूपालस्यैव यशः प्रधानतया वर्णयति स्म। अनेन हि आत्मरचितेषु साहित्यग्रन्थेषु सर्वत्रोदाहरणस्थले श्रीजगत्सिंहनरेन्द्रस्य यश एव गीतम्। एतस्य कवेः समय एव श्रीमतो जयसिंहधरणीन्द्रस्य जन्माऽभवत्। श्रीमति जगत्सिंहदेवे लोकान्तरमुपयाते जयपुरराज्यस्य शासनसूत्रमतिविशृङ्खलमभूत्। तस्मिन्समयेऽन्तःपुराधिकृतो मोहननामा वर्षवर (नादर) एव सर्वस्मिन्नपि राजकार्ये प्रधानमभवत्। अस्य हि विरोधिदलेन सह गुप्ताभिसन्धिरभूत्। एष हि नरवरस्थानात् मानसिंह-

नामानं कुमारमानीय जयपुरराजसिंहासने स्थापयितुमुद्यमं चक्रे । स हि कुमारो राजहर्म्येषु निवासितोप्यभवत् । परं जगत्सिंहधरणीन्द्रस्य राठोडकुलजाता प्रधानमहिषी तमिमं प्रयासं परिज्ञाय व्यासफौजीरामस्य साहाय्येन चंदो-रूपानाम्न्योरन्तःपुराधिकृतयोः (बडारण) मन्त्रणया च रावलवैरीसालसिंहमग्रे कृत्वा तदिदं षड्यन्त्रं विफलयामास । श्रीजगत्सिंहधरणीन्द्रस्य भाटीकुलजाऽपरा महिषी सगर्भाऽसीत् । निभृतं निभृतं तद्रक्षायाः प्रबन्धं कृत्वा राठौडकुलजा महाराज्ञी, उपरितो मोहनचक्रेऽनुमतिमिव ददौ । समये श्रीमतो जयसिंहमहाराजस्य जन्माभवत् । सर्वं विरोधिदलं रावलवैरीसालस्य दृढतया नीतिकौशलेन च परास्तमभवत् । तदेतत्सर्वं काण्डं मण्डनकवेः समक्षेऽभवत् । आसीदयं तस्मिन्किञ्चित्संमिलितोपि । एष हि रावलवैरीसालसिंहस्य मन्त्रणादाताऽतिकृपाभाजनमासीत् । एष हि तदाज्ञया तदभिप्रायानुसारमेव सर्वमेतच्चरित्रं निजरचितेषु राठोडचरित्र-रावलचरित्र-जयसाहसुजसप्रकाशनामकेषु व्रजभाषाग्रन्थेषु प्रकाशयामास ।

मण्डनकविर्यथा प्रसिद्धः कविरासीदेवं राजनीतिकार्येष्वपि सोयं महानिपुणोभवत् । राजकीयाधिकारिष्वस्य सुमहान् संमानोभूत् । जयपुरराज्यस्य तस्मिन्समये प्रधानकर्णधारभूतो रावलश्रीवैरीसालसिंहोऽस्य कवेर्महान् गुणग्राही सुबहुतरं च संमानयिताभवत् । मण्डनकवीन्द्रेणाप्येतस्य महोदयस्य प्रशंसायां रावलचरित्रनामा ग्रन्थो निर्मितः । एतदतिरिक्तं राठोरचरित्र-जयसाहसुजसप्रकाशादिग्रन्थेष्वपि रावलमहोदयस्य शतमुखं प्रशंसा कृता ।

तत्सामयिका मन्त्रिप्रवरव्यासफौजीराम-दीवानशिवनारायणप्रभृतयो ये राजकीया अधिकारिण आसँस्तैः साकमस्य भूयसी घनिष्ठताभूत् । स्थाने स्थाने तेषां प्रशंसोपलभ्यते । मण्डनमहोदयो निजजीवने राजकीयरहस्यकार्येष्वेव संमिलितोऽभवत् । पश्चात् टोंकनवावेतिप्रसिद्धेन मीरखांनेन यदा हि जयपुरराज्ये उत्पात आरब्धोऽभूत्तस्मिन्समये रावलवैरीसालसिंहः श्रीजगत्सिंहनरेन्द्रादाज्ञां प्राप्य ब्रिटिशाधिकृतेन जनरलमैटकाफमहोदयेन सह एतत्संबन्धे मन्त्रणां कर्तुं दिल्लीमगमत् । श्रीमान्मण्डनकविरप्येतेन सहैव प्रहितोऽभवत् । तेन स्वचक्षुषा यत्प्रेक्षितं तदेव रावलचरित्रे सर्व,

तत्सम्बन्धि वृत्तं वर्णितम् । तेन हि राजनीतिकौशलस्य भूयांसि वृत्तानि तस्मिन्प्रदर्शितानि । सर्वाणि च तानि यथार्थानि स्वचक्षुःप्रेक्षितान्यासन् । उक्तं हि तत्र मण्डनमहोदयेन—

"ये चरित्र आखिनसों देखे, तब हियमें सुख छायो ।
श्रीप्रतापसुत जगतसिंहको यह प्रताप जस गायो ॥"

एवमेव श्रीजयसिंहदेवस्य जन्मावसरेपि मोहननादरकृतं महत् षड्यन्त्रं प्रावर्तत । मण्डनकविस्तत्समयेपि सर्वस्मिन् रहस्येन्तर्भूत आसीत् । राजमहिष्या राठोडवंशजातया, रूपा-चन्दोनाम्न्योरन्तःपुरप्रबन्धकर्त्र्योर्मुखेन यद्यद् वाचिकं प्रदाय राजप्रबन्धकर्तॄणां रावलवैरीसालसिंहादीनां सविधे विश्वस्तजनसंप्रधार्यं राजरहस्यं प्रकाशितं तत्सर्वमस्य कवेः समक्षमिवाभवत् । एतद्धि राठोरचरित्रे स्पष्टीकृतं कविना । इदं कारणमेवावलम्ब्य, तस्मिन् षड्यन्त्रे ये ये रावलवैरीसालस्य विरोधिन आसंस्ते सर्वेपि मण्डनकवये द्रुह्यन्ति स्म । अवकाशं प्राप्य इमं तिरस्कर्तुमिमे अन्विष्यन्ति स्म । श्रूयते सोयं मण्डनकविः कस्मिन्नपि राजनीतिचक्रे पातितो विरोधिनां हर्षजनकोऽभवत् । श्रूयते चायं लावाग्रामस्थिते दुर्गे दृष्टिनिगडितः ( नज़रकैद ) कृतोऽभूत् । परं यदा मण्डनकविपक्षीयस्य राजचक्रस्य बलं प्रस्तृतम्, वास्तवरहस्यं च प्रकाशितमभूत्तदायं ससत्कारमुन्मोच्य हस्तिस्कन्धस्थितः सबहुमानं गृहं प्रेषितो राज्ञेति ।

एतस्य साक्षात्प्रमाणं तूपलभ्यमानेष्वस्य कवेर्ग्रन्थेषु नोपलब्धं परं 'कृष्णव्रजविहार'नामको ग्रन्थः कविना लांबादुर्गे एव राजहर्म्ये स्थितेन लिखित इति प्राप्यते । तद्ग्रन्थस्यान्ते लिखितं तेन—

"श्रीजयसिंहनरिंदको लांबागढ बलभार ।
काचमहलमें ग्रन्थने लिय मंगल अवतार ॥"

मण्डनकवीन्द्रो बहुषु राजस्थानेषु संमानित आसीत् । जयपुरराज्यं त्वस्य प्रधानमाश्रयोऽभूत् । अत्र ह्यस्य वंशपरम्परातः प्रसिद्धिः प्रतिष्ठा चासीत् । जयसिंहधरणीपुरन्दरेण संतुष्यास्मै मुकुन्दपुराभिधो ग्रामः पुण्यार्थम् ( उदक ) समर्पितोऽभूत् । रावलवैरीसालसिंहादयो राजकीयाधिकारिणोस्या-

तिवनिष्ठाः कृपाकारिण आसन् । जयपुरराज्यस्य सर्वेपि सामन्ताः, कवेरस्य तस्मिन्समये राजसविधे सुबहुलां प्रवृत्तिमालोक्य एनं पूजयित्वाऽनुकूलयन्ति स्म । यथा हि मीरखानयुद्धे सर्वेपि सामन्ताः कविमिमं संतोषयांचक्रुर्यस्य वृत्तं बहुशः पूर्वं लिखितमग्रे च किञ्चिल्लेखिष्यते । एतदतिरिक्तमन्ये बुन्दीदेशप्रभृतीनां राजान. कविमिमं ससंमानमाह्वयन्ति स्म । बुन्दीनरेशार्थं कविनानेन बहुशो ग्रन्था विरचिताः । बुन्दीपतिस्तस्मिन्समये श्रीमान् रामसिंहभूपो बभूव । तदर्थं 'रामजसचन्द्रिका'नामको ग्रथो व्यलेखि । 'रससमुद्रो'पि बुन्दीनरेशार्थमेव विरचितोभवत् । एष राजापि ग्रामादिभूसम्पदं भूयसीमस्मै समर्पयामास ।

अवधप्रान्ते तस्मिन्समये बापूसिंहशिन्दे नामको राजासीत् । एष हि महाप्रतापी आसीत् । दलेलखानेन सह मीरांपुरस्य प्राङ्गणेऽस्य महद् युद्धमभूत् । विजयी सोयमात्मनः प्रतापं सुबहु प्रासारयत् । भारतेऽधिकारं प्राप्तैर्गौराङ्गैः साकमप्यस्य किञ्चित्प्रतीपताभूत् । अयमपि राजा कविराजमिमं सबहुमानमानाय्य बहुतरं सत्करोति स्म । मण्डनमहोदयेनापि नरेन्द्रस्यास्य यशोवर्णनायां 'बापूचरित्र' नामकमत्युत्तमं काव्यं व्यरचि । एतस्य कवितायाः कियानप्यादर्शोऽग्रे प्रदास्यते । एवमयं कविर्बहुषु राज्येषु प्रख्यातः प्राप्तसंमानश्चासीत् । बहवोऽस्य ग्रन्थाः स्वयं मया नावलोकितास्तेष्वपि भूयांसो ग्रन्था भूपतीनां प्रशंसायामेव लिखिताः सन्ति । यथा–सालिमविजयविनोद–जवानचरित्र–शिवनाथगुणसरिता–आदयः । नाम्ना स्पष्टं प्रतीयते, यदेते भूपतिविशेषस्य यशोवर्णन एव लिखिताः सन्तीति । ये ग्रन्था मया स्वयमवलोकितास्तेषां नामानि विवरणं च किञ्चिदग्रे दास्यते । परमस्मिन्सन्देहः किञ्चिदपि नावतिष्ठते–यन्मण्डनकविवरः स्वजीवने बहुषु राजस्थानेषु राजभिः परमं संमानं प्रापितः । कतिवारं च साक्षान्मतङ्गजस्कन्धमधिरुह्य गृहमायातः । यथा हि प्रसिद्धं कुले ।

कविरयं यथा राजसु प्रसक्त आसीदेवं राजवंशस्येतिहासे वंशपरम्परापरिज्ञाने चापि सुप्रौढ आसीत् । यस्य यशोवर्णनमनेन कृतं तस्यैव हि पूर्वं वंशवर्णनमारब्धम् । राज्ञामतिरिक्तं ये ये राजपूजिताः सन्तो महान्तश्च

(सन्त, महन्त) आसन् तेषामपि वंशपरिज्ञानमस्याभवत् । अनेन हि 'मङ्गलप्रकाश' ग्रन्थे गालवाश्रमाचार्याणां वंशपरम्परा वर्णिता ।

अस्य हस्तेन बहूनां राज्ञां राजकीयपुरुषाणां च प्रशंसात्मकानि काव्यानि लिखितानि । तस्मिन्समये कविमिमं महाराजप्रियं महानिपुणं चावलोक्य सर्वेप्यात्मनो यशःप्रसृतये कविनानेन सह सद्भावमास्थापयन् । सुबहुपूजितः सोयमपि तेषां यशोगीतीर्जगौ । सन्तुष्टः कविः किमतोऽधिकं कुर्यात् । अत एव बहवो ग्रन्था अस्य प्रशसापराः सन्ति । स्वल्पे चावसरे प्राप्ते प्रायः संवादीनि पद्यान्यपि परस्परं ग्रन्थेषु समावेशितान्यभूवन् । परमस्य कविता मर्मस्पर्शिनी सुमधुरा चासीदत्र नासीत्संशयः । जयपुरीयैः साकं सुबहुघनिष्ठतयाऽस्य व्रजभाषायां कुत्रचित् कुत्रचित् राजपुत्रप्रान्तीयशब्दा अधिकमुपलभ्यन्ते । यथा 'पठाए' स्थाने 'खिनाये' इति कुत्रचिद्दृश्यते ।

अद्यावधि विदिता अस्य इमे ग्रन्था सन्ति—प्रतापसुतजसचन्द्रिका, जयसाहसुजसप्रकाश, राठोडचरित्र, रामजसचन्द्रिका, रावलचरित्र, भारतचरित्र, बापूचरित्र, रसरत्नावली, रससमुद्र, कृष्णसुजसप्रकाश, नवरसरत्नाकर, श्रीकृष्णव्रजविहार, जवानचरित्र, षड्ऋतुवर्णन, भगवद्भक्तिविलास, सुलोचनाचरित्र, शिवनाथगुणसरिता, रामनीति, रामचरित्र, सालिमविजयविनोद, बालकाण्डरामायण, हनुमानपच्चीसी, मङ्गलप्रकाश, वल्लभाचार्यजीकी पृथ्वीपरिक्रमा, फुटकरकवित्त, इत्यादयः । एतेषु ये ये ग्रन्था मयाऽवलोकितास्तेषां विवरणमधस्ताद्दीयते—

## भारतचरित्रम्

टोंकराज्यस्य नवाबो मीरखानो 'लावा' राज्योपर्याक्रमणमकरोत् । स हि जयपुरराज्यभुक्तां माधवपुरप्रान्तवर्तिनीं बहुतरां भूमिमप्यात्मनोऽधिकारे चक्रे । तदा हि जयपुरेन्द्रस्य श्रीजगत्सिंहमहाराजस्याज्ञया लदानास्थानाधिपते रावमदनसिंहस्य पुत्रो भारतसिंहो लावाराज्यस्य सहायतार्थं निजसैन्यमादायाऽभियानमकरोत् । एष बली मीरखानं पराजित्य माधवपुरसमीपान्निःसारयामास । अस्यैव भारतसिंहस्यास्मिन् काव्ये यशोवर्णनम् ।

पूर्वं माधवराजपुराभिधं पत्तनं कम्भवजक्षत्रियाणामधिकारे आसीद्येषां परिवृढस्तस्मिन् समये मानसिंहाख्योऽभूत्। तत्रत्यराजपुत्राणामकर्मण्यतां निरीक्ष्य मीरखांनवाबस्याधिकारो भवेदिति शङ्कया श्रीजगत्सिंहमहाराजस्यानुमतिमुपलभ्य भारतसिंहस्तत्राधिकारमकरोत्। मानसिंहो राजन्यगौरवं विस्मृत्य त्वमेव मे सर्वस्वमित्युपस्तुवन् मीरखानस्य शरणं ययाचे। मण्डनमहोदयैरेवं लिखितम्—

"मौज मही मनसूबे सबै तुम सील सँतोष इमैं भरि बाथ हो।
मा भगिनी बहू बेटिनसें तुम जोरसों राजत कीये सनाथ हो।
मीरखां! पाछे अगे तुम दीखत, मान महिन्द्र कहै सुख साथ हो।
नाथ जलन्धर बोलैं नहीं, तुम बोलते मेरे जलन्धरनाथ हो॥" इत्यादि.

नानाविधप्रलोभने पतितो मीरखानो भारतसिंहविजयस्य प्रणमकरोत्। स हि स्वबलविभीषिकाप्रदर्शकमेक पत्रं माधवराजपुरापरावर्तनाय भारतसिंहाय प्राहिणोत्। अयमपि तदुत्तरे युद्धाय तमाजुहाव। तत्र घोरयुद्धे मीरखानं विजित्य तद्दर्पदलनाय तस्य स्त्रियो बन्दीकृत्य निजदुर्गं आनिनाय। यथा—

"मदनके बेटे तैने मार पठनेटे सबै
घेरी ता समैंमें भई देह जिन जुरमें
मुख महताब औ गुलाबसम आब दिपै
नैंन धोय सुरमें बह्यो है नीर उरमें।
हीरा पुखराज लाल मोतिनसों छाई रहै।
मंडन अनेकविध खातीं खान खुरमें
बात यह बांकी चहूं चक्कनमें छाय गई
ल्यायकें किलामें धरीं मीरखांकी हुरमें॥"

ततोतिक्रुद्धः सर्वबलपरिवारं नीत्वा मीरखानो माधवराजपुरमाचक्राम। भारतोपि राजपुत्रसैन्यान्यादाय सविक्रममनेन सह घोरं युयुधे। एतद्धि सुमहद् युद्धमासीत्। श्रीजगत्सिंहस्याज्ञातो जयपुरराज्याधीना बहवः सामन्ता अस्मिन्युद्धे भारतसिंहसहायतायै समामिलन्। तस्मिन्समये प्रसिद्धानां वीरक्षत्रियाणां बहूनां तु मण्डनकविनैव नामानि दत्तानि। परं

यानि यानि सामन्तराज्यानि तस्मिन्युद्धे योगं ददुस्तेषु केषांचन भारतचरित्रनामानि संगृह्यादर्शरूपेणाधस्तादीयन्ते—लावा, अजमेरी, पचाला, टीकलगांव, सिरोही, खिजूख्या, कूंतल, हथेली, चांदावास, मादी, संकरपुर, मंडोर, लाखावास, परवण, मदनपुरा, चकवाडा, बासडी, चांवड्या, झाक, वास, राताखेडा, गोऊदी, झराणा, चांदमा, चोरूं, झाडला, सेदरा, आनडौत, खेडा, कागा, रारा, पिणाची, पियलाज, भँखरोटा, डाभच, कादेडा, लदाना, सिराणी, प्रभृतीनि।

नैतद्युद्धं सामान्यमासीत्। अष्टमासपर्यन्तं महावीरो भारतसिंहः सोत्साहं युयुधे। यथा ह्युक्तम्—

सोरठा—"आठ महीना जंग, किय इँहिं बिधि भारथबली।
बिनचोटिनकी सैन, सबै तेग लै दलमली॥"

अस्मिन्काव्ये युद्धविषये ओजोव्यञ्जिका साधीयसी निबद्धा मण्डनकवीन्द्रेण कविता। अरिपलायने प्रोक्तेषु पद्येषु कानिचिद्दीयन्ते—

"कोइनने जिनके लखे न नख नैनसों
तिनकों मिलै न अब पैन्हनकों तनियां
सोती सुखसेजनपै सदा अब भूखी भई
फिरत हैं देखतीं दुकाननमें बनियां।
मंडन महीन्द्र राव मदनके भारथनें
कीनीहैं कितेकनकों दूर दुरकनियां
दुःखनसों छाय घर जाय जाय दुनियाके
पनियां भरन लागीं सबै तुरकनियां॥ १॥
भारत तिहारी तडितासी तरवार चलैं
मीरखां नवाबजूकी सेना भई बेगमें
यह सुनि छांडि चलीं बाम तजि धामनकों
पायनमें छाले परे भाजनके बेग में।
अंगनमें कामकी कलासीं, मुख चंद्रमासे,
कभूं न हि चूकीं रतिकेलिनके नेगमें

गिरिनमें कंदरामें नलनमें नालनमें
तोसौं डरि डोलत नवाबनकी बेगमैं ॥ २ ॥
तेजभरी तीखी तरवारनके ताव लखि
दाव करि केते सबै सेनासों दल्यो गयो
सुनिके उमाह भरे वाह वाह ललकारे
हारे हारे बचन उचारत हल्यो गयो ।
मंडन न जान्यो रघुवंसिनको भारी बल
डारिकें हथ्यारनकों हियमें तल्यो गयो
मदनके भारत प्रताप सब देकैं तोकों
मुखकों मलीन करि मीरखां चल्यो गयो ॥ ३ ॥"

अस्य ग्रन्थस्य रचनाकालः १८७४ तमो विक्रमसंवत्सरः ।

## रावलचरित्रम्

मीरखानेन पुनर्जयपुरराज्ये उत्पात आरब्धः । बहुषु दुर्गेषु ग्रामेषु च तेनाधिकारो विहितः । जयपुरेन्द्र· श्रीजगत्सिंहमहाराजस्तस्मिन् समये योधपुरमयासीत् । स हि वृत्तमेतदाकर्ण्य जयपुरमागतो मीरखांनिर्वासनाय सर्वेषा सामन्तानां महतीं सभामकरोत् । तत्र रावलवैरीसालसिंहं देहलीं गत्वा जनरलमैटकाफनाम्ना ब्रिटिशाधिकृतेन सह साहाय्यं गृहीत्वाऽस्य निर्वासनाय प्राहिणोत् । देहल्यां जयसिंहपुरे सदलबलस्य रावलमहोदयस्योपनिवेशोभवत् । तत्र राजपुत्रप्रदेशस्य निरीक्षणार्थं नियतेन मैटकाफनाम्ना सवं संमन्त्र्य, नानाविधराजनीतिमर्माणि विविच्य तत्साहाय्यं प्राप्य पुनर्जयपुरमुपागतो रावलमहोदयो मीरखानं जयपुरप्रान्तादेव निरवीवसत् । ततः परावृत्य हथरोहीग्रामे कृतोपनिवेशे रावले, मण्डनमहोदयो महाराजजगत्सिंहदेवस्य सविधे प्रतिदिनं वर्धमानं मोहननाजिरस्याधिकारं लोकानामहिताचरणं चासूचयत्—

दो०—"पीछेसौं नादर बढ्यो गहि हरामकी गैल ।
जगतसिंहमहाराजसौं बाढ़ी दिन दिन खैल ॥

नादर मरद ह्वैकें देत दुख सिंहन कों
तोहीसों टरैगो तेरै बुद्धि बलवांन को
चाहत न तोकों ते भजैंगे भयभीत ह्वैकें
जोर लखि तेरी तडितासी किरवान को।
कच्छकुलतिलक जगतसिंहजूके घरैं
तेरो ही बढायो रंग बढि है निसान को
ढाल रघुवंसकी बिसाल नृप बैरीसाल
रामने दियो है तोकों काम हिन्दुवान को॥"

आसीत्तस्मिन्समये महान् प्रतापो वर्षवरस्य। न कोऽपि तदभिमुखं द्रष्टुमप्यपारयत्। मण्डनेनोक्तम्—

"सकल राव, राजा सकल, सकल हिन्दुकुलसूर।
नादरकों देखै खड़े, तजे मुखनके नूर॥
डारि दई सगरेनने कर कर सों करवाल।
नादरकों जिय जानि लिय काल व्याल विकराल॥"

सोप्यनेन नीतिकुशलेन राज्यान्निर्वासितः। इदं नीतिचक्रमस्मिन्ग्रन्थे विस्तरतो वर्णितम्। अन्ते प्रोक्तम्—

"वचनको संगी जंग जालिम फिरंगी रंगी
बड़ो मटकलप बनाय लियो चेरो है
नाजरसों मिलिकें विचार लियो राज लैबो
ऐसो जनरैल ताहि बातन सों घेरो है।
जगमें प्रसंस रघुवंसमें उजेरो कियो
विमुख महिन्द्रनके हिये उर झेरो हैं
सांचो परतच्छ लच्छ लच्छ कछवाहन में
बैरीसाल रावल प्रताप आज तेरो है॥"

यस्मिन् समये महाराजः श्रीजयसिंहदेवो बाल्यावस्थायामासीत्तदायं वैरीसालसिंह एव राज्यपरिचालनमकरोत्। एतस्य दिनचर्या, प्रतापश्च

मण्डनमहोदयेन सुरम्यं वर्णितः। परं सा विस्तृतेति राजसभासंनिवेशादिकः कियानंशो दर्श्यते—

पद्धरी—"नाथावत वैरीसाल छत्र। सब राजसभा सँग लै पवित्र॥
जब आइ गेहसों करत काम। भरजात तुरत दीवान आम॥
हाजर जहँ दीखत सब दरोग। बकसी आवत निज लियें लोग॥
नायब समेत बल फोजदार। दीखत हाजर गढमुलकवार॥
सगरी पलटनके कुमेदान। पावत नित सब सनमान मान॥
सब देसनके आवत वकील। बैठत निज बैठक बिना ढील॥
सब देसनकी लै खबर खीस। हाजर सगरे कुफिया नवीस॥
छत्तीस कारखाने उदार। सब खबर सुनावत औधदार॥
जो करत अरज जिंहिंरीति जोइ। लखि राजनीति कह देत सोइ॥
अकबार सुनावत खबरवार। सब हिन्दुहद्दको राजसार॥
पतसाह घरनकी कढ़त बात। अँगरेज सदरकी विधि लखात॥
छत्तीस कारखाने बहाल। निस दिन बढिवेकी रचत चाल॥
गढ़ गांव सहर के सुनत न्याय। कहि देत रीति व्यवहार पाय॥
सुब सुनत परगनेके हवाल। कुफिया घर, रावल हिन्दुपाल॥
सुनि लेत राजको सब हिसाब। बिन ताव, सांच पूछत जुवाब॥
बकसत सेवा लखि सिरोपाव। मूछन पै सांचे, तरलताव॥" इत्यादि

एतस्य रचनाकालः १८७६ तमो विक्रमसंवत्सरः।

## राठोडचरित्रम्

जयपुरपुरन्दरस्य श्रीजगत्सिंहधरणीन्द्रस्य राठोडकुलजाता पट्टमहिषी, चादरचक्रे कथं राज्यरक्षायां संमिलिताऽभवत्, भाटीकुलजाया राजमहिष्या गर्भतो लोकान्तरमुपयाते जयपुरेन्द्रे कथमिव श्रीजयसिंहदेवस्य जन्माऽभवत्, वैरीसालप्रभृतिभिः कथं विरोधिचक्रमुन्मूल्य श्रीजयसिंहदेवस्य राज्यघोषणा प्रेरिता परितः, इत्यादि सर्वं वृत्तं सुललितसुप्रसन्नया रीत्या वर्णितम्। रावलचरित्राद्विषयोस्य भूयः संवादी। अस्य रचनाकालः १८७६ विक्रमसंवत्सरः।

## जयसाहसुजसप्रकाशः

श्रीजगत्सिंहमहाराजो भाटीकुलोत्पन्ना राजमहिषी चोभावेव निम्बार्कसंप्रदायाचार्यस्य श्रीसर्वेश्वरशरणदेवस्य शिष्यावास्ताम्। तस्मिन्समये सलेमाबादसिंहासनस्थश्रीनिम्बार्कशरणदेवः संप्रदायाचार्य आसीत्। तस्य सविधे राजदम्पतिभ्यां कुमारार्थं प्रार्थना कृता। तेन गुरुं ध्यात्वा वरः प्रत्तः। श्रीमतो महाराजजयसिंहदेवस्य जन्माभवत्। एतस्य परिवर्तने निम्बार्कशरणदेवेन समस्तभारतवर्षस्य चतुःसंप्रदायवैष्णवानां महामेलकस्याज्ञा दत्ता। अत एव जयपुरराज्यस्याज्ञया सुमहान् साधूनामेको मेलकः सममिलत्।

"संवत अष्टादश सहित सतहत्तरको साल।
पोस मास सुदि पूर्णिमा दिन मेला सुभकाल॥
चार धाम, सबदेसमें जे साधुनके बृंद।
संप्रदाय चारोंनके, देखहु आय अनंद॥"

अतिमहदस्यायोजनमभूत्। कतिपयमासेभ्यः पूर्वत एवास्य संभारः समभ्रियत। चूर्ण-शर्करादीनां पर्वता एव राशीक्रियन्ते स्म। घृत-तैलादीनां कुण्डा अभ्रियन्त। किं बहुना, साधुप्रिया मादकसामग्री अपि पूर्णरीत्या संचिताभूत्, यस्या हि सकुतुकं मण्डनमहोदयैर्वर्णनमेवमक्रियत—

हरिगीत—"भलभंगके भरि दिय खजाने, चडस गंज अफीम है।
दस बीस मन जरदा तमाखू, ल्याय धरब मुकीम है॥
मँगवाय कारी मिरच, घर भरि गंज गांजेके किए।
दस बीस लख मन महत इंधन ल्याय घन बन चिन दिए॥"

एतस्य महामेलकस्य स्थानं आम्बेरनगरमार्गे द्वितीयजयसिंहदेवस्य यज्ञस्थलभूमेः पर्यन्तभागोऽभूत्।

"अम्बावति जयनगरके बिचमें राधाबाग।
जहँ मेलाके करनको बाढ्यो हिय अनुराग॥
राजसूय अरु अस्वमख जँह कीनो जयसाह।
तहां फेर जयसाहको फैल्यो पुन्यप्रवाह॥"

एतस्यापि भूयान् विषयो 'राठोरचरित्रेण' संवदते। अस्य रचनाकालः १८७८ तमो विक्रमसंवत्सरः।

## मङ्गलप्रकाशः

श्रीमतः सवाईजगत्सिंहमहोदयस्य संमाननीयो गालवाश्रमाचार्यः श्रीसीतारामाचार्योऽस्य नायकः। पूर्वं गालवाश्रमस्य आचार्यपरम्पराया वर्णनम्। तदनन्तरं सीतारामाचार्यस्य विवाहोत्सवस्य रुचिरं वर्णनम्। राजमहिष्या कृताया वरयात्रायाः (निकासी) मनोहरं वर्णनम्। गालवाश्रमशोभावर्णनम्।

## बापूचरित्रम्

अवधप्रान्ते तस्मिन्काले बापूसिंहशिन्दे (सिन्धे) नामकः प्रख्यातो राजासीत्, अस्मिन् ग्रन्थे एतस्य यशोवर्णनम्। मीरांपुरक्षेत्रे दलेलखांनेन सह यदस्य युद्धमभवत्तस्यास्मिन्नतिप्रौढमोज.प्रचुरं च वर्णनम्। अस्य रचनाकालः १८७१ तमो विक्रमाब्दः। एतस्य रचनायाश्छन्दोद्वयं दीयते मनोविनोदाय—

"मीरांपुर खेत जंग कीनो बीर बापू जहां,
रुधिरप्रवाह प्रेत मिलिकें तिरत है
डाइन गुसांइनके खात गन मेद गूद,
भूत अवधूत मिलि भीरसों भिरत हैं।
कारे भये धोरे जहां, धोरे भये लालरंग
मंडन अपार छबि छिति पै घिरत है
गिरिजा षड़ानन गनेस औ गिरीस मिलि
सिंह मोर मूंसा बैल ढूंढ़ते फिरत हैं ॥ १ ॥
तेग गहि मीरांपुर कीनो जग जादिन तें
ता दिनतें वैरीगन भूमि न रचा करैं
अबलौं गनेस गन गिरिजा गिरीसजूकी
जंग लखिबेकों दिन राति अरचा करें।

लाल लखि भूमि देवनारी अबलौं वे आय
अम्बरमें छाइबे को नांहि फरचा करैं
अब लौं महीन्द्र बापू रावरे अरिन्दनकी
हरके गरेमें मुडमाल चरचा करैं ॥ २ ॥

## कृष्णसुजसप्रकाशः

चौमूधरापतेर्नाथावतकुलभूषणस्य कृष्णसिंहवर्मणोस्मिन् यशोवर्णनम्। एष हि श्रीजयसिंहमहाराजस्य समये प्रधानतया सेनापतिरभूत्। अस्मिन्नस्य दिनचर्यादीनां मनोहरं वर्णनम्। अस्य विषयो रावलचरित्रेण भूयः संवदते।

## रामजसचन्द्रिका

बुन्दीनरपतेः श्रीरामसिंहभूपालस्य यशोवर्णनात्मकमिदं काव्यम्। अस्मिन् पूर्वं हाडावंशपरम्परावर्णनम्, तेषामैतिहासिक यशःप्रख्यापनम्, ततो विष्णुसिंहगृहे राममहीन्द्रस्य जन्म, तस्य जोधपुरराजधान्यां विवाहः, सैन्य–हर्म्य–गज–तुरगादीनां वर्णनम्। अस्याप्योजःप्रचुरा वर्णनपद्धतिः। यथा राज्ञः खड्गवर्णनम्—

"जीन करि ताही छिन सिंघपै भवानी रानी
जोगनिंजमात भूत प्रेत संग लै चढ़ै
देवनकी बालनको जाल ख्याल देखनकों
बैठिकैं विमाननपै केलि करतो बढै।
छांडै कइलासको बिलास हर हारहेत
मंडन बखान गुन गान गढिकै पढ़ै
ताती तेज ताखी तडितासी रामराव जबै
तेजभरी तेरी तरवार म्यानतैं कढ़ै ॥ १ ॥"

## नवरसरत्नाकरः

बुन्दीनरेशस्य रामसिंहभूपालस्याज्ञया नवरसानां तद्विभावानुभावादीनां च लक्षणोदाहरणैः समेतः सोयं ग्रन्थो विस्तृतोस्ति। अन्तिमपत्रानुपलम्भाद्रचनाकालो न विदितः।

## रससमुद्रः

नवरसानां तद्विभावानुभावादीनां च सर्वेषां लक्षणोदाहरणैरुपबृंहितः सोयं ग्रन्थः शाहपुराधिपतेराज्ञया निर्मितः। अस्मिन् यान्युदाहरणपद्यानि दत्तानि तानि सर्वाण्येव प्रायः प्रौढतमलेखनीप्रसूतानि। कविकलानिधि-श्रीकृष्णभट्ट-श्रीमद्वारकानाथ-(भारती)-जगदीश-प्रभृतीनामपि काव्यानि स्थाने स्थाने दत्तानि। अत्र हि पूर्वं मनोहरपुरशाहपुराधिपतीनां शेखावतभूपतीनां वंशवर्णनम्। यत्र हि बहूनां राज्ञामैतिहासिकं वर्णनमतिप्रौढम्।
यथा रावरायचन्दस्य—

"दिल्लीपति पातसाहजूके कहैं बंगसमें
आई पातसाही चढ़ि छाइकैं सबै मही
मच्यो रनरंग जंग जालिम पठानन सों
तुबक तमंचे बान बाहैं दुहूं ओर ही।
भयो कतलान सुलतान खांन रांननको
देखतें जिहांन बात मंडननें सो कही
सेर सम रायचंदजूकी समसेर जहां
हाथीचढे चीनियांके सीस चलिकें बही ॥ १ ॥"

हनुमन्तसिंहस्य यथा—

"राव हनुमन्तसिंह प्रबल प्रतापताप
पावकको बाप बन्यो बैरिन लरालरी
आठों जाम धाम धाम तीर तरवार तोब
तुबक तमंचनकी राखत जराजरी।
मंडन उदंड ब्रह्मंडमें घुमंडि नित
सब सुख लेत देत हरकों हरा हरी
बिमुखकों दंड नित दैन खंड खंडन में
मारतंड मंडलसों राखत अराभरी ॥ २ ॥"

उदाहरणपद्यानि तु मण्डनकवेः कवितादर्शेषु परस्तादवलोकनीयानि ॥

## श्रीकृष्णव्रजविहारः

अत्र हि श्रीकृष्णस्य व्रजविहारलीलायाः सुमधुरं वर्णनम्। अस्य रचनाकालः १८८७ संवत्।

## सुलोचनाचरित्रम्

रामायणकथान्तर्मेघनादपत्न्याः सुलोचनायाः सतीत्ववर्णनपरमिदं काव्यम्। अत्र मेघनादवधोत्तरं तत्पत्न्या विलापादिकमतिकरुणमुपवर्णितम्।

एभ्योऽतिरिक्तानां कविमण्डनकृतानां ग्रन्थानां विषयो भूयसां नाम्ना परिज्ञातव्यः। अनेन कविना जयपुरराज्यविषयेपि भूयांसि पुस्तकानि प्रणीतानि परं न साम्प्रतं तान्युपलब्धानि। एवंविधग्रन्थलोपकारणं त्वनुपदमेव प्रकटं भवेत्। हन्त! बलीयसी नियतिः। समालोचितेषु पुस्तकेषु बहूनि किल साम्प्रतमेव बुन्दीनगरादुपलब्धानि, यानि हि वंशीमहाशयेन मुद्राणां कृते न्यासीकृतान्यासन्। अपराण्यपि एतत्पंक्तीनां लेखकः पितृव्यस्य श्रीश्यामलालमहोदयस्यानुग्रहादेव प्राप्तवानिति तदुपकारं हृदि सुबहु मानयति।

मण्डनकवीन्द्रस्य कवितायाः कतिपयान्युदाहरणानि स्वतः प्रसङ्गवशात्पाठकैरवलोकितान्येव। एतदितराण्यपि पाठकानां मनोविनोदार्थमधस्तात्प्रदर्श्यन्ते। तत्र—

ऋतुवर्णनादर्शः—

"कारी पीरी धौरी धौरी धूमरी धुरेटी घटा
छटनिते छाइ छाइ रंग बरसायो है
भोग भो सँजोगिनि वियोगिनको रोग भयो
मोर मिलि कोहूल कुलाहल मचायो है।
मंडन नवीननके नेहके बधायवेकों
काम छितिकंत ताको आयबो लखायो है
ग्रीषम बसंत बीतैं बनको सुहाग सब
अंबनको छोडिके कदम्बनपै आयो है॥ १॥

सहित समीरसीर बरसत तुसार धार
गोपगन जात नांहि लैन वन गैया कों
पाला जमुनाको जम्यो कपै व्रजबाला सबै
मडन लगावैं उर छांडत न छैयाकों।
बिना जल धर्‍यो दधि सबके बिलोये बिना
कैसे हू न चलत चलात बहु रैयाकों
रसबस गोपिनके होय फिरै कुंजनमें
देखहु री सीत लगै कछु न कन्हैयाकों ॥ २ ॥"

शृङ्गारः—"नीवी छरा छोरनतें कमरि कसी है तहां
कंचुकी सरस सारी झिलम कहाती है
नैन बान भ्रकुटी कमान तान लीनी असि
अलक नवीन कीनी कोरि छबि छाई है।
मंडन तुरंग भौर भीर तँहं भारी भई
किंकिनि सुनाद हाक हिये सरसाती है
प्यारेके मिलाप मिस मेरे जान प्यारी आज
नृपति अनंग जंग जीतिबेकों जाती है ॥ ३ ॥"

देवविषयको रतिभावः—

"गनिका तिरी न कैधौं तिर्‍यो न हि अजामेल
कैधों गजराज नाहिं तिर्‍यो पन पाजाकी
तिर्‍यो नहिं कैधों नीच नीचनतें नीच गुह
गौतमकी नारी तिरी नांहि गहि ताजाकी।
मंडन तिरे न केते पापी जिन नामहीतें
विधिनें बखानी बात वेदनमें वाजाकी
एरे जमराज मो गरीब को सतै है तो
दुहाई है दुहाई तोहि राम महाराजाकी ॥ ४ ॥
आवत या भवसागरके विच, क्रूर कलकी कुरूप कहावत
बाथ भरै तनसाथ लग्यो दुख रात प्रभात भयें सरसावत।

गहर गराज सुनि सुनिकें गनीमनके
सहर सहर सूने होत हैं कहलसे ।
मंडन मतंग ऐसे राजै जयसाह तेरे
डील दिकपीलनतें दीखत पहलसे
कीने जिन आननपै रंग पचरंगनके
अंगनके ऊचे अमरावतीमहलसे ॥ १२ ॥

कुलके कलस खलभलके खुलेतै खूनी
झलके सिंगार हीरामोतिनके गलके ।
फलकें सरूप जानि पलके सुचंद रवि
जलके सुथल होत जल होत थलके
अतल वितल तलातलतें पताल मिलि
धूजत रसातल महातल पहलके
दलके सिंगार छलबलके अपार ऐसे
भूप जयसाह देत गयनके हलके ॥ १३ ॥"

अश्ववर्णनादर्शः—

"बकसत ऐसे जयसिंह महिपाल तुरी
जात कहे कापै जिन गुनबिसतार भार
चंचल है अंचल धुजासौं चंचलानहू सौं
जिनकी चलाकी लखी पौन मनहू सों पार ।
जगमग जोतिन की जीननसों जागि रहे
मंडन कहत गुथी लालें याल बार बार
हमहूं कढे है रतनाकरमंझार ही तें
मानों यों बतावनकों राखैं गरैं मोतीहार ॥ १४ ॥

जिनके सुरंग अंग चंचलता नंच्यो करैं
अंच्यो करैं चपल गुमान चपलानके
पहुंचत पौन हू न, पंछीहू करत गौन,
कौनधों बतैये गौन जिनकी समानके ।

ऐसे वाजिराज महाराज जगतेस तेरे
मंडन कहत राजै दाननि विधानके
भूमिको भरम दूरि करैं भूरि दौरनसों
दीजिये अंधेरी यातें आगे अंखियांनके ॥ १५ ॥
जय जगतेस नृप देखे हम तेरे तुरी
मोलसें अमोल मतमाते चुकतीनके
मेवन सहेलवारे हेम हीर हेलवारे
हारन हमेलवारे झूल झुकतीनके ।
मंडन कहत केती बेरन उदोत भरे
कीने मैं बखान तऊ होत तुक तीनके
चौथहे चरन हौं तो अच्छर भरन कहौं
ये तो कढि जात बढि पार जुकतीनके ॥ १६ ॥"

## श्रीमान् भट्टलक्ष्मणः ( द्वितीयः ) ।

मण्डनमहोदयादजायत सुजातगुणः
सूनु-र्भट्टलक्ष्मणः प्रकर्षलवलक्ष्मवान्
यस्य समयावधि महत्त्वमानमाविर्दध-
त्पूजाविधिरासीत्सर्वसामन्तोपलक्ष्यवान् ।
यो वै प्रज्ञाचक्षुरपि विस्माययते स बुधान्
प्रज्ञावैभवेन, दैवदत्तप्रतिभानवान्
कुलगृहकीलितकवित्वकलाकारणिकः
कोविदेषु कीर्तिं यः किलाधात्कृतिमानवान् ॥२५॥

उत्कर्षस्य यो लेशस्तच्चिह्नैर्युक्तः, बाल्य एव भाग्योदयचिह्नयुक्त इत्यर्थः। यस्य लक्ष्मणस्य समयपर्यन्तम्। महत्त्वस्य मानं गौरवं प्रकाशयन्। सर्वसामन्तोपलक्ष्यवान्, चौमूसामोदाधिपप्रभृतिभिः सर्वैः सामन्तैः कृतः पूजाविधिः सत्कारोऽभवत्। कुलगृहे कीलिता स्थिरीकृता (वशीकृतेति यावत्) या कवित्वकला तस्यां कारणिकः परीक्षकः। कविताया: समालोचनपण्डित इत्यर्थः। कृतिनां मध्ये मानवान् यः कोविदेषु कीर्तिमधात्। अत एव अस्य सदने प्रायः प्रतिदिनमेव सायं सर्वेपि पण्डिताः प्रतिष्ठिताः कवयश्च समवयन्ति स्म। आसीच्चास्य महत्सु कोविदेषु प्रतिष्ठा ॥ २५ ॥

दो०—पूर्वजगुणबन्दीकृतां बुन्दीमयमेति स्म।
यत्र पूर्वजानां सुबहु सम्पत्समुदेति स्म ॥ २६ ॥

अयं लक्ष्मणः। पूर्वजानां श्रीकृष्णभट्टद्वारकानाथप्रभृतीनां गुणैर्बन्दीकृतां वशीकृताम्। बुन्दीनगरीम् एति स्म ॥ २६ ॥

कविताकोविदतामखिलपरिचयचातुर्यं च।
नृपतिः प्रज्ञाचक्षुषः प्रेक्ष्य बहुलमानञ्च ॥ २७ ॥

अखिलपदार्थानां परिचये चातुर्यम्। तथा च अन्धस्याप्यस्य हस्ते यत्किञ्चित्पुस्तकं दत्त्वा, तेन समन्तात्तस्य स्पर्शेन परिबोधे हृदि स्थापिते, पुनरन्यान्यपदार्थादिषु चेतोऽन्यासक्तावपि, पूर्वस्पृष्टपुस्तकस्य तत्कालं परिचये पाटवम्। एवं बहूनामप्यपरिचितानां पुरुषाणां सकृत् स्वरबोधेन परिज्ञानम्। गन्धेन गोमहिष्यादिमूत्रपरिज्ञानम्, इत्यादि चातुर्यं च प्रेक्ष्य। बहुलं यथा स्यात्तथा आनञ्च पूजयामास ॥ २७ ॥

खखनन्दावनिवत्सरे राममहीन्द्रोऽमुष्य।
ग्राममदाद् गोविन्दपुरमुरसि सुबहु संतुष्य ॥ २८ ॥

बुन्दीनरपतिः श्रीरामसिंहः (१९०० तमविक्रमसंवत्सरे) अमुष्य अमुष्मै। संप्रदानस्य शेषत्वविवक्षया षष्ठी। गोविन्दगढ-(पुर-)-नामकं ग्राममदात्। यो हि १९५६ तमसंवत्सरपर्यन्तमेतद्वंशजानामधिकारे आसीत्।

एतदुत्तरं तु भट्टलक्ष्मणस्योत्तराधिकारिणः (एतासां पङ्क्तीनां लेखकस्य) बाल्यात् अपरिचयाच्च, नासौ ग्रामोधिक्रियते स्म । अधुना तु बुन्दीराज्यस्य गुणग्राहितामेव स प्रतीक्षत इत्यलम् ॥ २८ ॥




असुते तस्मिन् संस्थिते, केशवषड्यन्त्रेण ।
दत्तकेन जातं ततः सुन्दरलालवरेण ॥ २९ ॥

तस्मिन् लक्ष्मणभट्टे संस्थिते मृते । संपूर्वकस्य तिष्ठतेर्मरणमर्थः (वामनः) । केशवभट्टस्य वक्ष्यमाणस्य षड्यन्त्रेण कूटनीत्या । सुन्दरलालो दत्तको जात इत्यर्थः । भावे प्रत्ययः ॥ २९ ॥

श्रीमद्व्रजपालविबुधस्य चतुष्पुत्रान्तरे
तुरीयो गोविन्दलाल इति तनयोऽलसत्
श्रीमद्रामसिंहमानितस्य यस्य कलिविलास-
मुक्तककवित्व-गीतिसंग्रहः समामिलत् ।
तस्माद् घासीलालतो गरिष्ठो मूर्तिशिल्पकला-
प्रथितपटिष्ठो बत सूनुः केशवोऽभवत्
ईर्ष्याभरावेशतः कुटुम्बक्लेशहेतोर्यस्य
केशवमहोदयस्य पुत्रद्वयमद्युतत् ॥ ३० ॥

सुन्दरलालस्य वंशक्रममभिधत्ते—व्रजपालभट्टस्य चतुर्णां पुत्राणामन्तरे मध्ये । तुरीयश्चतुर्थः । ऊनविंश्यां शताब्द्यां सर्वत्र प्रथितयशसा जयपुरेन्द्रेण श्रीमद्रामसिंहदेवेन संमानितस्य । अयं हि पूर्वं श्रीमद्रामसिंहामात्यस्य पण्डितशिवदीनकान्यकुब्जस्य प्रियकविरभूत् । ततः क्रमेण श्रीरामसिंहाना-मपि प्रीतिभाजनमासीत् । एतस्य ग्रन्थाः—'कलजुगरासा-सांचझूंठवर्णन-

माधवविनोद—मुक्तककवित्त्वानि, गीतयश्च', तेषामेव संग्रहः समामिलत् अद्याऽवध्युपलब्धः। तस्मात् गोविन्दलालात्। घासीलालतो ज्येष्ठः मूर्तिशिल्पकलायां प्रथितः पटिष्ठः। एष हि केशवो मृद्घटिता मूर्तीरारचय्य आश्विनमासेऽनुष्ठीयमानां सन्ध्याम् (सांझी) अपि संदधाति स्म, यत्र सर्वगुणग्राही जयपुरनरेन्द्रः श्रीरामसिंहोपि द्रष्टुमायाति स्म। अत एव च शनैः शनैः 'सांझीवाले भट्टजी' इति प्रसिद्धिरासीत्। एतेन कृता बह्व्यो मूर्तयो विश्वेश्वरमन्दिरेपि सन्ति, या नृसिंहलीलायामद्यापि स्थाप्यन्ते। ईर्ष्याभरस्य आवेशतः। यस्य केशवमहोदयस्य पुत्रद्वयमद्योतिष्ट॥ ३०॥

सो०—एष हि मोतीलाल,—दत्तक आसीत्केशवः।
अस्य हि जीवनलाल,—सुन्दरलालावात्मजौ॥ ३१॥

एष केशवो मोतीलालनामकस्य पितृव्यस्य दत्तकोऽभूदिति पृष्ठतो दत्ते वंशवृक्षे विदितं भविष्यति। अस्य केशवस्य॥ ३१॥

दो०—अनयोरेव हि लघुतरः सुन्दरलालो नाम।
लक्ष्मणभट्टानां पदं पश्चात्तदधिजगाम॥ ३२॥

अनयोर्मध्ये लघुतरः। पश्चात्, लक्ष्मणभट्टानां स्वर्गगमनोत्तरम्। तत्, पदम्॥ ३२॥

एतत्समयं मन्मतिर्धूमकेतुमवयाति।
हेतुरभूत्कुलगौरवक्षये सकलविधयाऽति॥ ३३॥

मम मतिः, एतस्य सुन्दरलालस्य स्थितिसमयं धूमकेतुम् अवयाति जानाति। यः समयः सकलविधया सकलप्रकारेण, अति अत्यन्तम् कुलगौरवक्षये हेतुरभूत्॥ ३३॥

सो०—विद्यादूरचरस्य, भङ्गाघूर्णितचेतसः।
निकटजना हि निरस्य, सपरिजना लुलुठुः श्रियम्॥३४॥

विद्यातो दूरे वर्तमानस्य, विद्याशून्यस्येत्यर्थः। परिजनेन भृत्यादिवर्गेण सहिता निकटजनाः कुटुम्बिनः। निरस्य तिरस्कृत्य श्रियं लुलुठुः॥ ३४॥

क०—ग्रामगृहभारोप्येतदायत्तो बभूव ततो
लुण्ठनप्रवृत्तोऽभवदावुत्तोऽविलम्बितम्
सम्बन्धिनोऽन्येपि परिपाल्य ऋणजालममुं
गृहपरिपालनीयमेव विदधुर्द्रुतम् ।
परःशता ग्रन्थाः कैश्चित्क्रीता, अथ नीताः परै—
र्वस्त्रादिकसम्पदपनीता मन्त्रिणाऽद्भुतं
तत्सुन्दरलालशर्मणोऽसौ स्थितिकालो हन्त
मण्डनसुकीर्तिकृते कालोऽभूत्सुनिश्चितम् ॥ ३५ ॥

आवुत्तो भगिनीपतिः । ग्रामाणां गृहस्य च कार्यभारः एतस्य आवुत्तस्य आयत्तोऽभूदिति स लुण्ठनप्रवृत्तोभूत् । अन्येपि मथुरादिवासिनः श्रीकृष्णजी-भट्टप्रभृतयः, ऋणरूपं जालं परिपाल्य, स्वगृहे पालनीयं अमुं विदधुः । ते हि तं मथुरां निन्युस्तत्रैव च, ऋणं वर्धयामासुर्जयपुरे च राजद्वारेऽनुपस्थितिकृत-मपराधं ( तफावत ) च । मन्त्रिणा वसति( बसई )ग्रामवास्तव्येन वंशीधरेण वस्त्र–पात्र–पुस्तकादिसंपत्तिः, अपनीता । मन्त्री संपदं वर्धयति, एप तु तां हरतीत्यद्भुतम् । मंडनकवीन्द्रस्य सुकीर्तेः कृते । कालः अन्तकः ॥ ३५ ॥

दो०—व्ययोपि लघुरायो महाँस्तदपि ऋणं प्रायोजि ।
ग्रामे बुन्दिनियोजिते बिन्दुरेव समयोजि ॥ ३६ ॥

बिन्दुः शून्यम् । ग्रामो हारित इत्यर्थः ॥ ३६ ॥

वसतिग्रामे वस्तुचयमनयन्मन्त्री न्यस्य ।
एकं द्वे त्रीण्ययमधाद् गृहे गणनमेतस्य ॥ ३७ ॥

भङ्गामत्त एप 'एक दो तीन' इत्यादि गणयति स्म, तत्रोत्प्रेक्षेयम् ॥ ३७ ॥

व्यसनखण्डपतितस्ततः सोयं सुबहु दिदेव ।
मण्डनकुलमण्डनकरीं कीर्तिमखण्डयदेव ॥ ३८ ॥

एवं किल देवर्षिकुलभानौ घनपिहिते हि ।
तैलङ्गाङ्गणमिदमभूत्किञ्चित्तिमिरविलेहि ॥ ३९ ॥

देवर्षीणां कुलरूपे भानौ । ग्रन्थकर्तुरवटंकोयम् । विपत्तिरूपेण घनेन पिहिते । एतत्प्रान्तीयतैलङ्गाङ्गणं तिमिराक्रान्तमभूत् । प्रायो मथुरादिवासिनस्तैलङ्गभट्टाः शुष्काभिमानमूलिकामव्यवस्थां जातौ प्रवर्तयामासुरित्यर्थः ॥ ३९ ॥

मथुरामण्डलवासिनः सन्धिमिमं समवाप्य ।
व्यजृम्भन्त जात्यङ्गणे नेतृभावमास्थाप्य ॥ ४० ॥

मथुराप्रान्तीयाः सजातीया इममन्धकारावसरं प्राप्य, नेतृत्वं आस्थाप्य, स्वत एव कल्पयित्वा न तु सर्वसंमत्या । जात्यङ्गणे व्यजृम्भन्त स्वकीयं माहात्म्यं प्रकटयामासुः । भाषाप्रसिद्धं 'पञ्चत्वं' विशेषेण प्राप्ता इति भावः ॥४०॥

एवं सुबहु विचेष्ट्य स हि मुनिशरफणिविधुनाम्नि ।
वर्षे, ननु नाधिकवयाः प्रयाति स्म सुरधाम्नि ॥ ४१ ॥

१९५७ तमे विक्रमसंवत्सरे । नाधिकवयाश्चत्वारिंशद्वर्षाणामासन्नः ॥४१॥



मथुरानाथः ( एतद्ग्रन्थकर्ता )

असंततौ तस्मिन् गते मतेन सकलकुलस्य ।
पौत्रः प्रभुरभवत्पदे श्रीलक्ष्मीनाथस्य ॥ ४२ ॥

तस्मिन् सुन्दरलाले, असंततिके मृते, श्रीलक्ष्मीनाथपौत्रः तस्य पदे प्रभुरधिकारी अभवत् ॥ ४२ ॥

परं श्यामलालस्तदा सुन्दरलालपदाय ।
लोकानां दुर्मन्त्रणात्सज्जोऽभूदह्नाय ॥ ४३ ॥

सुन्दरलालपदं ग्रहीतुम् । अह्नाय झटिति, सज्जः सन्नद्धोऽभवत् ॥ ४३ ॥

क०—श्रीमच्चुन्नीलालतनयेषु छोटेलाल इति
तनयो द्वितीयोऽभवत्पूजाजपभाजनम्
तस्मात्संबभूव सुतः प्राक्तनकवित्वगृहं
श्रीबालमुकुन्द इति, योऽधात्पितृशासनम् ।
तस्मादुद्भूतौ रामकृष्णश्यामलालौ सुतौ
विनयान्वितौ यौ विदधाते नयपालनं
ज्यायानेनयोर्वै श्रीमद्रामकृष्णनामाऽधुना
कामान्कृष्णकथयैव वहति विबाधनम् ॥ ४४ ॥

श्यामलालस्य वंशक्रममाह—श्रीमच्चुन्नीलालस्य ( व्रजपालस्य ) तनयेषु । देवपूजायां जपेष्वेवासक्तः । प्राक्तनानां कवित्वच्छन्दसां गृहम् आकरः । बहूनि कवित्वानि तस्य कण्ठस्थान्यासन्नित्यर्थः । यः पितृशासनम् अधात्, अर्थात्सोपि पितृवत् केवलं पूजाजपभाजनमेव बभूवेत्यर्थः । एनयोः पूर्वोक्तयोः रामकृष्ण-श्यामलालयोर्मध्ये ज्यायान् । विबाधनं निर्बाधम् । कृष्णकथयैव कामान् पूरयति । पौराणिक इत्यर्थः ॥ ४४ ॥

दो०—मदनमोहनस्तत्सुतो विनयभूमिरभिभाति ।
तस्य हि राधेश्याम इति तनयो मुदं ददाति ॥ ४५ ॥

तस्य रामकृष्णस्य सुतो मदनमोहनः । तस्य मदनमोहनस्य तनयो राधेश्यामः ॥ ४५ ॥

रामकृष्णतो लघुतरः श्यामलाल इति नाम ।
काममभुष्मिन्नवसरे वाममतिं प्रजगाम ॥ ४६ ॥

कामं यथेच्छं वामबुद्धिं जगाम ॥ ४६ ॥

सोयं सामसदुक्तिभिर्दामदर्शनेनापि ।
वंशिना हि शुभशंसिना तूष्णींभावमवापि ॥ ४७ ॥

सोयं श्यामलालः सामोपायैः सदुक्तिभिश्च । दाम्नो बन्धनस्य दर्शनेन, अर्थात् एवंविधीम् ऋणबहुलां जीविकामधिकृत्य किं करिष्यसीति बन्धनभयप्रदर्शनेन । लोकप्रसिद्धानां 'दामानां' मुद्राणां दर्शनेन च किञ्चिद् द्रव्यं दत्त्वेत्यर्थः । अहं तव शुभानुध्यायी अस्मीति शंसिना वंशीधरेण तूर्णींभावं ज्ञापितः, शमित इत्यर्थः ॥ ४७ ॥

अन्ततस्तु सुसमन्ततः सकलसंमतेनैव ।
लक्ष्मीनाथमहात्मनां पौत्रोऽध्यासिष्टैव ॥ ४८ ॥

सुसमन्ततः परितः । अध्यासिष्टैव, सुन्दरलालस्थानेऽधिकृतो बभूवैवेति भावः ॥ ४८ ॥

सो०–बुधद्वारकानाथ,–तनुजो ह्यनुजो नतशिराः ।
सोयं मथुरानाथ उपनयते रचनामिमाम् ॥ ४९ ॥

अनुजो लघुः, बुधद्वारकानाथस्य तनुजः । गुणिनां सेवायां नतशिराः सोयं मथुरानाथ इमां रचनामुपनयते ॥ ४९ ॥

क०–श्रीमद्व्रजपालतनयेषु यस्तृतीयोऽभव–
च्चातुर्येऽद्वितीयो वासुदेव इत्यथाख्यया
काव्यमार्मिकस्य यस्य कोविदेषु ख्यातिरभू–
द्दामोदरमन्दिरे हि भागवतव्याख्यया ।
तस्य त्रिषु पुत्रेष्वभूज्ज्येष्ठो रघुनाथ इति
पुत्रस्तु कनिष्ठोऽभवत्कल्याणेत्युपाह्वया
मध्यमः सुतोयमभून्मान्यजनमध्यमणि–
र्लक्ष्मीनाथनामा कीर्तिवामादयितः श्रिया ॥ ५० ॥

मथुरानाथस्य वंशक्रमं प्रकटयति—अथ व्रजपालतनयेषु आख्यया वासुदेव इति यस्तृतीयोभवत् । काव्यविषये मार्मिकस्य यस्य दामोदरमन्दिरे भागवतस्य व्याख्यया ( कथया ) कोविदेषु ख्यातिरभूत् । एष हि सवाई–

जयसिंहदेवस्य (तृतीयस्य) समये, सवाईरामसिंहदेवस्य च (द्वितीयस्य) समये वर्तमान आसीत्। अस्य हि 'राधारूपचरित्रचन्द्रिका, दादूदयालचरित्रचन्द्रिका, नखसिखवर्णनम्, मुक्तककवित्वानि च प्राप्यन्ते। प्रभूतविस्तरेपि तद्रचनादर्शभूतमेकं कवित्वमधस्तादुद्ध्रियते—

"विहरत राधारूप चंद निजमन्दिरमें
कोटिरतिकामसुघराई सुभ सरसै
अरस परस नैन मधुप मुखारविंद,
लावनि अपार मकरंदकन परसै।
रतिरसवारी कलाकलित करोरनसों
'वासुदेव' सुंदर अनोखे रंग दरसैं
चंचला चपल, चारु सुधाघन आपसमें
आनँदसों नेहके अछेह मेह बरसै ॥॥"

तस्य वासुदेवस्य। मान्यजनानां मध्ये मध्यमणिः (तरलः), श्रिया लक्ष्म्या, कीर्तिरूपाया वामाया दयितः, लक्ष्मीनाथनामाभूत् ॥ ५० ॥

नैपुणनिबद्धा येषामेकलयबद्धा कथा
रोचते स श्रद्धावतां मनसि मनोज्ञेयम्
सौष्ठवनिबद्धसर्वकार्याणामुदारहृदां
येषां दिनचर्या लोकचातुर्यानुकूलेयम्।
भूरिपरिवारपुषां प्रबलप्रभावजुषां
जातिरपि येषां नता नानृता प्रशंसेयं
बहुलकलागृहान् कवीन्द्रकुलकीर्तिवहान्
लक्ष्मीनाथप्रथितपितामहान् प्रशंसेयम् ॥ ५१ ॥

एकलयेन एकस्वरक्रमेण बद्धा। सौष्ठवनिबद्ध०—येषां प्रत्येककार्याणि सौष्ठवयुक्तान्यासन्। तथैव चात्मनो बालान् शिक्षयन्ति स्म। द्रव्यव्यये येषां हृदयमत्युदारमासीत्। अत एव आत्मनो विस्तृतस्य कुटुम्बस्य, भ्रातुः कुटु-

म्वस्य च, बहवो विवाहादयः प्रस्तावाः श्लाघ्यरीत्या कृताः । आत्मनो निजपुत्रीणां च भूरिपरिवारं पुष्णन्ति तेषाम् । येषां स्वाभाविकगौरवेण जातिरपि येषां येभ्यो नता । संप्रदानस्य शेषत्वेन षष्ठी । अत एव ते आत्मनो जीवनकाले मथुरादिमण्डलवास्तव्येभ्यः सजातीयेभ्यो न कदाचिदपि वैगुण्येपि संकुचन्ति स्म । जात्यां प्रसिद्धा तेषां 'सपादहस्तमिता उपानत्' । इति इयं प्रशंसा न अनृता । चित्र–गान–स्थापत्य–मूर्तिनिर्माणादिबहुलकलायुक्तान् । अहं प्रशंसेयम् । लिङ् ॥ ५१ ॥

सो०–बुधवरचिंमनलाल–सुत-जगदीशकवेः सुतौ ।
श्रीमन्मोतीलाल इह हि लडैंतीलाल इति ॥ ५२ ॥

देवर्षिवासुदेवस्य वंशक्रममाह—चिंमनलालसुतस्य कविवरजगदीशस्य (पूर्वप्रोक्तस्य) मोतीलाल–लडैंतीलाल इति द्वौ सुतौ ॥ ५२ ॥

तत्र हि मोतीलाल,–सुतः केशवः समभवत् ।
अथ च लडैंतीलाल,–सुतः श्यामलालोऽभवत् ॥ ५३ ॥

मोतीलालस्य स्थाने केशवो दत्तकोऽभवदिति पूर्वमुक्तमेव ॥ ५३ ॥

दो०–असुते तस्मिन् स्वर्गते श्रीमद्रघुनाथो हि ।
वासुदेवतनयोऽश्रयत्पदं ततो ज्येष्ठो हि ॥ ५४ ॥

तस्मिन् श्यामलाले । ततस्तदनन्तरं ज्येष्ठो वासुदेवतनयो रघुनाथः श्यामलालस्थानमश्रयत् ॥ ५४ ॥

तस्मिन्नप्यसुते गते श्रीमत्कल्याणो हि ।
ज्येष्ठपदेऽतिष्ठन्मनो यस्यासीदतिरोहि ॥ ५५ ॥

तस्मिन् रघुनाथेप्यसुते गते । ज्येष्ठस्य भ्रातुः पदे कल्याणोऽतिष्ठत् । यस्य कल्याणस्य मनः अतिरोहि अत्यारूढम् (अत्युन्नतम्) आसीत् । स ह्येवंविधो विलासी आसीद् यदयमुपानहोर्मध्ये पुष्पसारसौरभं (इत्र) ददाति स्मेति श्रूयते । आसीत्स हि रामसिंहदेवानाम् (अर्वाचीनानाम्) समये । एतत्कुटुम्बस्यापि भारो बहुकालं लक्ष्मीनाथमहाभागैरेव निर्व्यूढः ॥ ५५ ॥

सो०—तत्तनया राजन्ति, विनतविनोदीलाल इति ।
कवितां ये कलयन्ति, विद्यान्तरविज्ञा अपि हि ॥५६॥

विद्यान्तरे इङ्गलिश्–पारसीकादिभाषासाहित्ये विज्ञा अपि व्रजभाषाकवितां कुर्वन्ति । श्रीमतो मानसिहमहाराजस्य यौवराज्यावसरे रायसाहबमुंशीनानगरामजीमहोदयवितीर्णं सुवर्णपदकं 'कविमण्डल' द्वारा तैरधिगतम् ( उत्तमसमस्यापूर्तिकृते ) ॥ ५६ ॥

दो०—मनमोहन–व्रजमोहनौ तत्तनयौ लसतोऽद्य ।
यौ विद्याध्ययने रतौ श्रमायासमपनोद्य ॥ ५७ ॥

श्रमजनितम्, आयासं खेदमपनोद्य अविगणय्य ॥ ५७ ॥

क०—मध्यमोपि सर्वोत्तमो लक्ष्मीनाथविज्ञोऽभव–
द्यं हि गुणाभिज्ञो जनोऽजस्रं समुपाश्रयत्
श्रीद्वारकानाथ–बद्रीनाथौ वरिष्ठौ सुतौ
तस्य हि केदारनाथ इति चरमोऽभवत् ।
यस्य हि केदारनाथसुकवेः श्रीनाथः सुतो
दामोदरमन्दिरे प्रवक्ति कथां पूर्ववत्
तस्य स्वरबन्धसुप्रशस्यकथाप्रक्रमस्य
गोपी–गोकुलादि भाति पुत्रवृन्दमर्थवत् ॥ ५८ ॥

गुणाभिज्ञः–कथा–दाक्षिण्यादिगुणगौरववेदी जनोऽहर्निशं सेवते स्म । सुकविरिति विशेषणेन तेषां भाषाकवित्वपाटव सूचितम् । जयपुरशिक्षाविभागादुपलब्धसाहित्यशास्त्रिपदका इमे व्रजभाषायाः कवितायामपि निपुणा आसन् । पूर्ववत्–यथा पूर्वे पूर्वजाः कथयन्ति स्म तथा, अनेन अस्याः कथायाः पारम्परिकीत्वं सूचितम् । स्वरबन्धेन एकलयेन सुप्रशस्यः कथाप्रक्रमः कथाबन्धो यस्य तस्य । गोपीनाथ–गोकुलनाथ–सीताराम–राजेन्द्र इत्यादि । अर्थवत् अनुगतार्थम् ॥ ५८ ॥

सो०—श्रीमल्लक्ष्मीनाथ,—मध्यमतनयो विनयवान् ।
श्रीमद्बदरीनाथ,—नामा नन्दति नीतिमान् ॥ ५९ ॥

श्रीमल्लक्ष्मीनाथस्य कनिष्ठपुत्रस्य वंशमुक्त्वा आद्ययोः पुत्रयोर्विषये आह—श्रीमल्लक्ष्मीनाथस्य मध्यमस्तनय इति । नीतिमान् आचारनीतौ व्यवहारे च कुशलः ॥ ५९ ॥

बरवैछन्दः—

शास्त्रमार्मिकान् कुशलान् बहुलकलासु ।
बदरीनाथपितृव्यान् स्तौमि तदाशु ॥ ६० ॥

ज्यौतिषशास्त्रे शिरोमणिसूर्यसिद्धान्तपर्यन्ताध्ययनान्, काव्यसाहित्ययोर्निसर्गमार्मिकान् । चित्र—स्थापत्य—संगीत—मूर्ति—निर्माणादिबहुषु कलासु ६०

सो०—ज्यायान् सुत उदियाय, बुधो द्वारकानाथ इति ।
यस्य विपुलविनयाय, विद्यादिकमभवत्सदा ॥ ६१ ॥

लक्ष्मीनाथस्य ज्येष्ठसुतो द्वारकानाथ इत्युदियाय । यस्य विद्यादिकं विपुलविनयायाभवत् ॥ ६१ ॥

क०—शान्तिचर्ययैव येषां जीवनं व्यतीतमभूद्—
दुःखं न प्रतीतमभूद् भूयो भूरिविभ्रामि
वयसि वियाति शनैस्तावान् शम आसीद्यतः
संपदि विपदि तुल्यभावान् वरिवस्यामि ।
श्रीभागवतादिचर्चाव्ययितसमस्तायुषो
निर्भरनिरस्ताखिलवाञ्छानिहाध्यस्यामि
निखिलनरेषु निरुपाधिनिर्मलाचरणान्
श्रीद्वारकानाथतातचरणान् नमस्यामि ॥ ६२ ॥

भूरि विभ्रमयति संसारे घूर्णयति तादृशं दुःखं येन प्रतीतम् । उपार्जनरक्षणव्ययादिविषयिणी धनचिन्ता वासना च जगति भ्रामयति, एतत्सर्वं

नासीत्तेषाम् । पूर्वं पितुरधीनमासीद् गृहम्, अनन्तरं तु पुत्रसात्कृतमिति सांसारिकप्रपञ्चस्तैर्नानुभूत इत्यर्थः । शनैर्वयसि गच्छति सति । एतावती शान्तिरासीत्, यद् ग्रामादीनां धनं गृहे आयाति स्म, तस्य सुखमपि नाभवदेवं यदि गृहे भोजनस्याप्यभावोऽभवत्तत्कृतक्लेशोपि नासीत्, इत्यादिना स्थालीपुलाकन्यायेन संपद्विपदोस्तुल्यभावान् तान् वरिवस्यामि पूजयामि। श्रीभागवतं प्रतिदिनपाठेन कण्ठस्थप्रायमभवत् । अध्यस्यामि, उत्तमगृहनिवासे उत्तमवस्त्रपरिधाने भोजनादिषु च तेषां या वाञ्छा नाभवत्तामिदानीं सूक्ष्मविचारेण स्थिरीकरोमि, निरीहत्वात्तेषाम् ॥ ६२ ॥

दो०—ज्येष्ठस्तत्तनयो हि यो रमानाथ इति भाति ।
ज्येष्ठः स हि मे सोदरो वर्णनमिदमुपयाति ॥ ६३ ॥

संप्रदायसिद्धान्तानुसारं श्रीमद्भागवत-
गीतादिकथां तामवधार्य परं प्रीयतां
यन्निर्मितशुद्धाद्वैतदर्शनादिग्रन्थान् वीक्ष्य
वेदान्तविमर्शनादिवैदुष्यं प्रतीयताम् ।
स्वाभाविकसरसकवित्वात्कमनीयः सतां
भाषणैः सभासु स्तवनीयः सोयमीयतां
मोहमयीमण्डितमहिममहनीयतमः
पण्डितश्रीरमानाथशास्त्री परिचीयताम् ॥ ६४ ॥

विशिष्टाद्वैतवादिनामिदमत्र मतम्, अद्वैतवादिनः शाङ्करास्त्वेवमभिप्रयन्ति शुद्धाद्वैतवादिनो वाल्लभास्त्वेवं साधयन्तीत्यादि पृथक् पृथक् संप्रदाय-सिद्धान्तानामनुसारम् श्रीमद्भागवतस्य गीताया अन्येषां च भक्तिविषयपोषकाणां, धर्मग्रन्थानां कथाम् । यथा ह्यत्र जयपुरे श्रीभागवतस्य गीतायाश्च कथा पूर्वविशेषणविशिष्टा श्राविता । इमे ग्रन्था अद्यावधि प्रकाशिताः—

शुद्धाद्वैतदर्शनम् ( भागद्वयम्, हिन्दीभाषायां यत्र संप्रदायसिद्धान्ताः प्रकाशिताः ), श्रीमद्वल्लभाचार्यस्य षोडशग्रन्थानां हिन्दी भाषानुवादः, सेवा-

कौमुदी–गीतातात्पर्य–व्यासादेशादिभाषान्तरम्, छान्दोग्योपनिषद्भाष्यम् (संस्कृते), स्तुतिपारिजातः, दर्शनादर्शः, रासलीलाकाव्यम्, दुःखिनी बाला (संस्कृतोपन्यासः)। शुद्धाद्वैतसिद्धान्तसारः, श्रीमद्वल्लभाचार्यः (जीवनचरितम्), राधाकृष्णतत्त्वम्, ब्रह्मसंबन्धः, आद्यो ग्रन्था हिन्दीभाषायाम्। शुद्धाद्वैतदर्शन–छान्दोग्योपनिषद्भाष्यप्रभृतिभि–र्ग्रन्थैर्वेदान्तविचारे तस्य पाण्डित्यं बुध्यताम्।

तेषां कविता स्वाभाविकी एव विलोक्यते। यदा हि ग्रन्थानां यथावदध्ययनं न कृतं तदैव कवितायां साधीयसी प्रवृत्तिरासीत्सा च कविता सरसा भवति। विना हि पूर्वप्रतिभां न भवत्यनुपहसनीया कवितेति स्वाभाविकसरसकवित्वात्सतामभिलषणीयः। एतन्निर्मितं रासविलासः, दुःखिनी बाला चेति पद्यगद्यमयं काव्यद्वयं जयपुरात्पुरा प्रचारिते संस्कृतरत्नाकरेंऽशतः प्रकाशितम्। अन्यान्यानि च समये समये 'मङ्गलाशासन' प्रभृति लघुपुस्तकेषु तदीयकाव्यानि प्रकाशितानि। मोहमयीनगरे स्वपाण्डित्यवैभवेन मण्डितो यो महिमा तेन श्लाघनीयतमः। मोहमयीसदृशे सुदूरदेशेपि स्वगुणगरिम्णा ख्याततम इत्यर्थः॥ ६४॥

दो०–तत्तनुजो व्रजनाथ इति सूरिसरणिमनुयाति।
इंग्लिशसंस्कृतकृतमुखो लेखपटुः प्रतिभाति॥ ६५॥

तस्य रमानाथशास्त्रिणः पुत्रः। कृतमुखः कुशलः। लेखेषु सामायिकहिन्दीपत्रेषु प्रकाशनीयेषु निबन्धेषु पटुः। 'व्रजनाथरमानाथशास्त्री' इति नाम्ना 'माधुरी'प्रभृतिपत्रेषु प्रकाश्यन्ते तल्लेखाः। 'श्रीमद्वल्लभाचार्य और उनके सिद्धान्त'नामको विशिष्टो ग्रन्थो ह्यनेन निर्माय पुष्टिमार्गसिद्धान्तकार्यालयात्प्रकाशितः। अयं हि वेल्लनाटीयविद्यालयेन पाठ्यपुस्तकत्वेन निर्धारितः॥ ६५॥

लघुद्वारकानाथबुधतनयो ननु योऽजल्पि।
मण्डनकविकुलमन्दिरे स हि सकलैः समकल्पि॥ ६६॥

अजल्पि कथितः। मण्डनकविगृहे समकल्पि, दत्तकत्वेन नियमितः॥ ६६॥

लुण्ठकलोकविलुण्ठिते केवलनिलये नाम ।
पितामहोद्योगादहो स्वत्वं सोधिजगाम ॥ ६७ ॥

केवलनिलये वस्त्रभाण्डादिसामग्रीशून्ये गृहे । तत्र हि संमार्जन्यपि क्रीत्वा स्थापिताभूदित्यत्र नातिशयोक्तिः ॥ ६७ ॥

यद् गृहमंशीकृतमभूद्वंशीकरकमलेन ।
तस्मिन् तृणमपि संभवेदिति मान्यं बत केन ॥ ६८ ॥

अंशीकृतं स्वभागभुक्तत्वेन निर्धारितम् । वंशी वसतिवास्तव्यो वंशीधरः ॥ ६८ ॥

केशवकेशविपाटकं वंशिनमिममनुमात ।
'सतृणमत्ति' दृष्टान्तमिव मूर्तिमन्तमवयात ॥ ६९ ॥

केशानामपि लुञ्चकं सर्वस्वापहारकमित्यर्थः । कौमुदीस्थस्य 'तृणमप्यपरित्यज्य सतृणमत्ति' इत्यस्य मूर्तिमन्तं दृष्टान्तमिव अवयात जानीत ॥ ६९ ॥

अप्रबन्धनिर्बन्धमथ ऋणदृढबन्धमवाप्य ।
पङ्कमग्नतां सर्वथा ग्रामगणः समवाप ॥ ७० ॥

निर्बन्धम् प्रतिबन्धम् । ऋणकृतम् उन्नतेः दृढं प्रतिबन्धनं च प्राप्य ॥७०॥

निःसंकोचं सर्वतोप्युत्कोचं परिगृह्य ।
द्विगुणं त्रिगुणं कृतमृणं सचिवैर्मिथो विगृह्य ॥ ७१ ॥

मिथः कुटुम्बसम्बन्धिभिः साकं, तथा परस्परं कलहश्च ॥ ७१ ॥

अर्द्धाधिकहीनो ह्यभूदायो, व्ययस्त्ववर्द्धि ।
लुण्टाकाधिष्ठितमभूद् गेहं विपिनस्पर्द्धि ॥ ७२ ॥
एवमायमुखमर्द्दने व्ययविवर्द्धनेऽहेतु ।
उपविंशतिसाहस्रकं किमृणं सहजमपैतु ? ॥ ७३ ॥

आयस्य मुखानां द्वाराणां मर्द्दने प्रतिरोधने सति । अहेतु (क्रियाविशेषणम्) । विंशतिसहस्रसंनिहितम् ॥ ७३ ॥

यानि राजमुद्राङ्कितान्यवनीशैरार्प्यन्त ।
तानि दानपत्राण्यपि न्यासीकृतानि हन्त ॥ ७४ ॥

दानपत्राणि ग्रामदानपत्राणि ( पट्टा ) । आर्प्यन्त अदीयन्त ॥ ७४ ॥

मण्डनकुलनौका प्रकटमेवं अभिमुखमाप ।
पितामहं मातुलमयं कर्णधारमध्याप ॥ ७५ ॥

अभिमुखं आवर्तमुखम् ( भँवर ) । अयं पितामहं मातुलं च कर्णधारं आप ॥ ७५ ॥

पितामहैराश्वास्य स हि विद्यायां समयोजि ।
निजमृणमनुपादाय बत तदृणशोधनेऽयोजि ॥ ७६ ॥

अभियोगादिद्वारा संजातं सुन्दरलालोपरिभवं स्वीयमृणम् संपूर्णम् अगृहीत्वा ( किंचिदंशतो गृहीत्वा ) । तस्य मञ्जुनाथस्य ऋणशोधने । अयोजि युज्यते स्म ॥ ७६ ॥

क०—काशीनाथशास्त्रिभिः प्रदर्शितप्रथमपथो
वर्द्धितमनोरथोऽनुमेने तत्प्रशासनं
कौमुदीं मनोरमां सरत्नमथ शेखरं च
श्रीमद्धरिदत्तेभ्यः पपाठ दृढितासनम् ।
मञ्जुनाथ एष लक्ष्मीनाथशास्त्रिसविधतोपि
शेखरेथ कौमुद्यां विवेद वादशासनम्
एवं लक्ष्मीनाथशास्त्रिचरणानुकम्पाबला-
द्धाप्यावधि संपादयामास शब्दशासनम् ॥ ७७ ॥

काशीनाथशास्त्रिणां परिचयो जयपुरपण्डितवर्णने द्रष्टव्यः । प्रदर्शितः प्रथमः पन्था मार्गो यस्मै सः । सिद्धान्तकौमुदीम्, शब्दरत्नसहितां मनोरमां च । शेखरं परिभाषेन्दुशेखरम् । श्रीहरिदत्तशर्माणो मैथिला जयपुरराजगुरवः पूर्वं राजकीयसंस्कृतकालेजे व्याकरणद्वितीयाध्यापका अभूवन् । व्याकरणा-

तिरिक्तं काव्यसाहित्यादिष्वपि कृतमुखानां येषामनुजाश्चन्द्रदत्तशर्माणः साम्प्रतं व्याकरणाध्यापनप्रधानपदमधितिष्ठन्ति, यत्परिचयः पूर्वं दत्तः । दृढितं आसनं यस्मिन् कर्मणि यथा भवति तथा । वादशासनं शास्त्रार्थप्रक्रियां जटाजूटादिटीकाग्रन्थपरिष्कारमित्यर्थः । संपादयामास अधिजगे । श्रीमल्लक्ष्मीनाथशास्त्रिचरणानां श्रीकृष्णशास्त्रिणां च परिचयः पूर्वं द्रष्टव्यः ॥ ७७ ॥

सो०–व्यनयन् गोपीनाथ,–दाधीचाः काव्येष्वमुम् ।
समधिकसदयदृशाऽथ, काव्यमर्म समबोधयन् ॥ ७८ ॥

व्यनयन् शिक्षितमकुर्वन् । नॉगल्योपाह्वाः श्रीगोपीनाथदाधीचाः पूर्वं राजकीयसंस्कृतकालेजे साहित्यशास्त्रस्य द्वितीयाध्यापका अभूवन् । एतेषामन्वययोजनपाटवं काव्यमर्मपरिज्ञानं च सुप्रसिद्धं जयपुरविद्वत्सु । 'स्वानुभवसारः' 'उपदेशामृतघटी'प्रभृतयस्तद्ग्रन्थाः प्रकाशिताः, 'माधवविजय' प्रभृतीनि कानिचित्पुस्तकान्यप्रकाशितान्यपि सन्ति । एतेषां तनयाः श्रीलक्ष्मीनाथदाधीचास्तत्स्थाने संप्रति पाठशालायामध्यापयन्ति, यत्परिचयः पूर्वं दत्तः । समधिकसदयदृशा–अन्यविद्यार्थिनामपेक्षया अधिककरुणार्द्रया दृष्ट्या ॥ ७८ ॥

विद्यावाक्पति-मान्य-,मधुसूदनकरुणादृशा ।
सकलसुधीसंमान्य,-सांख्यतत्त्वमयमधिजगे ॥ ७९ ॥

श्रीमन्मधुसूदनचरणानां परिचयोपि पूर्वं दत्तः । सकलसुधीभिः संमान्यं यत्सांख्यशास्त्र तत्तत्त्वम् ॥ ७९ ॥

दो०–कृष्णशास्त्रिसविधे सविधि साहित्यं स शिशील ।
श्रुताभ्यासप्रतिभायुता कविता समुन्मिमील ॥ ८० ॥

श्रुतेन शास्त्रज्ञानेन–अभ्यासेन कवितानिर्माणपरिश्रमेण, प्रतिभया च युता । समुन्मिमील अभिव्यक्ताऽभवत् ॥ ८० ॥

बाल्यादेव कवित्वपथपरिचयमयमानायि ।
मातुलैः स महिमाऽतुलैः, तत्त्वमस्य समदायि ॥ ८१ ॥

अयं कवित्वपरिचयम् आनायि प्रापितः। महिम्ना अतुलैरनुपमैः। अस्य कार्य्यनिर्माणस्य, तत्त्वं समदायि दत्तं प्रबोधितमित्यर्थः ॥ ८१ ॥

क०–भारतमार्तण्डशिष्यवर्यान् प्राच्यचर्याचणान्
वेद्मि बहुविज्ञान् पुष्टिमार्गेऽधुना धन्येऽहं
शीघ्रकव्युपाधिमाननीयान् शब्दशय्याशालि-
प्रौढरचनायामद्वितीयानद्य मन्येऽहम् ।
मञ्जुनाथमातुलानमायवत्सलानपि तान्
जाने नयनिस्तुलान् निबन्धे जातिजन्येऽहं
मर्यादानुसारि–सांप्रदायिकसपर्यान् सदा
श्रीनन्दकिशोरशास्त्रिवर्यान् बहु मन्येहम् ॥ ८२ ॥

सहस्रावधानिप्रवर–भारतमार्तण्डपञ्चनदीश्रीगोवर्द्धनशर्माणः (प. गट्टूलालाजीति प्रसिद्धाः) तैलङ्गाः कच्छप्रान्ते (१९०१ तमे विक्रमाब्दे) जन्म लेभिरे। एते हि जन्मान्धा अपि अतिबुद्धिमन्तोऽलौकिकविद्यानिधयोऽभूवन्। शतावधान साधयित्वा क्रमेण सहस्रावधानपर्यन्तमिमे चक्रिरे। एतेषामलौकिकपाण्डित्यसन्तुष्टैः काशीकलकत्तादिनागरपण्डितैः वेदान्तभट्टाचार्य-भारतमार्तण्ड-शीघ्रकवि-प्रभृतय उपाधयो ददिरे। एतेषामद्यावधिप्रकाशिता ग्रन्थाः—मारुतशक्तिः (प्राभञ्जनस्य टीका) सत्सिद्धान्तमार्तण्डः–वेदान्तचिन्तामणिः, कृष्णाभिसारः। अप्रकाशितास्तु उपनिषद्भाष्याणि शुद्धाद्वैतचन्द्रोदयप्रभृतयः। एतेषामेव महाभागानामिमे प्रधानशिष्याः। भक्तिनौकां प्रदाय जीवानां संसारसागरतारकतया धन्ये, पुष्टिमार्गे वल्लभाचार्यप्रचारितवैष्णवसंप्रदाये। एतेषां रचना, प्रतिषण्मासं नाथद्वारस्थतिलकायितगोस्वामिनां तत्सुतानां च जन्मोत्सवसमये मार्मिकाणां विदुषां हृदयमानन्दयति। प्रचार्यते चैभिः (टिप्पणी) ति प्रसिद्धमुत्सवदिवससूचकं पञ्चाङ्गं नाथद्वारात्। इमे तत्रत्यगोस्वामितिलकतनयानपाठयन्, सांप्रतं तत्र 'विद्याविभागे'ऽधिकृताः सन्ति। अमायं निर्व्याजं वत्सलान्। जातिजनिते निबन्धे

( द्वैविध्ये 'तड' ) नयनिस्तुलान् नीतौ निरुपमान् । वल्लभसंप्रदायप्रसिद्धा या मर्यादा धार्मिकपद्धतिस्तदनुसारिणी सपर्या सेवा येषां तान् । तथा च मथुरायां 'श्रीनाथजीकी बैठक' इति प्रसिद्धं श्रीनाथमन्दिरं, तत्रत्या सेवा चानेन सूच्यते । इमेऽपि विंशतिपरिमितान्यवधानानि चक्रुः । तत्कालं समस्यादिपूर्त्या 'शीघ्रकविः' इत्युपाधिमिमे प्रत्यक्षयन्ति ॥ ८२ ॥

सो०—तत्साहाय्यमवाप्य, विद्यायामिव बहुविधे ।
व्यवहारेऽप्ययमाप, लब्धुं परिचयमवसरम् ॥ ८३ ॥

तेषां नन्दकिशोरशास्त्रिणां साहाय्यं प्राप्य, विद्यायामिव बहुविधे व्यवहारेपि परिचयं लब्धुमवसरं प्रापेति योजना ॥ ८३ ॥

दो०—भाग्यं बुद्धिमथावसरमासाद्य प्रयतेन ।
शनैः शनैः खण्डितमहो ऋणजालं तदनेन ॥ ८४ ॥

अवसरं अनुकूल कालम् । प्रयतेन प्रयत्नतत्परेण । तत् ऋणजालम्, अनेन ( मथुरानाथेन ) खण्डितम् समापितम् ॥ ८४ ॥

मातुलादिसंबन्धिनामन्येषां च ऋणानि ।
पितामहानुग्रहवशात्सर्वाण्यपि दलितानि ॥ ८५ ॥
यथाक्रमं निजमतिबलादायसमृद्धिरकारि ।
स्वजनेष्वथ कोविदगणे गौरवमपि समचारि ॥ ८६ ॥

आयस्य समृद्धिः कृता । स्वजनेषु जातिसमाजे, कोविदगणे विद्वन्मण्डले च, गौरवं प्रतिष्ठा समचारि स्थापिता ॥ ८६ ॥

पारम्परिकं जीर्णगृहमामूलान्निरमायि ।
परःसहस्रै रूप्यकैरन्यद् गृहमक्रायि ॥ ८७ ॥

अन्यद् 'नागरपाडास्थं गृहम्' क्रीतम् ॥ ८७ ॥

एवं शनकैरात्मपद–गौरवगुणोचितानि ।
साधनानि सर्वाण्यहो सम्यक् संघटितानि ॥ ८८ ॥

रश्मिर्ल: स्थानस्य, प्रतिष्ठायाश्चोचितानि। संघटितानि आयोजितानि ॥८८॥

सम्प्रति गुणगौरवविदो विज्ञाः स्नेहमयन्ति।
उच्चराजकीया जना विनयाद्वरिवस्यन्ति ॥ ८९ ॥

राजकीया उच्चपदाधिकारिणः। वरिवस्यन्ति सत्कुर्वन्ति ॥ ८९ ॥

कुटिलोपि च बहिरभिनयन्विनयं संमुखमेति।
ध्रुवमिदमनुकूले विधौ सर्व सहजमुदेति ॥ ९० ॥

अन्तः कुटिलोपि बहिर्विनयमभिनयन् नाटयन्संमुखमेति। अनेन विधेरानुकूल्यं सूच्यते ॥ ९० ॥

सहृदयसुजनसहायतामाप्य मतिं स दधार।
नवहिन्दीसाहित्यवरविद्यालयं बभार ॥ ९१ ॥

आ–आप्य, आङ्पूर्वकादाप्नोतेर्ल्यप्। नवहिन्दीसाहित्य०—'हिन्दीसाहित्यरात्रिपाठशाला'नामको हिन्दीविद्यालय आङ्गविद्यालयस्य समीप एव वर्वर्ति। अत्र हि हिन्दीसाहित्यसंमेलनतो नियमितानां 'प्रथमा-मध्यमा-उत्तमा-'परीक्षाणां ग्रन्था नियमानुसारं पाठ्यन्ते। दशाधिका अध्यापका अत्र प्रेम्णाऽध्यापयन्ति। तेषु बहव एवावैतनिकाः। वर्षद्वयाज्जयपुरराज्यतोप्यस्य शिक्षाविभागद्वारा चत्वारिंशन्मुद्राः प्रतिमाससमार्थिकसाहाय्यं सम्पन्नम्। एतद्ग्रन्थकर्त्रा परिचालितेन 'कविमण्डलेन' सोयं विद्यालयः पूर्वं प्रतिष्ठापित इति दिक् ॥ ९१ ॥

सो०–प्राकृतलोकसुखाय, यस्या रसपाकोऽभवत्।
संस्कृतपथं निनाय, गाथासप्तशतीं स ताम् ॥ ९२ ॥

प्राकृतभाषानुरागिणां लोकानां सुखाय यस्या रसपाकोऽभवत्तां हालकृतां गाथासप्तशतीं संस्कृतपथं संस्कृताया भाषायाः मार्गं प्रापयामास। समश्लोकानुवादेन तां संस्कृतमार्गे आनिनायेति भावः। अत्र प्राकृतानां साधारणानां जनानां रसनीयां सप्तशतीं, संस्कारसंस्कृतानां नागरिकाणामुपभोग्यां

चक्रे इदमपि शब्दशक्त्या सूच्यते, तेन च संस्कृतभाषाया अपूर्वोत्कर्षदायकत्वमभिव्यज्यते ॥ ९२ ॥

स हि संस्कृतभाषागहनतत्त्वाविष्करणाय ।
यद्यत् किञ्चन चरति तद्विदितं स्याद्द्राय ॥ ९३ ॥
अथवा कृतवान् किं न किं, ! करुणां योऽधिजगाम ।
मण्डनकुलतन्तुः स किल जगन्नियन्तुर्नाम ॥ ९४ ॥

यो मण्डनकुलतन्तुः जगन्नियन्तुः करुणामधिजगाम, स किं किं वा न कृतवानिति योजना । तद्विस्तरस्त्वग्रे ॥ ९४ ॥

क०—पञ्चनदविश्वविद्यापीठे सर्वमूर्द्धपदं
चरमपरीक्षार्थिषु सोयं समवाप्तवान्
जयपुरराजकीयशिक्षाप्रविभागादथो
व्याकरणे शास्त्रिपदमेष परिलब्धवान् ।
साहित्येपि लेभे क्रमादेष किलाचार्यपदं
रत्नाकरमुत्प्रमदं सोयं संप्रथितवान्
शास्त्रमर्म शीलितवान्, वाग्मिनः प्रकीलितवान्,
वाचमथोन्मीलितवान्, किं वा न कलितवान् ९५

पञ्चनदविश्वविद्यालये चरमपरीक्षार्थिषु ( शास्त्रिपरीक्षार्थिषु ) सर्वप्रथमस्थानम् ( First in whole University ) । 'संस्कृतरत्नाकर'नामकं संस्कृतमासिकपत्रं महामहोपाध्याय पं. गिरिधरशर्मचतुर्वेदेन एतद्ग्रन्थकर्त्रा चोभाभ्यां दशवर्षपर्यन्तं सम्यक् संपाद्यते स्म जयपुरात् । तदिदानीं कतिपयवर्षेभ्यः प्रतिरुद्धम् । उत्प्रमदं यथा स्यात्तथा प्रकाशितवान् । वाचं कवितामयीं वाणीं प्रकटितवान् ॥ ९५ ॥

दो०—राजाङ्गलविद्यालयाध्यापकपदमयमाप्य ।
माद्यति मानमहीपतेश्छत्रच्छायमवाप्य ॥ ९६ ॥

जयपुरराजकीय'महाराजास् कॉलेज' इत्यस्य संस्कृतप्रोफेसरपदम् । आप्य । छत्रस्य छाया इति छत्रच्छायम् 'विभाषा सेनासुरेति' क्लीबत्वम् । माद्यति, संतोषेण प्रसीदति । 'मौज' इति भाषायाम् ॥ ९६ ॥

यः किल मण्डनकुलगृहं व्यभजद्विलसद्धस्ति ।
मञ्जुनाथनामा सपदि सोयं संमुखमस्ति ॥ ९७ ॥

विलसन् हस्ती यस्मिन् तत्, ईदृशं मण्डनकुलगृहमाश्रयत् । अनेन मण्डनकवीन्द्रस्य तादृङ्महिमशालित्वमात्मनश्च तत्स्थाने स्थितस्यापि अतादृशत्वं सूच्यते ॥ ९७ ॥

कविजनरङ्गान्निर्भरं मनस्तरङ्गाद्वापि ।
अपटु ग्रथितं यत्किमपि, तद्वोऽभिमुखमवापि ॥ ९८ ॥

कविजनानां रङ्गात् अनुरागजनितादभ्यासात् । अपटु अप्रौढमसुन्दरमिति यावत् । ग्रथितं यथाकथञ्चिद् गुम्फितम् ( गांठना इति भाषायाम् । अनेनात्मनोऽशक्तिं प्रकाश्य विनयः सूच्यते । ) वः युष्माकम् । अवापि प्रापितम् ॥ ९८ ॥

मध्यममुत्तममधममिति सन्तस्तद्विमृशन्तु ।
मनोमात्रवेद्येष्वपि च के वाचं नटयन्तु ॥ ९९ ॥

विमृशन्तु समीक्षन्ताम् । मानसमात्रैकवेद्येषु कवित्वगुणपरीक्षादिषु विषयेष्वपि, वाचं के नटीं कुर्वन्तु? यं विषयं मन एव बोद्धुं पारयेत्तत्र वाचा कत्थनेन किं गौरवमिति भावः । 'न हि कस्तूरिकाऽऽमोदः शपथेन विभाव्यते' ॥ ९९ ॥

सत्सु किमहमाम्रेडये गिरं कालिदासस्य? ।
'वह्नौ सिध्यति शुद्धता श्यामिकापि कनकस्य' ॥१००॥

आम्रेडये द्विवारमावर्तयामि । 'हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि वा' ॥ १०० ॥

समाप्तः ।

कृतपुण्यैः पवित्रे हृदये सन्मतिमुत्पादयति । यथा सर्वविधपुरुषार्थसिद्धिरित्याशयः । एवंविधा साधुजनमैत्री पूर्वसुकृतैर्विना न भवतीत्यस्या अतिशयः सूच्यते । तृतीये-सङ्गल-मङ्गलेति प्रासः प्रेक्ष्यः ॥ ५२ ॥

### सत्कार्येष्वौदार्यम्

नानाविधोपायैर्लोकसंग्रहनिमग्ना भृशं
परपरिभवलग्नाः के न मग्ना धनवैभवे ?
जातिव्यवहारशोधनाय धनराशिव्ययं
कुर्वते न के वा, वद, वैवाहिकाद्युत्सवे ? ।
आत्मसुखसेवासावधानाः सन्ति के वा न वै ?
मे वाक्ये न कुप्यसि चेत्स्पष्टमहमाब्रुवे
दीनानां हिताय यस्य लक्ष्मीविनियोगो भवे—
लक्ष्मीवान् स एव पुण्यलक्ष्मीभाजनं भवे ॥५३॥

धनिकानां चाटु, नृपाणामनुवर्तनप्रभृतिभिर्नानाविधैरुपायैः लोकसंग्रहे (लोकानामात्मपक्षकरणे) निमग्नास्तत्पराः, तथा अन्येषां परिभवे लग्नाः जनाः धनवैभवे के वा न मग्नाः ? एवंविधैरुपायैरात्मपक्षवर्धने अन्येषां च दमने तत्पराः के वा जनाः, धनिका भूत्वा तत्र निमग्ना न भवन्ति? अपि तु सर्वे एव तत्रासक्ता भवन्ति । वैवाहिकः (विवाहसम्बन्धी) एतदादिषु उत्सवेषु, विवाहाद्युत्सवेष्वित्यर्थः । जातिव्यवहारस्य शोधनाय पूरणाय धनसमूहव्ययं के वा न कुर्वते इति वद! सर्वे एव कुर्वन्तीत्यर्थः । जातेर्व्यवहारः ऋणसदृशोऽस्ति, 'अन्यस्य गृहे वयं भोक्तुं, व्यवहारं प्रदातुं च गतास्तर्हि, सोऽप्यस्माभिर्भोक्तुमाह्वातव्य' इति, शोधनपदेन ध्वन्यते । आत्मना सुखसेवने (स्वयं सुखोपभोगे) सावधानाः अप्रमत्ताः के न सन्ति? सर्वे एव स्वयं सुखभोगे लग्नाः सन्ति । स्पष्टम् आब्रुवे, कथयामि । लक्ष्म्या धनस्य विनियोगो व्ययः । पुण्यलक्ष्मीभाजनं पुण्यसम्पदां पात्रम् । भवे अस्मिन् जन्मनि, संसारे वा । अस्य प्रतिपादं प्रासाः प्रेक्षणीयाः ॥ ५३ ॥

### ⁓ परोपकारप्रशंसा ( प्राकृतेन ) ⁓

स्वार्थं परिहाय ये परार्थं साधयन्ति सदा
सन्तस्ते सुदुर्लभसमीक्षाः कलेरन्तरे
स्वार्थं साधयन्तो ये परार्थमुपपादयन्ति
सामान्या अपीमे मम मान्या मनोऽभ्यन्तरे ।
मञ्जुनाथ नूनं नरराक्षसा हि साक्षादिमे
स्वार्थवशाद् घ्नन्ति ये परार्थं संसदन्तरे
निष्कारणमेव ये परार्थं परिमर्दयन्ति
ते के हन्त सन्ति ? तन्न जाने जगदन्तरे ॥ ५४ ॥

स्वार्थं त्यक्त्वा ये परस्य कार्यं साधयन्ति, ते सज्जनाः, कलेर्मध्ये, सुदुर्लभा समीक्षा ( दर्शनम् ) येषाम्, अतिदुर्लभदर्शनाः सन्ति । स्वार्थं साधयन्तोपि ये परार्थं साधयन्ति, सामान्यशब्देन भर्तृहरिणा प्रोक्ता अपि इमे मम मान्याः । ये स्वार्थस्य कारणात्परार्थं नाशयन्ति । संसद (समाजस्य) अन्तरे बहिर्भूताः । अन्तर बहिर्योगेति सर्वनामतया शो । इमे साक्षान्नरराक्षसाः ॥ ५४ ॥

गुणगणगौरवं विजानन्नभिमानवशाद्
गुणिनोऽपमन्यते यो धिग् धिग्गुणवन्तं तम्
तीक्ष्णमतिमाप्य योऽपरस्य परिहासकृते
प्रचुरं प्रयस्यति चेद्धिग् धिङ् मतिमन्तं तम् ।
निःसहायनिर्बलनिराश्रयान् निभृतमाप्य
निर्मूलयते यो बलाद्धिग् धिग् बलवन्तं तं

---

१ एतत्पद्यम्–जयपुरराजकीयसंस्कृतपाठशालाया. पूर्वाध्यक्षैः महामहोपाध्याय-पं. श्रीदुर्गाप्रसादद्विवेदैर्भर्तृहरेः पद्योपरि, निर्मातुमादिष्टम् ।

किञ्चिन्मात्रमन्नवस्त्रहीनेभ्योऽपि येन धनं
दीनेभ्यो न दत्तं तर्हि धिग् धिग् धनवन्तं तम् ५५

स्वयं गुणी सन्, गुणगणस्य महत्त्वं जानन् अपि, अभिमानाद्धेतोः यः गुणिनो जनान् अपमन्यते तिरस्करोति, तर्हि तं गुणवन्तं धिक् धिक्। धिग् योगे द्वितीया। तीक्ष्णां मतिम् आ–आप्य, अपरस्य परिहासाय, प्रचुर अत्यन्तं, प्रयस्यति प्रयासं करोति। निःसहायः एकाकी, निराश्रयः पक्षपोषकरहितः। निभृतं गुप्तम्। किञ्चिन्मात्रं धनम्, अन्नादिहीनेभ्यो दीनेभ्यो न दत्तम् ॥ ५५ ॥

धनात् असन्तोषः

आसाद्याऽधिकारान् पुरा दीनान्परितर्जितवा–
नर्जितवान् द्रव्यमपि शासनबलोपरि
ग्रामान् धनलालसो गृहारामान् सुसंचितवा–
न्निर्मितवान् तुङ्गतमं गेहमचलोपरि।
मञ्जुनाथ जायतामिदानीमपि लोभशमो
ऽवधिनियमोस्ति सखे! सोयं सकलोपरि
प्रीयसे न तुलितपरार्धकेपि लब्धे धने
वार्धके विधेया तर्हि धूलिर्धवलोपरि ॥ ५६ ॥

अधिकारान् राज्यतोऽधिकारान् (पदानि), आसाद्य। शासनबलस्योपरि द्रव्यमपि त्वमुपार्जितवान्। त्वं शासक इति शासनबलाद् भयभीतास्तुभ्यं लोका द्रव्यं प्रत्तवन्त इत्याशयः। धनलालसस्त्वं ग्रामान्, गृहान्, आरामांश्च सुष्ठु संचितवान्। अचलोपरि पर्वतोपरि अतितुङ्ग गेहं निर्मितवान्। इदानीमपि लोभप्रशमो जायताम्! हे सखे! अयम् अवधिनियमः सकलानामुपरि अस्ति। सर्वविषयस्य परा काष्ठास्तीति, अतोऽधिकं लोभो

न कर्तव्य इति भावः। परार्धसंख्यया तुलितेपि धने लब्धे सति, यदि त्वं न प्रीयसे, तर्हि वार्धके (वृद्धावस्थायाम्) धवलानाम् (केशानाम्) उपरि धूलिर्विधेया। सर्वेपि लुब्धतमस्य तव शिरसि धूलिं क्षेप्स्यन्तीति भावः। 'धोलोंमें धूल' इति लोकोक्त्या तन्नामालंकारः ॥ ५६ ॥

## पूर्वे नीतिज्ञाः

### छप्पयच्छन्दः

विलसन्तो विनयेन, पूर्वसन्तो विजयन्ते।
ये मृदुवचनचयेन लोकहृदयानि नयन्ते ॥
सदसि समञ्जसगिरो, गुरुषु विषयेष्वनिरुद्धाः।
सकलहितावहकार्यविधौ सभ्यैरविरुद्धाः ॥
अयि मञ्जुनाथ ! नानागुणैर्विमलीकृतजनचेतसाम्।
निर्दोषनीतिनिहतैनसां पूजय पूर्वसचेतसाम् ॥ ५७ ॥

विनयेन शोभमानाः। पूर्वे सन्तः, सज्जनाः। हृदयानि नयन्ते, स्ववशे कुर्वन्तीत्यर्थः। सभायां युक्तरूपवचनाः, महत्सु अपि विषयेषु अनिरुद्धा अप्रतिहताः। सकललोकानां हितकार्ये सभ्यैः सह अविरुद्धाः (एकमतयः), गुणद्वारा विमलीकृतं जनानां चेतः यैस्तेषाम्, निर्दोषया नीत्या, (न तु कपटभरितया कूटनीत्या वा,) निहत शमितं एनः पापं यैस्तेषाम्, उदारनीतिप्रयोगेण यैः सकलान्यपि दुरितानि दूरितानि, तेषां पूर्वतनानां सच्चेतसां (सज्जनान्) पूजय संमानयस्व। सचेतसामिति मातुः स्मरतीतिवत्कर्मत्वाविवक्षया षष्ठी ॥ ५७ ॥

## नवीननीतिः

### अधिकारिणः नेतारो जातिप्रमुखाश्च

क०–यत्किञ्चिद्दृदामस्तत्प्रकारान्तरतो लिखन्ति
स्वमतं क्षिपन्ति वञ्चयन्तो मानुषीं दशम्

गुप्ते किञ्चिदन्यथा प्रतिज्ञायाऽपि सर्वाग्रतः
स्पष्टं मृषयन्ति, विस्मरन्ति 'यद्धि कीदृशम् ?' ।
वैमत्यं विधाय मिथो लोकान् भेदयन्ति, बहिः—
स्नेहं दर्शयन्ति, संलपन्ति पुराऽऽनीदृशं
पूर्वं किं किमासीदिति प्रत्यक्षं न जाने सखे !
अद्यत्वे तु जाने नीतिकौतूहलमीदृशम् ॥ ५८ ॥

वयमस्माकं वाचिकं यत् किञ्चिद्वदामस्तत् आत्मपक्षानुकूलेन प्रकारेण लिखन्ति । येन प्रकारेण लेखननियुक्तानां तेषां नवीननीतिज्ञानां पक्षपरिपुष्टिर्भवति तेनैव प्रकारेण लेखनमारभन्ते इत्याशयः । लेखने च मनुष्याणां सम्बन्धिनीं दृष्टिं प्रतारयन्त स्वमतं तत्र क्षिपन्ति मिश्रयन्ति । मानुषीमित्युक्त्या अस्माकं दृष्टिं कामं ते वञ्चयन्तु, पर सर्वसाक्षिणः परमेश्वरस्य दृष्टिं न परिहरेयुरिति तेषां सदोषत्वं ध्वन्यते । रहसि अन्यप्रकारेण कस्यचित् कार्यस्य प्रतिज्ञां कृत्वाऽपि, सर्वेषां जनानां समक्षे तु तां प्रतिज्ञां मृषा कुर्वन्ति । तत्करोतीति मृषाशब्दाण्णिः । पूर्वप्रतिज्ञातमेवं विस्मरन्ति 'यद्धि कीदृशमासीत् ?' नाहं स्मरामीत्युक्त्वा सर्वं तन्मृषा कुर्वन्तीत्यर्थः । विरुद्धपक्षावलम्बिषु लोकेषु परस्परं मतभेदं विधाय, लोकानां मध्ये भेदमुत्पादयन्ति । किन्तु प्रकाशं स्नेहं प्रकटयन्ति, तथा च संलपन्ति यत्पुरा ईदृशं न आसीत्, अतिमधुरमित्यर्थः । पुरा न ईदृशं यथा स्यात्तथेति क्रियाविशेषणम् । पूर्वं पुरातनानां नीतिज्ञानां काले, किं किमभूदिति प्रत्यक्षं न जानामि, केनेदं प्रत्यक्षं दृष्टमिति भावः । अद्यत्वे तु ( अस्मिन्समये ) स्पष्टं जाने—यत् 'नीतिकौतुकम् एवंविधमस्तीति' । कौतूहलमित्युक्त्या एवंविधा नीतिः केवलं कौतुकमस्तीति द्योत्यते ॥ ५८ ॥

## शिक्षिताः

अस्माभिर्गृहीतं ज्ञानमूलधनं यत्किञ्चन
वागाडम्बरेण तद्धि भृशमुपचीयते

विज्ञेभ्योऽपि साभिमानहुङ्कारं प्रगीयतेऽथ
सदसि सदैव वरस्थाने स्वतः स्थीयते ।
उन्नताधिकारिजनैः साकं कर्णवार्ताविधिः
समितौ, समन्द्रस्वरं किञ्चिदभिधीयते
इत्थं शीघ्रमुन्नतये लोकमतसंनतये
सेयं नवनीतिर्नवसभ्यैरभिनीयते ॥ ५९ ॥

अस्माभिः पूर्वं यत्किञ्चित्, ज्ञानरूपं मूलधनमुपार्जितम्, तत् किल वागाडम्बरेण वाक्चापल्येन विकत्थनादिना, आयतायताभिर्वक्तृताभिश्च अत्यन्तं वर्ध्यते । विज्ञेभ्यः विज्ञजनार्थमपि [ विद्वद्भिः साकमपीति यावत् । ] अभिमानकृतैः हुंकारशब्दै· सह किञ्चित् प्रगीयते उच्यते । स्वतः ( अन्यैरनुक्तेपि, स्वयमेव ) श्रेष्ठस्थाने स्थीयते । समितौ सभायाम्, उन्नतै· राजकीयाधिकारिभिः साकं कर्णे वार्ताकरणम्, [ येन सर्वेषु स्वस्य गौरव प्रसरेत् । ], यत्किञ्चिदपि मन्द्रेण(गभीरेण)स्वरेण सह उच्यते । लोकमतस्य संनतये प्राप्तये, लोकमतमात्मपक्षे कर्तुम् । नवीनाया नीतेरभिनयः क्रियते ॥ ५९ ॥

## नीतेः परिभाषा

### रूपकघनाक्षरी

चेतसि सुदृढमङ्गीकुर्वन्तोऽपि संसद्गता
अन्योन्यं विपश्यन्तो न चात्ममतं संगृणन्ति
लोकसभामञ्चे यत्प्रपञ्च्यतेऽति विस्तरेण
स्वगृहप्रपञ्चे तत्समग्रमन्यथाऽऽश्रयन्ति ।
मञ्जुनाथ कार्ये नाग्रतो भवन्ति भीतिशीला
लीलामिमामद्य बुधा नीतिरिति व्याहरन्ति

मन्येऽहं नवीनरीतिभरिते नवीनयुगे
भीतिमिमामद्य नीतिनाम्ना बुधाः संलपन्ति ॥६०॥

संसद्गताः सभास्थिताः । परस्परस्य मुखं पश्यन्तः आत्मनो मतं न कथयन्ति । लोकसभाया मञ्चे येषाम् । प्रपञ्चयते, प्रपञ्चः क्रियते विस्तारपुरस्सरं प्रकाश्यत इत्यर्थः । निजगृहस्य प्रपञ्चे तत् पूर्वोक्तं समग्रमन्यथा(रूपेण) आश्रयन्ति स्वीकुर्वन्ति । सभायां यदुक्तम् तत्स्वगृहकार्यवेलायामन्यरूपेण स्वीक्रियत इत्यर्थः । भीतिशीलाः भयस्वभावाः । भयमेतेषां स्वाभाविको भवतीति सूच्यते । इमां पूर्वोक्तां भीतिलीलाम्, जनाः 'इयं तेषां नीतिरस्तीति' कथयन्ति । तस्मादहं मन्ये, यत् नवीनाभी रीतिभिर्भरितेऽस्मिन्नवीनयुगे, कदाचिदिमे बुधाः, बुध्यन्ते इति बुधाः अपूर्वबोधशालिनः सन्तीति इमां पूर्वोक्तां भीतिम् अद्य नीतिनाम्ना व्यपदिशन्ति । भीतेः नीतिरिति नामकरणं नवीनयुगस्य नवीना रीतिर्भवेदित्याशयः ॥ ६० ॥

मान्यजनमध्ये येषां निर्भरः प्रभावो भाति
श्रेष्ठिजना येषां चरणेषु शिरः संवहन्ति
शासनाधिकारिणोऽपि येषां कथनानुचराः
स्वयमपि धनिकवरा निःस्पृहाः परानवन्ति ।
तेऽपि परकार्ये वाणीमात्रमपि नो दिशन्ति
मनसि स्वनीतिमिमां मत्वा किन्तु संतुष्यन्ति
मन्येहं नवीनरीतिभरिते नवीनयुगे
भीतिमिमामद्य नीतिनाम्ना बुधाः संलपन्ति ॥६१॥

मान्यानां जनानाम् सामन्तादिभूम्यधिकारिणां मध्ये । संवहन्ति स्थापयन्ति । प्रजाशासनेऽधिकृताः राज्याधिकारिणः येषां वाण्या अनुचराः, वशीभूता इत्यर्थः । तत्र कारणमाह—यत्स्वयं ते (नीतिज्ञाः) धनिकवराः पूर्णतमधनिकाः सन्ति । अत एव धनादिविषये गौरवविषये वा तेषां

पूर्वोक्तानामपेक्षां न रक्षन्ति। किञ्च सर्वतोधिकं कारणं गौरवस्येदम् यत्— परान् अवन्ति (रक्षन्ति), लोकानां संकटसमये रक्षां कुर्वन्ति । परकार्ये, परस्य आवश्यके उपकारकार्ये । वाणीमात्रमपि न दिशन्ति, उन्नतजनानुक्त्वा तस्य कार्ये साहाय्यरूपमुपकारं न साधयन्तीत्यर्थः ॥ ६१ ॥

नीतेरन्यविध आदर्शः

सवैयाच्छन्दः

परमादरणीयपुराणजने
  द्रढयन्ति मृषेति धियं कुधियं वा
सुचिरंतनशास्त्रचयाच्चलयन्ति
  जनस्य रुचिं जनयन्ति भियं वा ।
प्रजनय्य जनेषु मिथः कलहं
  दमयन्ति गुणाढ्यजनं सुधियं वा
अयि सभ्यजना विमृशन्तु मना-
  गपि नीतिरियं ह्यविनीतिरियं वा ॥ ६२ ॥

परमम् आदरणीये संमाननीये, अस्माकमैतिहासिके पूर्वजगणे, 'इदं सर्वं मृषा' इति धियम्, अथवा श्रद्धाविघातिनीं कुत्सितां धियं द्रढयन्ति । वेदादिपुरातनशास्त्रसमूहात् जनस्य रुचिं दूरे कुर्वन्ति, अथवा तत्र "एवं सति लौकिकाधिकारहान्या भूयानपकारः, जीवनसंग्रामे पराजयश्च स्यादिति" भयं वा उत्पादयन्ति । यत्र धार्मिकयुक्त्या कार्यं न सिध्यति तत्र— जनेषु मिथो भेदं जनयित्वा, गुणधनादिभिराढ्यं प्रमुखजनं, सुधियं प्रसिद्धं प्रतिभाशालिनं जनं वा दमयन्ति, येन स्वप्रतिपक्षाणां पक्षविघात एव स्यात् । इदानीं विचारयन्तु—इयं नीतिः, उत अविनीतिः (धृष्टता) अस्ति ॥ ६२ ॥

दो०—आत्मपक्षपरिपोषणं परकृशता स्वबलेन ।
  राजनीतिरेतावती विदिता विज्ञजनेन ॥ ६३ ॥

आत्मनः पक्षस्य प्रबलीकरणम्, स्वबलद्वारा परपक्षस्य कृशता, एतावती राजनीतिर्विज्ञजनेन विदिता। उक्तं हि माघेनापि—"आत्मोदयः परज्या-निर्द्वयं नीतिरितीयती॥" ॥ ६३ ॥

## —॥ नीतेस्तवम् ॥—

सो०—सततमवितथाचार, रुचिरा सा नीतिर्जयति।
याऽपि च परोपकार, निरता निजमर्थं सृजति ॥ ६४ ॥

कपटनीतिं परिहृत्य, अवितथेन सत्येनाचरणेन रुचिरा सा काचिन्नीति-र्जयति। रुचिरपदेन तत्र सौष्ठवमपेक्ष्यत इति सूचितम्। परेषामुपकारे निरतापि च या स्वमर्थं सृजति (साधयति)। तथा च कपटं विनैव, चातु-र्येण तथा विचेष्ट्यते यथा परोपकारेण सह स्वार्थस्याप्यवश्यं सिद्धिर्भवति, सा किल नीतिरित्याशयः ॥ ६४ ॥

क०—बाल्ये विनयेन परमार्थलौकिकार्थकरीं
विद्यां प्राप्य, कुर्यान्मनो राजलोकमानेहम्
भृशतरमुन्नतोऽपि नाभिमानमेयात् कश्चि-
ल्लोकहिते दद्याद्दानमेतदनुजानेऽहम्।
भावयेदुदर्कं न च कंचिज्जनं द्रुह्यादथ
द्रुह्यन्तं तु दुष्टं दलयेतेत्यभिजानेहं
सकलसुदक्षलोकलक्षणीयरीतिपथां
नीतिशास्त्रसंमतसुनीतिमिमां जानेऽहम् ॥ ६५ ॥

बाल्यावस्थायाम्, पारलौकिकस्य ऐहलौकिकस्य च पुरुषार्थस्य साधिकां विद्यां विनयपुरस्सरं प्राप्य, तदनन्तरं यौवने, राज्ञः लोकानां च माने ईहा (इच्छा) यस्य, ईदृशं मनः कुर्यात्। विद्योपार्जनोत्तरं राजसंमानं लोकसंमानं प्राप्तुं च मनः कुर्यादित्याशयः। प्राप्तराजादिसंमानः, अत एव अत्यन्तमुन्नतोऽपि अभिमानं न एयात् (आ–इयात्), अभिमानं नावहेदि-

त्यर्थः। लोकहिते दानं दद्यादेतत् अहम् अनुजाने, अनुमन्ये। उदर्क परिणामम् विचारयेत्, अग्रे किं भविष्यतीति सर्वदा दृष्टिं दद्यात्। किं च—असदनुष्ठितैः कर्मभिरग्रे शरीरावसाने किं फलं भवेदिति पारलौकिकसुकृतसूचनापि ध्वन्यते। प्रवृत्तिमार्गानुसारमाह—स्वतः केनचित्सह द्रोहं न कुर्यात्, द्रुह्यन्तं तु दलयेत, वाढं दमयेदेतत् अहं सम्यग् जाने। सकलेभ्यः सुचतुरेभ्यो लोकेभ्यः सकाशात्, लक्षणीयः परिचयनीयो रीतिमार्गो यस्याः ईदृशीम्, पुरातननीतिज्ञानामादर्शतः परिलक्षितामित्यर्थः। नीतिशास्त्राणां संमतां सुनीतिम्, अहम् इमाम् (पूर्वैश्चरणैरुक्ताम्) जाने। अस्मिन्नर्थे नीतिशास्त्राणां संमतिस्तु कृतबुद्धीनां कृते विस्तरमात्रमिति तत्तद्ग्रन्थेभ्य एवावसेया॥ ६५॥

भुवनमिदं हि भोगभूमिरिति भावनया
भूयो भव्यकर्म भजेदेतत्स्फुटमाप्यते
प्रायः प्रतिकूलैः परिदूयतेऽन्तरात्माऽस्माक-
मेवमपरोऽपि पुमान् प्रायो नोपताप्यते।
एवं मन्यमानैरपि विज्ञैर्यया मञ्जुतया
प्रायः परमार्थो लौकिकार्थोपि न हाप्यते
वास्तवे तु विमलविवेकिवृन्दवन्द्या, नीति-
निष्णाताभिनन्द्या नीतिरियता समाप्यते॥ ६६॥

एषा भूमिः, पूर्वकृतकर्मणां भोगस्य स्थलमिति विचारेण 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः।' एतदनुसारं भव्यं (इह परत्र च शुभम्) कर्म कुर्यादेतत् स्फुटम्, आप्यते प्राप्यते। एतदवश्यप्राप्तमिति भावः। यदि वयमिदानीं शुभं कर्म करिष्यामस्तर्हि पुनरग्रे शुभोदर्कमनुभविष्याम इति। अस्माकमन्तरात्मा प्रतिकूलैः (आत्मनः क्लेशावहैः) कार्यैः, परिदूयते व्यथते, एवं विचार्य अन्यो जनोपि न पीड्यते। प्रायःपदेन, नीति-

मार्गे स्वार्थविघाते सति कुत्रचित्परपीडापि भवतीति दृश्यते। एवम् (पूर्वोक्तानुसारम्) स्वीकुर्वद्भिरपि नीतिविज्ञैः, यया (नीत्या) मञ्जुतया सौष्ठवेन साकम्, पारलौकिकः, ऐहलौकिकश्च अर्थो न हाप्यते (न विनाश्यते), यद्द्वारा दाक्षिण्येन सह पारलौकिकसुखप्राप्तेरप्रतिबन्धकः ऐहलौकिकः स्वार्थः सिध्यति सा इत्याशयः। विमलविवेकिजनैः वन्द्या प्रशस्या, नीतिलिप्णातैर्जनैरनुमोदनीया च सा (उदारनीतिः) वस्तुतस्तु इयता उपसंहारेण परिसमाप्यते॥ ६६॥

## स्वीयं निवेदनम्

वाचां मर्म विज्ञायैव वाचां विसृजन्ति सदा
ये केचिद्, वयं वै तेषां गृह्यका गुणज्ञानाम्।
सुहृदां सहायाः, पुनः प्रणताः प्रसन्नहृदाम्,
चाराश्चतुराणां वयं बन्धवो बहुज्ञानाम्।
मञ्जुनाथ मिथ्यैवाभिमानभरात्फुल्लमुखाः
केचिदुर्मुखा ये, तेषां भेत्तारोऽनभिज्ञानाम्
अज्ञानां सपत्नाः, शास्त्रविज्ञानां कृतज्ञाः, पुन—
र्निश्छलप्रतिज्ञा वयं सेवका रसज्ञानाम्॥ ६७॥

वाचां वाणीनां तत्त्वं, यथावद् अवबुध्य, ये केचित् जनाः, वाचां (वाणीम्, भागुरेराप्) विसृजन्ति, ये तत्त्वं परिज्ञायैव किञ्चिद्वदन्तीत्यर्थः। तेषां गुणज्ञलोकानां वयं गृह्यकाः वश्याः। सर्वदा प्रसन्नचित्तानां वयं प्रणताः, तान् संमानयाम इत्यर्थः। चतुरलोकानां चाराः प्रेष्याः, अनुचरा इति यावत्। तेषामनभिज्ञानां भेत्तारः, दण्डयितारः। सपत्नाः शत्रवः। निश्छलप्रतिज्ञाः सत्यप्रतिज्ञाः। वयं रसज्ञानां सेवका इत्यस्माकं प्रतिज्ञा सत्येत्यर्थः॥ ६७॥





# विनोदवीथी ।

मङ्गलसोरठाच्छन्दः

दुर्दमदुर्मतिदारु,–दारुणदावानलसमम् ।
चरणमुदञ्चतु चारु, चञ्चरीकसञ्चयवहम् ॥ १ ॥

विषमदुर्मतिरूपं यद्दारु (काष्ठम्), तदर्थं दावानलसदृशम् । चञ्चरीकाणां भ्रमराणां सञ्चयं वहति तादृशम्, भ्रमरैः सेवितमित्युक्त्या महानुभावानामाश्रयणीयमिति ध्वन्यते । एतादृशं चारु चरणं (मानसे) उदञ्चतु उदेतु ॥ १ ॥



## समीक्षाविनोदः

कवयः

घनाक्षरी

शब्दा न स्फुरन्ति रचनासु, नापि भाषा वशे,
न पुनरशेषवृत्तबन्धे प्रभविष्यामः
दासा इव नानुयान्ति वाचमनुप्रासा अपि
भावमनायासादभिव्यक्तुं नोल्लसिष्यामः ।

मञ्जुनाथ मानसिकमोदोद्गारमेतं मञ्जु-
कवितानिकेतं कृच्छ्रभावैर्भरयिष्यामः
प्रस्थयवयोग एव विकलं व्ययतु वयो
निर्निरोधवाचो वयं कवयो भविष्यामः ॥ २ ॥

भाषाऽपि वशे न, भाषायामपि अधिकारो नास्तीत्यर्थः। अशेषवृत्तानाम्, संपूर्णानां छन्दसां निबन्धे न प्रभविष्यामः, नानाविधच्छन्दोबन्धशक्तिरपि नास्तीत्यर्थः। अथवा एकमेवारब्धं वृत्तं पूरयितुमपि न प्रभविष्यामः, वृत्तस्यारंभः कृतो वियोगिन्याम्, अग्रे गत्वा तु मालभारिणी संपन्ना इत्यादि। अनुप्रासाः दासा इव वशीभूता इव (स्वतः) वाणीम् नानुगच्छन्ति। अनायासात् (स्वाभाविकरूपेण) आत्मनो भावमपि प्रकटयितुं नोल्लसिष्यामः न शक्ष्यामः। मानसिकमोदस्य उद्गारभूतमेतं कवितारूपं निकेतम् (स्थानम्) कष्टैर्भावैः पूरयिष्यामः। कविता हि हृदये उच्छलतः प्रमोदस्य हृदयसीमनि अमान् पूरविशेषः, यदा तु हठात्कारस्तत्र न तदा स उत्कर्ष इति सकलकविकुलस्यैकमत्यम्। प्रस्थपरिमितानां यवानां योगे प्राप्तौ एव विकलं वयः (अवस्था) व्ययतु गच्छतु नाम। उदरपूर्तिक्लेश एव जीवनं व्यत्येतु नाम, परं निरर्गलवाचो वयं कवय संपत्स्यामहे। अस्माकं वाक् न निरुद्धा, अत एव वयं स्वमुखत एव कविरिति प्रसेधयिष्याम इति भावः। चतुर्थे–यवयो वयो कवयो इति वयोप्रासः प्रेक्ष्यः॥ २ ॥

जन्मजातमेतत्काव्यबीजमुपलब्धं न वै
विश्रब्धं न सिद्धकविसेवामाचरिष्यामः
शब्दशास्त्रदिव्यसौधभागान् कोणकोणावधि
भृशमनुरागान्नापि निर्भरं चरिष्यामः।
मञ्जुनाथ मोदोन्मदमभृतपयस्वतीषु
सुकविसरस्वतीषु न स्वं विसरिष्यामः

मार्जनमवापि नापि प्रतिभाऽपि भावशतै-
रहह ! तथापि वयं कवयो भविष्यामः ॥ ३ ॥

जन्मजातं नैसर्गिकं काव्यरचनाबीजम् (ईश्वरगृहात्) न लब्धम् । तदनन्तरं सिद्धानां कवीनां परिचर्यामपि विश्रब्ध यथा स्यात्तथा नाचरिष्यामः । एवं च ईश्वरदत्तप्रतिभा, सिद्धसारस्वतानां कवीना सविधतोऽभ्यासश्च, कवितां प्रति प्रधानहेतुरिति दर्शितम् । शब्दशास्त्ररूपस्य दिव्यसौधस्य, संपूर्णान् भागान्, कोणकोणपर्यन्तं अत्यन्तानुरागात् निर्भरं न विचरिष्यामः । तथा च यावत्कालं व्याकरणस्य सुबाख्यातप्रभृतिषु संपूर्णभागेषु प्रेमवशात्कवे. परिचयो न भवति, तावत्कालं कवेः श्रुतरूपमङ्गं विकलमेवेत्यर्थः । अनुरागादित्यनेन "केवलं परीक्षासंरम्भेण व्याकरणपरिचयो नापेक्ष्यते, अपि तु तत्र स्वाभाविकप्रेमवशात् । येन हि साधारणविनोदसमयेपि शब्दशास्त्रमर्मविचारेण विमर्शयोग्यता सिध्येत्" इति सूच्यते । निर्भरमित्यनेन साधारणतोऽपेक्षिता शब्दशास्त्रयोग्यता व्यावर्त्यते, पूर्णपाण्डित्यं चापेक्ष्यते । किञ्च–अमृतरसशालिनीषु सुकविसूक्तिष्वपि मोदेनोन्मदं यथा स्यात्तथा आत्मान न विस्मरिष्याम. । अर्थात् महाकविसूक्तिषु तथास्माकं प्रवृत्तिर्भवेद्यथा, तासां रसानुभवसमये विगलितवेद्यान्तरतया आत्मनोपि भानं न भवेत् । ये तु एवं काव्येषु न व्यासक्तधियस्तेषां तत्तत्त्वविकलतया कविरिति व्यपदेशो विडम्बनैवेत्याशयः । भावशतैः नानाविधैरुन्नतैर्भावैः, प्रतिभाऽपि मार्जनं शोधनं न अवापि न प्रापिता । उन्नतभावद्वारा प्रतिभाया अपि शुद्धिर्न जाता । तथापि वय कवयो भविष्याम इत्याश्चर्यम् 'अहह' इत्यनेन द्योत्यते ॥ ३ ॥

प्रारम्भे प्रसिध्यमानकविताप्ररोहमाप्य
कविरिति मोहवशाद्दर्पमुपयामः किम् ?
कुहचन गीतिभिः क्वचिच्च हिन्दीवृत्तभरैः
सततममन्दीभूतभाग्याः संभवामः किम् ? ।

मञ्जुनाथ नैसर्गिकसारस्वतसारजुषां
विदुषामुपेक्षयैव धृष्टाः संभवामः किम्?
चापलचरित्रच्छटाऽऽच्छन्नच्छवयोऽपि भूरि-
भारतीविभवयोगिकवयो भवामः किम्? ॥ ४ ॥

प्रारम्भे काव्यग्रन्थपठनसमय एव प्रभिद्यमानं (स्फुटन्तम्) कविताङ्कुरम् आ-आप्य, 'अहं कविरस्मि' इति मोहवशाद्वयं दर्पं किमित्युपयामः। कविताङ्कुरोद्भेदमात्रेण कविरिति गर्वो नोचित इत्यर्थः। कुहचन, कस्यांचन सभायां गीतिरचनया, क्वचिच्च हिन्दीभाषामयवृत्तभारैः वयममन्दभाग्याः (महाभाग्याः) किं संभवामः? अपि तु न। 'भर' पदेन, तानि हिन्दीवृत्तान्यपि न कवितापरिपाकपिशुनानि, अपि तु केवल भारभूतानीति द्योत्यते। स्वाभाविको यः सारस्वतसार (सुरसरस्वतीनिःष्यन्दः) तच्छालिनां विदुषामुपेक्षामात्रेण। सिद्धसारस्वताः कवयः अस्मासु उपेक्षावशादसन्मुखमर्दनं न कुर्वते, तावता वयं किं धृष्टाः संभवामः? अपि तु एतादृशी धृष्टता नोचितेति भावः। अस्तु एवंरीत्या चापलचरित्रच्छटया, आच्छन्ना स्वाभाविकी च्छविः (प्रकृता दशा) येषाम्, ईदृशा अपि वयं किं भारतीवैभवयुक्ताः कवयो भवामः? अपि तु न। चापल्यचेष्टाभिः स्वस्य वास्तवीमयोग्यतामाच्छादयन्तोपि वयं सरस्वतीवैभवशालिनः कवयो भवितुमर्हामः? अपि तु नेत्याशयः। अत्रापि चतुर्थे वयो वयो इति त्रिः प्रासः पूर्वतो नवीनः प्रेक्ष्यः ॥ ४ ॥

वचनविदग्धा परसूक्तिदोषदर्शनेषु
मुग्धा निजकाव्यदोषमार्गणे समीक्ष्यते
गुप्ता किल सकलसभासु विस्खलन्ती मुहु-
र्वासकसज्जा तु पुनरेषा सुपरीक्ष्यते।

खण्डिता रसज्ञैः, कलहान्तरिता सज्जनेषु
प्रायः कुटिलेषु सेयमुत्का समुदीक्ष्यते
हंहो दुःप्रसाद कविपुङ्गव सरस्वती ते
जरती तथापि नव्यनायिकावदीक्ष्यते ॥ ५ ॥

दर्शनेषु प्रकाशनेषु । दर्शयतेत्युद् । वचनद्वारा विदग्धा चतुरा । निजकविताया:, अपुष्टार्थता; असमर्थतादिदोषदर्शने मुग्धा अचतुरा । भयवशात् स्खलितमवलम्बमाना सकलास्वेव सभासु गुप्ता अदृश्या । वासके गृहे सज्जा, सर्वदा स्वगृह एव निजपाटवं दर्शयितुं सन्नद्धेत्यर्थः । सुपरीक्ष्यते इत्यनेन बहुधा गेहेनर्दित्वं सुपरीक्षितमिति द्योत्यते । रसवेदिभिर्विसंष्ठुलपदबन्धेन खण्डिताऽवधीरिता । कलहान्तरिता, मध्ये मध्ये सज्जनैः सह कलहमाचरन्तीत्यर्थः । उत्का उत्कण्ठिता, कुटिलनीतिकलोवेषु प्रेमवतीत्यर्थः । अत एव दुष्करः प्रसादः (प्रसन्नता) यस्य, एवंभूत हे कविश्रेष्ठ ! ते पुरातन्यपि वाणी नवीननायिकावदालोक्यते । वचनविदग्धा—मुग्धाप्रभृतयो नायिकास्तु प्रसिद्धा एव ॥ ५ ॥

❀ पण्डिताः ❀

योजितावधानास्तत्परीक्षासरिदुत्तरणे
अष्टव्यानुसन्धानादमुष्मिन्नपि सिध्यामः
ज्ञात्वा राजभाषां व्यवहारनैपुणाय, ततो-
ध्यापनप्रसक्ताः क्रमवृद्ध्या सुसमृद्ध्यामः ।
समितौ नदन्तो गुरुगाम्भीर्याभिमानभरा-
द्यत्किञ्चिद्वदन्तो बुधहृदयानि विध्यामः
मान्यताऽभिमानमदमण्डितास्त्वरितमेव
संसदि समन्तान्महापण्डिताः प्रसिध्यामः ॥ ६ ॥

परीक्षारूपायाः सरितः उत्तरणे दत्तावधानाः। सरितमुल्लङ्घयन्पुरुषो यथा तद्गाम्भीर्यं न जानाति, एवं केवलं परीक्षोत्तरणमात्रं तत्र प्रयोजनं न ग्रन्थतत्त्वावबोध इति उत्तरणवृत्तान्तेन ध्वन्यते। प्रष्टव्यविषयाणामनुसन्धानात् अनुमानात्। अस्मिन्ग्रन्थे एते प्रष्टव्यविषया इति पूर्वतनपरीक्षाप्रश्नपत्रादिद्वारा अनुसन्धानादित्यर्थः। अमुष्मिन् परीक्षाया उत्तरणे। क्रमवृद्ध्या नियमानुसारिण्या क्रमिकया वेतनवृद्ध्या (ग्रेड) सुसमृद्धा भवामः। वयं मान्या इति योऽभिमानस्तेन जनितो यो मदस्तेन मण्डिताः। मण्डितपदेन सोऽभिमान एव तेषां मण्डनम्, यदि परमार्थविचारो भवति तदा ते पण्डिता न सिध्यन्तीति द्योत्यते। संसदि सभायां सर्वत्र महापण्डिता इति प्रसिद्धा भवामः। त्वरितमित्यनेन त्वरितं पण्डितताप्रसिद्धेरयमेवानुभूतो योग इति सूच्यते॥ ६॥

पाठ्यक्रमभुक्तान्यपहाय तानि पुस्तकानि
भवनेऽतिरिक्तान्यवगन्तुं न विमृष्यामः
व्युत्पत्तिप्रकर्षप्रतिभाऽनुसारमुक्तिक्रमे
मार्मिकविचारमभिपद्य वयं क्रुध्यामः।
यावद्वयं जानीमो नितान्तं तावदेव साधु
सिद्धान्तं तमेतमवधार्य हृदि सिध्यामः।
मानसे प्रमादमोहमण्डितास्तथापि वयं
जगति समन्तान्महापण्डिताः प्रसिध्यामः॥ ७॥

विद्यालयेषु पाठ्यक्रमभुक्तानि तानि पुस्तकानि विहाय, तदतिरिक्तानि पुस्तकानि भवने अवगन्तुं विचारयितुं वयं न विमृष्यामः अभिकाङ्क्षामः। व्युत्पत्तेर्यः प्रकर्षः अतिशयः, प्रतिभा (ईश्वरदत्ता बुद्धिः) च तयोरनुसारम्, उक्तिक्रमे। मार्मिकं विचारं प्राप्य वयं क्रुद्धा भवामः। यदि कश्चिद् व्युत्पत्तिप्रतिभातिशयेन अतिमार्मिकं कञ्चन शब्दादिविचारमुपस्थापयति, तदा 'नेदं कुत्रचिद्दृष्टम्' इत्युद्घोषयन्तः पर्यन्ते स्ववैलक्ष्यगोपनाय क्रुद्धा भवाम

इत्याशयः। सिध्यामः सिद्धाः भवामः। स्वहृदये प्रमादेन मोहेन च मण्डिताः, तथापि सर्वत्र जगति महापण्डिता इति प्रसिद्धा भवामः ॥ ७ ॥

सविधे विमृष्यसे चेच्छेषनागमूर्तिधरो
दृश्यसे तु दूरादसौ मूर्तिमान् शमो दमः
श्लोकतन्त्रवार्तिकादिचर्चा मुहुरारभ्यते
तत्त्वमुपलभ्यते चेद् घोरं ते तमो भ्रमः।
मञ्जुनाथ वचसि च वेषे त्वं महर्षिसमो
मर्मपरिपेषे मुहुर्मनसि यमोपमः
पूजागृहगुप्तीकृतगिरिजागिरीश!
सर्वपण्डितपुरीश वरपण्डित! नमो नमः ॥ ८ ॥

सविधे निकटे यदि विचारस्ते क्रियते, तर्हि त्वं शेषनागमूर्तिधारी। सर्प इव महाभयङ्कर इत्यर्थः। शेषपदेन महासर्पत्वं गौरत्वं च द्योत्यते। असौ त्वं, दूरात्तु मूर्तः शमो वा दमो वा दृश्यसे। बहिस्त्वां सर्वेपि शान्तं दान्तं च जानन्तीति भावः। पाण्डित्यप्ररोधनाय श्लोकवार्तिकतन्त्रवार्तिकादि-गहनग्रन्थानां चर्चा, टुप्टीकादीनां च अप्राकरणिको विचारो मुहुरारभ्यते। यदि तत्त्वोपलब्धिः क्रियते, तर्हि तव घोरं तमः (अज्ञानम्), अयथार्थज्ञानं वा। तत्त्वविचारे, तावान् मार्मिकस्त्वं न सिध्यसीति भावः। मर्मपरिपेषे, कुटिलचेष्टया अपरेषां मर्माघाते, तथा मनसि च त्वं क्रूरत्वात्कृतान्तसमः। वचने वेषे च ऋषिवदाडम्बरधार्यपि त्वं मनसि परपीडायां च यमवत्क्रूर इत्याशय। पूजागृहे गुप्तीकृतौ उमाशिवौ येन तत्संबुद्धिः। सर्वस्याः पण्डितपुर्याः सर्वपण्डितसमाजस्य, ईश श्रेष्ठ!!। पुरी समुदायवाचको लोके-यथाह 'ब्रह्मपुरी भोजिता' इति। सर्वपण्डितानां पुरीष मल! इति त्वर्थो नास्ति, मूर्द्धन्यषकाराभावात् ॥ ८ ॥

—॥ वैयाकरणाः ॥—

प्रारम्भात्कर्णेनिहत्य व्याकृतावधीती भवा-
नध्यर्द्धं व्यतीतीकृताऽवस्था सर्वकर्मीणा
सूत्रवृत्तिघोषणेषु सांराविणमारचय्य
पुस्तकस्थविद्या कृता सम्यक् सर्वपत्रीणा ।
अद्यत्वे तु मञ्जुनाथाऽन्वक्षं नेह सम्यचिचः
प्रौढवचःशक्तिरपि नास्ति तेऽभ्यमित्रीणा
बहुलमुपार्जेकृत्य वैयाजिकचर्याचणा
वैयाकरणेन्द्र! भवच्चेष्टाऽऽवारपारीणा ॥ ९ ॥

वैयाकरणानां बोध्यत्वादिह वैयाकरणवेद्यप्रयोगपाटवं परिदर्श्यते—प्रारम्भत एव, कर्णेनिहत्य पूर्णाभिलाषं यथा स्यात्तथा, भवान् व्याकृतौ (शब्दशास्त्रे) अधीती अध्ययनशीलः। भवता एतावदवधि उदरं पूरयित्वा व्याकरणमधीतमित्याशयः । 'कर्णेमनसी श्रद्धाप्रतीघाते' । 'क्तस्येन्विषयस्येति कर्मणि सप्तमी। भवता सर्वकर्मीणा, सर्वकर्माणि व्याप्नोति ईदृशी, स्वस्यावस्था अध्यर्द्धं व्यतीतीकृता। अवस्थार्द्धं व्यतीतं कृतमित्यर्थः। व्यतीतीकृतेति च्विप्रत्ययेन 'न व्यतियती अपि अवस्था भवता बलाद् व्यतिगमिता' इति स्ववयःक्रमोपरि अत्याचरणं ध्वन्यते। शब्दशास्त्रस्य सूत्राणां तद्वृत्तीनां च घोषणेषु रटनेषु सांराविणं अभिव्यापकं शब्दं अतिकोलाहलमित्यर्थः। आरचय्य कृत्वा, पुस्तकस्था विद्या सम्यक् यथातथा, सर्वपत्राणि व्याप्नोति एवंविधा कृता । सूत्रवृत्तिघोषणपुरस्सरं पुस्तकस्य सर्वाणि पत्राणि व्याप्नोत्येवंविधा पुस्तकस्था एव विद्या उपार्जिता न तु तत्तत्त्वमासादितमित्याशयः। सांराविणमित्यत्र संपूर्वकाद्रौतेरभिविधौ भावे इनुण् । ततश्चाण् स्वार्थे। सांराविणमित्यस्य च महासंराव एवार्थः। 'हाका' इति जयपुरभाषायाम्। यथानर्घराघवे—"संतेने दशभिर्निजैरपि मुखैः सांराविणं रावणः।" सर्वकर्मीणा, सर्वपत्रीणा उभयत्रापि 'तत्सर्वादेः पथ्यङ्गकर्मेत्यादिना खः। अथ

तु मञ्जुनाथस्य अन्वक्षं समक्षं इह त्वं न सम्यचिचः, न सम्यञ्चं विषयमाख्यातवान्। मञ्जुनाथसंमुखे सम्यक् न आख्यातुं अशकः इत्यर्थः। सम्यञ्चमाचष्टे समीचयति (नामधातुः) तस्माल्लुङ्, सम्यचिचत् समिअचिचत् इति। तस्य मध्यमपुरुषैकवचनम्। ततश्च अभ्यमित्रीणा, अमित्राभिमुखं (प्रतिवादिसंमुखम्) सम्यग् गच्छति तादृशी ते प्रौढवचनशक्तिरपि नास्ति। प्रतिवादिनः संमुखे त्वं सम्यग् वक्तुं न शक्नोषीत्यर्थः। अभ्यमित्रीणेत्यत्र 'अभ्यमित्राच्छ चेति चात्खः'। बहुलम् उपाजेकृत्य (दुर्बलस्यापि बलाधानपूर्वकम्) वैयाजिकचर्यायुक्तापि भवतश्चेष्टा अवारपारगामिनी, विचित्राऽस्ति। एवं व्याजाचरणेन, आत्मनः कृत्रिमोपायैः प्रबलीकरणेनापि ते चेष्टा न लोकेषु सफलाऽभवत्, प्रत्युत सा उपहास्यैवाभवदित्यर्थः। "उपाजेऽन्वाजे" 'अवारपाराऽत्यन्तानुकाममि'त्यादि वैयाकरणैः स्मरणीयम् ॥ ९ ॥

चित्रमहंयोगे भवेदुत्तमः पुरुष एष
प्राप्ते बहुव्रीहौ स्त्रियाः पुंवद्भावनैषा ते
लौकिकमलौकिकं ते विग्रहं विलोके द्विधा
वचनं त्रिधा ते हन्त वृत्तिः पञ्चभेदा ते।
वैयाकरणेन्द्र! धातुसम्बन्धे हि प्रत्ययास्ते
भूते तव निष्ठा, जातिराकृतितो गृह्या ते
संबोधने प्रथमाऽथ, कर्मणि द्वितीया, ततः
करणे तृतीया चेति पद्धतिर्नवीना ते ॥ १० ॥

'अहम्' इति अहंकारयोगे एष जनः उत्तमः श्रेष्ठो न भवेत्, अहमहमिति सर्वत्राभिमानी पुरुषः उत्तमो न परिगण्यत इत्याशयः। परंतु वैयाकरणानां नये अहम्शब्दस्य योगे उत्तमः पुरुषो भवेदिति चित्रम्। गृहे, बहुव्रीहौ बहुधान्ये प्राप्ते, ते तव स्त्रियाः एषा पुरुषवत्स्वातन्त्र्यभावना विचारः। स्वल्पेनापि लाभेन, त्वमेव किं, तव स्त्रीपर्यन्ता अपि गर्वायन्त इत्याशयः। वास्तवे तु बहुव्रीहिसमासे स्त्रीलिङ्गशब्दस्य "स्त्रियाः पुंवद्भाषितपुंस्कादि-

स्यादिसूत्रैः पुंल्लिङ्गवद्रूपसंपत्तिर्भवति । तव विग्रहम् शरीरम् लौकिकमलौकिकमिति मनुष्यसीमातिगं द्विधा पश्यामि । समासादिवृत्त्यर्थावबोधकं वाक्यं विग्रहो द्विधा । सर्वेषां सज्जनानां वचनम् 'रामो द्विर्नाभिभाषते' इति नयेन एकमेव । पर वैयाकरणानाम् एकवचनद्विवचनबहुवचनमिति त्रिधा । वृत्तिराचरणं जीविका वा सताम्, एकविधा । परम् वैयाकरणानाम् कृत्तद्धितसमासाद्याः पञ्च वृत्तयः । हे वैयाकरणेन्द्र! तव धातुसम्बन्धे (स्वर्णरूप्यादिधातुमुद्रासंयोगे सति) प्रत्यया विश्वासाः । रूप्यकाण्यालोक्यैव "चांदी देखै चेतना, मुख देखै व्यवहार" इति भाषाप्रसिद्धिवत् तव विश्वास उत्पद्यते, नान्यथेत्याशयः । वास्तवे तु 'धातुसम्बन्धे प्रत्ययाः (लकारार्थप्रक्रिया)' । भूने प्राचीनघटनासु, प्रेते वा तव श्रद्धा । [निष्ठा (क्तक्तवतू), भूतकाले] । आकृतितः आकारमालोक्यैव ते उत्तममध्यमादिजातिर्वेद्या । तव मूर्तिं दृष्ट्वैव त्वं कीदृश इति अस्माभिर्बुध्यते इति परिहासाशयः । [आकृतिग्रहणा जातिः] । कस्यचित्पुरुषस्य संबोधने उपदेशे एका, कार्यविषये (कार्यमेवंविधं स्यादिति तन्निर्वचने) द्वितीया पद्धतिः, स्वयं तत्कार्यस्य करणे तु तृतीया रीतिर्भवतीति, हे वैयाकरणेन्द्र तव रीतिरन्यसज्जनेभ्यो नवीनैव ! ॥ १० ॥

### प्रसङ्गतोऽन्योपि विनोदः

प्रिय ! परदेशमुपयासि तर्हि का वा मया
पाणिनीयपण्डिताय पद्धतिरुदीर्या स्यात् ?
किन्तु विरहे ते हन्त गेहे कः प्रमोदो भवेत् ?
मदोऽनुपसर्गे सूक्तिरेषा मननीया स्यात् ।
मञ्जुनाथ ! नातिवाहनीयो मधुकालोऽधुना
यात्रा दूरमध्वनापि चाल्पं कल्पनीया स्यात्
प्रायः पाणिनीयागमरीत्या मानवीया दशा
कालाध्वनोरत्यन्तकसंयोगे द्वितीया स्यात् ॥ ११ ॥

कश्चिद्वैयाकरणः परदेशं गच्छति। पण्डिता तत्स्त्री तमाह—"हे प्रिय! यदि परदेशं गच्छसि, तर्हि पाणिनीयशास्त्रपण्डिताय ते (अतिविज्ञाय इत्यर्थः) मया स्त्रिया नाम का पद्धतिः (परदेशगमनस्य रीतिः) कथनीया स्यात्? 'का वा मया' इत्यत्र, वामया (वामस्वभावया स्त्रिया) इत्यप्यर्थः। तथा च भवादृशं विज्ञतमं मादृशी वामा किमुपदिशेदित्यर्थः। किन्तु ते वियोगे गृहे कीदृश आनन्दो भवेत्? यतो हि अनुपसर्गे (उपसर्गस्य दुःखादिप्रतिबन्धस्य अभावे) मदो हर्षो भवेदिति सूक्तिः 'मदोऽनुपसर्गे' इति 'गेहे कः' इति पाणिनीयसूत्ररूपा भवतैव मननीया, अहं किं स्मारयेयमिति भाव। किन्तु हे स्वामिन्! वसन्तकालो न विदेशेऽतिवाहनीयः। मार्गे दूरं यात्रापि न्यूनं करणीया, एकस्मिन्नेव दिने अतिदूरं मार्गो नोल्लंघनीय इत्याशयः। कुत इत्याह—"भवदधीतपाणिनीयशास्त्रस्य रीत्या, कालस्य अध्वनो(मार्गस्य)च अत्यन्तसंयोगे (अधिककालयापने दूरमार्गगमने च), मानवीया दशा द्वितीयैव स्यात्, (प्रकृतदशातो द्वितीया अस्वस्थदशा भवेत्)। अतएव नाधिकदूरं यात्रा कर्तव्या, शीघ्रं चागन्तव्यमिति प्रणयपरवशा प्रियतमं प्रार्थयते। 'कालाध्वनोरत्यन्तसंयोगे द्वितीया।' इति पाणिनीयसूत्रं तु प्रसिद्धमेव। चतुर्थे–नीया. वीया. तीया. प्रासः॥ ११॥

## ज्यौतिषिकाः

कल्पयन् ककारादेव कन्यां वा कुमारं वापि
गर्भगतस्यैव भावि भणसि मिलत्फलम्
पत्रीमवलोक्य, द्वयोर्मैत्रीमवगम्य, मिथः
स्त्रीपुंसौ प्रयोज्य सखे मानयसि मङ्गलम्।
आचंभोराजीत्यादि गणयन् स्वकरस्थां दशां
संकटं प्रदर्श्य धनमाहरसि पुष्कलं
विविधप्रकारैर्धनलाभलग्नकेन्द्रगतं
गणकवरेन्द्र! ते ग्रहाणां फलमुज्ज्वलम्॥ १२॥

गर्भे, 'कन्या भवेदथवा पुत्रः' इति पृष्टे सति, ककारं लिखित्वा ददासि, यदि कन्या जाता तदापि ककारमात्रेण सिद्धिर्यदि तु कुमारस्तर्ह्यपि भाषायां प्रसिद्धः ( कँवरः ) संगृह्यत एव । अत एव मनुष्यस्य जन्मतः पूर्वमेव, गर्भगतस्यैव त्वं भावि ( भविष्यत् ) मिलत् संवादि फलं भणसि । मनुजः पश्चादुत्पद्यते, भवांस्तु स्वस्य लाभलग्नकेन्द्रगतं फलम् ! ( लाभम् ) पूर्वत एवारभते । पत्रीम् ( जन्मपत्रीम्, प्रेमपत्रिकां च ) द्वयोः स्त्रीपुंसयोर्मैत्रीम् (मेलापकं? परस्परप्रणयं च) अवगम्य, द्वावपि मिथः संयोज्य, मङ्गलं मानयसि ( 'मौज मनातेहो' भावः ! ) । आचंभोराजीत्यादि ( आदित्यचन्द्रेत्यादिः ज्यौतिषिकाणां गणनासंकेतः) स्वकरस्थिताम् स्वाङ्गुलिषु (अर्थात् यथा स्वकराधीनैव भवेत्तथा ) दशां गणयन् सन् । अग्रे घोरमरिष्टमिति भीषयित्वा । विविधप्रकारैः ( सत्पुरुषैरभिनन्दितैः !! ) । ते ग्रहाणां फलमुज्ज्वलम् उत्तमम् !! । यस्य त्वं पत्रिकां पश्यसि, तस्य ग्रहा उत्तमा भवन्तु मा वा । परं ते ग्रहाणां फलं प्रत्यक्षमुत्तममित्याशयः ॥ १२ ॥

## वैद्याः

वैद्यगणकानां किं विशेषशास्त्रभारेणे' ति
शीघ्रमेव साधारणज्ञानमिहोन्मील्यताम्
रेचनेन सर्वमनस्तोषकरप्रायमिद–
मौषधं प्रदाय सर्ववाञ्छा विनिमील्यताम् ।
त्वरितं प्रसिद्धैर्धनिलोकाद्धनमाहरद्भि–
रेकद्वो विरुद्धोऽमूल्यमौषधैः प्रकील्यतां
सर्वतः सदैव सुविधेयधनाऽऽदित्सासखी
वीतविचिकित्साऽसौ चिकित्सा परिशील्यताम् १३

'वैद्यानां ज्यौतिषिकाणां च विशेषेण शास्त्रभारेण किम्' अधिकशास्त्राध्यवसायस्तेषां प्रकृतविषयमाच्छादयतीति प्रसिद्ध्यनुसारं साधारणसंस्कृतादि-

ज्ञानमात्रम् इह उन्मील्यतां प्रकाश्यताम् (सम्पाद्यतामिति यावत्)। रेचनगुणात् सर्वेषां मनसः शीघ्रमेव प्रायस्तोषकरं औषधं दत्वा, सर्वेषां वाञ्छा (आवश्यकता) अपनीयताम्। किञ्चिदीदृशमौषधम् एकद्विप्रकारकमाविष्कर्तव्यं यत्र रेचनगुणात् सर्वविधरोगिभिस्तत्कालं स्वास्थ्यं प्रतीयेत, एवं युक्त्या सर्वेषां लोकानामावश्यकता पूरणीयेति भावः। ततश्च एवंविधाभिर्युक्तिभिस्त्वरितं प्रसिद्धैः, धनमुपार्जयद्भिरस्माभिः, एको वा द्वौ वा विरुद्धो दुर्दुरूढो जनः, विना मूल्यमौषधैः प्रकील्यतां वशीक्रियताम्। सर्वतः समन्तात्, सुखेन विधातुं शक्या या धनादित्सा (धनाऽऽदानेच्छा) तत्सहचरी, पर्यन्ततो धनलाभसहकृतेति भावः। अत एव वीतविचिकित्सा, द्रव्योपार्जनविषये गतसन्देहा, असौ चिकित्सा (वैद्यव्यवसायः) परिशील्यताम् सेव्यताम्। अस्माभिर्वैद्यैर्भाव्यमित्यर्थः। एको वा द्वौ वा इति बहुव्रीहिसमासे एकत्वं लोकात्। यदि तु सर्वथा दुर्दुरूढता तर्हि 'एकको विरुद्धः' इति पाठ्यम्॥ १३॥

## मन्त्रानुष्ठानसिद्धाः

सायं प्रातराह्निकं विधीयतेऽतिसंभारेण
पर्वसमारम्भाद् व्रतचर्योदेति संयतम्
सिद्धजनवेषेणैव पारिषदवर्गे स्थिति-
र्न्यस्यते निसर्गेणैव वाक्यं द्व्यर्थसंमतम्।
मञ्जुनाथ नित्यं बहिः सिद्धजनचर्या सेय-
मन्तर्या परिस्थितिस्तयोच्येताद्य संगतं
मानसे कुतर्ककुविचारैः परिभूयामहे
स्तूयामहेऽथापि महासिद्धा इति सन्ततम्॥ १४॥

आह्निकं दैनिककृत्यम्। अतिसंभारेण अत्याडम्बरेण। कस्यचित् पर्वणः प्रसिद्धस्य नवरात्रादेः (आरंभात्), संयतं यथा स्यात्तथा व्रतचर्या उदेति।

पर्योपरि संयमपूर्वकं व्रतानि चर्यन्त इति भावः। स्वस्य शिष्य—अनुगतादिसंसत्सेवकवर्गं, स्फटिकरुद्राक्षादिमाल्यम्—पञ्चकेशवृद्धिः, अस्यूतप्रायं वस्त्रमित्यादिसिद्धजनवेषेण स्थितिरुपवेशनम्। स्वभावतः (तथैवाभ्यासात्) व्यर्थसंमतं अर्थद्वययुक्तं वाक्यं प्रयुज्यते, [येन द्वितीयं प्रति शापानुग्रहादिकमपि सिध्येत्, स्वयं च सत्यावश्यके वाग्बद्धो न भवेत्।] एवं किल, बहिः (प्रकाशम्), सेयं सिद्धजनचर्या, किन्तु अन्तः (हृदये) या परिस्थितिः (घोरकौटिल्यदशा) तया (तत्परिस्थितिकारणात्, हेतौ तृतीया) संगतं उच्येत, समुचितमिदं वक्तुं शक्येतेत्यर्थः। किं वक्तुं शक्येत, तदाह—"मनसि कुविचारैः आक्रम्यामहे (अस्माकं मनसि कुतर्ककुविचारा अस्मान् परिभवन्ति), परं वहिः समन्तात् (सिद्धाः) इति जनद्वारा स्तूयामहे स्तुता भवामः।" चतुर्ष्वपि चरणेषु—क्रमात्-संभा-रंभा-, वर्ग-सर्ग-, चर्या-स्तर्या, यामहे इत्यादयः प्रासाः॥ १४॥

## धर्मशास्त्रिणः

वृत्तयेऽद्य लोकव्यवहारपराधीनान् सदा
साधारणदीनान्वीक्ष्य बहुशो विनिन्दामः
सामान्यतया मान्यवर्णचर्यामपि त्यक्तवतः
किन्तु धनिवर्यान् श्लाघमाना ननु नन्दामः।
मञ्जुनाथ मध्येसभमुच्चैः स्मृतिव्याख्याशतं
प्रख्यापितवन्तो धर्मदार्ढ्यमभिनन्दामः
मर्मपरिशोधे कर्मशास्त्रबहिर्भूता वयं
धर्मशास्त्रशैल्या कथं श्रद्धामधिविन्दामः?॥ १५॥

वृत्तये आजीवनाय, लोकव्यवहारस्य अधीनान् साधारणदीनान् दृष्ट्वा 'अयं ब्राह्मणानर्हया जीविकया जीवति,' 'अयं स्वस्य धर्मानुष्ठानचिह्नैर्नाङ्कितो भवति' इत्यादि दीनान्वयं निन्दामः। सामान्यतया माननीया या वर्णचर्या,

ब्राह्मणक्षत्रियादीनामाचरणम्, तदपि त्यक्तवतो धनिकान् वयं प्रशंसन्तः प्रसन्ना भवामः। ये सामन्ताद्याष्ठकुराः, क्षत्रियाः सन्तोपि प्रत्यक्षयवनैः प्राचितान्यन्नानि भुञ्जते, चर्मभस्त्रिकाजलं यवनैरानीतं पिबन्ति, अस्ति किमयं क्षत्रियवर्णव्यवहारः शास्त्रे? परं तेषां वयं धनिकत्वात्प्रशंसां कुर्मः। केनचिदपि धर्मशास्त्रिणाद्यावधि उक्तमस्ति, यत्र यूयं क्षत्रियाः?। एवं हि मध्येसभम्, सभाया मध्ये उच्चैः स्वरेण स्मृतिव्याख्यानां शतं प्रसेधयन्तो वयम्, धर्मस्य दार्ढ्यम् 'धर्म एव हतो हन्ति, न जातु कामादि' त्यादि धर्मदृढतां वयं पोषयामः। मर्मणः परिशोधे (अन्वेषणे) कर्मशास्त्रतो बहिर्भूताः, धर्म—ज्ञात्वा तदनुसारेण कर्मानुष्ठानरहिता वयमित्याशयः। धर्मशास्त्रशैल्या श्रद्धां कथं प्राप्नुमः? वयं धर्मशास्त्रिणः स्म इति लोककृतां श्रद्धां कथं प्राप्नुमः। मुखादुल्लपन्तोपि कर्मादर्शं लोकानां संमुखे अनुपस्थापयन्तो धर्मशास्त्रद्वारा लोकेषु श्रद्धां केन प्रकारेण प्राप्नुम इत्याशयः। सर्वचरणेषु—विशेषतश्च मर्म—कर्म—धर्मेति चतुर्थे प्रासाः॥ १५॥

## वेदान्तिनः

सर्वदा विशुद्ध—मुक्तबन्धो ब्रह्मरूप एव
जीव,स्त्वत्र बन्धो! मुधा संशयोऽवलम्ब्यते
रज्जुषु भुजङ्ग इव सर्वोयं प्रपञ्चो मृषे—
त्यादिवाक्प्रपञ्चो मुखमात्रे समालम्ब्यते।
विषयकषायैरवकीर्णश्चित्तवृत्तिर्भृशं
भ्रमति समन्तादहो दम्भान्नोपरम्यते
भ्रान्तिमुपयान्तीं मतिमाप्य मुधा भ्रान्तीभवन्
भूरि भुवनेऽस्मिन् वृद्धवेदान्ती विडम्ब्यते॥ १६॥

'सर्वदा विशुद्धः मुक्तबन्धश्च जीवो ब्रह्मरूप एव, हेबन्धो! अस्मिन्विषये मुधा संशयोऽवलम्ब्यते।' मुखमात्रे गृह्यते, नतु हृदये दृढीक्रियत इत्याशयः।

सांसारिकविषयवासनाभिर्भृशम्, अवकीर्णा इतस्ततो व्याक्षिप्ता चित्तवृत्तिर्यस्य सोऽयं समन्ताद् भ्राम्यति। अनेन दम्भाद् आडम्बरादुपरामो न क्रियते। अत एव–भ्रान्तिं गच्छन्तीम् [भ्रान्तामित्याशयः] बुद्धिं आ–आप्य, मुधा श्रान्तो भवन् (च्विः) केवलमवस्थया वृद्धो वेदान्ती, अस्मिन्भुवने भूरि विडम्ब्यते ॥ १६ ॥

## तार्किकाः

शब्दशास्त्रशेवधिखिडकिकामवीक्ष्य मनाङ्
　नव्यतर्कफक्किकासु झम्पाः प्रतिदीयन्ते
बाह्यज्ञानसम्पादकसामयिकचर्चा नास्ति
　व्युत्पादककाव्यकथाः कर्णे नोपनीयन्ते।
अश्रुतान्यवाक्यं घोरनिर्घोषाः क्रियन्तेतमां
　मञ्जुनाथ सत्यं वच्मि, चेन्मे क्षमा दीयन्ते
विषमविवादोदर्कदक्षास्तर्कमात्रपराः
　केवलमलर्कसमाः साम्प्रतं प्रतीयन्ते ॥ १७ ॥

व्याकरणशास्त्ररूपस्य शेवधेः निधेः, खिडकिकां लघुद्वारम् अदृष्ट्वा। यस्य गृहे निधिर्भवति स गुप्तीकरणाय तस्य द्वारं लघु निर्माति ['खिडकी'ति भाषाप्रसिद्धम्।] केवलतार्किकैश्च तस्य निधेः खिडकिकां मनागपि अदृष्ट्वा, व्याकरणशास्त्रमपठित्वैवेत्यर्थः। नव्यन्यायस्य फक्किकासु (लम्बग्रन्थेषु) झम्पाः ('झांप' इति जयपुरभाषाप्रसिद्धम्) दीयन्ते, नव्यन्याये सहसा कूर्दनं क्रियत इत्याशयः। बाह्यज्ञानसम्पादिका सामयिकी चर्चा—'एषु दिनेषु राजतन्त्रे का नीतिः, प्रजासु किमान्दोलनम्,' इत्यादि विचारो नास्तीत्यर्थः। व्युत्पत्तिकारकाणां काव्यानां कथाः कर्णे न क्रियन्ते। न श्रुतम् अन्यजनस्य वाक्यम् यस्मिन् कर्मणि यथा तथा, घोराः कोलाहलाः (शास्त्रविचारव्याजेन) अतिशयेन क्रियन्ते। क्षमाः, (प्रकारबहुत्वाद्बहुवचनम्)! भयङ्करविवाद

एव उदर्कः (उत्तरं फलं, परिणामः) येषां ते, तादृशाश्च हताश्चेति कर्मधारयः। केवलतर्के निविष्टाः, साम्प्रतम् (वादावश्यकताशून्ये समये) अलर्कसदृशाः विषोन्मादिसारमेयोपमाः (इडवया) ज्ञायन्ते। चतुर्थे दर्के—तर्केऽर्काः, प्रासाः॥ १७॥

## —॥ वैदिकाः ॥—

संहिताः समग्राः सहब्राह्मणाः सुघोषन्तोपि
तत्त्वपरिज्ञाने मौनवन्तोऽमी निबोध्यन्ताम्
एकैकपदस्य पुनरावृत्तिप्रकाशपराः
पद-क्रम-जटा-घन-विस्तराः प्रयोज्यन्ताम्।
कर्मकाण्डमात्रेणैव कष्टान्निर्वहन्तोऽधुना
वेदानावदन्तो यत्र कुत्रचिन्निरोध्यन्तां
प्रचुरपरिश्रमात्प्रकामं पूजनीया इमे
मौग्ध्याद्दयनीया वीरवैदिका विलोक्यन्ताम् ॥१८॥

तासां वेदऋचां तत्त्वस्य गूढरहस्यस्य, परिज्ञाने तूष्णीकाः, निबोध्यन्तां ज्ञायन्ताम्। प्रयोज्यन्ताम् तद्द्वारा पदक्रमादीनां प्रयोगः कार्यताम्, श्रूयन्तामित्याशयः। यत्र कुत्रचित् म्लेच्छादिवेदोपहासकबहुलेपि स्थाने वेदान् श्रावयन्तः अमी निवार्यन्ताम्, येन हि वेदानामनादरो न प्रसज्येत। वीराः वैदिकाः॥ १८॥

## —॥ साम्प्रदायिकाः ॥—

अशुचिर्भवसि भृशमन्यदृष्टिमायातोऽपि
छायातोप्यशुद्धिमभिशङ्कसेऽतिचञ्चलम्
गोमुखीनिविष्टकरो धत्से मञ्जुमालां गले
वहसि विशालान्यथ तिलकान्यनर्गलम्।

एतान् दमयामि, दलयाम्यमून्, भिनद्मि च तान्,
एष नरकाग्निर्हन्त हृदये ज्वलत्यलं
रीतौ सावधान सम्प्रदायिक सुविज्ञ सखे !
धर्मतत्त्वनीतौ किञ्चिदञ्चय दृगञ्चलम् ॥ १९ ॥

साम्प्रदायिकेतरस्य दृष्टिं गतोपि अपवित्रो भवसि, अत एव भोजनादिषु प्रच्छन्नस्तिष्ठसि । किं बहुना, स्वस्य अन्यजनस्य च छायातोपि, अपवित्रताम् अतिचञ्चलं यथा तथा शङ्कसे । गोमुख्यां जपमालाप्रावरणे निविष्टहस्तः, सदा जपाभिनयं कुर्वन्नित्यर्थः । गले मञ्जुमालाम्, सुवर्णादिषु प्रोताम् (कंठीम्) धत्से धारयसि । एतान् जनान् दमयामि, अमून् (स्वहृदये मनीषितान्) दलयामि उन्मूलयामि, तान् (परोक्षस्थितान्) भिनद्मि उपजापद्वारा परस्परभेदमुत्पादयामि । रीतौ सम्प्रदायमर्यादायाम् । धर्मतत्त्वस्य नीतौ आचरणे, किञ्चिद् दृक्प्रान्तम् अञ्चय पातय । रीतिनिर्वाहे तु अतिसावधानोसि परं किञ्चित् संप्रदायसाधनीयस्य धर्मरहस्यस्योपर्यपि दृष्टिं पातयेत्याशयः । चतुर्थे रीतौ नीतौ आद्याः प्रासाः ॥ १९ ॥

## नवसभ्याः ( जेण्टिलमैनाः )

साम्यवादसिद्धान्तं नदन्तः सभामञ्चे भूरि
लौकिकप्रपञ्चे दीनदमना महीतले
भारतीयकाव्ये क्रूरदृष्टयः शृङ्गाररसा—
न्नग्नाङ्गानि वीक्षन्तेऽथ नृत्यद्रमणीकुले ।
गगनं भरन्तो मुखवर्तिधूमधोरणीभि—
श्चटुलं चलन्तो बूटस्बूटैरवनीतले
विमलविचारैर्भुवमन्यायादवन्तः सदा
सभ्यतमंमन्या अमी धन्या धरणीतले ॥ २० ॥

सभायां साम्यवादस्य सिद्धान्तं घोषयन्तः, सर्वेपि जना ईश्वरसृष्टौ समानाः सन्ति, अत एव समानोऽधिकारः सर्वेषामिति । लौकिके कार्यप्रपञ्चे तु पृथिव्यां दीनलोकानां दमनाः । शृङ्गाररसात् ( हेतौ पञ्चमी ) शृङ्गाररसस्तत्र नवसभ्यतातो विरुद्धोऽस्तीति भारतीयप्राचीनकाव्ये क्रूरदृष्टय', किन्तु नृत्यन्तीनां रमणीनां युरोपीयस्त्रीणां गणे ( मैडमनाच ) नृत्यहावभावभङ्ग्यां नग्नानि गोप्याङ्गानि वीक्षन्ते, न तदा तेषां सभ्यतास्मरणं भवति । मुखवर्तिनीभिः 'सिगार' 'सिगरेट' धूमपरम्पराभिर्गगनं व्याप्नुवन्तः । 'बूट' ( नव्योपानत् ), 'सूट' कोटपैण्टादिपरिधानीयकदम्बम्, एतदादिभिः, अर्थात् एतानि धारयित्वा गर्वेण चटुलं ( गर्वोत्फुल्लचञ्चलम् ) चलन्तः । पूर्वेषां भारतीयानां विचाराः धर्मसंप्रदायादिपक्षपातेन निर्मलाः नासन् । अत एव एते विमलैर्विचारैः भुवम् अन्यायात्सदा अवन्तः, सभ्यतमंमन्याः धरणीतले धन्याः सन्ति ! चतुर्थे मन्याः मन्याः धन्याः प्राप्ताः ॥ २० ॥

पश्चिमदिगाविर्भूतभूरिज्ञानभानुभवै—
 र्नूतनविचारप्रभाविभवैः शुभावहे
अद्यतने सत्यपि पुरातनेतिवृत्तवदे
 सभ्यतासमाजे दृढदीक्षान् सेवितास्महे ।
करधृतवेत्रानपि वेत्रासनासीनान् सदा
 नेत्रयुगनिष्ठितोपनेत्रान् वन्दितास्महे
पत्राचितशौचानपि परमपवित्रानमू-
 नद्भुतचरित्रान्नवसभ्यान् समुपास्महे ॥ २१ ॥

सभ्यतासमाजे दृढदीक्षान् ( दृढाऽऽस्थान् ), नवसभ्यान् सेवितास्महे, प्रसादनाय तान् सेविष्यामहे इत्यर्थः । कीदृशे सभ्यतासमाजे तदाह— पश्चिमदिशि ( युरोपादिदेशेषु ) आविर्भूतो यो भूरिज्ञानरूपो भानुः ( सूर्यः ) तद्भवैः, नवीनविचाररूपाः ये प्रभाविभवाः तैः शुभावहे । लोके सूर्यः

पूर्वस्यां दिशि उदेति, अद्भुतचरित्रत्वादेषां भानुः पश्चिमदिशि उदेति तादृग्ज्ञानभानुप्रभावैभवेन शुभकारिणि ( सभ्यतासमाजे )। पुनः कथं-भूते सभ्यतासमाजे—अद्यतने अद्योत्पन्ने सत्यपि पुरातनमितिवृत्तं वदति तादृशे, 'पूर्वं नासीत्सभ्यता जनसमाजे, क्रमक्रमेण बुद्धिविकासो जातः, आसन् पूर्वं वानरास्ततः क्रमेण अङ्गसंस्थानसंघटनेन मनुष्याः परिणता इत्यादिविकासवादं घोषयमाणे सभ्यतासमाजे दृढदीक्षान् । करे धृतं वेत्रम् ( वेत्रयष्टिः ) यैस्तान्, तथापि वेत्रासने ( कुरसी ) आसीनान्, वेत्रं यदा करे धृतं तदा वेत्ररूपे आसने कथमुपवेशनं स्यादिति विरोधः। वेत्रनिर्मिते आसने इति तत्परिहारः। अथवा वेत्तुर्ज्ञातुरासने आसीनान् ( भाष्यमतेऽनिट्को विन्दधातुस्तस्यानेकार्थः प्रयोगः )। नेत्रेत्यादिः स्पष्टः। उपनेत्रम् ( चश्मा )। पत्रेण ( कागज ) आचितं कृतं शौचं ( अधोमल-शुद्धिः ) यैस्तान् । नवीनसभ्या जलस्पर्शमकृत्वा कोमलपत्रेण पुरीषं प्रोञ्छ-न्तीति नव्यसंप्रदायः। एवं सत्यपि परमपवित्रान्, पूर्ववृत्तान्तैः अद्भुतचरि-त्रान्नवसभ्यान् उपास्महे, षोडशोपचारैः पूजयामहे। तृतीयचतुर्थयोः, वेत्रा; नेत्रादि, पत्रा-चित्रा-रित्राद्याः प्रासाः ॥ २१ ॥

अर्द्धश्मश्रु धारयन्तो नासासंनिवेशतले
पौरुषभग्नावशेषमिव महिमावहे
नैवेद्यं जुषन्तो हन्त द्वाभ्यां स्वकराभ्यां सदा
धूममुद्गिरन्तो भान्ति वदने मदावहे ।
ये दण्डायमाना एव मूत्रमुत्सृजन्तोऽप्यलं
द्वाभ्यामश्वतुल्याभ्यां पदाभ्यां यान्ति, ब्रूमहे
चकितं चतुर्दिक् चारुचित्रचमत्कारानिमा—
नद्भुतावतारान् नवसभ्यान् समुपास्महे ॥ २२ ॥

महिमावहे गर्वोत्फुल्लत्वान्महत्त्वयुक्ते, नासासंनिवेशतले ( नासिकाया अधोभागे ) पौरुषस्य भग्नावशेषम् इव अर्द्धश्मश्रु धारयन्तः ( भान्ति )।

'श्मश्रु पुंमुखे' इति परिभाषितत्वात् श्मश्रु पौरुषस्य चिह्नम्। नवीन 'फैशने' नासिकाया अधोभागे अर्द्धमात्रं श्मश्रु धार्यते, अत एव पूर्वपौरुषस्य सांप्रतं भग्नावशेष इव स्थित इत्याशयः। द्वाभ्यां हस्ताभ्यां नैवेद्यं भोज्यं जुषन्तः स्वीकुर्वन्तः। नैवेद्यपदेन देवत्वं ध्वन्यते। अन्ये देवतावताराश्चतुर्भुजाः सन्तोपि एकेनैव करेण नैवेद्यं भुञ्जते। अद्भुतावतारा इमे 'छुरी कांटा' इत्यादिधारणात् द्वाभ्यां कराभ्यां नैवेद्यं जुषन्तीत्याशयः। मदावहे नवीनासवसेवनान्मदधारिणि वदने, 'सिगार' धूमम् उद्गिरन्तः भान्ति। दण्डायमानाः दण्डवत् उच्चैः स्थिता एव मूत्रयन्तोपि द्वाभ्यामश्वतुल्याभ्याम् (बूटाग्रं अश्वखुराकारं भवतीति) पदाभ्यां यान्ति। ये तिष्ठन्मूत्रत्वधर्मयुक्तास्ते चतुर्भिश्चरणैश्चलन्ति, इमे तिष्ठन्मूत्रा अपि द्वाभ्याम् अश्वखुराकाराभ्यां पदाभ्यां चलन्तीति अपि पदस्याशयः। अत एव ब्रूमहे—"चकितं यथास्यात्तथा चतुर्दिक्षु चारुः चित्रश्च चमत्कारो येषां तान्, अद्भुतावतारान् इमान् नवसभ्यानुपास्महे।" प्रथमे-वेश-शेष, एवं सर्वत्र विशिष्टाः प्रासाः ॥२२॥

—ॐ अधिकारिणः ॐ—

स्वल्पसमयार्थं निजकार्यस्थले गत्वाऽप्यत्र
स्वामिमङ्गलार्थं नैव कार्यं परितन्यते
न्यायं याचमाना नाभिवीक्ष्यन्ते दृशाऽपि जनाः
किं बहुना, मान्यजनोऽप्यलमवमन्यते।
मञ्जुनाथ सर्वतः समाहरणान्नानाविध—
दारधनधामभरैर्धन्यं जन्म जन्यते
याऽसौ पदवृद्धिरभूत्सा किं सर्वदैव भवेत् ?
हा किं मम लोकैरिति 'हाकिम्' बहु मन्यते ॥२३॥

स्वल्पसमयाय निजकार्यस्थाने (अदालतादिषु) गत्वापि, अत्र स्वामिनो मङ्गलं भवेदेतदर्थं शुभं न्यायकार्यं न क्रियते। अस्माकं न्यायो भवेदिति

वृक्षतलादिषु प्रणमन्तो मार्गे स्थिताः प्रजाजनाः दृष्ट्यापि न वीक्ष्यन्ते, अन्यत् किम्, मान्यः पूज्यः गुर्वादिजनोपि तस्मिन् शासनमदे अलं तिरस्क्रियते। स्वयं शासनाधिकारीति, सर्वस्थानेभ्यो राशीकरणात्—नानाविधस्त्री-द्रव्य-गृहादिसमूहैः स्वकीयं जन्म धन्यं क्रियते। णिजन्ताज्जनधातोः कर्मणि लट्। नानाविधस्त्र्यादिभिर्जन्म धन्य क्रियते इति विपरीतलक्षणयाऽऽक्षेपः। या भाग्यवशादसौ पदवृद्धिरभूत्। हा! (आः धिक्) लोकैर्मम किं प्रयोजनम्? लोकाः किमपि वदन्तु नाम। 'हाकिम्' (शासनाधिकारी) ॥२३॥

कवीश्वराः

पञ्चदशमुद्रामात्रवेतनविहारिणोऽपि
कर्मचारिणोऽद्य स्थिता वेत्रासने सुन्दरे
स्तुत्युच्चारिणोपि राजकविनामधारिणोऽमी
पृच्छ्यन्ते न कैश्चित्स्थिताः कस्मिन्कोणकन्दरे।
तदपि महोच्चस्वरैर्देहलीनिविष्टा एव
कविताग्वीभिर्नृपपुङ्गवं ममन्दिरे
कीलितकपीश्वरा इवारादुत्प्लवन्ते भूरि
भूपतिकवीश्वरा वराका राजमन्दिरे ॥ २४ ॥

पञ्चदशरूप्यकमात्रवेतनेन विहरणशीलाः कर्मचारिणोपि अद्य (दरबारदिने) सुन्दरे वेत्रासने स्थिताः। पञ्चदशमुद्रावेतनमित्युपलक्षणम्। अतिन्यूनवेतना अवरपदप्रतिष्ठा अपि कर्मचारिणः स्थानं प्राप्नुवन्तीत्याशयः। इमे कवीश्वरास्तु राज्ञः स्तुतिमुच्चारयन्ति, अर्थाद्राज्ञो यशः परितः प्रसारयन्ति। किञ्च 'राजकवि'प्रतिष्ठामपि धारयन्ति, तदपि कस्मिन् कोणे कन्दरे (जनानां गह्वरे, अवकाशे) वा स्थिता इति कैश्चिदपि न पृच्छ्यन्ते। एवमवधीरणायामपि राजसभाभवने प्रवेशाभावात्, भवनस्य देहलीस्थिता एव। कवितावाणीभिः अत्युच्चस्वरैः (येन दूरादपि शृणुयादिति) नृपश्रेष्ठं

ममन्दिरे तुष्टुवुः 'मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु'। अत एव—कीले बद्धाः कपीश्वरा इव, दीनाः कवीश्वराः, राजमन्दिरे आरात् (दूरात्) उत्प्लवन्ते इतस्ततश्चापल्यं दर्शयन्ति। वानरा यथा शङ्कौ बद्धा अपि दूरादेव उत्प्लवन्ते, एवं स्वतिरस्कारज्ञानेपि जीविकालोभबद्धा इमे कवीश्वरनामधारिणो दूरादेव उच्छलन्ति। एवं स्वयशःपाठकेषु तिरस्कारं पश्यतो नृपपुङ्गवस्यापि कर्तव्यं स्मार्यते ॥ २४ ॥



# अन्योक्तिविनोदः

## भ्रमरः

मन्दीभवदुन्मदमुपैति सोयमिन्दीवरं
स्खलदवलोकमसौ कोकनदमीक्षते
आह्लादं समेति बत कं वा कलकह्लारके
परिमलपुण्डरीकमलसमुपेक्षते ।
मञ्जुनाथ कैरवे तु लालसास्य कैव भवे-
न्मधुपो मदे न मुदं कुमुदेऽप्यपेक्षते
एकमेकमुत्पलमुपैति योऽयमन्यमासे
सोयं मधुमासे पद्मशतमपि नेक्षते ॥ २५ ॥

सोयं मधुपो मन्दीभवन् उन्मदः ( हर्षः ) यस्मिन् कर्मणि यथा भवति तथा, निरानन्दं यथा स्यात्तथा नीलकमलमुपैति । स्खलन् अवलोको यस्मिन् तथा, मन्दया दृष्ट्येत्यर्थः । कोकनदं रक्तकमलम् । सुन्दरे कह्लारके सौगन्धिककमले । परिमलप्रधानं पुण्डरीकम्, अलसं यथा तथा उपेक्षते अवधीरयति । मदे वर्तमानो मधुपः कुमुदेपि मुदं नापेक्षते । तत्रापि नानन्दो भवतीत्यर्थः । कुमुदकैरवयोर्गन्धे भेदः ॥ २५ ॥

## कमलिनीविरही मधुपः

गुञ्जन्मञ्जु भजति निकुञ्जं नवमेव, लता-
वीथीपथमेष परिपृच्छति नवं नवम्
द्रुमदलमिच्छति नवं नवमुपैतुमसौ
कुसुमगुलच्छमयमृच्छति नवं नवम् ।

मञ्जुनाथ निर्भरमभावे तेऽलमम्भोजिनि !
  सुखसंभोगमहह ! गच्छति नवं नवम्
सोयं सहवासी नूनमासीदति मासे मधौ
  मधुपविलासी रसमिच्छति नवं नवम् ॥ २६ ॥

गुञ्जन् सन् नवमेव निकुञ्जं भजति । नवं नवं द्रुमसमूहं प्राप्तुमिच्छति । गुलच्छो गुच्छकः । ऋच्छति गच्छति । हे अम्भोजिनि ! ते निर्भरम् अभावे, अलं यथा स्यात्तथा नवंनवं सुखसंभोगं गच्छति । ते सहवासी मधुपविलासी, चैत्रे मासे आसीदति आसन्नं प्राप्नुवति सति । त्वयि यथास्य मनोविनोदोऽभवत्तथा नान्यत्र । अत एव मधुमासप्राप्त्या उद्दीपितवासनः सोयं, तत्र कदाचिन्मनः प्रसक्तिः स्यादिति दुराशया नवं नवं स्थानमन्विष्यति । त्वत्प्राप्तौ तु सर्वं विस्मरतीत्याशयः ॥ २६ ॥

सन्दधाति मधुरमधूके मन्दमेव मनो
  याति यूथिकानामपि वीथिकामिहालसम्
साभिलाषमालिङ्गति पाटलाममन्दमुखीं
  हन्त किन्तु धत्ते नो विलम्बसुखसाहसम् ।
मञ्जुनाथ हञ्जे मञ्जुकमलिनि ! संलोकय
  मालतीमुपैति सोयमुन्मीलितलालसं
जाने न हि मालतीमरन्दमधुपाने, किं वा
  केवलाभिमाने भाति मधुकरमानसम् ॥ २७ ॥

मन्दमेव यथा तथा मधूके मनः संदधाति योजयति । यूथिकावीथिम् अलसं यथा तथा याति, अनिच्छयेत्यर्थः । अमन्दमुखीं विकसितां पाटलां काचस्थालीं (लोकप्रसिद्धां 'गुलाबम्' वा) साभिलाषमालिङ्गति, परं तत्र विलम्बनसुखरूपं साहसं न धत्ते । तत्र न किञ्चिदपि विलम्बते त्वद्भयेने-

त्यर्थः । 'हञ्जे' इति माधुर्यार्थं नाटकीयं संबोधनम् । उन्मीलिता प्रकटिता लालसा यस्मिन् तथा, मालतीं सोयं गच्छति । तदहं न जाने यत् मालती-मकरन्दमधुनः पाने मधुकरस्य मानसमस्ति, उत त्वत्तो मानकलहे सति केवलमभिमान एव तन्मानसं भाति । त्वत्तोऽभिमानं कृत्वा केवलं त्वां दर्श-यितुमेव मालतीसमीपे गच्छति, उत स्वयं तस्य मालतीमधुपाने लालसे-त्यहं न जाने इत्याशयः ॥ २७ ॥

बकुलः

वायुलहरीभिस्तव गन्धो मदयेत मनः,
पुष्पाण्यपि बन्धो ! यान्ति सकलशिरःस्थले
पल्लवान्यपीह तव साधितसंपल्लवानि
प्रीयन्तेऽद्य पान्थास्तव च्छायाशिशिरस्थले ।
सर्वमिदं सत्यं किन्तु किं तेऽहं बकुल ! ब्रुवे
वर्द्धितोऽसि कस्मात्काष्ठविक्रयिपुरःस्थले
हास्यं ते न वच्मि, सत्यमन्ते नीरधारास्थले
दास्यन्ते कुठारधीरधारास्त्वदुरःस्थले ॥ २८ ॥

मनः (मानसम्) मदयेत, आनन्दविह्वलं ('मस्त') कुर्यात् प्रीणये-दिति भावः । तव पुष्पाण्यपि सकलशिरःसु आरोहन्ति । साधितः संपदः शोभायाः लक्ष्म्या वा लवः लेशो यैस्तानि, शोभनानि मङ्गलानि चेत्याशयः । तव छायया शिशिरे तले, प्रीयन्ते विश्रमेण प्रसीदन्ति । काष्ठविक्रयिणाम् ('लकडहारा') पुरोवर्तिनि स्थाने । इदानीं काष्ठस्य पूर्णोपचयाय सेच-नार्थां जलधारा दीयन्ते । छेदनावसरे तु नीरधारास्थाने, तव वक्षःस्थले कुठारस्य धीरा धाराः दास्यन्ते । कुठारधारासु धीरत्वं तु पट्टिका—('फड'—) निर्माणोपयोगि काष्ठं शीघ्रतया क्रकचचालनेन विरूपं भवेदिति । तथा चान्तस्तलगमनेन समधिकपीडाकरत्वं व्यज्यते । चतुर्थे—हास्यन्ते, दास्यन्ते, अन्ते, प्रासाः ॥ २८ ॥

## गुञ्जा

पल्लवाः प्रणीयन्तेऽलमिन्दीवरदृग्भिस्तव
तरुणपुलिन्दीगणैर्वक्षो मण्डयिष्यते
फलपरिणद्धया प्रयाति धरा काञ्चिद्रुचिं
फुल्लया त्वयैव वनमेतद्रञ्जयिष्यते ।
किं शोचसि खिन्नमना हंहो सखि गुञ्जे ! मना-
गवकरपुञ्जे यत्पुलिन्दैः पातयिष्यते
मा शोचीर्गुणज्ञगेहगतया त्वयैव साक-
मेकतुलयैव हन्त हेम तुलयिष्यते ॥ २९ ॥

प्रणीयन्ते प्रेम्णा नीयन्ते (कर्णाभरणरचनाय)। तव फलमालाभि शबरीभिर्वक्षः भूषयिष्यते। फलपूर्णया त्वया (करणे तृतीया) पृथिवी कामपि शोभां याति। फलिताभिर्गुञ्जाभिर्भूरि शोभते भूरिति भावः। फुल्लया विकसितया त्वया, एतद्वनं रक्तीकरिष्यते (उभयथा!)। हंहो गुञ्जे! खिन्नमनास्त्वं किं शोचसि, यत् वन्यतया गुणपरिचयशून्यैः पुलिन्दैः, अव-करराशौ (कूडा, करकट) पातयिष्यते (भावे प्रत्ययो, न कर्मणि)। गुण-ज्ञस्य कस्यचित्स्वर्णकारस्य गेहं गतया त्वयैव सह, एकतुलया (एकेन सादृ-श्येन, एकेन तुलायन्त्रेण च) सुवर्णं तुलयिष्यते (समीकरिष्यते, तोलयि-ष्यते च)। त्वं मा शोचीः। सर्वत्र प्रासाः प्रेक्ष्याः ॥ २९ ॥

## मल्लिका

यस्याः पुष्पमाला भूपशालास्वपि लब्धादरा
बालाभिर्यदीयपुष्पं केशेष्ववचूल्यते
यस्याः पुष्पसारतोपि रसिका रमन्तेतमां
भाति निष्कुटान्ते यदि दैवमनुकूल्यते ।

मञ्जुनाथ दैवादभिरूढा ग्रामसीमतले
साऽश्रूणीव पुष्पाण्यवकिरती वशूल्यते
छल्लीकाम्ययैव ग्राम्यपल्लीवासिलोकैरद्य
सेयं मञ्जुमल्ली हन्त हेलयाऽवमूल्यते ॥ ३० ॥

यस्या मल्लिकायाः ('वेला')। भूपशालासु राजहर्म्येषु। अवचूल्यते भूषणं क्रियते, अवचूलिका भूषणविशेषः। पुष्पसारः (सौगन्धिकम् 'इत्र' मोतिया) तस्मात्। यदि दैवं सुकर्मादिभिरनुकूलं क्रियते तदा निष्कुटे (गृहारामे) भाति। अभिरूढा, उत्पन्ना च विजृम्भिता च। सा मल्लिका अश्रूणि इव पुष्पाणि अवकिरती (मुञ्चन्ती), अवशूल्यते ग्राम्यजनद्वारा शूलैरवध्वस्यते। अवशूलयतेः कर्मणि लट्, ततो भागुरेः 'अव' उपसर्गाकारस्य लोपः। छल्ली वृक्षत्वक् ('छाल'), तस्या इच्छयैव, केवलं रज्जुनिर्माणाय इतस्ततो वृक्षत्वचं संगृह्णद्भिरेवेत्यर्थः। ग्राम्या या पल्ली (लघुखर्वटः 'ढाणी') तन्निवासिभिः, अतिग्रामीणैर्लोकैरिति भावः। हेलयाऽनादरेण, तद्गुणानज्ञात्वैवेत्यर्थः। अवमूल्यते मूलादुत्पाट्यते। अवमूलयतेः कर्मणि लट्। महापण्डितानां कृते छल्लीशब्दस्य कोषः—'छल्ली वीरुधि सन्ताने वल्कले कुसुमान्तरे।' मेदिनी। अत एव—"अन्योन्यकटकलग्नैः सर्वत्र दिशामुखेषु विसरद्भिः। छल्लीमिव बत मुञ्चति विन्ध्यो मेघैर्विघटमानैः॥" मदनूदितगाथासप्तशती (२।१५)॥ ३०॥

## कदम्बः

रात्रिन्दिवं हन्त गर्दभस्य गात्रकण्डूयनं
क्षारपात्रतापाद्वह्निधूमः संनिधीयताम्।
दत्तक्षारवस्त्राण्यप्युदुह्य निजस्कन्धे सदा
तृष्णाप्रतिबन्धे मलपानीयं निपीयताम्।

दैवदुर्विपाकादेव जातोऽस्यपि रजकगृहे
गन्धनिवहेन धराऽऽमोदधराऽऽधीयत।
अस्थानोदयेन हन्त किमसि सखेद इव
पुष्पितकदम्ब सखे! खेदोयं विनीयताम् ॥ ३१ ॥

वृक्षस्कन्धेन रासभस्य बन्धनादहर्निशं गात्रघर्षणम्। क्षारपात्रस्य तापात् (हेतौ पञ्चमी), यदा क्षारपात्रमुष्णीक्रियते तदा, वह्नेर्धूमः संनिधीयतां निकटे क्रियताम् अनुभूयतामित्यर्थः। क्षारलिप्तानि वस्त्राणि निजस्कन्धे उदुह्य धारयित्वापि, तृषाया निरासाय मलयुक्तं पानीयमेव पीयताम् आदीयताम्। वस्त्राणि प्रक्षाल्य मलिनं पानीयं त्वन्मूले रजकः क्षिपति, तदेवादीयतामित्याशयः। एवं दुःस्थाने उत्पत्तावपि—गन्धपूरेण पृथिवी आमोदिता क्रियताम्। अयं खेदः 'अस्थानेऽहं जातः' इति, विनीयतां दूरे क्रियताम्। सरसगन्धेनापूरिते दिगन्तरे, सोयं ते कलङ्कः प्रशाम्यतीति भावः ॥ ३१ ॥

## दीना मालती

मञ्जुतावशेन वनितानामियमङ्गगता
कोमलता कान्ताकुचकुम्भैरनुभूयते
शुभ्रताऽतिशेते मञ्जुमुक्तामपि विश्रमता
गन्धाऽऽमोदिता तु वनी विशदं विपूयते।
हंहो निर्विचार! वृतिकारणाय सेयं धृता !!
मरुता खरेण यस्यास्तनुरनुलूयते
हालिकेन्द्र! दक्षिणता भवताऽद्य केव कृता
मालतीलता यत्कण्टकाकुलिता दूयते ॥ ३२ ॥

अङ्गगता अङ्गेषु धारिता। अस्याः कोमलता कान्तानां कुचकलशैरनुभूयते। विश्वसंमता यस्याः शुभ्रता, महामूल्यमुक्तामपि उल्लङ्घयति। गन्धेन आमोदिता (सुरभिता) वनी विशदं (स्फीतम्) यथा स्यात्तथा विपूयते, पुण्यतमा क्रियते। हे विचारशून्य हालिक! क्षेत्रस्य समन्तात् वृतिहेतोः (वृतिनिर्माणाय) सा इयं धृता? वृतिकण्टकमध्यपतिताया यस्यास्तनुः (शरीरम्) तीव्रेण मरुता विदार्यते। तीव्रे मारुते चलति सति, कण्टकविद्धायाः शरीरं पाटितं भवतीत्याशयः। महाहालिक! (अतिग्रामीणेत्यर्थः) अद्य भवता का इव (कीदृशी) चतुरता कृता॥ ३२॥

## —॥ मानिनी मालती ॥—

पाटलापरागे नानुरागो याति नाम्बुरुहं
नीपं नैति चम्पामपि मुञ्चति स चञ्चलम्
बकुले विरज्यति न मल्लीमभिरोचयते
यूथीमभिनन्दति न पतितो दुरञ्चलम्।
मञ्जुनाथ ते वै मकरन्दलाभलालसेन
मुक्ता मधुमाधवी मधूकमुज्झितं चलं
मा मा मञ्जुमालति! मरन्दमधुगन्धवशे
मेदुरमिलिन्दे मानमञ्चय निरञ्चलम्॥ ३३॥

नीपम् कदम्बं न एति (गच्छति)। चञ्चलं यथा स्यात्तथा। अभिरोचयते अभिरुचितां ('पसन्द') करोति। दुरञ्चलं दुरभिनिवेशं पतितः प्राप्तोऽसौ भ्रमरः यूथीमपि न अभिनन्दति स्वाभीष्टत्वेन न प्रशंसति। ते तव (मालत्याः)। चलं यथा स्यात्तथा मधूकपुष्पं त्यक्तम्। हे मालति मकरन्दमधुनो गन्धस्य वशीभूते मेदुरेऽस्मिन् मिलिन्दे (भ्रमरे), निरञ्चलं निरन्तम् (निःसीममिति यावत्)मानं मा मा अञ्चय (गच्छ), मानं मा अङ्गीकुरु इत्याशयः। अञ्चतेः स्वार्थिको णिः॥ ३३॥

वयसि किशोरे किल संकोचितपक्षपुटो
निःसहमुपैषीन्नीतशङ्को भवदञ्चलम्
समयेऽनुयाति कुसुमोद्गमसुवासमये
भ्रमति समन्तादेष तदनु सुचञ्चलम् ।
मञ्जुनाथ सोयं मत्तमधुपविलासी नित्य-
निकटनिवासी त्वयि धत्ते मानसं चलं
मा मा मञ्जुमालति मरन्दमधुगन्धवशे
मेदुरमिलिन्दे मानमञ्चय निरञ्चलम् ॥ ३४ ॥

तव किशोरे वयसि, नीता शङ्का येन तादृशः सशङ्कः, अत एव संकोचितपक्षपुटः सन् भवदञ्चलं भवदन्तिकम् निःसहं ( परवशं यथा स्यात्तथा ) उपैषीत् आगच्छति स्म । 'कटी'ति प्रश्लिष्टस्य लुङ् । कुसुमोद्गमस्य यः सुवासः सुगन्धस्तन्मये समयेऽनुयाति आगच्छति सति । तदनु तदारभ्य सुचञ्चलं यथा तथा परितो भ्रमति । सः अयम् ( यस्त्वां कैशोरमारभ्य कुसुमविकासपर्यन्तं सेवितवान् । ) त्वन्मरन्दगन्धं प्राप्य, मत्तोऽयं मधुपः त्वयि ( त्वद्विषये ) चञ्चलं मानसं धत्ते । 'विलासी'त्यनेन सर्वदा विलासशीलः, तव च नित्यं निकटनिवासी ईदृशोऽयं मधुपो मानेन खेदयितुं नार्हं इत्याशयः । प्रथमे—संको-शको-इति प्रासः ॥ ३४ ॥

गणबद्धसवैयाच्छन्दः ( दुर्मिल )

न च सा मधुमाधविका रमिता,
न लवङ्गलताऽपि कृता मुदिता
वनवीथिषु यूथिरियं व्यथिता
न पदापि च पङ्कजिनी मृदिता ।

अयि मानिनि! ते प्रणयी मधुपो
विधुरः सविधेऽस्ति, गतः सविता
यदि नैव विकासमुरीकुरुषे
वद मालति! काऽस्य गतिर्भविता? ॥ ३५ ॥

रमिता, स्वोपगमनेन प्रीणिता। मधुपसमागमाभावात् यूथिका व्यथिता। पदाऽपि चरणेनापि, कमलिनी न स्पृष्टा। विधुरः तव विरहविह्वलः, समीपेऽस्ति। यदि सूर्यतापाद्विकासे संकुचसि, तर्हि सविता सूर्योऽप्यस्तं गतः। अस्य भ्रमरस्य का दशा भविता भविष्यति। (लुट्)। ध्वनिपक्षे 'सविता' यस्मात्त्वं संकुचसि, स गुरुजनोपि गत इत्यर्थः॥ ३५ ॥

न निषीदति नीपतरौ निभृतं
न मनागतिमुक्तलताऽप्यविता
न च सापि सरोरुहिणी सुखिता
बत यामभिभासयते सविता।
अयि मानिनि! ते तु विकासकृते
मधुपो मुदमेति, गता जविता
यदि नैव विकासमुरीकुरुषे
वद मालति! काऽस्य गतिर्भविता? ॥ ३६ ॥

निभृतं निश्चलं यथा स्यात्तथा। अविता स्वसमागमेन रक्षिता, प्रीणितेति यावत्। सुखिता सुखिनी कृता, सुखयतेः क्तः। यां सूर्यः प्रकाशयति विकासयतीति यावत्, सापि कमलिनी त्वत्कृते त्यक्तेत्याशयः। तव विकासकृते विकासप्रतीक्षायाम्। मुदमानन्दं प्राप्नोति, जविता जवयुक्तता गता। नीपादिषु कुत्रापि निश्चलं न अतिष्ठत्, त्वां प्राप्य तु भ्रमरस्य सर्वापि जविता गता। इयं समस्या पूर्वं पत्रादिषु प्रकाशिता, इह मयापि पूरिता। पूर्वस्मिन्पद्ये मुदिता-मृदिता इति पूर्वार्द्धे, सविता- भविता, इत्युत्तरार्द्धे अन्त्यानु-

प्रासः (तुकान्त)। अस्मिन्पद्ये तु चतुर्ष्वपि चरणेषु–अविता-सवितेत्यादयः प्रासाः। वस्तुतस्तु–पद्यद्वयेपि यथा चरणत्रयमलङ्कारझाङ्कारि, तथा न समस्यायाश्चरणम्। अतिरोहितमिदं पठतां सहृदयानाम्। आवश्यकश्च चतुर्थे चरणेऽधिकः शब्दचमत्कारः। अत एवाग्रेऽप्ययमेव विषयः ॥ ३६ ॥

मुकुलान्यपि वीक्ष्य मदाभरितो
भजते परितो न तदञ्चसि किम्?
मदगुञ्जितमावहते मधुरं
चतुरं रचयत्यपि चञ्चसि किम्?
स हि संप्रति ते वशगो व्यथते
तमिमं सरलं बत वञ्चसि किम्?
मधुपे समुपेयुषि दीनदशा–
मयि मालति! मानमुदञ्चसि किम्? ॥ ३७ ॥

तव कुड्मलानि अपि दृष्ट्वा, मदोन्मत्तः परितस्तव समन्तात्, भजते भ्रमति। तद् (इदं भ्रमणम्) किं न अञ्चसि? जानासि। सर्वे गत्यर्था ज्ञानार्थाः। मधुरं यथा स्यात्तथा गुञ्जितं आवहते कुरुते। चतुरं कुर्वाणेपि, चतुरचेष्टया परितश्चाटूनि विरचयत्यपि भ्रमरे किं चञ्चसि? चकिता सती किं चलसि? विरहवशात् दीनतां प्राप्तवति भ्रमरे, मानं किं गच्छसि? अस्मिन्पद्ये उत्तरोत्तरमर्थचमत्कार इव शाब्दोप्युत्कर्षं लभते ॥ ३७ ॥

नवमल्लिका

वार्णसवैया (उपजातिः)

तव मारुतमात्रतोऽप्येष मुदं
मनुते, कुसुमस्य तु का वा कथा
सखि! ते किमितोऽधिकं व्याह्रियते,
ह्रियते भ्रमरोऽद्य तवैव पथा।

इह चाटुपरेऽनुचरे भ्रमरेपि च
हेलया चेद्विमतान्यकृथा
अयि वल्लिमतल्लिके! सत्यं तदा
नवमल्लिके! फुल्लसि केन वृथा? ॥ ३८ ॥

एष भ्रमरस्तव पवनमात्रतः अपि मुदं मनुते (हर्षं मानयति)। कुसुमप्राप्तेस्तु का कथा। हे सखि मल्लिके! ते इतोऽधिकं किम् उच्यते, यत् भ्रमरः अद्य तवैव मार्गेण ह्रियते आकृष्यते। यदा वनवीथ्यां गच्छति तदा त्वत्समीपस्थेन मार्गेण गच्छतीत्यर्थः। एवम् चाटुकारिणि तव सेवकेऽपि हेलया विरुद्धमतानि चेत् अकृथाः यदि त्वमकरोः, (अस्माद्वैमुख्यं चेत्त्वं प्रादर्शयः), तर्हि हे वल्लिश्रेष्ठे नवमल्लिके! वृथा किमिति विकससि? पात्रेऽपि यदि विमुखता, तर्हि तव विकाससम्पत्तेः किमपरं फलमित्याशयः। 'अकृथाः अयि' अत्र विसर्गलोपः ॥ ३८ ॥

—॥ केतकी ॥—

(सिंहावलोकनम्)

ह्रियते तव रूपविलोकनतो
ध्वनतो हृदि दोहदमाश्रियते
श्रियते मकरन्दभरैर्दिगियं
तदयं भ्रमदेन वशीक्रियते।
क्रियते कठिनं किल केतकि! य-
न्मधुपेऽपि न मानसमाध्रियते
ध्रियतेऽपि न तेन निजं चिबुकं
किमु कण्टकजालमिहाऽऽह्रियते? ॥ ३९ ॥

शुभ्रविशदस्य तव रूपस्य विलोकनात् मधुपो ह्रियते आकृष्यते। अत एव तव चाटुनिमित्तं ध्वनतो गुञ्जारवं कुर्वतो मधुपस्य हृदि दोहदं त्वद्विप-

यिणी इच्छा आश्रियते आपूर्यते । त्वया मकरन्दपूरैरियं दिक् गन्धसम्पदा आपूर्यते, तदा अयं मधुपः प्रमदेन परवशः क्रियते । एतादृशे मधुपेऽपि मानसं न आध्रियते प्रेमाधारो न क्रियते, एतदतिकठोरं क्रियते । मधुपेन सह कथं प्रेम न क्रियते? तदाह—तेन भ्रमरेण निजं चिबुकमपि न ध्रियते, किमु पुनः संपूर्णं मुखम् । एतादृशं प्रेमप्रतिबन्धकं कण्टकजालं किमिति आह्रियते, इतस्ततः संगृह्य रक्षणे नियोज्यते ॥ ३९ ॥

## यूथिका

तव तादृङ्मनोहरहारलता
कथयोरसि कै रसिकैर्न कृता?
कुसुमोद्गमतो वनवीथिमुखे
स्मितसम्पदुदेति सुखानुसृता ।
अयि केन वा क्रूरजनेन महा-
कठिनेऽसिन्करीरवने विधृता?
प्रगुणीकृतकामवरूथिके! य-
न्नवयूथिके! ताम्यसि तापभृता ॥ ४० ॥

तावत्पर्यन्तं मनोहारिणी तव हारलता ( कुसुमस्रक् ) कैर्वा रसिकैः उरसि न कृता? इति कथय । अपि तु रसिकमात्रेण हृदये धारिता । तव कुसुमोद्गमात् वनवीथिमुखे सुखसूचिका स्मितलक्ष्मीरुदेति । यदा त्वं विकससि तदा वनवीथी हसतीत्यर्थः । हासस्य श्वेततावर्णनादुभयोः साम्यम् । प्रगुणीकृतं बलानुकूलं कृतं, कामवरूथकं कामसैन्याङ्गं यया, तत्सम्बुद्धिः । कामस्यासाधारणमस्त्रमित्याशयः । यत् तापेन पूर्णा त्वं ताम्यसि क्लिश्यसि ॥ ४० ॥

## →※ तरुणी ※←

### घनाक्षरी

आमोदितवाटवनवसुधापरिधिरय–
मामोदस्तवैव लोकललितो निगद्यते
तव तु परागो जनजनितानुरागो, मणि–
मञ्जुतमरागोयं भवत्यामुपपद्यते ।
मञ्जुनाथ किं जल्पतु कोपि गुणगरिमाणम् ?
पश्यन्म्रदिमानं ते पयोजमपि भिद्यते
अरुणिमरञ्जितसमस्ततरुकुञ्जकुले !
तरुणि ! तवोर्वीतले तुलना न विद्यते ॥ ४१ ॥

आमोदितः (सुरभीकृतः) वाटस्य मार्गस्य वनवसुधायाश्च परिधिः (पर्यन्तदेशः) येन तादृशः, लोकमनोहरः अयं तवैव आमोदः परिमलो निगद्यते प्रोच्यते । येन समग्रोपि वनोद्देशः सुरभितो भवेदीदृशो मनोहरो गन्धस्तवैव लोकैरुच्यत इत्याशयः । तव परागः (पुष्परजः) जनेषु उत्पादितः अनुरागः (प्रीतिः) येन तादृशः । पद्मरागमणिवन्मञ्जुतमो रागो रङ्गो (वर्णः)अयं भवत्यामेव उपपद्यते संभवति । कोपि जनस्तव गुणगौरवं किं कथयतु नाम, यत् ते कोमलतां पश्यत् पयोजं कमलमपि भिद्यते स्फुटितहृदयं भवति, वास्तवे तु विकसति । अरुणिम्ना रक्तिमया रञ्जितं समस्तं तरुकुञ्जकुलं (वृन्दम्) यया तत्सम्बुद्धौ । हे तरुणि ! ('गुलाब' इति भाषाप्रसिद्धम्) भूमितले तव साम्यं केनापि पुष्पेण सह नास्ति । 'तरुणी' पदेन शब्दशक्त्या युवतीरूपोप्यर्थः प्रतीयते । उभयं च चित्रे भवदभिमुखेस्ति । प्रथमे आमोदि आमोद, द्वितीये त्री रागो इति, रिमाणं दिमानम् तृतीये, चतुर्थे अरुणि-तरुणि, प्रासाः ॥ ४१ ॥

## तरुणी



" तरुणि तवोर्वीतले तुलना न विद्यते ॥ "

Lakshmi Art, Bombay, 8.

## चम्पा च मधुकरश्च

क्षणमुपगम्य नवमालिकामनम्रमुखीं
बालिकाऽपि सेयं नवयूथी सुखमीयते
तरुणतमालतरुखेलामधिगम्य मनाग्
दूरविपिनेषु सेयमेला संनिधीयते।
मुकुलितपाटलान्तिकेपि मोदमानो यासि
हन्त हन्त केयं तव रीतिर्व्यवसीयते?
मधुकरबन्धो! किं नु झम्पाफलमावहसे?
कम्पाऽऽकुला सेयं यन्न चम्पा परिचीयते ॥ ४२ ॥

अनम्रमुखीं त्वत्प्रतीक्षया उच्चमुखीम् नवमालिकाम्, उपगम्य अभिसृत्य, बालिका (अविकसिता)पि सेयं यूथी सुखं यथा तथा ईयते उपगम्यते। खेला क्रीडा। एला (एलावृक्षः) संनिधीयते निकटे क्रियते। मुकुलिताया अपि पाटलायाः अन्तिके प्रसन्नः सन् यासि। हा हन्त इयं तव कीदृशी रीतिर्व्यवसीयते निश्चीयते, विलोक्यत इति यावत्। अस्थाने दूरस्थानेपि मुधा भ्राम्यसीति का ते शैली? झम्पायाः (सवेगभ्रमणस्य) किं फलं प्राप्नोषि, यत्तव प्रेमवशात् कम्परूपेण सात्त्विकभावेनाकुलापि सेयं चम्पा नोपगम्यते ॥ मालिका-बालिकादयः प्रासाः प्रेक्ष्याः ॥ ४२ ॥

यस्याः सर्वदिक्षु मन्दमारुतविनीतमिमं
सरससुगन्धमाप्य विपिनं महीयते
शोभामनवद्यामिह कांचन समधिगम्य
काञ्चनमनोज्ञदेहराग उपचीयते।
भाग्यवैभवेन पुनः संमुखमुपेतामपि
तामेतां विहाय हन्त परितो निरीयते

मधुकरबन्धो! किन्तु झम्पाफलमावहसे
कम्पाकुला सेयं यत्र चम्पा परिचीयते ॥ ४३ ॥

सर्वासु दिक्षु मन्देन मारुतेन नीतं यस्याः सुगन्धमिमं आ-आप्य वनं पवित्रं भवति। कांचित् अनिर्वचनीयां निर्दोषां शोभां प्राप्य, काञ्चनवत् सुवर्णवन्मनोज्ञो देहस्य रागः (वर्णः) उपचीयते वर्द्धते। एतादृशीं सुन्दरीम्, तदुपरि भाग्यात् स्वयमेव तव संमुखे उपेतां प्राप्तामपि तामेतां विहाय, परितः (निरुद्देश्यमितस्ततः) निरीयते निर्गम्यते। एतेः कर्मणि लट्। हन्त निरीयते! अत्र काकुः। एवं स्थितौ तव गमनं नोचितमित्यर्थः। मन्द्-गन्ध-आदयः प्रासाः ॥ ४३ ॥

—※ नवनाविकः ※—

तरलतरङ्गैरब्धिरालोडित एष चण्ड—
मारुतानुषङ्गैरिह दृष्टिं विकिराधुना
सघनघटायां दिवि दीव्यति न दीप्तिच्छटा
मज्जेदविलब्धतटा नौरप्रसराऽधुना।
संमतिमये मे मञ्जुनाथ बत नामीमनो
नाविक! निराशं मनो जीवने धराऽधुना
आकर्णय संप्रति वचो मे नवकर्णधार!
नावमिमामर्णवतरङ्गे वितराऽधुना ॥ ४४ ॥

प्रचण्डमारुतस्य अनुषङ्गः (साहचर्यम्) येषां तैः, प्रचण्डपवनोद्वेलितैः तरलतरङ्गैः अयं अब्धिः (समुद्रः) आलोडितः समन्तात्क्षुब्धोस्ति, इह (समुद्रे) अधुना दृष्टिं विकिर क्षिप। घनघटासहितायां दिवि (आकाशे) प्रकाशस्य च्छटा न दीव्यति दीप्यते। तरङ्गैः प्रबलतरमाहता, अन्धकारे अदृष्टमार्गतया अविलब्धतटा अप्राप्ततीरा, अस्माकं नौः (तरणिः) मज्जेत्। अये नाविक! मे संमतिं ('अस्मिन् समये एतादृशीं नौकामादाय समुद्रे न गन्तव्यम्।') त्वं बत न अमीमनः न अमानयः। मानयतेर्लुङो मध्यम-

पुरुषः। अधुना जीवने निराशं मनः धारय। इदानीं जीवने निराशो भवे-त्यर्थः। अत एव—हे नवीनकर्णधार! अधुना इमां नावं अर्णवतरङ्गे वितर! यत्किमपि भावि, तद्भविष्यति, इदानीं ईश्वरस्मरणं कृत्वा नौकां समुद्रतरङ्गे विसृज! त्वं नवीनोऽसि, अत एव त्वत्तः का आशेत्याशयः। प्रथमे-रङ्गैः-पङ्गैः, घटा–च्छटा–तटा, मनो–मनो–, कर्ण–कर्ण–मर्णेति यथाक्रमं प्रासाः॥ ४४॥

## ताजितुरङ्गः

प्रातः प्रतिबुध्य यासि काननमसंनहनं
पृष्ठे काष्ठभारमादधासि मौनमाबलम्
मृत्तिकामुदस्यसि, पयांसि पुनर्न्यस्यसि, भोः
किं बहुना प्रचुरं प्रयस्यसि निराकुलम्।
मञ्जुनाथ कुम्भकारगेहे गलबद्धोऽधुना
भुङ्क्ष्व घासमात्रमेव सलिलमथाविलं
राजोचिततरलतुरङ्गम! न ताम्य सखे
सह्यतां सुखेन नीचसङ्गफलमाकुलम्॥ ४५॥

प्रातः प्रतिबुध्य जागरित्वा वनं गच्छसि। तत्र नास्ति संनहनं पृष्ठपल्याणं यस्मिन् तथैव, अर्थात् वस्त्रादिकं विनैव शून्ये निजपृष्ठे मौनं तूष्णीं यथा तथा काष्ठभारमादधासि धारयसि। तदपि न न्यूनं किन्तु, 'आबलम्' यावत्ते बलं तावत्, अर्थात् प्रचुरम्। कुम्भकारार्थम्, मृत्तिकाम् उदस्यसि, उत्क्षिपसि (आहरसि), जलान्यानयसि। अधिकं किम्। निराकुलं अवि-ह्वलं यथा स्यात्तथा अत्यन्तं प्रयस्यसि, प्रयासं करोषि। 'यसु प्रयत्ने'। गले रज्ज्वा बद्धः। आविलं मृत्तिकया मलिनम्। घासमात्रम्–एव, न पुनर्यव-दलितकम् ('दाना') अपि। न ताम्य, न क्लिश्य! नीचसङ्गस्य फलम्, आकुलम् वंशपरम्परापर्यन्तं सह्यताम्। इदानीं तव वत्सा अपि खरजाति-समागमाद् गौरखरा एव ('खच्चर') भवेयुरिति भावः॥ ४५॥

### —⁂ परिवर्तनम् ⁂—

मल्लिकामधूकमधुमालत्यो विलोपं गताः
कटुककरीरकोलराजीयं विजम्भते
मधुरं चुकूज यत्र कुसुमितकुञ्जे पिक-
स्तत्र मुञ्जपुञ्जे वृकश्चीत्कारं वलम्बते।
मञ्जुनाथ! दैवदुर्विपाके दूरदृष्टिं देहि
द्राक्षावल्लिमण्डपेषु दाक्षाय्योऽद्य रम्भते
शीतलसुगन्धिमन्दपवनं पुरोपवनं
यत्रासीद्, विरूपवनं तत्र हि विजृम्भते ॥ ४६ ॥

कोलं बदरी। राजी पङ्क्तिः। विजम्भते उदेति। 'जभी जृभि' गात्रविनामे। यत्र उपवने, पुष्पिते कुञ्जे कोकिलश्चुकूज, तत्र तत्स्थाने, मुञ्जस्य पुञ्जे गुल्मे ('कूंचा')। अवलम्बते, भागुरेरकारलोपः। द्राक्षावल्लीनां मण्डपेषु 'दाख-मंढा'। दाक्षाय्यो गृध्रः। रम्भते शब्दं करोति। 'अभिरभी' क्वचित्पठ्यते। शीतलः सुगन्धिः मन्दश्च पवनो यस्मिन्नीदृशम्, यत्र (यस्मिन् स्थाने) पुरा उपवनमासीत्, तत्रैव विरूपं घोररूपं वनं विजृम्भते। चतुर्थे पवनं पवनमिति त्रिरपूर्वः प्रासः प्रेक्ष्यः ॥ ४६ ॥

### —⁂ मेघः ⁂—

सो०—सदयमुदयमायासि, जाने घन! वर्षसि सदा।
दर्शनमपि न ददासि, किन्तु पूर्णतापं विना ॥ ४७ ॥

दयां कृत्वा उदेषि, सर्वदा वर्षस्यपि। अन्यथा लोका जीवेयुरेव कथम्? परम्—पूर्वं पूर्णं तापं कृत्वा पश्चाद्दर्शनं ददासीत्याशयः ॥ ४७ ॥






मङ्गलसोरठाच्छन्दः



विसृमरसुविपत्पुञ्ज,–भञ्जनमञ्जितसद्गुणम् ।
चरणं कञ्जविमञ्जु, संजनयेत्सततं सुखम् ॥ १ ॥

विसृमरस्य प्रसरणशीलस्य (बहुलस्येत्यर्थः।) विपत्पुञ्जस्य नाशनम्। प्रकटीकृतसद्गुणम्, कमलवत् सुन्दरं चरणं मे सुखं जनयतु ॥ १ ॥

तत्र पूर्वं

## संस्कृतभाषा–परिगृहीतानि च्छन्दांसि

पङ्क्तिः [ 'हंसः' नामान्तरम् ]

गर्विणि गङ्गे !
मा मुदमैषीः ।
सूरि–सदुक्ति–
स्त्वामतिशेते ॥ २ ॥

गर्वयुक्ते गङ्गे ! अविच्छिन्नप्रवाहस्य पवित्रतायाश्च गर्वेण, मुदम् (आनन्दम्) मा ऐषीः, मा याहि । इट–किट–कटीति प्रश्लिष्टस्य माङ्योगे लुङ् ।

सूरीणां सूक्तिः, त्वाम् अतिशेते, त्वां जयतीत्यर्थः। अविच्छिन्नतायां पवित्रतायां च पण्डितानां सूक्तिर्गङ्गातोपि गरीयसीत्याशयः। प्रतीपः ॥ २ ॥

शशिवदना [ 'चण्डरसा' ]

जननि जयन्ति !
त्रिभुवनवन्द्ये !
तव पदपद्मे
प्रणतिरियं मे ॥ ३ ॥

त्रिजगन्नमस्करणीये जयन्ति–शिवे! ॥ ३ ॥

मदलेखा

क्रीडत्कुञ्जर–कुम्भे
दृष्टा सा मदलेखा ।
तुङ्गे भूधरशृङ्गे
गङ्गेव प्रवहन्ती ॥ ४ ॥

क्रीडतः कुञ्जरस्य कुम्भस्थले प्रवहन्ती मदलेखा ( धारा ), उन्नते पर्वतशिखरे वहन्ती गङ्गेव दृष्टा। हस्तिनो गण्डस्थलस्य उत्तुङ्गत्वं ध्वन्यते। मुद्रा, छन्दसोपि नामसूचनात्। एवमग्रेपि स्थाने स्थाने ॥ ४ ॥

विद्युन्माला

लक्ष्मीलीलां दृष्ट्वा लोके
हंहो के वा दर्पं दध्युः ? ।
किं वा निर्यन्नीलाम्भोदे
कामं क्रीडेद्विद्युन्माला ? ॥ ५ ॥

के वा दर्पं दध्युः । के वा जना गर्वं कुर्युः? न केपीत्यर्थः । निर्गच्छति नीले मेघे, किमु विद्युन्माला कामं (यथेच्छं चिरम्) क्रीडेत्? अपि तु नेत्यर्थः । लक्ष्मीर्विद्युच्चञ्चलेत्याशयः । लोके, होके प्रासः ॥ ५ ॥

अनुष्टुप्

शैलजाङ्कसमारब्धमौलिदोलनविभ्रमः ।
चतुरोर्थांश्चतुर्बाहुर्देयाद्बालगजाननः ॥ ६ ॥

पार्वत्याः अङ्के समारब्धो मौलिदोलनस्य, बाल्यचापल्यवशात् मस्तककम्पनस्य विभ्रमो (कौतुकम्) येन, ईदृशः चतुर्भुजः बालगणपतिः, धर्मार्थादीन् चतुरोऽर्थान् देयात् । मातुरङ्के स्थितानां शिरःकम्पनं बालानां चेष्टेति स्वभावोक्तिः । परिकरश्चेति संकरः ॥ ६ ॥

प्रमाणिका [नगस्वरूपिणी]

त्वदीयपादपङ्कजं
भवानि भावयन्ति ये ।
सदा सदालिसेविता
नितान्तमुच्छ्रयन्ति ते ॥ ७ ॥

हे भवानि! ये त्वत्पादकमलं भावयन्ति ध्यायन्ति, ते सर्वदा, सताम् आलिभिः पङ्क्तिभिः सेविताः सन्तः अत्यन्तम् उच्छ्रयन्ति उन्नताः भवन्ति ॥ ७ ॥

माणवकम् [माणवकाक्रीडम्]

भावय भूतेश! भृशं
देहि दृशं दीनजने ।
यो हि भवत्पादतले
भाग्यबलेनापतितः ॥ ८ ॥

यो दीनजनः, भाग्यबलेन भवत्पादतले आपतितः, तस्मिन् दृशं देहि (पश्य)। हे भूतेश! त्वं भावय विचारय। तस्य दीनस्य दुर्दशां क्षणं चिन्तयेत्यर्थः॥ ८॥

शुद्धविराट् [विराट्]

एतावत्तव पादपङ्कजे
याचेहं जगदीश! दुर्मनाः।
जाल्मानामवलेपसंमुखे
मा दैन्यं निटिले विलेखयेः॥ ९॥

खिन्नः अहं तव चरणसमीपे इयदेव याचे, यत् असमीक्ष्यकारिणां संमुखे दीनतां मम निटिले ललाटे न लेखयेः, विधातुर्द्वारा मा लेखयेत्यर्थः। अहं गर्विष्ठैः कृतस्य अपमानस्य समुचितमुत्तरं दातुं समर्थो भवेयं तादृशीं मे शक्तिं देहि, इत्याशयः॥ ९॥

चम्पकमाला [रुक्मवती]

वक्षसि दत्ता गन्धविशाला
या प्रियसख्या मालतिमाला।
सैव हि बाला-मञ्जिम-जाला-
त्सिध्यति चित्रं चम्पकमाला॥ १०॥

प्रियसख्या, गन्धगुणे विशाला उत्कृष्टा, या मालतिमाला बालायाः वक्षसि निहिता, सा एव बालायाः, मञ्जुतायाः जालात्, सुवर्णसदृशकान्तिदेहस्य प्रभापटलात् चम्पकमाला सिध्यति (सम्पद्यते)। श्वेतापि मालतिमाला देहकान्त्या पीतवर्णा चम्पकमाला भवतीत्याशयः। तद्गुणः। मुद्रा च॥ १०॥

मणिमध्या [ मणिबन्धः ]

मानय मत्ते ! मे वचनम्
नैव हितं मानाऽऽरचनम् ।
संप्रति संतुष्येर्दयिते
कुप्यसि किं पादावनते ? ॥ ११ ॥

अयि प्रमत्ते ! मानकरणं न हितम् । प्रियतमे ( सप्तमी ) संप्रति संतुष्येः प्रसन्ना भवेः । पादयोरवनते अस्मिन् किं कुप्यसि ? नोचितः कोप इत्याशयः ॥ सख्या उक्तिः ॥ ११ ॥

इन्द्रवज्रा

उन्माथिनीनां विपदां विमाथे
नाथे त्वयि प्रोज्झति मत्प्रभुत्वम् ।
हे दीनबन्धो ! वद दीनवाचा
याचामि कं वा शरणं पृथिव्याम् ॥ १२ ॥

घोराणां विपदां विमाथे ( उन्मथने ), त्वयि मत्स्वामित्वं प्रोज्झति सति, दीनवाचा शरणं कं रक्षितारं याचामि, वद । त्वमेव मे पृथिव्यामवलम्बनमसि, ततश्च विपद्दूरीकरणे त्वमेव मे स्वामीत्याशयः ॥ १२ ॥

उपेन्द्रवज्रा

दुरन्तसन्तापसमापकानि
प्रकाममन्तर्बलदायकानि ।
रसाश्रितानीव सुभेषजानि
श्रयन्तु सन्तः कविजल्पितानि ॥ १३ ॥

दुरन्तस्य सन्तापस्य, मानसिकपीडायाः रोगादिजनितस्य उत्तापस्य च निवर्तकानि । यथेष्टम्, अन्तर्बलस्य दायकानि ( उभयत्र समानप्रायम् ) । रसैः शृङ्गारादिनवरसैः आश्रितानि, पारदादिरसैश्च निर्मितानि सुष्ठुभेषजानि

इव, कवीनां सूक्तानि सन्तः श्रयन्तु । सुकवीनां सुभाषितानि, रसौषधानीव सचेतसां कृते उपकारं कुर्वन्तीत्याशयः ॥ १३ ॥

उपजातिः

स्खलन्ति लक्ष्मीलवदुर्विदग्धाः
पदे पदे पश्य समृद्धलोकाः ।
विलासिनीलोलकटाक्षलक्ष्ये
रक्ष्येत कैश्चेतसि धैर्यबन्धः ? ॥ १४ ॥

संपत्तिलवेन प्रमत्ताः पदे पदे प्रमादं कुर्वन्तीति पश्य । विलासिन्याः चञ्चलकटाक्षस्य लक्ष्यभूते चेतसि, कैर्जनैः धैर्यबन्धो रक्ष्येत? कटाक्षेण विप्रलब्धा धैर्यं त्यजन्तीत्यर्थः । विलासिन्याः कटाक्षलक्ष्यीभूता यथा लोकमर्यादादिषु स्खलन्ति, तथा लक्ष्मीकटाक्ष–लव–मुग्धा एते प्रमाद्यन्तीत्याशयः । विलासिनीपदेन लक्ष्म्या नवनवस्थानमार्गणं ध्वन्यते । कटाक्षे लोलविशेषणदानात्तस्याप्यस्थिरत्वं सूच्यते ॥ १४ ॥

सान्द्रपदम्

दीनगृहे भो भवति यदेव
भक्तिवशस्तत्प्रतिनय देव ।
अप्रभविष्णुः किमुपहरामि
विष्णुरसि त्वं किमुपचरामि ॥ १५ ॥

हे देव! दीनगृहे यदेव पूजोपकरणं भवेद्भक्तिवशस्त्वम् तदेव प्रतिनय स्वीकुरु । असमर्थोऽहं किम् उपायनं ददामि । त्वं विष्णुः (सर्वत्र व्यापकः) असि । अहं किमुपचरामि, कां सेवां कर्तुं समर्थ इत्याशयः ॥ १५ ॥

सुमुखी

रवितनयाऽतुलनीयतटे
विहरति शौरिरयं निकटे ।

चपलमगृह्यत तत्र सखी
कथमिव यास्यति सा सुमुखी ॥ १६ ॥

यमुनायाः अनुपमे तटे, समीप एव अयं शौरिः (कृष्णः) विहरति। तत्र (तस्य विहारक्रीडायाम्) मत्सखी चपलं यथा तथा अगृह्यत, कृष्णद्वारा न्यरुध्यत। सा सुमुखी, कृष्णमुल्लङ्घ्य कथं यास्यति। निजसखीगमनं विचारयन्त्या गोप्याः सखीं प्रत्युक्तिः ॥ १६ ॥

## दोधकम्

सूर्यसुतातटसीमसमीपे
रासमसूत स कंसनिवर्ही।
काञ्चनकिङ्किणिकङ्कणरावै—
स्तत्र बभूव कलः किल नादः ॥ १७ ॥

तटसीम्नः समीपे। कंसनिबर्ही श्रीकृष्णो रासं कृतवान्। तत्र (रासे) सुवर्णकिङ्किणीनां कटिस्थक्षुद्रघण्टिकानां कङ्कणानां च शिञ्जितैः मनोहरो नादो बभूव ॥ १७ ॥

## शालिनी

निर्यन्नीरे कापि कालिन्दितीरे
सायंकालाद्गोपबालाऽवतस्थे।
संकेतेऽस्मिन्नाभ्युपेते मुकुन्दे—
ऽक्रन्दन्मन्दं शोणदृक्शालिनी सा ॥ १८ ॥

अतिप्रवाहवेगात् निर्यत् (निर्गच्छत्) नीरं यस्मात् ईदृशे कालिन्द्याः तीरे। ङ्यापोरिति ह्रस्वः। सायंकालादेव गोपस्त्री काचित् कृष्णप्रतीक्षायामतिष्ठत्। अस्मिन् संकेतस्थाने मुकुन्दे अनागते सति, रोदनवशात् अरुणनेत्रशालिनी सा मन्दमरोदत् ॥ १८ ॥

### ∗ भ्रमरविलसिता ∗

चित्तं वित्तं भगवति भरितं
वेषोऽप्येषोऽञ्जयति सुचरितम् ।
नित्यं सत्यं दधति रुचिरभा
रक्ता भक्ता जगति न सुलभाः ॥ १९ ॥

येषां भक्तानां चित्तं धनादिकं च भगवत्येव भरितम् । चित्तमपि भगवति पूर्णम्, धनमपि भगवत्येव स्थितम् । भगवानेव तेषां सर्वस्वमित्यर्थः । विनीत—मनोहरः एष वेषोपि भक्तानां सुन्दरमाचरणं प्रकाशयति । वेषेणैव तेषामाचरणमनुमीयत इत्यर्थः । नित्यं सत्यं यथा तथा रुचिरभाः सुन्दरं तेजो धारयन्ति । ईदृशाः भगवति अनुरक्ता भक्ता जगति न सुलभाः ॥१९॥

### ∗ रथोद्धता ∗

प्रस्थिते मधुपुरीं पुरा हरौ
गोपिकाहृदि पदं दधेऽधृतिः ।
नेत्रयोर्जवनिकाऽनुकारितां
रेणुरेव हि रथोद्धता ययौ ॥ २० ॥

पूर्वं श्रीकृष्णे मथुरापुरीं प्रस्थिते सति, गोपिकानां हृदये अधैर्यं पदं चकार । किं च अक्रूरद्वारा प्रेरितेन रथेन उद्धता रेणुः धूलिरेव, नेत्रयोरग्रे तिरस्करिणीसमानतां ययौ । रेणुर्द्वयोरित्यमरः । उत्कण्ठावशात् कृष्णरथं पश्यन्त्योपि धूलिप्रावरणात्तं वीक्षितुं न शेकुरित्यर्थः । मुद्रा ॥ २० ॥

### ∗ स्वागता ∗

दुःसहेऽद्य विरहे कथमेकं
प्रोत्सहे हृदि निवस्तुमितीत्थम् ।
चित्त! हन्त न विचिन्तय, चिन्ता
स्वागताय समुपैति सखे ते ॥ २१ ॥

दुःसहे विरहे, एकम् (एकाकि) अहं हृदये वक्षसि निवस्तुं कथं प्रोत्सहे इति इत्थं हे चित्त! त्वं न चिन्तय। हे सखे! ते स्वागतार्थं चिन्ता आयाति। विरहे, मम घोरा चिन्ता चेतसि वर्तत इति व्यज्यते। स्वागताय समागच्छतीत्यनेन विरहे सत्येव चिन्ता हृदयेऽधिविष्टाभूदिति ध्वन्यते ॥ २१ ॥

वृत्ता

मधुप! वचसि न मनो दत्से
मधुनि मधुनि मुखमाधत्से।
प्रियवर! मम कथयेः सत्यं
कुत इदमधिगतमौद्धत्यम् ॥ २२ ॥

हे मधुप! मम वचने मनो न ददासि। नानाविधे मधुनि (पुष्परसे) मुखं स्थापयसि। नानाविधं मधु पिबसीत्यर्थः। मम सत्यं कथयेः, यत् इदमौद्धत्यं कुतः शिक्षितम्। नानाविधपुष्परसास्वादस्ते केवलमौद्धत्यमित्युपालम्भः ॥ २२ ॥

भद्रिका [सुभद्रिका]

अयति वियति भूरिभास्करे
भवति सभयता सुधाकरे।
कुपितमधिकमेक्ष्य मानवं
मृदुतनुरुपयाति तानवम् ॥ २३ ॥

वियति आकाशे भास्करे अयति आगच्छति सति, सुधाकरे (चन्द्रे) भूरि सभयता भवति। सूर्योदये चन्द्रोऽस्तं यातीति भावः। तत्रोदाहरणमाह—अधिकं कुपितं कंचिन्मानवम् आ-ईक्ष्य, कोमलशरीरो जनः तनुताम् (तनोर्भावः तानवम्) संकोचम् उपयाति। तथा च प्रचण्डस्वभावं सूर्यं वीक्ष्य कोमलस्वभावश्चन्द्रो बिभेतीत्यर्थः ॥ २३ ॥

### वंशस्थबिलम् [वंशस्थम्]

मधु स्रवन्तोपि मुखेन निर्भरं
विषं वहन्तो हृदये सुदारुणम् ।
अहो दुरन्तोदरपूर्तिलालसा
लुनन्त्यसन्तो हितभाजनं जनम् ॥ २४ ॥

मुखेन मिष्टं भाषमाणा अपि हृदये विषं (कौटिल्यम्) धारयन्तः, दुष्पूरस्य उदरस्य पूर्तिं कामयमानाः असज्जनाः हन्त हितपात्रमपि जनं घ्नन्ति । उदरपूर्तये, मिष्टभाषणेन प्रतार्य सज्जनमसज्जना घातयन्तीत्याशयः । वन्तो हन्तो इति चतुर्ष्वपि चरणेषु प्रासाः ॥ २४ ॥

### इन्द्रवंशा

लक्ष्मीप्रकाशेन निबद्धचक्षुषो
लोकस्य दारिद्र्यमिहौषधं मतम् ।
निर्यन्नवीनाम्बुजकोषकीलिते
भृङ्गेऽम्बुजोद्भेद इह प्रतिक्रिया ॥ २५ ॥

धनवैभवचाकचक्येन निमीलितनेत्रस्य (अन्धप्रायस्येत्यर्थः), जनस्य दारिद्र्यमेवौषधम् । निर्गच्छति नवीने कमलकुड्मले, भृङ्गे कीलिते निगडिते सति कमलोद्भेद एव उपायः । यावत्कालं कमलं नोद्भिद्यते तावन्मधुपस्य न मोक्षः । एवं यावत्कालं लक्ष्मीर्न गच्छति (यत्रासौ प्रमत्तोऽभवत्) तावन्नासौ स्वस्थो भवति ॥ २५ ॥

### तोटकम्

अयि नन्दपुरन्ध्रि ! रुणत्सि न किं
भृशमुद्धतमार्गगतं स्वसुतम् ।
अमुना यमुनातटमाप्य सदा
प्रमदासु मदाचरितं ध्रियते ॥ २६ ॥

अयि यशोदे! उद्धतमार्गगतं सुतं किं न निवारयसि? अमुना स्त्रीपु मदस्याचरणं क्रियते। ता अपि प्रकृष्टमदाः, अयमपि तत्र मदमत्तवदाचरति इति तत्र द्वयोः प्रमत्तयोर्योगेन शृङ्गारप्राबल्यं भवतीत्याशयः। पुरन्ध्रि! इति पदेन 'त्वं सुचरित्रासीति तव उद्धतस्य पुत्रस्य निवारणमावश्यकमिति' द्योत्यते। उपालभमानानां गोपगृहिणीनां यशोदां प्रत्युक्तिः ॥ २६ ॥

## द्रुतविलम्बितम् [ सुन्दरी ]

वहति वाङ् न परा सुरभारती-
रसजुषो विदुषो मनसो मुदम् ।
कमलिनीमपहाय गुडूचिका
किमलिना मलिना विनिषेव्यते ॥ २७ ॥

संस्कृतभाषानुरागिणो विदुषः, मानसस्य मोदम् अपरा वाक् ( अंग्रेजी-प्रभृतिः ) न वहति। किम् अलिना ( भ्रमरेण ) कमलिनीं त्यक्त्वा मलिना अधमा गुडूचिका ( 'गिलोय' इति ख्याता ) सेव्यते? अपि तु नेत्यर्थः ॥२७॥

## कुसुमविचित्रा

यदवधि लोके धनलवलिप्सा
तदवधि चित्ते भयविचिकित्सा ।
अपगतलोभे प्रभवतु को वा
धनपतिरिन्द्रः कमलभवो वा? ॥ २८ ॥

भयजन्या विचिकित्सा ( संशयः ), भययुक्ता विचिकित्सा वा। त्यक्त-लोभे जने कुबेरः, इन्द्रः, साक्षात् ब्रह्मा वा, को वा प्रभवतु? न कोपि समर्थो भवतीत्याशयः ॥ २८ ॥

## जलोद्धतगतिः

वहन्ति विनयं बुधेषु वत ये
भवन्ति भुवने त एव नतये ।

धनूंषि नहि चेन्नमन्ति समरे
शिरो न नमयन्ति तावदपरे ॥ २९ ॥

ये जनाः पण्डितेषु नम्रा भवन्ति, ते एव भुवने नत्यर्थं समर्था भवन्ति। अर्थात् ते एव लोकानां नतिपात्रं भवन्ति। युद्धे धनूंषि यदि न नमन्ति, तदा अपरे शत्रवः शिरो न नमयन्ति। नतान्येव धनूंषि यथान्येषां शिरांसि नमयन्ति, एवम् गुरुषु नम्रा एवान्येषां नमनहेतवो भवन्ति ॥ २९ ॥

भुजङ्गप्रयातम्

वदेयं तु किम्, प्रार्थनेयं प्रभो! मे
मनो मे भवत्पादपद्मेऽभियायात्।
सदा साधुसङ्गेऽनुषङ्गो ममाऽऽस्ता-
मुदास्तां मतिर्देहली-गेह-लीना ॥ ३० ॥

कथयेयं चेदीश्वरे त्वयि अविनयो भवेत्। अत एव हे प्रभो! इयं मे प्रार्थना यत्, मे मनस्तव चरणकमले आभिमुख्येन गच्छेत्। साधुसङ्गे मे आसक्तिरस्तु। गृहदेहल्याम्, गेहे च लीना (आसक्ता) मे मतिः उदास्ताम् उदासीना (तटस्था) भवतु ॥ ३० ॥

स्रग्विणी

[लक्ष्मीधरम्, लक्ष्मीधरा, शृङ्गारिणी, कामिनीमोहनम्]

भूतिभव्यप्रभं भैरवीवल्लभं
भोगिभोगोपवीतं भयोद्भावकम्।
भूतभूनायकं भूरिभद्रच्छटं
भक्तभीतिच्छिदं भैरवं भावये ॥ ३१ ॥

भस्मना भव्या कान्तिर्यस्य तम्, भयस्य उत्पादकम्। भूतभुवः श्मशानस्य नायकम्। अतिमनोज्ञकान्तिम्। भावये ध्यायामि ॥ ३१ ॥

## प्रियंवदा

भ्रमवशात्कुचरितैः पुराकृतै-
र्यदि हरे! परिहरेरिमं जनम्।
वद तदा क्व फलिता मनस्विता?
गुणनिधे! क्व च कृता कृपालुता? ॥ ३२ ॥

भ्रमवशात्पूर्वं कृतैर्मदीयैः कुत्सिताचरणैर्यदि इमं जनम् (माम्) त्वं परिहरेः परित्यजसि, तदा मदर्थं तव उन्नतमनस्कता क्व फलिता। यदि च सद्गुणानेव दृष्ट्वा दयसे तर्हि कृपालुता क्व कृता? ॥ ३२ ॥

## मणिमाला

क्रीडन् गजवक्त्रो ब्रूते गिरिजायै
भ्रातुर्वत दोषं स्पष्टं कलयन् सन्।
मातर्मम देयौ मञ्जू मणिहारौ
त्यौ त्यौ, मणिमाला छिन्ना गुहवक्त्रैः ॥ ३३ ॥

भ्रातुः कार्तिकेयस्य मणिमालात्रोटनरूपं दोषं स्पष्टं कथयन् किं च क्रीडन् गणेशो गिरिजायै ब्रूते—"हे मातः! (अङ्गुल्या हारौ निर्दिश्य) त्यौ त्यौ (तौ तौ) मञ्जुलौ मणिहारौ मह्यं देयौ। यतः षड्भिर्गुहस्य मुखैः पूर्वं दत्ता मणिमाला छिन्ना।" किञ्च 'तगणयगणतगणयगणाः, षड्भिः कृतयतिर्मणिमाला (छन्दः) इति मुद्रापि ॥ ३३ ॥

## प्रमिताक्षरा

मधु-मोचिका-ऽरुणरसाल-सिता-
वनिताधरास्तदुपयान्तु कथम्।
सरसस्य वत्सरशतेपि गते
कविकालिदासवचसस्तुलनाम् ॥ ३४ ॥